**दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ।**
**वासुदेवे भगवति सायुज्यं चेदिभूभुजः।।१३।।**

**तत्रासीनं सुरऋषिं राजा पाण्डुसुतः क्रतौ।**
**पप्रच्छ विस्मितमना मुनीनामुपशृण्वताम्[1]।।१४।।**

**युधिष्ठिर उवाच**

**अहो अत्यद्भुतं ह्येतद्दुर्लभैकान्तिनामपि।**
**वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः।।१५।।**

**एतद्वेदितुमिच्छामः सर्व एव वयं मुने।**
**भगवन्निन्दया वेनो द्विजैस्तमसि पातितः।।१६।।**

**दमघोषसुतः पाप आरभ्य कलभाषणात्।**
**सम्प्रत्यमर्षी गोविन्दे दन्तवक्त्रश्च दुर्मतिः।।१७।।**

**शपतो रसकृद्विष्णुं यद्ब्रह्म [2]पदमव्ययम्।**
**श्वित्रो न जातो जिह्वायां नान्धं [3-]विविशतुस्तमः[-3]।।१८।।**

**कथं तस्मिन् भगवति दुरवग्राह्य[4]धामनि।**
**पश्यतां सर्वलोकानां लयमीयतुरञ्जसा।।१९।।**

**[5]इति भ्राम्यति मे बुद्धिर्दीप्तार्चिरिव वायुना।**
**ब्रूह्येतदद्भुततमं भगव[6]न्नत्र कारणम्।।२०।।**

**श्रीध० दृष्ट्वेति।** चेदिभूभुजः शिशुपालस्य।।१३,१४।।

**अहो इति।** एकान्तभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि।।१५।।

**एतदिति।** तस्य तु वेनवन्नरकपात एवोचित इत्याह-भगवन्निन्दयेति तमसि नरके।।१६।।

---

1 A,B,G,J,M,Ma,To नां शृण्वतामिदम् 2 A,B,G,J,M,Ma,T पर° 3- -3 H,V वात्याविशत्रमः 4 A,B,G,J,T °ह° 5 A,B,G,J,M,Ma T गतत्
6 A,B,G,J,T °वांम्त्त्र

**दमघोषेति।** दमघोषस्य सुतः शिशुपालः कलभाषणाद्बाल्ये कोमलभाषणमारभ्य सम्प्रत्यधुनाऽप्यमर्षी क्रोधी मत्सरी वा।।१७।।

**शपत** इति। श्वित्रः श्वेतकुष्ठम्।।१८।।

**कथमिति।** दुरवग्राहं दुष्प्रापं धाम स्वरूपं यस्य तस्मिन् लयं सायुज्यं ईयतुः जग्मतुः। अभूतस्यापि दन्तवक्त्रलयस्य तज्ज्ञातकप्रामाण्येन सिद्धवन्निर्देशः।।१९।।

**इतीति।** एतदद्भुततमं हि[1-] अत एव बुद्धिः[-1]भ्राम्यति। भगवान् सर्वज्ञ स्त्वं ब्रूहि।।२०।।

**वीर०** प्रश्नं तन्निमित्तं च विवृणोति-**दृष्ट्वेति।** राजसूयाख्ये महाक्रतौ चेदिभूभुजः शिशुपालस्य भगवतश्छिन्न शिरसः वासुदेवे भगवति श्रीकृष्णे सायुज्यं संश्लेषं महाद्भुतं दृष्ट्वा विस्मितचित्तः पाण्डुसुतो राजा युधिष्ठिरः तत्र क्रतौ[2] क्रतुसभायामासीनं उपविष्टं देवर्षिं[3] नारदं मुनीनां शृण्वतां सतां इदं वक्ष्यमाणं पप्रच्छ पृष्टवान्।।१३, १४।।

तदेवाह-**अहो** इति[4] षड्भिः, अहो एतदत्यद्भुतम्। तदद्भुतत्वे हेतुः, एकान्तिनामनन्यप्रयोजनेन भगवन्तं भजतामपि दुर्लभं, किं तत्? परे तत्त्वे प्रकृतिपुरुष विलक्षणेश्वरतत्त्वरूपे श्रीकृष्णे विद्विषः चैद्यस्य प्राप्तिरित्येतत्।।१५।।

हे मुने! नारद! एतत्सर्वे वयं वेदितुमिच्छामः केनापि भावेन भगवन्तं स्मरतां तत्प्राप्तिर्भवत्येव किमत्रचित्रं, तत्राह-भगवन्निन्दयेति। वेनः पृथोः पिता भगवन्निन्दयैव निन्दामात्रेण हेतुना तमसि नरके द्विजैः ऋषिभिः पातितः।।१६।।

दमघोषसुतश्चैद्यस्तु कलभाषणात् बाल्यमधुरभाषणादारभ्य बाल्यादारभ्येत्यर्थः। सम्प्रति एतत्कालपर्यन्तं गोविन्दे श्रीकृष्णे अमर्षी क्रोधी। अतोऽयं नितरां पापात्मा तथा दन्तवक्त्रोऽपि दुरात्मा।।१७।।

अनयोः परब्रह्मभूतं निर्विकारं श्रीकृष्णं असकृच्छपतोः शिशुपालदन्तवक्त्रयोः जिह्वायां श्वित्रः श्वेतकुष्ठरोगो वापि न जातः नाप्येतावन्धं तमोनरकमपि विविशतुः, किन्तु भगवन्तमेव विविशतुः।।१८।।

अतः सर्वलोकानां पश्यतां सतां दुरवग्राह्यधामनि दुरवगमज्योतिर्मयस्वरूपे भगवत्यञ्जसा अनायासेन तत्प्राप्तिसाधनानुष्ठानमन्तरेणेत्यर्थः। कथं लयमीयतुः? भगवत्सायुज्यं कथं प्रापतुरित्यर्थः।।१९।।

इतीत्थं वायुना दीपशिखेव मम[5] बुद्धिः भ्राम्यति हे भगवन्। एतन्महदद्भुतं अतोऽत्र कारणं ब्रूहि[6]।।२०।।

---

1- -1A,B,J एतत्प्रति मे धीः 2 A,B,T यज्ञ 3 W सुरर्षि 4 W इत्यादिना 5 W omits मम 6 A,B,T add इति

**विज॰** एक एव अन्तो निर्णयो येषामस्तीति भक्तिरेव पुरुषार्थसाधनं नाऽन्यत्कर्मादिकमिति, निर्णयवतां विष्णुरेव मुमुक्षुभिर्निषेव्य इति निश्चयवतां वा।।१३-१५।।

श्रीहरिनिन्दनं सतां कर्णशूलायमानमप्येतच्छ्रोतुं तच्चित्रमित्याशयवानाह-भगवन्निन्दयेति।।१६,१७।।

श्वित्रः श्वेतकुष्ठम्।।१८।।

दुरवग्राह्यं दुर्ज्ञेयं धाम स्वरूपं यस्य स तथा तस्मिन्, लयं सायुज्यलक्षणम्, ननु "अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति वचनात् श्वित्रो न जात इत्यादिवाक्यं कथं सङ्गच्छते? भगवद्द्वेषिणोऽपि बहुविधाः तत्र केचिन्मरणानन्तरं पापफलं भुञ्जते, केचिदत्रैव, तत्कुतः? इति चेन्न। "नियमाद्भुज्यते पुम्भिर्धर्माधर्मफलं मृतौ। कैश्चिदत्रापि भुज्येत तस्मान्नाधर्ममाचरेत्" (भारते) इति वचनात्। अनेन धर्मिणोऽपि व्याख्याताः, धर्मी स्वर्गं, विधर्मी निरयमिति च। अत्र कश्चिद्विशेषोऽप्यस्ति। जयविजययोः सात्त्विकत्वेन भक्तत्वेन हरेरर्तिप्रियत्वात् सनकादिशापादसुरजन्मन्यपि क्वचिद्भक्त्यलोपात् द्वेषफलभोक्तुरन्यत्वाच्च द्वेषस्य पापिष्ठासुरत्वादनयोरुपचरितत्वाच्च। अनेन स्वापराधनाश लक्षणानुग्रहपात्रत्वेन प्रतिज्ञातशपथत्वेन च हरेः सुरप्रियत्वं च विशदमभूदिति रहस्यम्।।१९,२०।।

**श्रीशुक उवाच**

**राज्ञस्तद्वच आकर्ण्य नारदो भगवान् ऋषिः।**
**तुष्टः प्राह तमाभाष्य [1-]शृण्वत्यास्संसदः कथाः[-1]।।२१।।**

**नारद उवाच**

**निन्दनस्तवसत्कारन्यक्कारार्थं कलेबरम्।**
**प्रधानपरयोराजन्नविवेकेन कल्पितम्।।२२।।**

**हिंसा तदभिमानेन दण्डपारुष्ययोर्यथा।**
**वैषम्यमिह भूतानां ममाऽहमिति पार्थिव।।२३।।**

**यन्नि[2]बन्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः।**
**तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः।**
**पर[3]स्य दमकर्तुर्हि हिंसा केनाऽस्य कल्प्यते।।२४।।**

1--1 A,B,G,J,T शृण्वत्यास्तत्सदः कथाः, H,V शृण्वन्त्याः संसदः कथाः, M,Ma शृण्वत्यास्सदसः कथाम् 2. A,B,G,J,T बद्धो 3 M,Ma °स्यदम°

**श्रीध० राज्ञ** इति। आभाष्य [1-]सम्बोध्य सम्यक् सीदन्ति अस्यामिति संसत् सभा तस्या[-1]: [2]शृण्वन्त्याः सत्याः कथाः प्राहेत्यन्वयः।।२१।।

अहो भगवन्निन्दकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः भगवत्पीडाकरत्वेन वा तदभावेऽपि सुरापानादिवन्निषिद्धनिन्द्याचरणाद्वा तत्र तावद्देहाभिमानकृतनिन्दादिनिमित्तत्वात् पीडादीनां भगवतश्च तदभावान्न पीडाशंकास्तीत्याह-**निन्दनेति** सार्धैस्त्रिभिः। निन्दनं दोषकीर्तनम्। न्यक्कारस्तिरस्कारः। निन्दन स्तुत्यादिज्ञानार्थं प्रधानपुरुषयोरविवेकेन कलेबरं कल्पितं रचितम्।।२२।।

**हिंसेति**। तदभिमानेन भूतानां यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्येत्युत्तरेणान्वयः। दण्डस्ताडनं, पारुष्यं निन्दा, तयोर्हेतुभूतयोः हिंसा पीडा च भवति।।२३।।

**यदिति**। यस्मिन्निब[3]न्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा तथा यस्याभिमानो नास्ति अतोऽस्य परमेश्वरस्य हिंसा केन हेतुना कल्प्यते न केनापीति। अभिमानाभावे हेतुः, कैवल्याददि्वतीयत्वेन अभिमन्तव्याभावात्। वैषम्याभावे हेतुः-अखिलात्मनः सर्वात्मनः इति। तर्हि किमिति हन्ति दैत्यांस्तत्राह-परस्य दमकर्तुः हितार्थं दण्डं कुर्वत इत्यर्थः।।२४।।

**वीर०** इत्थमापृष्टो नारदः प्राहेत्याह मुनिः **राज्ञ** इति। राज्ञो युधिष्ठिरस्य तत्प्रश्नरूपं वचः श्रुत्वा भगवान् ऋषिः नारदस्तुष्टः समीचीन प्रश्नेन हृष्टः सदसः सभायाः शृण्व[4]त्याः सत्याः तं युधिष्ठिरमाभाष्य स्ववचः श्रवणाभिमुखं कृत्वा कथां प्रश्नपरिहाररूपां कथां प्राह।।२१।।

तामेवाह-**निन्दनमित्यादिना** दशभिरध्यायैः। अस्य प्रश्नस्य मुख्यं उत्तरं वक्तुं तावत्, संसारि चेतनानामिवेश्वरस्य देहात्माभिमानप्रयुक्तस्तुतिनिन्दाद्यभिमानित्वं नास्तीति चैद्यस्य मुक्तिं ददाविति कंचित्परिहारमाह-निन्दनेति, हे राजन्! निन्दनं दोषकथनं, स्तवो गुणकथनं, सत्कारश्चन्दनलेपादिः, न्यक्कारः पांसुक्षेपणादिरेषामर्थो विषयः कलेवरं प्रधानशब्दो देहावस्थप्रधानवचनः परशब्दो देहात्परजीववचनः तयोरविवेकेन परस्परविलक्षणत्वविषयकं ज्ञानाभावेन देहात्माभिमानेनेति यावत् तेनाऽविवेकेन हेतुना कल्पितं कलेवरस्य निन्दनादिविषयत्वमविवेककृतं, न तु स्वतो जडत्वात्, नहि काष्ठं चन्दनलेपादिरूपसत्कारादिकं मन्यते इति तावन्निर्विवादमित्यर्थः।।२२।।

---

1- -1 A,B,J सीदन्ति निषीदन्ति अस्यामिति सद् सभा तस्याः सदः सदस. 2 B,J शृण्वत्याः 3 A,B,J °बद्धो 4 A,B,T °न्त्या

एवं स्थिते हे पार्थिव ! यथेह संसारे भूतानां देहात्माभिमानिनां देवमनुष्यादीनां ममाहमिति वैषम्यं, ममेयं निन्दा निन्दितोऽहमिति अभिमानरूपवैषम्यं, तदभिमानेन ममेयं निन्देत्यभिमानेन दण्डपारुष्ययोर्निमित्तयो हिंसा च स्यात् दण्डः ताडनं पारुष्यं निन्दनं परेण दण्डपारुष्ययोः कृतयोः सतोः तत्प्रयुक्तो ममेयं निन्दा निन्दितोऽहं ममायंदण्डो दण्डितोहमित्येवं रूपो नानाविधोऽभिमानस्तत्प्रयुक्तं परेषु निन्दादिकारिषु हिंसाचरणं च यथा लोकानां दृश्यते न तथा यस्येत्युत्तरेणान्वयः। देहविषयमपि दण्डपारुष्यादिकं परकृतं देहात्माभिमानेनात्मगतं मत्वा तदभिमानेन परेषु हिंसा स्यादित्यनेन यथा हिंसाकारिषु दण्डपारुष्यादिकं देहगतमेव नत्वात्मगतम्, देहात्मनोः अविवेकेन त्वात्मगतं मन्यते तथा हिंस्यमानेष्वपि हिंसा च देहगतैव नत्वात्मगता, देहात्माभिमानान् हिंसितोऽहमित्यभिमान इति सूचितम्।।२३।।

तदेवस्पष्टमाह-**यन्निबन्ध** इति। अयमभिमानो दण्डितानां निन्दितानां[1] च लोकानां यथा दण्डितोऽहं निन्दितोऽहमित्याद्यभिमानः[2] यन्निबन्धो यद्धेतुको देहहेतुक इत्यर्थः। देहात्माभिमानस्य देहहेतुकत्वाद्देहात्माभिमान हेतुको दण्डितोऽहमित्याद्यभिमानो[3]ऽपि[4] देहहेतुक एवेत्यभिप्रायेण यन्निबन्धोऽभिमानोऽयमित्युक्तम्। एवं तद्वधा-द्धन्यमानेषु तस्य देहस्य वधादेव प्राणिनां देहात्माभिमानिनां वधः देहगत एव वधः नत्वात्मगतो देहात्माभिमानान् हतोऽहमित्यभिमान इत्यर्थः। एवं संसारिणां निन्दनादिकं सर्वं देहात्माभिमान कृतमित्युक्तम्। अथ उक्तार्थ [5]विपर्ययमीश्वरे दर्शयति-तथेति। यथा संसारिणां देहात्माभिमानस्तन्मूलको निन्दितोऽहमित्याद्यभिमानश्च यस्येश्वरस्य नास्ति तस्यास्य अभिमानप्रयुक्ता परेषु हिंसा केन हेतुनावकल्प्यते इत्यन्वयः। अभिमानाभावे हेतुः अखिलात्मन इति। अखिलस्य[6] जगतः आत्मत्वादभिमानो नास्तीत्यर्थः। ननु आत्मत्वेऽपि तस्य जीववदभिमानः स्यादेव तत्राह-कैवल्यादिति। निरस्तनिखिलदोषत्वादित्यर्थः। "अनृतेन हि प्रत्यूढाः" (छादो. उ. 8-3-2) इति श्रुत्युक्तरीत्या जीवानामनादिपुण्यपापात्मककर्ममूलको हि देहात्माभिमानः तस्य तु परमपुरुषस्य सर्वान्तरात्मनो निरस्तनिखिल-कर्मवश्यत्वादि दोषत्वादभिमानाभाव इति भावः। निन्दितोऽहमित्याद्यभिमान एव नास्ति किम्पुनस्तत्प्रयुक्तं परेषु निन्दकेषु हिंसादिकरणं नास्तीत्याऽऽह हिंसा केनास्य- कल्प्यत इति। अस्य निन्दनादिना प्रयुक्ताभिमानरहितस्य हिंसा निन्दककर्मिका केन हेतुना कल्प्यते हिंसाहेतोरभिमानस्याभावाद्धेत्वन्तरस्यादर्शनात् सा नास्त्येवेत्यर्थः। ननु, कथमुच्यतेऽभिमानस्तत्प्रयुक्ता हिंसा च तस्य नास्तीति, यतोऽस्मदादि समक्षमेव निन्दकं चैद्यं हतवानित्यशङ्कां

1 A,B,T omit निन्दितानां 2 A,B,T°त्यभि° 3 A,B,T °त्यभि° 4 A,B T omit अपि 5 A,B,T विषयमी 6 A,B,T सकलजगदात्म

निराकुर्वन्नीश्वरं विशिनष्टि-परस्य दमकर्तुर्हीति। परस्य निन्दकादेः दमकर्तुः शिक्षाकर्तुः परस्य हितार्थमेव दण्डं कुर्वत इत्यर्थः। शिक्षया परस्मै हिताचरणं च चैद्यस्य [1]निहीनां आसुरीं योनिं परिहाप्य निरतिशयपुरुषार्थस्वरूप स्वप्रापणेन इदानीमेव अस्मदादिभिः अपरोक्षं दृष्टमिति भावः। एवं देहात्माभिमानाभावात्परमपुरुषस्य संसारिणामिव स्तुतिनिन्दाद्यभिमानित्वराहित्यमुक्तम् एवञ्च निरभिमानत्वात् चैद्यस्य मुक्तिं ददौ इति कश्चित्परिहारः।।२४।।

**विज०** देहाद्यभिमानवतः स्तव निन्दनादिना मनः खेदहर्षादिसम्भवेन क्रोधादिकं स्याद्धरेस्तदभावा-न्निन्दनादिनावशेषानुदयात् स्वतोनित्यतृप्तत्वेन परप्राप्य प्रयोजनाभावात् तत्तद्योग्यतानुसारेण तत्तत्फलदातृत्वं युक्तमित्यादिकं वक्तुमुपक्रमते-**निन्दनेति**। निन्दनं दोषसंकीर्तनं, स्तवः स्तुतिर्गुणलक्षणा, सत्कारः कायिकपूजा, न्यक्कारः कायिकावज्ञा तेषां निन्दनादीनामर्थ विषयभूतं कलेबरं प्रधानपरयोः प्रधानाद्देहेन्द्रियाद्यात्मकात् परस्य जीवस्य अविवेकेनाभेदेन कल्पितं स्वतश्चिदानन्दस्य प्रकृतेरनात्मनो भेदाग्रहादिदं जडशरीरं क्लृप्तमित्यर्थः।।२१,२२।।

ततः किं फलतीति तत्राह-**हिंसेति**। तदभिमानेन देहाभिमानेन भूतानामविवेक ज्ञानिनां ममाहमिति इह देहे हिंसाताडनलक्षणा दण्डपारुष्ययोर्निमित्तयोः वैषम्यं विषमावस्था फलतीत्यर्थः।।२३।।

ततश्च किं तत्राह-**यन्निबन्ध** इति। ममाहमित्यभिमानो यन्निबन्धः यस्मिन् देहे निबद्धः तद्वधात्तस्य देहस्य वधात् हिंसादिलक्षणात् प्राणिनां चेतनानां वध इत्युपचारः इति यत्तस्मान्निन्दनादिकं देहस्यैव फलति, नात्मनः, तस्य निष्फलमित्याशयः। यथा जीवस्य ममाहमिति देहाभिमानादनर्थ परम्परा तथा हरेरपि देहस्थत्वाविशेषात्साम्यात्किं नेत्याह-तथेति। अखिलात्मनः अखण्डस्वामिनो यस्य न तथा जीववद्देहाभिमानो नास्ति, कुतः कैवल्यात् देहाद्यभावादेव। ननु, प्रकृत्यात्मकस्य देहस्याभावो हेतुः क्रियते सच्चिदानान्दात्मकदेहस्य वेत्येतयोः इदमेवोत्तरं प्रकृत्यात्मकदेहादेरभावात् प्रकृति प्राकृत वैकृत मिश्रविरहित सच्चिदानन्दात्मकदेहसद्भावात् स देहः सुखगन्धश्चेत्यादेः।। अस्य प्रत्ययात्मनः इदमेषा हिंसा केन निमित्तेनास्तीति कल्प्यते निमित्ताभावान्नैमित्तिकाभाव इत्यर्थः। अन्यस्मिन् हिंसादिकर्तरि सति हरेर्हिंसादिकमस्तीति कल्पयितुं शक्यते, स च नास्तीत्याशयेनोक्तम्-अकर्तुरिति, तस्यान्यः कर्ता न विद्यत इत्यकर्ता, तस्य हि शब्देन यद्यस्याऽऽयुधादिना प्रहर्ता दृश्यते तत्फलं दृश्यते तत्फलं छेदादिकं नास्तीत्याह "अच्छेद्योऽयमदाह्योऽयम्" (भ.गी. 2-24) इत्यादेः। तत्सर्वं कथमित्यत उक्तं परस्येति, लोकविलक्षणस्य तर्ह्ययं शून्यकल्प इत्यस्यापीदमुत्तरं परस्य ब्रह्मणः "ब्रह्मविदाप्नोति परम्" (तैत्ति. उ. 2-1-1) इति श्रुतेः। इदं

1 A,B,T हीनां

हिंसेति लिङ्गव्यत्ययो हिंसायाः कुत्सितत्वद्योतनाय। "व्यत्ययोऽतिशयकुत्सनभेदेषु" इति सूत्रात् ज्ञायते, हरौ हिंसाशङ्काकुत्सितेत्यर्थः। नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपरम् "न हन्यते हन्यमाने शरीरे" (भ.गी.2-20) इत्यादेश्च।।२४।।

**तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा।**
**स्नेहात्कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक्।।२५।।**

**यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात्।**
**न तथा भक्तियोगेन इति मे निश्चिता मतिः।।२६।।**

**कीटः पेशस्कृता रुद्धः कुड्यायां[1] तमनुस्मरन्।**
**संरम्भभययोगेन विन्दते तत्सरूपताम्।।२७।।**

**एवं कृष्णे भगवति माया मनुज ईश्वरे।**
**वैरेण पूतपाप्मानस्तमापुरनुचिन्तया[2]।।२८।।**

**श्रीध॰** यस्माद्भगवतो निन्दादिकृतं वैषम्यं नास्ति तस्माद्येनकेनाप्युपायेन ध्यायतस्तेनैव ध्यानेन[3] निन्दादि कृत पापस्यापि नाशात्सायुज्यं युक्तमित्याशयेनाह-**तस्मादिति** सप्तभिः। निर्वैरेण नास्ति वैरं केनापि यस्मिंस्तेन भक्तियोगेनेत्यर्थः। युञ्ज्यान्मन इति शेषः। यस्मादेतैरुपायैः पृथङ्नेक्षते।।२५।।

तेष्वपि वैरानुबन्धः श्रेष्ठ इत्याह-**यथेति**। न तथा भक्तियोगेनापि।।२६।।

**कीट** इति। अत्र दृष्टान्तः कीटः पेशस्कृता भ्रमरेण संरम्भो द्वेषो भयं च स एव योगस्तेन ।।२७।।

**एवमिति**। वैरेण याऽनुचिन्ताचिन्तनं तथैव पूतः पाप्मा येषां ते, तं प्रापुः।।२८।।

**वीर॰** नन्वेवं भगवन्निन्दासु कस्यचिदपि पापं नस्यान्नच निन्दा प्रयुक्ताभिमानरहित निन्दया नितरां पापित्वप्रसङ्ग इति वाच्यम्। तादृशस्यापि चैद्यस्य परमपुरुषप्राप्तिदर्शनेन [4-]निरभिमानिनो[-4] निन्दाया अपापरूप-त्वादन्यथा तादृशे निरतिशये मुक्तिप्रतिबन्धे पापे सति तस्य मुक्त्यसम्भवात्, किञ्चैवं भगवत्स्तोत्रादिषु पुण्यमपि न स्यात् तथा च सर्वशास्त्रार्थ विरोधप्रसङ्गः। किञ्च, "मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः

1 M,Ma कुड्ये यां 2 M,Ma धूत॰ 3 H, V omit ध्यानेन 4- -4 A,B,T omit .

क्रूरान् संसारेषु नराधमान्।। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु" (भ.गी. 16-18,19) इति भगद्वचनविरोधश्च स्यात् भगवतः स्तुतिनिन्दाभिमानित्वाभाव कथनाद्वेन चैद्ययोः वैषम्यञ्च न सिद्ध्यति, अतो वेन चैद्य[1] वैषम्यप्रश्नस्य किमुत्तरमित्यपेक्षायां साक्षात्परिहारमाह-तस्मादिति। निन्दादिभाक्संसारितुल्यत्वदोष प्रसङ्ग[2]निवारणार्थं संसारि चेतनानामिव देहस्तुतिनिन्दाद्यभिमानित्वं भगवतो नास्तीति तद्वैलक्षण्यमात्रमुक्तम् "निन्दनस्तव सत्कारे" (भाग 7-1-22) इत्यादिभिः श्लोकैः इतो वक्ष्यमाण एव साक्षात्परिहारो वेदितव्यः। तस्मादीश्वरस्यैवंविधस्वभावत्वात् वैरानुबन्धनिर्वैर भयस्नेहकामानां पञ्चानामन्यतमेन केनचिद्युञ्ज्यात् भगवति मनो युञ्जीतेत्यर्थः। "यथा भक्त्येश्वरे मन आवेश्य" (भाग. 7-1-29) इत्युत्तरग्रन्थैकार्थ्यात् वैरानुबन्धो वैराऽविच्छेदः निर्वैरेणेति न वैराभावो विवक्षितः, अपि तु भक्तिर्विवक्षिता। उत्तरग्रन्थे परिगणित हेतुषु पञ्चसु भक्तेरुक्तत्वात्। स्नेहः सौहार्दं बाल्यादारभ्यैतत्पर्यन्त-मविच्छिन्नवैरेण भगवति मनो युञ्जतश्चैद्यस्य भगवत्प्राप्तिः। वेनस्य तु उक्तानामन्यतमेनापि भगवत्ययुक्तमनसो न मुक्तिः, प्रत्युतनिरयप्राप्तिरिति वैषम्यमितिभावः। मनो योजनस्य काष्ठामाह-कथञ्चिन्नेक्षते पृथगिति। पृथग्भगवतोऽन्यद्वस्तु किञ्चिदपि केनापि प्रकारेण नेक्षते न विषयीकरोति मनस्तथातद्युञ्जीत। विजातीयप्रत्ययान्तराव्यवहितचित्तवृत्तिः भवेद्यथा तथेत्यर्थः।।२५।।

वस्तुतः प्रीतिपूर्वकानुध्यानात्मक भक्तियोगादपि वैरानुबन्धानुध्यानमेव श्रेय इति मया निश्चितमित्याह-**यथेति**। मर्त्यः संसारी जीवः भगवति यथा वैरानुबन्धेन आशु तन्मयतामियात् प्राप्नुयात् तथा भक्तियोगेन आशु नेयादिति मे मया मतिः बुद्धिः निश्चिता ममैवं, बुद्धिनिश्चय इत्यर्थः। तन्मयतां तच्चिन्तनप्रचुरतामित्यर्थः। विकारावयवार्थाऽसम्भवात् प्राचुर्यमेवात्र मयडर्थः। पूर्वपूर्वचिन्तनादुत्तरोत्तरचिन्तनस्य प्राचुर्यं, तच्च प्रत्ययान्त-राव्यवहितत्व रूपम्। यद्वा तन्मयतां तद्धर्मप्राचुर्यं प्राप्नुयादित्यर्थः। मुक्तानां प्राचुर्येण भगवद्धर्मसाम्यश्रवणात्।।२६।।

यथा वैरानुबन्धयोगः श्रेयानेवं भययोगोऽपि भक्तियोगाच्छ्रेयानिति वदन् वैरानुबन्धभययोगयोः भगव-द्विषयकचिन्तासन्तानात्मकयोस्तत्साम्यापत्तिहेतौ दृष्टान्तमाह-**कीट** इति। पेशस्कृता भ्रमरेण कुड्यायां रुद्धः कीटो यथा तमेव पेशस्कृतं संरम्भभययोगेन वैरानुबन्धभययोगाभ्याम् अनुस्मरन् तत्स्वरूपतां पेशस्कृत्साम्यं विन्दते तथा संरम्भभययोगिनौ भगवत्स्वरूपतां विन्देते इत्यर्थः। तस्येव स्वरूपं यस्य तत्स्वरूपस्तस्य भावः तत्स्वरूपता तां तुल्यरूपतां नत्वैक्यमित्यर्थः। न हि पेशस्कृता रुद्धः कीटः तेनैकीभवति उभयोरप्युपलभ्यमानत्वात्, अतः साम्यमेव दृष्टान्तात्सिद्ध्यति।।२७।।

---

1 A,B,T °द्ययोर्वै° 2 A,B,T निराकार°

उक्तार्थं दार्ष्टान्तिके दर्शयति-**एवमिति**। भगवति पूर्णषाड्गुण्ये मायामानुषे स्वसंकल्पोपात्तमनुजाकृतौ साक्षादीश्वरे श्रीकृष्ण[1]विषये वैरेणानुचिन्तया वैरपूर्वकानुध्यानेन पूतपाप्मानः निरस्तवैरादिदोषाः तं कृष्णमापुः प्रापुः, पूतपाप्मान इत्यास्यायमभिप्रायः। यद्यपि "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" (कठ.उ. 2-22) इति श्रुत्युक्तरीत्या निरतिशयप्रीतिरूपाया अविच्छिन्नस्मृतिसन्ततिरूपाया भगवद्भक्तेरेव तत्प्राप्तिहेतुत्वम्। तथाचोक्तम् भगवता "पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया" (भ.गी. 8-22) "भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन! ज्ञातुं द्रष्टुंच तत्त्वेन प्रवेष्टुंच परन्तप"। (भ.गी.11-54 ) "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं यने मामुपयान्तिते" (भ.गी.10-10) इति श्रुतिश्च "तमेवं विद्वानमृत इहभवति नान्यः पन्था अयनाय विद्यते" (पु. सू. 1-7) इत्यादिका। भक्तिश्च प्रीतिपूर्वकमविच्छिन्नमनुध्यानम। "प्रीति पूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति भक्तिलक्षणात्। संरम्भभययोगयोस्तु प्रीतिरूपत्वा भावात्प्रत्युत तद्विपरीतरूपत्वाच्च न भगवत्प्राप्तिहेतुत्वम्। तथाप्यत्यन्तसंरम्भभय कृत भावनाप्रकर्षेण स्वहेतुभूतसंरम्भ-भययोरपि विस्मरणाद्भावनायाश्च निरतिशयानन्दावहशुभाश्रय विषयत्वेन प्रीति रूपापन्नत्वात्तस्या अपि भगवत्प्राप्ति साधनत्वमिति। एवञ्च येषां भावनाप्रकर्षेण स्वहेतुभूत वैरादिविस्मरणाऽभावो वेनादिनां तेषा भगवन्निन्दादि प्रयुक्त भगवद्विषयकभावनाप्रकर्षाभावेन तन्मूलकनिन्दादिदोषाविस्मृतेः भगवत्प्राप्त्यभावः, प्रत्युत तन्निन्दादि दोषेण निरयप्राप्तिश्चेति वेनचैद्ययोः वैषम्यमुक्तं भवति, अतएव न स्तुति निन्दयोः पुण्यापुण्यत्वप्रतिपादक शास्त्रा[2]ऽर्थ विरोधोऽपि भावनाप्रकर्षेणाविस्मृतवैरादिदोषवत्पुरुषविषयत्वात् पुण्यापुण्य प्रतिपादक शास्त्राणाम्।।२८।।

**विज०** अत्रेवं हरिस्वरूपे स्थिते स्वयोग्यानन्दाविर्भावलक्षण मोक्षसाधनक्षमाऽक्षीणा भक्तिरेव, द्वेषादिकमर्थवादलक्षणं तत्तत्वभाव ज्ञपनार्थमुच्यत इत्याशयेनाह **तस्मादिति**। यस्माज्जडशरीरेन्द्रियाद्यभावेन हरेरहम्ममाभिमाननिमित्तोपद्रवो दूरं निवारितः तस्माद्वैरानुबन्धादिना यो हरौ मनो युञ्ज्यात्प्रयुङ्क्ते स कथञ्चित्पृथङ्नेक्षते मनसः तत्राभिनिवेशेन हरेरन्यं न चिन्तयति तमेवानुस्मरतीत्यन्वयः। अनेन वैरादीनां एकतमेनापि हरौ मनो युञ्जानो वैरादिमानेव भवतीति तत्तद्वस्तु स्वभावात्तथोच्यत इति ज्ञातव्यम्। तदुदितं आचार्यैः- "कथञ्चिन्नेक्षते पृथक् तत्रैव मनसोऽभिनिवेशेन तदन्यं नेक्षते वैरादीनामेकतमेनाऽपि यो मनो युञ्ज्यात्स तदन्य नेक्षते" इति स्वभाव कथनम्।

---

1 B, W °ष्णं 2 A,B T °स्त्र वि°

नन्वत्र संयुञ्ज्यादित्यस्य प्रथम प्राप्तं विध्यर्थं परित्यज्य अन्यार्थकल्पनायामश्रुत कल्पनास्यादिति चेन्न। "भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन!" (भ.गी. 11-54) "यमेवैष वृणुते तेन लभ्यः" (कठ.3- 2-22) "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" (भ.गी.7-17) इत्यादिना भक्तेरेव भगवत्प्रीतिजनकत्वोक्तेः "अननुभूतिरवधुन्वानः" इत्याद्यनर्थश्रुतेश्च। अतो न विध्यर्थोऽङ्गीकारयोग्यः। तदप्युक्तं न विधिरिति न केवलं द्वेष्टुः स्वस्यैवानर्थः अपि तु तत्पितृणामपि। तदुक्तम्- "कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम्। मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः" इति। नन्वेकदा कृतद्वेष प्राप्तनरकोपभोगेन क्षीणदोषस्य पुनः शुद्धान्तःकरणतया भक्तिकरणयोग्ययोनिप्राप्तिः स्यादिति तत्राह- "तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभा-नासुरीष्वेव योनिषु।। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्" (भ. गी. 16-19,20) इति। कीदृशो द्वेष इति तत्राह- "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परम्भावमजानन्तो मम भूतमहेश्वरम्" (भ.गी. 9-11) इति, "स्वर्गकामो यजेत" इत्यादेः। सत्कर्मणा तेषां सद्गतिः स्यात्किं नेत्याह- "मोघाशा मोघ कर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः" (भ.गी. 9-12) इति। ननु तर्हि हिरण्यकशिप्वादेः दुरन्ताघादुत्थितिः कथमभूदिति तत्राह- "यदनिन्दत्पिता मे त्वामविद्वां। स्तेज ऐश्वरम्। (भाग. 7-10-15) तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् (भाग. 7-10-17) "हिरण्यकशिपुश्चापि भगवन्निन्दया तमः विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः" (भाग. 4-21-47) इति। नन्वेवं तर्हि भक्त द्वेषिणाः शापवराभ्यां विपर्ययः स्यात्किं, नेत्याह- "वरतोऽपि न मुच्यन्ते। द्वेषिणः शापतोऽपि तु। भक्ता नैव निपात्यन्ते धर्माधर्मैस्तथेतरैः" इति योग्यताया बलवत्त्वादिति शेषः। नन्वेवं चेत्पुनश्चा नर्थ आपन्न इति तत्राह- "अन्यावेशकृतं यत्तु तद्वराद्यैरपोह्यते। तद्विरुद्धस्वभावानां अन्यथा न कथञ्चन" इत्यादि हिरण्यकशिप्वाद्याविष्टासु कृतपापं प्रह्लादादिभिः परिहृतं न तु स्वतोऽसुरस्येत्यर्थः।।२५।।

कुतः स्वतोऽसुरस्य पापं न परिह्रियते? इत्याशङ्क्य द्वेषाभिनिविष्टमनस्कत्वेन तद्योग्यत्वेन भगवत्प्रेरितत्वेनाभीष्टनिवृत्तित्वेन तदात्मकत्वादित्याशयेनाह-**यथेति**। मर्त्यस्तमोयोग्यो वैरानुबन्धेन निरन्तरं वैरस्मरणेन तन्मयतां तत्तद्द्वेषविषयवस्तुनि यथा मनसोऽभिनिवेशम् इयात् प्राप्नोति तथा भक्तिलक्षणोपायेन भक्तिविषये वस्तुनि मनोऽभिनिवेशं न करोति। अत्र किं प्रमाणमिति तत्राह-इतीति। निश्चिता मतिरित्यनेन साक्षिलक्षणा मतिः गृह्यते। भक्तियोगेन इति इत्यत्र सन्धिकार्याभावो द्वेषाभिनिवेशिनां बाहुल्यं भक्त्यभिनिवेशिनां कनीयस्त्वं च दर्शयितुं, कुतः एतदवगतमिति चेन्न, यथा वैराभिनिवेशिन इत्याद्याचार्योक्तेः। वैरिणां बाहुल्यं अन्येषां

अल्पसंख्यात्वं कथमितिचेन्न, हरिणा भक्तानां बाहुल्याकरणात्। एतदप्युक्तं कथमन्यथेत्यादि, ततः कनीयांस एव देवाः, ज्यायांसः असुरास्तत इति च भक्त्याभिनिवेशिष्वपि कश्चिद्विशेषोऽस्तीति ज्ञापनाय वा सन्ध्यभावः। "ऋते ब्रह्माणमव्ययम्" (हरिवंशे) इत्युक्तेः। असुराणां नित्यद्वेषाग्रहित्व-प्रकटनायानुबन्धनेति। "मागधाद्या यथा नित्यं द्वेषादाऽऽग्रहिणो हरौ। न तथाऽऽग्राहिणो भक्ता मृते ब्रह्माणमव्ययम्" (हरिवंशे) इत्युक्तेः।।२६।।

ननु तन्मयतामित्यस्य तादात्म्यार्थः किं नस्यादिति तत्राह कीट इति। द्वेषेण निन्दतःचैद्यस्य कृष्णेन सायुज्यं कथमभूदिति प्रश्नस्य परिहारः कथमागत इत्यतोवाऽऽह-**कीट** इति। यथा पेशस्कृता भृङ्गेण कुड्ये भित्तिसुषिरे रुद्धः कीटः श्यामनामा कृमिः तस्य भृङ्गस्य सरूपतां समानाकारतां विन्दते न तु तादात्म्यं, ततो भिन्नत्वेन दृश्यमानत्वात्। कीदृशः? यान्तं **उपर्यागत्य**[1] गभीरं नदन्तं भृङ्गं संरम्भभययोगेन ईषत्कोपभययुक्त स्नेहेनान्नं संददातीति स्नेहेन स्वात्मानमाकृष्य क्लिश्नातीति कोपयुक्तभयेन चानुस्मरन्। अत्र स्नेहस्यैव प्राधान्य प्राणधारणपोषणयोः सन्ततमिष्टत्वात्, कोपभययोः तात्कालिकत्वात् अप्राधान्यमित्यतो योगस्य संरम्भभययो विशेषणतयोक्तेः योगस्य स्नेहार्थत्वम्। "प्रीतिस्स्नेहः तथायोगः प्रेमबन्धः इतीर्यते" इति शब्दानर्णये सिद्धम्।।२७।।

कृष्णे भगवत्येवं वैरेण युक्तया अनुचिन्तया भक्तिपूर्वं स्मृत्या धूतपाप्मानः चैद्यादयः तं कृष्णमापुरित्यन्वयः। अत्र सज्जीवानां शापादिना सुराविष्टानामेव मुक्तिः न केवलानां तस्मात् तदाविष्टासुरा वैरेण प्राप्तपाप्मनः। "असुर्या नाम ते लोकाः" (ईश.उ. 3) इति श्रुतेः। तं लोक समुदायं प्रापुः, सन्तो जयादयो अनुचिन्तया, न कृष्णं अवापुः इत्ययं विशेषो वैरयुक्तया अनुचिन्तयेति आचार्योक्ताऽपिशब्देन गर्हाभिधायिना ज्ञातव्यः। "अनुचिन्तेति तां प्राहुः भक्ति पूर्वा तु या स्मृतिः" (शब्दनिर्णये) इति वचनात्, भक्तिपूर्वैवाऽनुचिन्ता अत्राभिप्रेतेति ज्ञातव्यम्। अतोऽत्र चैद्यादीनां भक्तियुतत्वं प्रतिपाद्यत इत्युपगन्तव्यम्, अन्यथा कीटोदाहरणं निरन्वितं स्यात्। उदाहरणस्यापि भक्त्यर्थत्वं कुत इति चेन्न। "स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि वा। विद्यामानेऽप्यल्पकोपे सङ्गतिस्नेहतस्तथा। पेशस्कृद्रूपतां कीटो यथा याति तथैव तत्। चैद्यादयोऽसुरा वेशाद्धरौ द्वेषयुता अपि। निजस्वभावया भक्त्या (जा) याता हरिसरूपताम्। तथाऽपि करुणो विष्णुरन्या वेशाद्यदि द्विषन्। हीयते किं ममानेन नित्यानन्द स्वरूपिणः। देहबन्धयुतानां हि द्वेषिणाऽपकृतं भवेत्। मम कोह्यपराध्येत निर्दोषसुखरूपिणः। अतःमय्यपराधस्त्

1 A °गतं

स्वस्मिन्नेव न मे भवेत्। अतो यद्यासुरावेशात्कृतमेतेन दुष्कृतम्। अनादिभक्तो यस्मान्मे मोदयिष्ये ततस्त्वहम्। इतिमत्वा मोचयति चैद्यादीनपि केशवः।।" (ब्रह्माण्डे) इति वचनात्। किञ्च निर्वैरेणत्याद्युक्तमत्रानुसन्धेयम्, तेन स्नेहाद्यायतनस्य देहस्य नाशादिना कीटस्योपद्रवाभावाद्धरेरप्युपद्रवाभावोऽनुमीयते। "तथापि करुणो विष्णुरन्यावेशाद्यदि द्विषन्। हीयते किं ममानेन नित्यानन्दस्वरूपिणः" (ब्रह्माण्डे) इत्यादिना च।।२८।।

**कामाद्द्वेषाद्भयात्स्नेहाद्यथाभक्त्येश्वरे मनः।**
**आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः।।२९।।**

**गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं नृप[1]!।।३०।।**

**कतमोऽपि न [2-]वेनः स्यात्[-2]पञ्चानां [3]पुरुषं प्रति।**
**तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्।।३१।।**

**मातृष्वसेयो वश्चैद्यो दन्तवक्त्रश्च [4]पाण्डव।**
**पार्षदप्रवरौ विष्णोर्विप्रशापा[5]त्पदच्युतौ।।३२।।**

## युधिष्ठिर उवाच

**कीदृशः कस्य वा शापो हरिदासाभिमर्शनः।**
**अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः।।३३।।**

**देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्।**
**देहसम्बन्धसम्ब[6]न्धमेतदाख्यातुमर्हसि।।३४।।**

## नारद उवाच

**एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया।**
**सुनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम्।।३५।।**
**पञ्चषड्वायनार्भाभाः पूर्वेषामपि पूर्वजाः।**
**दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम्।।३६।।**

1 A,B,G,J,M,Ma,T विभो। 2- -2 M,Ma वेनस्य प ° 3 M,Ma पू° 4 M,Ma पार्थिव। 5 A,B,G,J,T ॰त्पदाच्च्युतौ 6 A,B,G,J,T ॰द्ध -

**श्रीध० कामादिति**। तदघं कामादिनिमित्तं पापं हित्वा।।२९।।

तानाह-**गोप्य** इति।।३०।।

तर्हि वेनः किमिति नारके पातितः [1]तदीयप्रध्यानाभावात्पापमेव [2]तत्र फलितमित्याह **कतमोऽपीति**। पुरुषं श्रीहरिं प्रति पुरुषे पुरुषस्य कामा सम्भवाद्भयादिभिश्चिन्तयतां पञ्चानां मध्ये वेनो न कतमोऽपीत्युक्तम् ।।३१।।

तदेवं इतिहासं प्रस्तावकथां उक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबन्धे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह-**मातृष्वसेय** इति। पदाद्वैकुण्ठाच्च्युतौ।।३२।।

**कीदृश** इति। हरिदासावभिमृशत्यभिभवतीति तथा। [3-]कस्य शापः कीदृशो वा[-3]। अश्रद्धेयोऽनादरणीय इव। असंभवात्, भवो जन्म।।३३।।

असम्भवमेवाह-**देहेति**। जन्महेतुभूतैः प्राकृतैः देहेन्द्रियासुभिः हीनानाम्। शुद्ध सत्त्वमयदेहानामित्यर्थः। प्राकृतदेहसम्बन्धेन सम्बद्धमेतदाख्यानमाख्यातुमर्हसि।।३४,३५।।

**पञ्चेति**। कथम्भूताः ? पञ्च वा षड्वा हायनानि [4]वर्षाणि येषां ते, अर्भाः बालाः तद्वदाभा येषान्ते पूर्वेषां मरीच्यादीनामपि [5-]पूर्वजास्तेभ्यः प्रथमं जाताः[-5]। दिग्वाससो दिगम्बराः, अतः शिशून् मत्वा।।३६।।

**वीर०** एवमुक्तार्थं दार्ष्टान्तिके निदर्श्यैवं कैश्चिल्लब्धमित्याह-**कामादिति**। यथा भक्तियोगेनेश्वरे मन आवेश्य भगवतो गतिं जग्मुः तथा कामादिभिरपि तस्मिन् मन आवेश्य तदघं मनस आवेशननिमित्तं कामादिरूपमघं हित्वा अत्यन्तभावनाप्रकर्षेण कामादिकं विस्मृत्येत्यर्थः। बहवः तद्गतिं प्राप्ताः।।२९।।

एतदेवोदाहरणविशेषेषु दर्शयति-**गोप्य** इति। भगवति कामाद्गोप्यः तद्गतिं गता इत्यनुषङ्गः भयात्कंसः तद्गतिं गत इति विभक्तिविपरिणामः। यद्वा, गोप्यादयः सर्वे प्रतिनियतकामदिभिः उपायैः तद्गतिं गता इति यौगपद्येनान्वयः। सम्बन्धाद्वृष्ण्यः, स्नेहाद्यूयमिति, वृष्णयो यूयञ्च देहसम्बन्धकृतस्नेहादित्यर्थः। अन्यथा पञ्चप्रकारान्तर्भावायोगात्। भक्त्या वयं नारदादयः। तत्र स्नेहस्तुल्यसन्निकृष्टविषयः प्रेमा, भक्तिरुत्कृष्ट विषयेति भेदः।।३०।।

---

1 A,B,J तीव्रध्या° 2 A,B,J तस्य 3- -3 H,V omit 4 H,V omit वर्षाणि 5- -5 H,V omit

एवं उक्तेनार्थेन सिद्धं वेनचैद्ययोः वैषम्यमाह-**कतम** इति। उक्तानां पञ्चानां कामुकद्वेषि-बिभ्यत्स्नेहवद्भक्तरूपाणां पञ्चानां मध्ये वेनस्त्वीश्वरं परमपुरुषं प्रति कोऽपि न भवति कामुकाद्यन्यतमो न भवति। अतः तन्निन्दया निरयप्राप्तिरिति भावः। तस्मादुक्तानां पञ्चानां मध्ये केनाऽप्यन्यतमेनोपायेन भगवति श्रीकृष्णे मनो निवेशयेत्। निवेशिते च मनसि मनोनिवेशननिमित्तं कामादिकमपि विस्मृत्य तं प्राप्नोतीति भावः, अत एव हि श्रीविष्णुपुराणे "अपगतदोषानुबन्धो भगवन्तमवाप" इति ह्युक्तम्। ननु, संरम्भभययोगादीनामपि भक्तियोगवद्भगवत्प्राप्ति साधनत्वे यथा आरब्ध विच्छिन्न भगवद्भक्तियोगः पुनर्जन्मान्तरे "पूर्वाभ्यासेन कौन्तेय" (भ.गी. 6-44) इत्यादि भगवदुक्तरीत्या पूर्वाभ्यासेनोपसंहृतसम्पूर्णभगवद्भक्तियोगो भगवन्तं प्राप्नोति। एवमारब्धविच्छिन्नसंरम्भभयादि योगोऽपि जन्मान्तरे पूर्वाभ्यासेन परिपूर्ण तद्योगो भगवन्तं प्राप्नुयात्। न चैवं युक्तम्। अन्यथा विष्णु द्वेषिणां सर्वेषामपि मुक्तिप्रसङ्गः। एवञ्च "यः पुत्रः पितरं द्वेष्टि तं विद्यादन्यरेतसम्। यो विष्णुं सततं द्वेष्टि तं विद्यादन्त्यरेतसम्" इत्यादि विष्णुदूषकनिन्दावचनानामनवकाशप्रसङ्गः। उच्यते, संरम्भभयादीनां तस्मिन्नेव जन्मनि स्वविस्मारकभावनाप्रकर्षावहानामेव मुक्तिहेतुत्वं, न तु विच्छिन्नानां जन्मान्तरसम्बन्धिनामपि प्रत्युत तेषां निरयहेतुत्वमेव। भक्तियोगस्य तु विच्छिन्नस्यापि पुनर्जन्मान्तरे भावनाप्रकर्षावहनद्वारा मुक्तिसाधनत्वमिति। न चात्र मानाभावः धर्मिग्राहकमानस्य सत्त्वात्। "पार्थनैवेह नामुत्र विनाशस्तस्य विद्यते" (भ.गी. 6-40) इत्यारभ्य "तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्।यतते च ततो भूयः संसिद्धौ कुरुनन्दन। पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" (भ.गी. 6-43,44) इत्यन्तेन भगवतैवारब्धस्यापि भक्तियोगस्य पुनः कालान्तरे फलसाधनत्वस्योक्तत्वात्। नत्वेवं संरम्भभयादीनां सकृदारब्धानां पुनर्जन्मान्तरे भगवत्प्राप्तिसाधनत्वप्रमापकं किञ्चिद्वचनं विद्यते, प्रत्युत "यो विष्णुम्" इत्यादि निन्दावचनान्येव सन्ति यदि भगवन्निन्दादि[1]कारिणामपि सर्वेषां द्वेषादिविस्मारकभावनाप्रकर्षः स्यात्तर्हि स्यादेव तेषां मुक्तिरिनि न कोऽपि विरोधः।।३१।।

एवं संरम्भयोगादीनामपि भगवत्प्राप्तिसाधनत्वेन चैद्यदन्तवक्त्रयो र्न मुक्तौ विस्मयः कार्य इत्यभिधाय न केवलं तयोर्भगवद्विषयक भावनाप्रकर्षे तद्विषयक सं[2]रम्भ एव हेतुः अपि तु पूर्वसिद्धं भगवदानुकूल्यं चेति वक्तुं इतिहासं प्रतुब्रूषुः प्रश्नावसर प्रदानाय तयोस्तावद्विष्णुपार्षदत्वं विप्रशापाद्भ्रंशं चाह-**मातृष्वसेय** इति। मातुः

1 W omits आदि 2 A,B,T सम्बन्ध

स्वसा भगिनी तस्या अपत्यं पुमान् मातृष्वसेयः हे पाण्डव। युधिष्ठर। यो भवतो मातृष्वसेयः चैद्यो दन्तवक्त्रश्च द्वाविमौ पूर्वं विष्णोः पार्षदप्रवरौ द्वारस्थितौ विप्रशापाद्धेतोः पदात्स्वस्थानात् च्युतौ भ्रष्टौ एवञ्च तयोः पाश्चात्य द्वेषातिशयात्प्राक्तनात्यन्तभगवदानुकूल्याच्च शापन्ते भावनाप्रकर्षसिद्ध्या मुक्तिरितिभावः। अण्डान्तर्वर्तिन्युपेन्द्रादि विष्णु लोके कस्मिंश्चित् "तदुपर्यपि बादरायणः सम्भवात्" (ब्र.सू. 1-3-26) इति न्यायेनोपेन्द्राद्युपासनया तद्द्वारपत्यधिकारं गतौ कौचिज्जीवौ स्थितौ पश्चाद्विप्रशापात्पदच्युताविति नारदस्याशयः।।३२।।

इममाशयमजानान्नेवं प्रश्नावसरे दत्ते पृच्छति युधिष्ठिरः**कीदृश** इति द्वाभ्याम्। कीदृशः शाप इति शापा[1]कारप्रश्नः। कस्य वेति तत्कर्तृप्रश्नः। तस्य विशेषणं हरिदासाभिमर्शिन इति हरिदासानाभिमृशति पराभवतीति हरिदासाभिमर्शी तस्य अनेन तस्यानौचित्यं सूचितम्। हरेरेकान्तभक्तानां [2-]निकटवर्तिनां[-2] भवो जन्म अश्रद्धेय इव अनादर्तव्य इवाभाति प्रतीयते। अयं भावः "एतं देवयानं पन्थानमापद्य न च पुनरावर्तते न च पुनरावर्तते" (कौषी.उ 1-3) इति श्रुत्युक्तरीत्या मुक्तानामेव पुनरावृत्तिर्न विद्यते। किम्पुनर्नित्यसिद्धानां भगवत्पार्षदानां भगवत्स्थानाद्भ्रंशाभाव इह जन्माभावश्चेति। अत इदं भगवत्पार्षदयोः। तत्पदाद्भ्रष्टयोरुच्यमानमिह जन्मानादर्तव्यम्। तज्जन्मप्रतिपादकं वाक्यं "जरद्गवः कम्बलपादुकाभ्यां" इत्यादिवाक्यवदसङ्गतार्थमिति।।३३।।

तयोः जन्मासम्भवमेव विवृण्वन्पृच्छति देहेन्द्रियासु हीनानामिति। कर्मायत्त प्राकृत देहेन्द्रिय प्राणरहितानां वैकुण्ठपुरवासिनां नित्यसिद्धानामित्यर्थः अनेन पूर्वमप्यसम्भावित प्राकृतदेहेन्द्रियप्राणसम्बन्धानामित्युक्तम्। एवं विधानां देहसम्बन्धः प्राकृतदेहसम्बन्धः तदनुबन्धिरागद्वेषादिसम्बन्धश्च तयोः समाहारः तदेतद्घटमानं मह्यमाख्यातुं कथयितुमर्हसि।।३४।।

एवमापृष्टो भागवान्नारदः प्रश्नस्योत्तररूपमितिहासं वक्तुमुपक्रमते-**एकदेत्यादिना** ब्रह्मणः चतुर्मुखस्य पुत्राः सनन्दनादयः आदिशब्देन सनकसनत्कुमार-सनत्सुजाता विवक्षिताः। एते भुवनत्रयं सञ्चरन्तः कदाचिद्यदृच्छया विष्णोर्लोकं जग्मुःय, अयं विष्णुलोकशब्दः [3]ब्रह्माण्डान्तर्गत विष्णुलोकविषयः, न तु मुक्तप्राप्यपरमव्योमविषयः "वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः" (भाग 8-5-4) इति वक्ष्यमाणत्वात् मुक्तप्राप्ये अर्चिरादिमार्गेणैव गम्ये परमव्योम्नि योगिनामपि सनकादीनां गमनासम्भवान्नित्यसिद्धानां इहोत्पत्त्यसम्भवाच्च।।३५।।

---

1 A,B,T °पप्रका° 2- -2 W omits 3 W अण्डान्तं

सनन्दनादीन् विशिंषन्नाह-**पञ्चेति**। पञ्च षड्वा हायना वत्सरा येषां ते अर्भा अर्भकाः तदाभाः[1] तद्वदवस्थिताः तान्, आभ[2] शब्दाभिप्रेतं विवृणोति पूर्वेषां रुद्रादीनामपि पूर्वजातान्, दिग्वाससो दिगम्बरान् एवम्भूतांस्तान् सनन्दनादीन् शिशून् शिशुत्वे नालक्ष्य विष्णोर्द्वाःस्थौ द्वारि स्थितौ द्वारपौ प्रत्यषेधतां न्यवारयताम्।।३६।।

**विज॰** इतोऽपि भक्तिगर्भकामादिनैव भगवत्प्राप्तिरित्याह-**कामादिति**। तृतीयार्थे पञ्चमी। कामादिभिरपि यथा यथावत् भक्त्या सहैव कृष्णे मन आवेश्य द्वेषादिना यदघमापादितं तदघं हित्वा तस्य कृष्णस्य गतिं लोकं गता इत्यन्वयः। प्रथमतः कामादियुक्त्या भक्त्या हरौ मनः आवेश्य पश्चाद्यथाभूतया भक्त्याऽघं हित्वेत्यर्थः।।२९।।

बहव इत्युक्तस्य विषयविभागमाह-**गोप्य** इति। कामात्कामयुक्तयाभक्त्या कंसः कंसाविष्टः भृगुः भययुक्तया भक्त्या, चैद्यादयः चैद्यादिस्थाः जयादयः द्वेषयुक्तया, वृष्णयः सम्बन्धो बन्धुता, तन्निमित्तया, यूयं पाण्डवाः समतुलितबहुमानयुक्तया, वयं शुकादिशब्दवाच्याः केवलया भक्त्या। अत्र कश्चन विशेषः - "गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः। ज्ञेयो भययुतो भक्तश्चैद्यादिस्था जयादयः। विद्वेषसंयुता भक्ता वृष्णयो बन्धु (१) संयुताः। बहुमानस्नेह-साम्याद्देवा भक्ताः प्रकीर्तिताः। स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः। बहुमानोऽपि देवानां ऋषिभ्योऽप्यधिको मतः। ब्रह्मवीन्द्रेन्द्रकामादेरितरेषां यथाक्रमम्" (ब्रह्मतर्के) इति वचनादवगन्तव्यः।।३०।।

भक्त्यैव पुरुषार्थो न केवल द्वेषेणेत्याशयवानाह-**कतम** इति। कामाद्युपसर्जन भक्ति योगानां पञ्चानां मध्ये कतमोऽपि भक्तियोगो वेनस्य नास्ति असौ (२) कश्चन द्वेषात्मक एव; यस्मात् भक्तियोगमन्तरेण पुरुषार्थो नास्ति तस्मात्केनापि प्रकारेण आपादितेनोपायेन भक्तिलक्षणेन कृष्णे मनो निवेशयेन्न द्वेषादिना। "उपायो भक्तिरुद्दिष्टो द्वेषाद्या अनुपायकाः" (शब्दनिर्णये) इत्यभिधानात्। अतः उपायो भक्तिरेव अतो भक्तिमन्तरेणोपायो नास्तीत्यर्थः।।३१।।

पेशस्कृता रुद्ध इत्यत्र चैद्यादयः स्वतो भक्ता असुरावेशाद्द्वेषिण इत्युक्तम्। तत्र हेतुमाह-मातृष्वसेय इति। पार्षदप्रवरत्वं स्वतो भक्तत्वे, विप्रशापात् असुराविष्टत्वं द्वेषित्वे हेतुः।।३२।।

हरिदासान् हरिभक्तान् अभिमृशति स्पृशतीति हरिदासाभिमर्शनः हरेरेकान्तिनां नियत भक्तानां भव उत्पत्तिः शरीरयोगलक्षणः स्वपदभ्रंश लक्षणः शापः अश्रद्धेय इवाभाति। सयुक्तिकं निरूपयितुं न क्षममिति प्रतीयते।।३३।।

---

1 A.B.T ॰भासाः 2 A.B.T अर्भ

तत्र कारणमाह-**देहेति**। देहाद्यभावश्च कुत्रत्यानामिति तत्राह वैकुण्ठेति, तेषां प्राकृतदेहाद्यभावेन जान्मादिकं कथं घटत इति शङ्क्यत इत्यर्थः। देह सम्बन्धः देहयोगः तस्य सम्बन्धः निमित्तभूतः शापः एतच्छापनिमित्तं अनेन देहयोगः तन्निमित्तशापं तन्निमित्तं च व्याख्यातुमर्हसीत्यर्थसमुदायो लक्ष्यत इत्यर्थः।।३४।।

तदर्थजातं कुतोऽवगम्यत इति परिहार वचनादित्यत आदितो वक्ति-**एकदेति**।।३५।।

पञ्चषड्ढायनार्भाभाः पञ्चवर्षाः अर्भाः अर्भका बालाः तद्वदाभा दीप्तिर्येषां ते तथा, तत्समाना इत्यर्थः। शिशून्मत्वा पुरप्रवेशकरणाय वेषान्तरमापन्ना नित्याशङ्क्येत्यर्थः। द्वाःस्थौ द्वारिस्थौ जयविजयौ तान् सनन्दनादीन् प्रत्यषेधतां वेत्र [1]विधानेन न्यवारयतां इत्यन्वयः। द्वाःस्थावित्युक्त्या जयविजयोः अधिकारस्थत्वं सूचयति। तेन वैकुण्ठे अधिकारस्थाः मुक्ताश्चेति द्विविधाः जनाः सन्ति।तत्राधिकारस्था देहादियोगित्वाद्वरशापयोग्याः पश्चान्न योग्या इति ज्ञायते। तदुक्तम्-"अधिकारस्थिताश्चैव विमुक्ताश्च द्विधा जनाः। विष्णुलोकस्थितास्तेषां वरशापादियोगिनः। अधिकारस्थिता मुक्तिं नियतं प्राप्नुवन्ति च। विमुक्त्यनन्तरं तेषां वरशापादयो न तु।। देहेन्द्रियासुयुक्ताश्च पूर्वं पश्चान्नतैर्युताः। अप्यमी मानिभिस्तेषां देवैः स्वात्मोत्तमैर्युताः" (तन्त्रसारे) इति। अनेन वैकुण्ठे मुक्तामुक्तस्थानद्वयमस्तीति ज्ञायते।।३६।।

**अशपन् कुपिता एवं युवां वासं न चार्हथः।**
**रजस्तमोभ्यां रहिते पादमूले मधुद्विषः।**
**पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः।।३७।।**

**[2]एवं शप्तौ स्व[3]भवनात्पतन्तौ तैः कृपालुभिः।**
**प्रोक्तौ पुनर्जन्मभिर्वा त्रिभिर्लोकाय कल्पताम्।।३८।।**

**जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ।**
**हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः।।३९।।**

**हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा।**
**हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः।। ४०।।**

---

1. A विधूननेन 2. W इति 3 M,Ma भु °

**हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम्[1]।**
**जिघांसुरकरोन्नाना यातना मृत्युहेतवे।।४१।।**

**सर्वभूतात्मभूतं तं प्रशान्तं समदर्शनम्।**
**भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः।।४२।।**

**ततस्तौ राक्षसौ जातौ कैकस्यां[2] विश्रवस्सुतौ।**
**रावणः कुम्भकर्णश्च सर्वलोकोपतापिनौ[3]।।४३।।**

**तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये।**
**रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात्प्रभो।।४४।।**

**श्रीध० अशपन्निति**। वासमपि नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः। हे बालिशौ। अतो हेतोःआशु यातम्।।३७।।

**एवमिति** वां युवयो स्त्रिभिर्जन्मभिः लोकाय स्वस्थानप्राप्तये कल्पतां तावताऽयं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः।।३८।।३९।।

**हत** इति। धरोद्धारे निमित्ते तत्प्रतिघाती हतः।।४०।।

हिरण्यकशिपोर्वधे कारणं सूचयति-**हिरण्यकशिपुः पुत्रमिति**।।४१।।

**सर्वेति**। सर्वभूतानामात्मभूतम् कुतः? समं ब्रह्मैव पश्यतीति तथा तम्। अतः प्रशान्तं द्वेषादिरहितम्। अत एव भगवत्तेजसा स्पृष्टं व्याप्तम्। उद्यमैः शस्त्रास्त्र[4]प्रहारादिभिः।।४२।।

**तत** इति। विश्रवसः सुतौ।।४३।।

**तत्रेति**। न्यहनत् हतवानित्यर्थः। तर्हि तदेव कथनीयमित्युत्सुकं प्रत्याह-रामवीर्यमिति।।४४।।

**वीर०** ताभ्यां प्रतिषिद्धास्ते कुपिताः सन्तः एवं वक्ष्यमाणरीत्या अशपन्। शापप्रकारमेवाह-युवामित्यादिना। रागद्वेषादिरहिते भगवतः पादमूले वासं कर्तुं युवां नार्हथः। अप्राकृतं भगवत्पादारविन्द मूलमुपा[5]श्रित्याऽत्र स्थातुं प्राकृतरागद्वेषादियुक्तौ युवां नार्हथः इत्यर्थः। किन्तु बालिशौ मूर्खौ युवामतो भगवत्स्थानादाशु शीघ्रं पापिष्ठां रागद्वेषादिबहुलां आसुरीं योनिं [6-]आसुरजन्मे[-6]त्यर्थः। यातं प्राप्नुतम्।।३७।।

1 भगवत्प्रि° 2 A,B G,J,M,Ma,T केशिन्यां 3 A,B,G,J,T कोपतापनौ; M Ma °कप्रतापिनौ 4. H,V omit अस्त्र 5. W °माश्रि° 6- -6 W omits

एवमित्थं शप्तौ तौ पार्षदौ स्वस्थानात्पतन्तौ कृपालुभिस्तैः सनकादिभिः प्रोक्तौ, तदेवाह पुनरिति। पुनर्वा युवयोस्त्रिभिः जन्मभिः लोकाय पुनरेतल्लोकप्राप्त्यै कल्पतां शापमोक्षे इति शेषः। तावता कालेन शापः समाप्यतामित्यर्थः।।३८।।

तावेव पार्षदौ विप्रैः शप्तौ इह लोके दितेः पुत्रौ जज्ञाते जातौ बभूवतुः। तत्र हिरण्यकशिपुः ज्येष्ठस्ततो हिरण्याक्षस्तस्यानुजः।।३९।।

तत्र ज्येष्ठो हिरण्यकशिपुः नृसिंहरूपिणा भगवता हतः, हिरण्याक्षस्तु धरोद्धारे भूम्युद्धारे निमित्ते सौकरं वराहं वपुः बिभ्रता भगवता हतः।।४०।।

हिरण्यकशिपुवृत्तान्तप्रश्नावतरणाय तद्वृत्तान्तं सङ्ग्रहेणाह-**हिरण्यकशिपुरिति**। स केशवस्य भगवतो निरतिशयप्रियं प्रह्लादं पुत्रं जिघांसुः हन्तुमिच्छुः पुत्रमरणनिमित्तं नानाविधा यातनाः अकरोत्।।४१।।

यातनाः कुर्वाणोऽपि हिरण्यकशिपुस्तं पुत्रं हन्तुमुद्यमैः सर्वोपायैरपि नाशक्नोत्। तत्र हेतुं वदंस्तं विशिनष्टि-भगवतस्तेजसा स्पृष्टं व्याप्तं, तत्र हेतुः, प्रशान्तमशनायापिपासादिरहितं प्रशान्तेष्वेव भगवत्तेजस्स्पर्श इति भावः। यद्वा, अत एव प्रशान्तं, तत्र हेतुः समदर्शनं सुखदुःखादिषु द्वन्द्वेषु समदृष्टिम्, यः समः स एव हि शान्त इति भावः। यद्वा, अत एव समदर्शनं सर्वभूतानामात्मा ईश्वरस्तद्भूतं तत्प्रकारतया तदात्मतामापन्नम् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (ब्र.सू. 1-1-30) इत्युक्तरीत्या यथा वामदेवः "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः" (बृह.उ. 31-4-10) इति सर्वभूतान्तरात्मानं भगवन्तं स्वशरीरकं धीसात्कृत्य सर्वप्रकारतया स एवावस्थित इति प्रकारभेदेऽपि प्रकार्यैक्यात्तदभिप्रायेण वामदेवो मन्वादिभिः महात्मनोऽभेदमनुसंहितवान् एवं प्रह्लादोऽपि "अहं हरिः सर्वमिदं जनार्दनः" इति प्रकार्यैक्याद्विशिष्ट वस्त्वेकदेशत्वात् स्वस्मिन् स्वनिष्ठत्वाभावमालक्ष्याहमेव सर्वभूतान्तरात्मा भगवानित्यनुसंहितवानित्याशयेन तस्य विशेषणं सर्वभूतात्मभूतमित्युक्तम्।।४२।।

ततस्तावेव हिरण्यकशिपु हिरण्याक्षौ द्वितीये-जन्मनि कैकस्यां भार्यायां विश्रवस्सुतौ जातौ। तत्र ज्येष्ठो रावणोऽनुजस्तु कुम्भकर्णः तावुभौ सर्वान्[1] लोकानुपतापयतः खेदयत इति सर्वलोकोपतापनौ।।४३।।

तत्रापि जन्मनि भगवान् राघवः श्रीरामो[2] भूत्वा शापमुक्तये तयोः शापोत्तारणाय न्यहनत्, अनेन हितकारित्वं भगवतः सूचितम्। कोऽसौ राघवः? कीदृशं तस्य[3] वीर्यम्? कथं वा हतवान्? इत्यत्राह रामवीर्यमिति। वीर्यग्रहणं तज्जन्मादीनां अप्युपलक्षणं तदवतारतद्वीर्यादिकं सर्वं, हे प्रभो! मार्कण्डेयमुखाच्छ्रोष्यसि, अतो नात्र तन्मया वितन्यते इति भावः।।४४।।

1 A,B,T सर्वलो° 2 A,B,T omit श्रीरामः 3 A,B,T तद्वी°

**विज॰** नाना यातनाः बहुविधतीव्र वेदना कारणानि।।३७-४१।।

सर्वभूतान्तरात्मनि चराचरान्तर्यामिणि हरावेव भूतं स्थितम्।।४२।।

नन्वासुरी योनिं यातम् इत्ययं शापः आसुरयोनिप्राप्तिहेतुः तत्र जयविजययोः दित्यां जन्म तदनुगुणं केशिन्यादिजन्म कथं युज्यते? "राक्षसीमासुरी चैव प्रकृतिं मोहिनी श्रिताः" (भ.गी.9-12) इति भिन्न योनित्वादितीमां मन्दाशंकां "हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम्। अतो भयानको जातस्तत्र राजानमेव च। मत्वा राजेव सञ्जातः कृष्णं चक्रादिलक्षणैः। मृतिकाले हरिं चैव मत्वा भक्त्यैव केवलम्। द्वास्स्थत्वं हरिमाविश्य प्रापैत्र मनुजोऽपि तु" (गारुडे) इत्यनेन परिहर्तव्यम्। "यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेबरम्। तं तमेवैति कौन्तेय!" (भ.गी.8-6) इत्यादेः। सुरविरुद्धत्वमुभयोः सममित्यतो हरिद्वेषश्च सम इति भावः।।४३,४४।।

**तावेव[1] क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव।**
**अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ।।४५।।**
**वैरानुबन्धतीव्रेण ध्यानेनाच्युत सात्मताम्[2]।**
**नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ।।४६।।**

**युधिष्ठिर उवाच**

**विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि।**
**ब्रूहि मे भगवन्येन प्रह्लादस्याच्युतात्मता[3] ।।४७।।**

इति श्रीमद्भागवते महापुराणे श्रीवेय्यासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे प्रह्लादचरितोपक्रमे प्रथमोऽध्यायः।।१।।

**श्रीध॰ तावििति।** कृष्णचक्रेण हतमंहो ययोस्तौ। तयोः पापमेव हतं[4] न तु तावित्यर्थः।।४५,४६।।
**विद्वेष** इति। येन कारणेन प्रह्लादस्याच्युतात्मता अच्युतैकचित्तत्वं तदपि ब्रूहीति शेषः।।४७।।

इति श्रीमद्भागवत सप्तमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः।।१।।

---

1 M,Ma वद्य° 2 H,M,Ma V,W साम्यताम् 3 M,Ma °देऽप्यच्यु° 4 H V °याहतं

**वीर॰** तावेव रावणकुम्भकर्णाविवाद्य अधुना तृतीये जन्मनि तव मातृष्वस्रात्मजौ क्षत्रियौ शिशुपाल-दन्तवक्त्रौ जातावद्य[1] शापेन निर्मुक्तौ श्रीकृष्णस्य चक्रेण हतमंहः पापमूलकं शरीरं ययोस्तौ।।४५।।

वैरानुबन्धेन तीव्रमुत्कृष्टं यद्ध्यानं भगवद्विषयकं तेनाच्युतस्य भगवतः सात्मतां आत्मनो भावः प्रकारः आत्मता, समाना आत्मता सात्मता, तां साधर्म्यमित्यर्थः। नीतौ प्रापितौ पुनर्विष्णु पार्षदौ भूत्वा हरेः पार्श्वं जग्मतुः।।४६।।

यदुक्तं "हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम् जिघांसुः" (भाग. 7-1-41) इत्यादिना प्रह्लादस्य केशवप्रियत्वं पितुः[2] हिरण्यकशिपोः प्रह्लादे मरणोद्योगपर्यन्तो द्वेषश्चेति तद्विस्तरेण बुभुत्सुः पृच्छति युधिष्ठिरः- **विद्वेष** इति। दयिते नितरां प्रीतिविषये तत्रापि महात्मनि सद्गुणाश्रये हिरण्यकशिपोः विद्वेषः कथमासीत्केन हेतुना आसीदित्यर्थः। तदेतत् या च येन कारणेन प्रह्लादस्य अच्युतात्मता अच्युते भगवति आत्मा मतिर्यस्य सोऽच्युतात्मा, तस्य भावस्तत्ता, तां च हे भगवन्! मे मह्यं ब्रूहि।।४७।।

इति श्रीमद्भागवत सप्तमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां प्रथमोऽध्याय ।।१।।

**विज॰** वैरानुबन्धेन वैरयुक्तभक्त्या तीव्रेण अत्युत्कटेन अच्युतसाम्यतां श्रीकृष्ण स्वरूपप्रवेशलक्षणं हरेः वैकुण्ठगमनानन्तरं पार्षदौ जयविजयाख्यमूलरूपेणैकीभूय हरेः पार्श्वं जग्मतुरित्यन्वयः। "अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृतः" (प्रकाशिकायाम्) इत्यभिधानादनुबन्ध शब्दस्य नैरन्तर्यार्थोऽनुपपन्न इति।।४५,४६।।

दयितत्वं महात्मत्वं च प्रश्नस्य कारणं येन केन निमित्तेन अच्युते आत्मा मनो यस्य स तथा तस्मिन्।।४७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ-विरचितायां पदरत्नावल्यां
टीकायां सप्तमस्कन्धे प्रथमोऽध्याय ।।१।।

* * * *

---

1 W °वधुना 2 A,B,T omit पितुः

# द्वितीयोऽध्यायः

नारद उवाच

भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना।
हिरण्यकशिपू राजन् पर्यतप्यद्रुषा शुचा।।१।।

आह चेदं रुषा घूर्णः[1] सन्दष्टदशनच्छदः।
कोपोज्ज्वलद्भ्यां[2] चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम्।।२।।

करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्य भ्रुकुटीमुखः।
शूलमुद्यम्य सदसि दानवानिदमब्रवीत्।।३।।

भो भो दानवदैतेया द्विमूर्धस्त्र्यक्ष शम्बर।
शतबाहो हयग्रीव नमुचे पाक इल्वल।।४।।

विप्रचित्ते मम वचः पुलोमन् शकुनादयः।
श्रुणुतानन्तरं सर्वे[3] क्रियतामाशु मा चिरम्।।५।।

सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत्।
पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः।।६।।

तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः।
भजन्तं भजमानस्य बालस्येवास्थिरात्मनः।।७।।

मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै।
रुधिरप्रियं[4] तर्पयिष्ये भ्रातरं मे गतव्यथः।।८।।

---

1 M,Ma पूर्णः 2 H,M,Ma,V ॰ल्लाभ्यां 3 M,Ma सर्वैः 4 M,Ma युद्धप्रियं

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः। तद्धतभ्रातृपुत्रदीनितिहासैरसान्त्वयत्।।

भगवद्द्वेष एव तद्द्वेषेऽपि कारणमित्याशयेनाह - **भ्रातरीत्यादिना**। एवं देवपक्षपातेन।।१।।

**आहेति**। कोपेन उत् अतिशयेन ज्वलद्भ्यां कोपाग्निधूमेनैव[1] धूम्रमम्बरं निरीक्षमाणः।।२।।

**करालेति**। करालदंष्ट्राभिः युक्तयोग्रया दृष्ट्या दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः।।३-५।।

**सपत्नैरिति**। समेनाऽप्युपधावनैः भजनैः निमित्तभूतैः पार्ष्णिग्राहेण सता।।६।।

**तस्येति**। एवं त्यक्तः स्वभावः समत्वं येन तस्य घृणेः शुद्धतेजोमयस्यापि मायया वनौकसो वराहरूपस्य सतः। अस्थिरात्मनोऽव्यवस्थितचित्तस्य कुतः? यो यो भजति तं तं भजमानस्यानुसरतः।।७।।

**मच्छूलेति**। तस्य रुधिरेण यावत्तर्पयिष्यामि तावद्यूयं भुवं यातेति तृतीयेनान्वयः।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं तयोः केशवात्मत्वविद्वेषविस्तर बुभुत्सुना पृष्टो भगवान्नारद आह-**भ्रातरीति**। एवं देवपक्षपातिना क्रोडमूर्तिना वराहरूपिणा भगवता भ्रातरि हिरण्याक्षे विनिहते सति, हे राजन्! रोषेण[2] शुचा शोकेन च [3]अर्पितो व्याप्तः[3] पर्यतप्यत् [4]परितापञ्चकार[4]।।१।।

इदं वक्ष्यमाणमाह[5] च। कथम्भूत आह तत्राऽऽह, रुषा पूर्णः अत एव सन्दष्टः दशनच्छदः अधरो येन कोपेन उदतिशयेन ज्वलद्भ्यां चक्षुर्भ्यां धूम्रमम्बरं आकाशं कोपाग्निधूमेनैव धूम्रमम्बरं निरीक्षमाणः।।२।।

करालदंष्ट्राभिः भयङ्करदंष्ट्राभिः युक्तया उग्रया दृष्ट्या दुष्प्रेक्ष्यं दुर्निरीक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सदसि सभायां शूलमुद्यम्य उद्धृत्य [6]अनेन स्वसामर्थ्यं सूचितम्[6]। दानवान्प्रति इदमुवाच।।३।।

तदेवाह **भो भो** इति। सामान्येन तावत्सम्बोधनं भो भो दानवा दैतेयाश्चेति, विशेषतः सम्बोधनं द्विमूर्धन्नित्यादिना।।४।।

---

1. A °ग्नीन्धनेनैव 2. W रुषा 3- -3 W omits 4- -4 W omits 5. W °मुवाच 6- -6 W omits

एते[1] सर्वे यूयं प्रथमं मम वचः शृणुत। ततः श्रवण[2]समनन्तरमेव मदुक्तमाशु युष्माभिः क्रियतां चिरं विलम्बं मा कुरुत।।५।।

किं तत्तत्राह-**सपत्नैरिति**। समेन देवासुरवर्गयोः समेनाऽपि उपधावनैः अनुवर्तमानैः पार्ष्णिग्राहेण पृष्ठोपोद्बलकेन देवानां सहायभूतेनेत्यर्थः। हरिणा प्रयोज्यकर्त्रा मत्सपत्नैः प्रयोजककर्तृभिः क्षुद्रैः अल्पबलैः देवैः प्रियः सुहृच्च मे भ्राता हिरण्याक्षो घातितः।।६।।

तस्य हरेः कथम्भूतस्य घृणेः सूर्यवत्तेजोमयविग्रहस्यापि मायावनौकसः मायोपात्तवराहरूपस्य अत एव त्यक्तः स्वभावो येन तस्य, देवतारूपत्यागादिति भावः। भजन्तं स्वमनुवर्तमानं भजमानस्य अनुवर्तमानस्य बालस्येवास्थिरात्मनः अव्यवस्थितचित्तस्य।।७।।

एवम्भूतस्य हरेर्मम शूलेन भिन्ना ग्रीवा यस्य तस्य भूरिणा रुधिरेण रुधिरप्रियं मम भ्रातरं गतव्यथोऽहं यावत्तर्पयिष्ये तावद्यूयं भुवं यातेत्यन्वयः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हिरण्यकशिपुः स्वतो विष्णुभक्तोऽसुरावेशात्तद्द्वेषीत्ययं विवेकः तद्वचनेन ज्ञातुं शक्य इत्येतदर्थमस्याध्यायस्य प्रारम्भः। तत्र प्रह्लादनाम्नि पुत्रे द्वेषः कथं पितुरभूदित्यस्य प्रश्नस्य परिहारं वक्तुमारभते- **भ्रातरीति**।।१।।

हरिविषयरुषा भ्रातृविषयशुचा दशनच्छदः ओष्ठः चक्षुषो रोचिषा यथा धूम्रं भवति तथा पश्यन्।।२।।

भ्रुकुट्या नीलशिरया युक्तमुखः।।३।।

हे पाक!।।४-५।।

क्षुद्रैरल्पैः कपटभिर्वा पार्ष्णिग्राहेण पृष्ठावेक्षकेण बालकेन "देवानां दानवानां च सामान्य मधिदैवतम्" इत्यतः समेनाप्युपधावनैः स्वोदर्चनैः विषयेण।।६।।

त्यक्तस्वभावस्य त्यक्तसाम्यावस्थस्य तत एवास्माभिः घृणेः शोच्यस्य "घृणिर्विभावसौ सूर्ये रश्मौ शोच्ये विघर्षणे" इत्यभिधानम्। भजन्तं स्वात्मानं सेवमानं भजमानस्य प्रत्युपकारं कुर्वतः।।७,८।।

---

1 W omits एते 2 A,B,T °णान°

**तस्मिन् कूटेऽहिते नष्टे [1]कृत्तमूले वनस्पतौ।**
**विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः।।९।।**

**तावद्यात भुवं यूयं [2]ब्रह्मक्षत्र समेधिताम्।**
**सूदयध्वं तपो यज्ञ स्वाध्याय व्रत[3]दानिनः।।१०।।**

**विष्णुर्द्विजक्रियामू[4]लो यज्ञो धर्ममयः पुमान्।**
**देवर्षि पितृभूतानां धर्मस्य च परायणम्।।११।।**

**यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः।**
**तं तं जनपदं यात सन्दीपयत वृश्चत।।१२।।**

**इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः।**
**[5]तदा प्रजानां कदनं विदधुः कदनप्रियाः।।१३।।**

**पुरग्रामव्रजोद्यान क्षेत्रारामाश्रमाकरान्।**
**खेटखर्[6]पटघोषांश्च ददहुः पत्तनानि च।।१४।।**

**केचित्खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान्।**
**आजीव्यांश्चिच्छिदुर्वृक्षान् केचित्परशुपाणयः।**
**प्रादहन् शरणान्[7]यन्ये [8-]प्रजानां ज्वलितोल्मुकैः[-8]।।१५।।**

**एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः।**
**दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः।।१६।।**

**श्रीध०** ननु देवैस्तद्वधः कारितोऽतस्ते किं. न हन्यन्ते तत्राह-**तस्मिन्निति।** तस्मिन् [9]हरौ कूटं कपटं अहिते प्रतिपक्षे कूटमहितं यस्येति वा। नष्टे अदृष्टे सति देवाः शुष्यन्ति। स्वयमेव नाशं यास्यन्ति। कुतः? विष्णुरेव प्राणो येषां ते। [10-]यथा कृत्तमूले वृक्षे शाखाः स्वयं शुष्यन्ति तद्वत्[-10]।।९।।

---

1 M.Ma कृन्त° 2 A,B,G,J,T विप्र° 3 M,Ma दानकान् 4 W °मूल° 5 A,B,G,J M,Ma,T तथा 6 A,B,G,J,M,Ma,T °र्वं° 7 M,Ma °न°

8- -8 W प्रजाः जज्वलुरुल्मुकैः 9 H,V omit हरौ 10- -10 H,V omit

**तावदिति**। तपोयज्ञादियुक्तान् सूदयध्वं घातयत।।१०।।

ननु तैः किमपराद्धं तत्राह-**विष्णुरिति**। द्विजानां क्रियानुष्ठानं मूलं यस्य सः। यतोऽसौ यज्ञो धर्ममयश्च। [1-]देवादीनां[-1] परायणं परमआश्रयः। अतो यज्ञरूपस्य विष्णोः मूलत्वात् मामनादृत्य तदाश्रयणाच्च ते वध्या इति भावः।।११।।

तस्मात्परमं मन्त्रं शृणुतेत्याह-**यत्र यत्रेति**। सन्दीपयत दहत। वृश्चत [2-]आजीव्यानां वृक्षाणां[-2] छेदं कुरुत। [3-]लुनीतेत्यर्थः[-3]।।१२,१३।।

**पुरेति**। पुरं हट्टादिमत्। ग्रामस्तद्रहितः। व्रजो गवां वासः। उद्यानं कृत्रिमं वनं, क्षेत्रं व्रीह्यादेः। आरामो अकृत्रिमं वनम्। आश्रमः ऋषीणां स्थानम्। आकरो रत्नादीनाम्। खेटः कृषीवलानां वासः। खर्पटो[4] गिरिद्रोण्याश्रयो ग्रामः। घोष आभीराणं वासः। पत्तनं राजधानी।।१४।।

**केचिदिति**। खनित्रैः खननसाधनैः। आजीव्यानुपजीव्यान् [5-]जम्ब्वाम्रकपित्थादीन्[-5], शरणानि गृहान्।।१५।।

**एवमिति**। विप्रकृते उपद्रुते यज्ञभागानां अभावाद्दिवं परित्यज्य [6-]अलक्षितास्सन्तो भुवि चेरुः[-6]।।१६।।

**वीर०** ननु देवैः तद्वधः कारितः। अतस्ते किं न हन्यन्ते? तत्राह-**तस्मिन्निति**। अस्माकमहिते शत्रौ कूटे देवानामाश्रये तस्मिन् विष्णौ नष्टे सति यथा वनस्पतौ छिन्नं मूलं यस्य तस्मिन् सति शाखाः शुष्यन्ति, तद्वद्विष्णुरेव प्राणो जीवनहेतुः येषां ते, दिवौकसः देवाः स्वयमेव नङ्क्ष्यन्ति अतः तन्नाशाय न पृथग्यत्नः कार्य इति भावः।।९।।

यावत्तर्पयिष्ये तावद्यूयं ब्रह्मक्षत्रकुलाभ्यां समेधितां ब्रह्मक्षत्रबहुलामित्यर्थः। भुवं पृथिवीं यात। गत्वा[7] किं कर्तव्यम्? तत्राह-सूदयध्वमिति। तपआदीनां द्वन्द्वे ततो मत्वर्थीय इनिः तप आदिभिः युक्तान् सूदयध्वं घातयत।।१०।।

ननु तैः किमपराद्धम्? तत्राह-**विष्णुरिति**। द्विजानां क्रियामूलो यो यज्ञः स एव धर्मस्तन्मयस्तदाकृतिः पुमान् विष्णुर्द्विजक्रिया मूल इति भिन्नपदत्वे द्विजानां क्रिया स्मार्ती मूलं यस्य श्रौतयज्ञरूपधर्ममयश्चेत्यर्थः।

---

1- -1 H.V omit 2- -2 H.V omit 3- -3 H.V omit 4 A,B,J °र्व° 5- -5 H.V omit 6- -6 H,V omit 7 A,T यात्वा

पुमान् श्रौतस्मार्तधर्मशरीरक इत्यर्थः। तथा देवर्षिपितृभूतानां धर्मः देवाद्युद्देश्यको यो धर्मस्तस्य च परायणं परमआश्रयः निर्वाहकः देवाद्युद्देश्यको यो धर्मस्तदाश्रय इत्यर्थः। द्विजेषु तत्तत्कर्तृकयज्ञादिधर्मेषु च विनाशितेषु शरीर विनाशेन विष्णुरपि विनाशितो भवति तद्विनाशे चाश्रयविनाशादाश्रिते धर्मे विनष्टे सति यज्ञधर्मीयचरुपुरोडाशादि-हविर्भागादिरूपजीविकाया अभावाद्देवादयोऽपि स्वयमेव विनष्टा भवन्तीति भावः।।११।।

तस्माद्यत्र यत्र देशे ब्राह्मणादयो वर्तन्ते तं तं जनपदं देशं यात गच्छत सन्दीपयत दहत वृश्चत लुनीत।।१२।।

इतीत्थं भर्तुर्हिरण्यकशिपोः निर्देशमाज्ञां आदृता आदरयुक्ताः शिरसा आदाय स्वीकृत्य कदर्नाप्रिया कदनं भूतद्रोहस्तद्दुःखं वा तदेव प्रियं येषां ते दानवा दैतेयाश्च प्रजानां कदनं चक्रुः।।१३।।

कदनक्रियामेव प्रपञ्चयति-**पुरेति**। तत्र पुरं हट्टादिमत्, ग्रामस्तद्रहितः, व्रजो गवां वासः, उद्यानं कृत्रिमं वनं, क्षेत्रं व्रीह्यादेः, आरामः अकृत्रिमं वनं, आश्रमं ऋषीणां स्थानं, आकरो रत्नानां वासः, खेटः कर्षकग्रामः, खर्पटा[1] गिरिद्रोण्याश्रयो ग्रामः, घोष आभीराणां वासः, पत्तनं[2] राजधानी एतानि केचिद्ददहुः अग्निप्रक्षेपेण दग्धवन्तः।।१४।।

केचित्खनित्रैः खननसाधनैः सेतून् प्राकारान् गोपुरांश्च[3] बिभिदुः तत्र सेतवो जलबन्धनार्थं[4] निर्मितास्तटाकादयः, केचिच्च परशुः पाणौ येषां ते आजीव्यान् उपजीव्यान् फलिनश्चूतादिवृक्षांश्च चिच्छिदुः, अन्ये च शरणानि गृहान् प्रादहन् प्रदग्धवन्तः, केचिच्चोल्मुकैः सांगारकाष्ठैः प्रजानां जनानां (प्रजाः जनाः) जज्वलुः।।१५।।

एवं दैत्येन्द्रस्य हिरण्यकशिपोरनुचरैः मुहुर्मुहुः लोके विप्रकृते उपद्रुते सति सर्वे देवाः स्वर्गं परित्यज्य असुरैः अलक्षिताः तत्र तत्र भुवि प्रदेशे विचेरुः जग्मुः।।१६।।

**विज०** अन्तर्दुष्टं दृश्यमानरमणीयं कूटं अस्थिरात्मनः कूटत्वादिभाववचनं मोहनार्थं असुरमतं उदीरितमिति ज्ञातव्यम्, तदुक्तम्-"विष्णुभक्तेश्च तज्ज्ञानात् अन्यतो मुक्तिवाचकाः। विष्णोर्गुणाभासवाचः श्रीब्रह्मादेस्तथा क्रमात्।। विष्ण्वादिद्वेषिणश्चैव सुखवाचस्तथाखिलाः। मोहनार्थाः समुद्दिष्टा स्तथाऽर्थद्योतका स्तथा।।" (प्रकाशसंहितायाम्) इति।।९,१०।।

---

1 A,B,T ०र्वं० 2 W ०ट्ट० 3 A,B,T add सेत्वादींश्च 4 A,B,T ०न्धार्थं

द्विजक्रियामूलः द्विजाश्च यज्ञादिक्रियाश्च मूलं यस्य स तथा, भक्तिज्ञानादिमन्तरेण केवलं यागादिक्रियया प्रसन्नो भवतीति एतदासुरं मतम् "विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः" (प्रकाशसंहितायाम्) इत्येतदत्रापि प्रमाणम्। द्विजैः क्रियमाणां यागादिक्रियां मूलयति प्रतिष्ठापयति इति, द्विजक्रियामूल इत्येतत् देवमतम्। "मूल प्रतिष्ठायाम्" इति धातुः, इज्यत इति यज्ञः, धर्ममयः धर्मप्रधानः, दानादिधर्मेण प्रसीदतीत्येतदप्यासुरमतम्। "यथार्थद्योतकः" इति वचनात्। धारकतम इत्यन्योऽर्थः। परायणम् उत्तमाश्रयं इत्येतद्देवमतम्।।११।।

सन्दीपयत दहत, वृश्चत छिनत्त।।१२।।

कदनं "कद हिंसायाम्"।।१३।।

गवामावासस्थानं व्रजः गोपालवसतिर्वा, आश्रमो मुनिनिवासः, आकरो रत्नाद्युत्पत्तिस्थानं, खेटः नाट्यस्थानं, खर्वटो वसनविक्रयस्य स्थानं, घोष आभीरपल्लिः, वणिग्भिरधिष्ठितं पत्तनम्।।१४।।

आजीव्यान् वृक्षान् नारिकेलक्रमुकान् पनसादीन्।।१५।।

विप्रकृते विपरीतमापादिते विनाशिते।।१६।।

**हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः।**
**कृत्वा [1]कटोदकादीनि भ्रातृपुत्रानसान्त्वयत्।।१७।।**

**शकुनिं शम्बरं [2]धार्ष्टिं भूतसन्तापनं वृकम्।**
**काल[3]नाभं महानाभं हरिश्म[4]श्रुं मदोत्कचम्।।१८।।**

**तन्मातरं [5]रुषद्भानुं दितिं च जननीं गिरा।**
**श्लक्ष्णया देशकालज्ञ इद[6-]माहासुरेश्व[-6]रः।।१९।।**

**हिरण्यकशिपुरुवाच**

**अम्बाम्ब! हे वधूः पुत्रा वीरं मार्हथ शोचितुम्।**
**रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः।।२०।।**

---

1 H,V तिलोद°, W करोद° 2 A,B,G,J,M,Ma,T धृष्टं 3 M,Ma °र्नाभ 4 A,B,G,J,T °श्रुमथोत्कचम्; M, Ma °श्रुमथोकलं 5 A,B,G,J,T रुषा भानुं M,Ma रुशद्भानुं 6- -6 A,B,G,J,M,Ma,T °माह जनेश्वर।

**भूतानामिह संवासः प्रपायामिव सुव्रते।**
**दैवेनैकत्र नीतानामुन्नीतानां [1] स्वकर्मभिः।।२१।।**

**नित्य आत्माव्ययः शुद्धः सर्वगः सर्ववित्परः।**
**धत्तेऽसावात्मनो लिङ्गं मायया विसृजन्गुणान्।।२२।।**

**यथाम्भसा प्रचलता तरवोऽपि चला इव।**
**चक्षुषा भ्राम्यमाणेन दृश्यते [2] चलतीव भूः।।२३।।**

**एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान्।**
**याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ।।२४।।**

**श्रीध०** तदेवं प्रजानां कदनं दानवेषु कुर्वत्सु स्वयं स्वर्ग[3]स्वाराज्यादि साधयितुं तपस्तप्तुकामः प्रथमं यत्कृतवान् तदाह-**हिरण्यकशिपुरि**त्यादिना। [4-] तिलोदकं प्रेताय प्रदेयं तिलैस्सहितमुदकम् कटोदकादीर्नीति पाठान्तरेऽपि तिलोदकमित्येव ज्ञेयम्[-4]। आदिशब्दात्प्रेतश्राद्धादिकम्।।१७-१९।।

**अम्बेति।।** हे वधूरिति भ्रातुर्भार्यां सम्बोधयति।।२०।।

भवतु नाम तस्य श्लाघ्यो वधः तथापि अस्माकं तावद्बन्धुर्गत एवेति चेत्तत्राह **भूतानामिति।** दैवेन प्राचीनकर्मणा एकत्र नीतानां संयोजितानां पुनश्च स्वैः [5] स्वैः कर्मभिः उन्नीतानां वियोजितानाम्।।२१।।

एवं [6] लोकदृष्ट्या शोकं निवार्य तत्त्वदृष्ट्या वारयति-**नित्य इति।** [7] आत्मा नित्यो मृत्युशून्यः, अव्ययोऽपक्षयशून्यः, शुद्धो निर्मलः, [8] सर्वगः सर्वगतः सर्ववित्सर्वज्ञश्च। सर्वत्र हेतुः परो देहादिव्यतिरिक्तः अतो मृत इति कृश इति मलिन इति वियुक्त इत्यज्ञ इति च [9] मत्वा शोको न कार्य इत्यर्थः। कथं तर्हि तस्य संसारस्तत्राह-धत्त इति। आत्मनो मायया स्वविद्यया लिङ्गं [10] मूर्तीः धत्ते गुणानुच्चावचान् देहान् सुखदुःखादीन् वा विशेषेण सृजन् स्वीकुर्वन्। लिङ्गशरीरोपाधिः संसार इत्यर्थः।।२२।।

1 M,Ma तथाऽध्रुवः 2 M,Ma भ्रमतीव 3 A,B,J omit स्वां 4- -4 A,B,J कटोदकं प्रेताय प्रदेयमुदकम्। 5 B omits स्वे 6 A J लौकिक
7 B,H,V omit आत्मा 8 A,B,J omit सर्वगः 9 H,V omit मत्वा 10 H,V omit मूर्तीः

एतत्सदृष्टान्तं प्रपञ्चयति-**यथेति** चतुर्भिः। तरवः प्रतिबिम्बिताः उपाधिधर्मा उपहिते भवन्तीति दृष्टान्तमुक्त्वा ग्राहक[1-]धर्मा ग्राह्ये[-1] भवन्ति इति दृष्टान्तमाह-चक्षुषेति।।२३।।

**एवमिति**। अविकलः परिपूर्ण एव तत्साम्यतां मनस्समतामित्यर्थः।.२४।।

**वीर०** ततो दुःखितो हिरण्यकशिपुः सम्परेतस्य मृतस्य भ्रातुः [2-]हिरण्याक्षस्य[-2] करोदकादीनि प्रेतोद्देशेन करेण हस्तेन देयं सलिलं जलं करोदकं तत्प्रभृतीनि प्रेतोद्देशेन कर्तव्यानि कृत्वा भ्रातुः हिरण्याक्षस्य पुत्रान् असान्त्वयत्।।१७।।

भ्रातुः पुत्रानुद्दिशति-**शकुनिमिति**।।१८।।

तथा देशकालाभिज्ञोऽसुरेश्वरो हिरण्यकशिपुस्तेषां शकुन्यादीनां मातरं रुषद्भानुं स्वमातरं दितिञ्च श्लक्ष्णया मृद्व्या निपुणया वा गिरा इदं वक्ष्यमाणमाह।।१९।।

तदेवाह-**अम्बाम्बे**त्यादिना, यावदध्याय समाप्ति। अम्बाम्बेति दितेः सम्बोधनम्, हे वधूरिति भ्रातु[3]र्भार्यायाः, हे पुत्रा इति तत्पुत्राणाम्, वीरं हिरण्याक्षं प्रति शोचितुं यूयं नार्हथ कुतो यतो रिपोरभिमुखे शूराणां वधः श्लाघ्यः प्रशस्तः ईप्सितः प्रशस्तत्वेनाभिमत इत्यर्थः।।२०।।

भवतु नाम तस्य वधः श्लाघ्यः तथापि अस्माकं तावद्बन्धुर्गत एवेत्यत्राह-**भूतानामिति**। इह संसारे भूतानां संवासः सहावस्थानं प्रपायामिव प्रपिबन्त्यस्यामितिप्रपा, पान्थानां पिपासूनां जलादिपानेन विश्रान्त्यर्थं धार्मिकैर्निर्मिता शाला, तस्यां यथा पान्थानां सहावस्थानं अस्थिरं तद्वदिह भूतानामपीत्यर्थः। अस्थिरत्वे हेतुं वदन् भूतानि विशिनष्टि, स्वकर्मभिः हेतुभिः दैवेन तत्तज्जीवकर्मानुगणं प्रवृत्तेनेश्वरेणेत्यर्थः। एकत्र नीतानां संयोजितानां पुनरन्यत्र उन्नीतानां वियोजितानाम्।।२१।।

ननु जीवतामेव संयोगवियोगौ प्रपादिषु दृष्टौ, कथं पुनरजीवितोऽत्रैव दग्धस्य तत्र तत्र संयोगवियोगौ? इत्यत्राह-**नित्य इति**। देहस्यास्थिरत्वेऽप्यात्मनः स्थिरत्वात् तत्तत्कर्मायत्तशरीरत्यागोपादानाभ्यां तैस्तैः संयोगवियोगौ उपपन्नाविति भावः। तदेतदुपपाद्यते, आत्मा नित्यस्तत्र हेतुरव्ययः विनाशाद्यवस्थारहितः, तत्कुतः? शुद्धः प्रकृतिपरिणामानाश्रयस्वरूपः प्रकृतिपरिणामो हि प्रकृतिगतः तत्कुतः परदेहाद्विलक्षणः, तत्कुतः सर्ववित्

1- -1 धर्मो ग्राह्यो भवति 2- -2 W omits 3 W °तृभ्रा°

देहेन्द्रियमनःप्राणादीनां वित् अजडत्वेन देहाद्विलक्षण इति भावः। कथमेकदेशस्थः सर्वं वेत्ति? तत्राह-सर्वगः स्वधर्मभूतज्ञानद्वारा कृत्स्नदेहादिव्यापीति भावः। स्वतः एवम्भूतोऽप्यसावात्मा मायया स्वसम्बन्धिविचित्रपुण्य पापात्मककर्मणा गुणान् सत्त्वादीन् विसृजन् कर्मानुरूपं क्षोभयन्नित्यर्थः। आत्मनः स्वस्य कर्मफलभोगार्थमिति शेषः। लिङ्गं शरीरं धत्ते बिभर्ति गुणक्षोभस्य कर्मानुगुणत्वात् कर्मणः स्वात्मनः कर्तृत्वात् गुणविसर्गेऽपि कर्तृत्वमुक्तम्-गुणान्विसृजन्निति। उक्तविधोप्यनादिपुण्यपापात्मककर्मफलभोगाय तदनुगुणपरिणामसत्त्वादिगुण-परिणामात्मकं देहं बिभर्ति इत्यर्थः। तथा च तस्य तत्र तत्र कर्मायत्तदेहसौलभ्यात्तत्प्रयुक्ता वेकस्यैव संयोगवियोगौ सम्भवत इति भावः।।२२।।

ननु नायमात्मा देहाद्विलक्षणः किन्तु स एव यतो देवोऽहं मनुष्योऽहमिति देहाद्यभेदेन प्रतीयते तत्राह-**यथेति।** देवोऽहमित्यादिप्रतीतिः भ्रान्तिरूपा न प्रमितिरूपेति भावः। तदेवोपपादयति-यथेति। यथा प्रचलता अम्भसा उदकेनोपधिना तरवो वृक्षा अपि चला इव कम्पमाना इव दृश्यन्ते यथा च भ्राम्यमाणेन चक्षुषा भूमिरपि[1] चलतीव दृश्यते, यथा तरुभूम्यादिचलनप्रतीतिः भ्रान्तिरूपेत्यर्थः।।२३।।

एवं तथा हे भद्रे, गुणैः सत्त्वादिगुणपरिणामात्मकैः देहेन्द्रियादिभिः सह, मनसि भ्राम्यमाणे व्यापृतवति, यद्वा, गुणैः शब्दादिभिः[2] विषयैः हेतुभिः, तदर्थमित्यर्थः। मनसि भ्राम्यमाणे देहं विषयीकुर्वति सति पुमान् जीवः स्वयमविकलोऽपि निरवयवोऽपि देहाद्भिन्नोऽपीत्यर्थः। तत्साम्यतां देहतुल्यतां याति देवोऽहं मनुष्योऽहं इति देहरूपेणात्मानं प्रत्येति इत्यर्थः। तत्तां यातीत्यनुक्त्वा तत्साम्यतां यातीति वदतोऽयमभिप्रायः। देवोऽहं मनुष्योऽहं इति देहाकारमात्मानं मन्यमानस्याऽपि कदाचित्तद्व्यतिरेक प्रतिपत्तिरस्त्येवेति, तदेव विशदयति-अलिङ्गो लिङ्गवानिवेति। लिङ्गाच्छरीरादन्यः अलिङ्गः आत्मा लिङ्गवानिवात्मानं प्रत्येति ममेदं शरीरं इत्येवंरूपेण लिङ्गप्रतिसम्बन्धीवात्मानं प्रत्येतीत्यर्थः। ममेदं शरीरमिति शरीराद्व्यतिरिक्तत्वेनात्मनः प्रतीतावपि देहात्मभ्रान्तिमतां तत्प्रतीतेः अस्फुटत्वद्योतनाय लिङ्गवानिवेति इवशब्दः प्रयुक्तः। अयं भावः, यद्यात्मनो देहाकारत्वेन प्रतीतिः प्रमितिरूपा स्यात्तर्हि तद्भिन्नत्वेन प्रतीतिः भ्रान्तिरूपा स्यात्, तच्चायुक्तम्, शरीरप्रतिभासदशायां तदप्रतीतिदशायां च सुषुप्त्यादौ अहमर्थस्यात्मनोऽनुवृत्तत्वेन प्रतीयमानत्वादिति।।२४।।

1. A,B,T भूरपि 2 A,B,T र्थदवि°

**विज॰** कटोदकं प्रेतमुद्दिश्य दीयमानमुदकम्।।१७,१८।।

तन्मातरं तेषां मातरं नाम्ना रुशद्भानुं दितिं जननीञ्च श्लक्ष्णया गिरा इदमाहेत्यन्वयः।।१९।।

हे वधूः! हे सहोदरभार्ये! हे पुत्राश्च परेण वध ऐहिकामुष्मिकजनश्लाघ्यो न भवतीति कृत्वा शोक उतात्रैव कञ्चित्कालं जीवानीति अभीष्टहान्या प्राप्तः, आहोस्वित्पितृमातृपुत्रभावस्य क्षणिकतेति तत्र प्रथमद्वितीयौ प्रत्याह रिपोरिति।।२०।।

तृतीयं मातरं एकां कटाक्षीकृत्याह **भूतानामिति**। इह कर्मभुवि दैवेन विधिनाऽन्यत्र हरिणा वा एकत्र नीतानां सम्मिलितानां उन्नीतानां पुत्रपौत्रादिसमृद्धिं प्रापितानां भूतानामेकत्र संवासः सहवासः। प्रपायां पानीयशालायामिव यथाऽध्रुवस्तथाऽनित्यो भवतीत्यन्वयः "प्रपा पानीयशालास्यान्मन्त्रशाला प्रतिश्रयः" (हला.को 1-142) इत्यभिधानम्।।२१।।

भूतानां सहवासोऽनित्यश्चेत्तर्हि केन सहवासो नित्यो भवतीत्याशङ्क्य सर्वगतत्वाज्जीवस्य मन-आदीन्द्रियाधारत्वाद्धरिणा सहवासो नित्यः "सता सौम्य तदा सम्पन्नो भवति, प्राज्ञेनात्मनान्वारूढ उत्सर्जयति" (छान्दो.उ.6-8-1) इत्यादिना सुप्तिमरणावस्थयोरपि सहस्थित्युक्तेः अन्यदा किं वक्तव्यमित्याशयेन दैवं मतमाह-**नित्य इति**। असौ हरिरात्मनो जीवस्य मन आदीन्द्रियज्ञानं धत्ते तस्याधारभूत इत्यर्थः। नित्यत्वादिकं स्वरूपत्वेनोच्यते, पर इति, जीवव्यावर्तकम् मायया स्वेच्छया वासनया वा गुणान् शब्दादीन् विसृजन् दधानः संसारिण इव चिदचिद्देहेन मन आदीनां नित्यसम्बन्धो युज्यत इत्यतः सर्वगत इत्युक्तम्। प्रपायां प्राणिसहवासवत् परमात्मनो देहसम्बन्धः अनित्य इत्याशयेनाऽऽसुरमतमप्यनेनोच्यते। गुणान् विसृजन् बुभूषु रसावात्मा आत्मनो भोगायतनं लिङ्गं कर्मज्ञानेन्द्रियपञ्चवायुमनसां समुदितरूपं शरीरं धत्ते; मायेत्युक्त्याऽनित्यो देहसम्बन्ध इति।।२२।।

इतोऽपि अविद्याबलात् ब्रह्मैव संसरतीत्येतदासुरं मतमित्याशयेनाह-**यथेति**। एवं गुणैःभ्राम्यमाणे इतस्ततश्चञ्चली क्रियमाणे मनस्यविकलः पुमान्पूर्णपुरुषः श्रीनारायणः तस्य जीवस्य साम्यं दोषित्वं संसारित्वं यातीति प्रतीयते। कथमिव, लिङ्गवानिव जीव इव मनोदोषैराभासे ब्रह्मप्रतिबिम्बं जीवे दूषिते तद्विषयज्ञानहीने सति तन्महाभासिनो बिम्बभूतस्य ब्रह्मणोऽपि दुष्टत्वं कल्पयतीत्यर्थः। न चैतदुपपत्तिमदित्याह-अलिङ्ग इति।नीरूपं तस्मादघटिताविद्याकल्पितमित्यर्थः। अन्यत्र प्राकृतशरीररहितः, कथमिव? प्रचलिताम्भसा तरवोऽपि प्रचला इव दृश्यन्ते यथा, जलसञ्चलनाज्जले प्रतिबिम्बित वृक्षसञ्चलनात्तटस्थनिश्चलवृक्षसञ्चलनं कल्पयत्यज्ञस्तथेति।

नन्वत्र प्रतिबिम्बितवृक्षचलनेन तटस्थवृक्षचलनकल्पनमुन्मत्तकल्पनमेव। प्रत्यक्षेणान्यथा दृश्यमानत्वादित्युक्त्वा दृष्टान्तान्तरमाह-चक्षुषेति। यथा परिभ्रमतः पुरुषस्य भ्राम्यमाणेन चक्षुषा भूर्भ्रमतीव दृश्यते-"असमं समतामेति भ्रान्तिदृष्ट्यैव केवलम्। जीवेन ब्रह्म न समं तत्त्वदृष्ट्या कथञ्चन।" (षाड्गुण्ये) "यथोदचालनाद्वृक्षप्रतिबिम्ब प्रचालनात्। तटस्थवृक्षचलनं कल्पयेदबुधो नरः। तथा मनसिजैर्दोषैराभासे दूषिते नरे। आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत्। आत्मनश्चक्षुषो भ्रान्त्या यथा पश्येद्भ्रमं भुवः। तथैव स्वात्मनो दोषाद्दोषवद्ब्रह्म पश्यति।।" (ब्रह्मतर्के) इत्येतत्प्रमाणसिद्धत्वादुक्त एवार्थो न त्वितरः। "विष्णुर्द्विजक्रियामूलः" (ब्राह्मे) इत्यारभ्योच्यमानं दैवमासुरञ्चेत्युभयमतज्ञापनाय "विप्रयज्ञादिमूलं तु हरिरित्यासुरं मतम्। हरिरेव हि सर्वस्य मूलं सम्यङ्मतं नृप" (ब्राह्मे) इत्येतद्वाक्यमाचार्यैः अत्रोदाहृतमुपर्यप्यनुसन्धानाय वेति।।२३,२४।।

**एष आत्मा विपर्यासो ह्यलिङ्गे[1] लिङ्गभावना।**
**[2]एवं प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः।।२५।।**

**सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः।**
**अविवेकश्च चिन्ता च विवेका[3]स्मृतिरेव च।।२६।।**

**अत्राप्युदाहरन्तीममितिहासं पुरातनम्।**
**यमस्य प्रेतबन्धूनां संवादं तं निबोधत।।२७।।**

**उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः।**
**सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत।।२८।।**

**विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम्।**
**शरनिर्भिन्नहृदयं शयानमसृगाविलम्।।२९।।**

**[4]प्रकीर्णकेशं [5]स्तब्धाक्षं [6]रभसा दष्टदच्छदम्।**
**रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे।।३०।।**

---

1 H, V°लिङ्गो 2 A,B,G,J,T एष 3 M,Ma °क. 4 M,Ma वि 5 A,B,G,J,T ध्वस्ताक्षं 6. M,Ma संरम्भाद्द°

**उशीनरेन्द्रं विधिना तथाकृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः।**
**हताः स्म नाथेति करैरुरो भृशं घ्नन्त्यो मुहुस्तत्पदयोरुपाऽऽपतन्।।३१।।**
**रुदन्त्य[1] उच्चैर्दयिताङ्घ्रिपङ्कजं सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः।**
**विस्रस्तकेशाभरणाः शुचं नृणां सृजन्त्य आक्रन्दनया विलेपिरे।।३२।।**

**श्रीध॰ एष** इति। लिङ्गभावना देहाभिमानः एष आत्मनो विपर्यासोऽन्यथाभावः। तमेवाह-प्रियैर्वियोगोऽप्रियैर्योगश्च कर्म च संसृतिश्च नानागर्भेषु प्रवेशः।।२५।।

**सम्भव** इति। ततश्च सम्भव उत्पत्तिः। विवेकस्यास्मृतिरननुसन्धानम्[2-] इति यावत्[-2] ।।२६।।

**अत्रेति।** अत्राऽपि शोकहेतुं विना वृथैवायं शोक इत्यस्मिन्नर्थे। प्रेतस्य मृतस्य कस्यचिद्[3] बन्धवस्तेषां च संवादं शृणुत।।२७।।

**उशीनरेष्विति।** उपासत तत्समीपे आवृत्त्य स्थिताः।।२८।।

**विशीर्णेति।** विशीर्णं रत्नमयं कवचं यस्य, विभ्रष्टान्याभरणानि स्रजश्च यस्य। शरेण निर्भिन्नं हृदयं यस्य। असृजा रक्तेनाऽऽविलं लिप्तम्।।२९।।

**प्रकीर्णेति।** प्रकीर्णाः केशाः यस्य। [4-]स्तब्धे निमेषशून्ये ईक्षणे यस्य। रभसा संरम्भेण दष्टो दच्छदः दन्तच्छदः ओष्ठो येन, रजसा कुण्ठमावृतं मुखाम्भोजं यस्य। छिन्नमायुधं भुजश्च यस्य।।३०।।

**उशीनरेन्द्रमिति।** तस्य पदयोः पादयोः उप समीपे आ समन्तात् अपतन्।।३१,३२।।

**वीर॰** एवं देहाद्विलक्षणस्य नित्यस्य आत्मनः कर्मपरिपाकानुगुणसत्त्वादिगुणपरिणामरूप देहसम्बन्धस्तदनुध्याननिमित्तस्तदभिन्नत्व प्रत्ययश्च भ्रमरूप इत्युक्तम्। अथ यथा देहसम्बन्धः तदनुध्याननिमित्ततदभेदभ्रमश्च यथा कर्ममूलकः एवं सुखदुःखादिकमपि सर्वं कर्म मूलकमेवेत्याह-**एष इति।** अलिङ्गे लिङ्गादन्यस्मिन् शरीराद्भिन्ने आत्मनि लिङ्गभावना देहत्वेनानुध्यानं देवोऽहमित्यादि देहाभेदप्रतीतिरित्येष आत्मनो विपर्ययः अन्यथा प्रतीतिः कर्मसंसृतिः कर्मकृतसंसारो [6-]भवतीत्यर्थः[-6]। एवं प्रियाप्रियैरिष्टानिष्टवस्तुभिर्योगो वियोगश्च सुखदुःख[7]-स्वरूप इत्यर्थः।।२५।।

---

1 A,B,G,J,T °त्य° 2- -2 A B J omit 3 H V omit कस्यचित् 4- -4 A B J ध्वस्त अक्षिणी 5- -5 A,B,J omit 6- -6 W omits 7 W °ग्व ट°

सम्भवः उत्पत्तिः विनाशो मरणं नानाविधः शोकः अविवेकः चिदचिदीश्वरयाथात्म्याविवेचनं चिन्ता विषयानुध्यानं विवेकस्यास्मृतिः क्वचिदाप्तोपदेशादिना जातस्यापि विवेकस्याननुसन्धानञ्चेत्येष सर्वोऽपि कर्मसंसृतिरेव कर्मकृतसंसाररूप एव स्मृतः।।२६।।

अत्र शोकनिमित्तमन्तरेणापि यः शोकः स व्यर्थ एवेत्यस्मिन्नर्थे इतिहासमप्युदाहरन्ति तत्त्वविदः। इतिहासं विशिनष्टि - पुरातनं न त्वाधुनिककपोलपरिकल्पितं यमस्य प्रेतबन्धूनां च संवादरूपं तमितिहासं निबोधत मत्तः[1] शृणुत।।२७।।

इतिहासमेवाह- **उशीनरेष्वित्यादिना**। उशीनरेषु देशेषु सुयज्ञ इति प्रसिद्धः कश्चिद्राजा बभूव। स च सपत्नैः शत्रुभिर्युद्धे निहतः तं निहतं ज्ञातयः सपिण्डाः उपासत परिवृत्योपविविशुः।।२८।।

कथम्भूतं विशीर्णं रत्नमयं कवचं यस्य, विभ्रष्टान्याभरणानि स्रक्च यस्माच्छरैर्नितरां भिन्नं हृदयं यस्य, असृजा रुधिरेण आविलं व्याप्तम्।।२९।।

प्रकीर्णाः केशा यस्य, स्तब्धे निश्चले अक्षिणी यस्य, संरम्भेण क्षोभेण दष्टो दच्छदः दन्तच्छदः ओष्ठो येन, रजसा कुण्ठमावृतं मुखाम्भोजं यस्य, मृधे युद्धे छिन्नमायुधं भुजश्च यस्य तम्।।३०।।

विधिना दैवेनैवं कृतमुक्तदशां प्रापितम् उशीनरेन्द्रं पतिं भर्तारं प्रसमीक्ष्य तत्पत्न्यः अतीव दुःखिताः। हे नाथ! वयं हताःस्मेति वदन्त्यः करैः पाणिभिः भृशं नितरामुरो मुहुर्मुहुर्घ्नन्त्यः तस्य भर्तुः पदयोश्चरणयो रुपापतन् समीपे समन्तादापतन्।।३१।।

तत उच्चैस्स्वरेण रुदन्त्यः कुचकुङ्कुमेनारुणैः कुचयोः पतित्वा ततः प्रस्रवद्भिरिति भावः। अस्रैः शोकजलबिन्दुभिः दयितस्य पत्युरङ्घ्रिपङ्कजं सिञ्चन्त्यः विभ्रष्टाः केशाः आभरणानि च यासां ताः शृण्वतां नृणामपि शुचं सृजन्त्यः उत्पादयन्त्यः आक्रन्दनया रोदनेन सह विलेपिरे विलापं चक्रुः।।३२।।

**विज॰** परमात्मानमेवं जानतः किम्फलम्? तत्राह-**एष** इति। अलिङ्गे प्राकृतदेहेन्द्रियादिरहिते अत एव परतन्त्रत्वादि सर्वदोषरहिते परमात्मनि या लिङ्गभावना प्राकृतदेहेन्द्रियात्मत्वादिचिन्ता एष आत्मनः स्वस्यैवा-योग्यस्य जनस्य विपर्यासस्तमःप्राप्तिलक्षणोऽनर्थो भवति, इहापि यथा परत्र तमोऽलक्षणोऽनर्थ, एवं प्रियाप्रियादियोगवियोगलक्षणापूर्वकर्मानुसारेण संस्मृतिर्भवति।।२५।।

---

1 A,B,T omit मत्त.

कीदृशीति विशेष्याह-**सम्भव** इति। अज्ञानपूर्तिपर्यन्तं पुनः पुनः सम्भवस्तस्मिन् सति स्वरूपविनाशः विवेकस्मृतिः अविवेकिन एव विवेकभ्रान्तिः ज्ञानित्वभ्रान्तिः असुरसिद्धान्तनिष्ठितस्य हिरण्यकशिपोरेवं देवसिद्धान्तोपन्यासेन कथं स्वबन्धुबोधनमितीयमाशङ्का-"अन्तर्हिरण्यकादीनां भक्तिरस्त्येव केशवे। असुरावेशतस्त्वन्यान् हरिस्तोतॄन् द्विषन्ति च।।" (पाद्मे) इत्यनेन परिहरणीयेति।।२६।।

पुत्रमित्रकलत्रादिभिः सह निवासो दैवाधीन इति मत्वा शोको न कार्य इत्यस्मिन्नर्थे इतिहास लक्षणकथाऽस्तीत्याह-**अत्रेति**। प्रेतबन्धूनां कस्यचिन्मृतस्य ज्ञातीनाम्।।२७, २८।।

असृगाविलं रुधिररूषितम्।।२९।।

स्तब्धाक्षं निश्चलनेत्रं, रजःकुण्ठं धूलिधूसरं मुखाम्बुजं यस्य स तथा तं, छिन्नौ आयुधयुक्तौ भुजौ यस्य स तथा तम्।।३०,३१।।

कुचकुङ्कुमधूलिभिः अरुणवर्णैः आक्रन्दनया उच्चैः[1] रोदनेन नृणां शुचः शोकान् विसृजन्त्यः कुर्वाणा विलेपिरे परिदेवनं चक्रुः।।३२।।

**अहोविधात्राऽकरुणेन नः प्रभो[2] भवान् प्रणीतो दृगगोचरां[3] दशाम्[4]।**
**उशीनरणामसि[5] वृत्तिदः पुरा, कृतोऽधुना येन शुचां विवर्धनः।।३३।।**

**त्वया कृतज्ञेन वयं महीपते, कथं विना स्याम सुहृत्तमेन ते[6]।**
**तत्रानुयानं तव वीर पादयोः, शुश्रूषतीनां दिश यत्र यास्यसि।।३४।।**

**एवं विलपतीनां वै परिगृह्य मृतं पतिम्।**
**अनिच्छतीनां[7] निर्हारमर्कोऽस्तं सन्न्यवर्तत।।३५।।**

**तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवितम्[8]।**
**आह तान् बालको भूत्वा यमः स्वयमुपागतः।।३६।।**

---

1 M,Ma उच्च° 2 M,Ma प्रभुः 3 M,Ma धिग° 4 M,Ma °रं दशाम् 5 M,Ma °मपि 6 H,M,Ma,V omit ते 7 A °न्ती° 8. H,V°वनम्

**यम उवाच**

**अहो अमीषां वयसाधिकानां, विपश्यतां लोकगतिं[1] विमोहः।**
**[2]यत्रोद्भवस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचन्त्यपार्थम्।।३७।।**

**अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिन्तयामः।**
**अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे।।३८।।**

**य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते च[3] यः।**
**तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसङ्ग्रहे प्रभुः।।३९।।**

**पथिच्युतं तिष्ठति दिष्टरक्षितं गृहे[4]स्थितं तद्विहतं विनश्यति।**
**जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तो[5]ऽस्य हतो न जीवति।।४०।।**

**श्रीध०** विलापमेवाह-**अहो** इति द्वाभ्याम्। अकरुणत्वमेवाह: [6-]येन विधात्रा[-6] दृशामगोचरां दशां [7]भवान्प्रणीतो गमितः तेन विधात्रा त्वमधुना शुचां विवर्धनः कृतोऽसीत्यन्वयः।।३३।।

**त्वयेति।** [8-]हे महीपते[-8]! त्वया सुहृत्तमेन विना वयं कथं स्याम भवेम जीवेमेत्यर्थः। अतो हे वीर! यत्र त्वं यास्यसि तत्र तेऽनुयानमनुगमनं तव पादयोः शुश्रूषां कुर्वतीनामस्माकं दिश देहि।।३४।।

**एवमिति।** निर्हारं दाहार्थं नयनं [9-]अनिच्छन्तीनाम्[-9]। अस्तमस्ताचलं प्रति।।३५।।

**तत्रेति।** परिदेवनं[10] रोदनं स्वपुर्यामेव [11]स्थित आश्रुत्य श्रुत्वा तत्र स्वयमेवोपागतो यमो [12-]बालको भूत्वा[-12] तानाह। अहो इत्यादिना।।३६।।

**अहो** इति। [13-]अहो आश्चर्यम्[-13]। अस्मत्तो वयसाधिकानामपि लोकस्य विधिं जन्ममरणादिप्रकारं विपश्यतामपि विमोहः। विमोहमेवाह-यत्र यस्मादव्यक्तादागतस्तत्रैव गतमपार्थं शोचन्ति। तदुक्तं गीतासु "अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत। अव्यक्तनिधनान्येव तत्र का परिदेवना" (भ.गी.2-28) इति। किञ्च स्वयमपि सधर्माः मृतेन सह समानो मृत्युलक्षणो धर्मो येषां तथाभूता अपि। [14-]अत्र आर्षत्वात् अनिजभावः[-14]।।३७।।

---

1 A,B,G,J,M,Ma,T विधि 2 A,B,G,J,T यत्रागत° 3 M,Ma omit च 4 A B G J M,Ma,T °हे 5 H,V गुप्तो विहतो 6 H V omit 7 H V add येन 8- -8 H,V omit 9- -9 H,V omit 10 A,B,J °वितम् 11 H,V omit स्थित 12- -12 H,V omit 13- -13 H V omit 14- -14 A B J omit

**अहो** इति। अबला दुर्बला अपि[1] वृकादिभिः अभक्ष्यमाणा वयं न[2-] विचिन्तयामः[-2]। तत्र हेतुः। यो अन्तः[3] गर्भे रक्षति स एव हि[4] विश्वं सर्वत्र रक्षिता[5]।।३८।।

ननु तस्य रक्षणे किं प्रयोजनं न किञ्चिदपि। किं तर्हि[6] क्रीडैव केवलमित्याह-**य** इति। य ईशः[7]। इदं विश्वं सृजति रक्षत्यवलुम्पते[8] संहरति च भो अबलाः, तस्येशितुश्चराचरं क्रीडासाधनमाहुः। अतः स एव निग्रहे संहारे सङ्ग्रहे पालने च प्रभुः।।३९।।

प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति-**पथीति**। दिष्टेन दैवेनेश्वरेण रक्षितम्[9]। तद्विहतं[10] तेनेश्वरेण विक्षतं[11] उपेक्षितम्[12-][-12]। अस्य हतस्तेनोपेक्षितः।।४०।।

**वीर**० विलापमेवाह-अहो इति द्वाभ्याम्। नः[13] अस्माकं प्रभो! हे भर्तः! अकरुणेन निष्कृपेण विधात्रा ब्रह्मणा दृगगोचरां दशां भवान्नीतो गमितः नः दृशामगोचरां दशां[14] अवस्थां[15] प्रणीत इति वान्वयः। येन विधात्रा पुरा उशीनराणां तद्देशोद्भवानां जनानां वृत्तिदः जीवनप्रदः[16] कृतो भवानधुना तेनैव विधात्रा शुचां शोकानां विवर्धनः कृतोऽसि।।३३।।

हे महीपते! सुहृत्तमेन कृतज्ञेन च त्वया विना ते तव सम्बन्धिन्यो वयं कथं स्याम कथं जीवेमेत्यर्थः। अतस्त्वं यत्र यास्यसि तत्रैव, हे वीर! तव पादयोः शुश्रूषतीनां सेवां कर्तुं इच्छन्तीनां अस्माकम् अनुयानं सहगमनं दिश देहि।।३४।।

एवं मृतं पतिं परिगृह्य विलपन्तीनां निर्हारं दाहार्थं नयनमनिच्छन्तीनां सतीनां अर्कः सूर्यः अस्तं अस्ताचलं प्रति सन्न्यवर्तत सन्निकृष्टो बभूव।।३५।।

प्रेतस्य मृतस्य ये बन्धवस्तेषां परिदेवितं रोदनमाश्रुत्य स्वपुर्यामेव श्रुत्वा भगवान् यमः स्वयमेव बालको भूत्वा तत्राक्रन्दनस्थाने समुपागतस्तानाह, हेत्याश्चर्ये[17-][-17]।।३६।।

तदेवाह-**अहो** इत्यादिना। अहो इत्याश्चर्ये। किं तत् यद्वयसा मत्तः अधिकानामपि लोकविधिं जन्ममरणादिलोकपरिपाटीं पश्यतामप्यमीषां प्रेतबन्धूनां विमोहः[18] विशिष्टो मोह इत्येतत् विमोहमेवाह-यत्र भुवि

1 A,B J omit अपि 2- -2H,V omit 3 A,B,J omit अन्तः 4 A,B,J omit हि विश्वं 5 H,V add रक्षति 6. A,B,J तु 7 H,V omit ईशः 8 H,V omit अवलुम्पते 9 H,V omit रक्षितम् 10 A,B,J omit तद्विहतं 11 A,B,J °हृ° 12- -12 H,V omit 13 A,B,T omit नः 14 A,B,T omit दशां 15 W omits अवस्थां 16 W °नद. 17- -17 W omits 18. A,B,T omit विमोहः

सम्भवः उत्पत्तिः तत्रैव गतं पुनस्तत्रैव लीनं मनुष्यं प्रति स्वयं सधर्माः मृतेन तुल्यं जन्ममरणादिभाजोऽपि अपार्थं मुधा शोचन्ति।।३७।।

न्यूनवयस्का अपि वयमेवाहो धन्याः श्रेष्ठाः, कुतः? यतः पितृभ्यां मातापितृभ्यां त्यक्ता अपि वयं न विचिन्तयामः चिन्तां न कुर्मः। अबला दुर्बला अपि बाला अपीति वा वृकादिभिरभक्ष्यमाणा वयम्, तत्र हेतुः, यो हि गर्भे रक्षति जन्मनः पश्चादपि स एव हि ईश्वरो रक्षिता रक्षिष्यति।।३८।।

कोऽसौ रक्षिता? तत्राह-**य** इति। य ईश्वरः स्वेच्छयैव न तु कर्मणा इदं कृत्स्नं जगत्सृजति, तर्हि सोप्यस्मदादिवत्किं जन्ममरणादिभाक्? नेत्याह-अव्ययः अपक्षयादिविकाररहितः कर्मायत्तप्राकृतदेहरहित इत्यर्थः। यश्च स्वेन सृष्टं जगद्रक्षति यश्च स्वेन रक्षितं जगत्पुनरवलुम्पते संहरति तर्ह्येवंविध ईश्वरः कर्मवश्य इवेत्थं किमर्थं करोति? तत्राह-हे अबलाः! तस्यैवं जगदुत्पत्त्यादिकर्तुरीशितुरीश्वरस्यान्तरात्मतया अवस्थितस्य चराचरात्मकमिदं जगत् क्रीडनं क्रीडापरिकरं जगद्व्यापारस्तस्य क्रीडारूप इति भावः। अत एव निग्रहसङ्ग्रहयोः निग्रहानुग्रहयोः प्रभुः समर्थः।।३९।।

प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति **पथीति**। यथा पथिच्युतं विस्रस्तमपि दिष्टेन दैवेन ईश्वरेण रक्षितमनुगृहीतं सत् तिष्ठति पुनर्लब्धं भवतीत्यर्थः। गृहे स्थितमपि तेन दिष्टेन विहतं सद्विनश्यति। एवमरण्ये अनाथः रक्षकान्तररहितोऽपि तेन दिष्टेन ईक्षितो जीवति तत्सङ्कल्पेन जीवति। गृहे गुप्तोऽप्यस्य हतो अनेनोपेक्षितो न जीवति किन्तु विनश्यत्येव।।४०।।

**विज॰** नो दृशां चक्षुषां अगोचरविषयं नीतः येन विधिना।।३३।।

स्याम सत्तां प्राप्नुमः तर्हि किं कर्तव्यमत्राह-तत्रेति। यत्र यास्यसि तत्र पादयोरनुयानं दिश।।३४।।

निर्हारं दाहम्।।३५।।

हेत्यनेन कथान्तरप्रसक्तिं सूचयति यमः।।३६।।

मा कुरुध्वं यूयं शोकं युष्मभ्यं सुयज्ञो दत्त इत्यादेरिति तत्राह-**अहो** इति। लोकविधिं जन्ममरणादि प्रकारं विपश्यताममीषां प्रेतबन्धूनां विमोहः अहो धिक् स्वयं सधर्माः जन्मादि समानधर्माः अमी बन्धवः यत्र यस्य मनुष्यदर्शनायोग्यात् स्वर्गनरकादन्यत्रोद्भव उत्पत्तिः देहयोगलक्षणाभूत्तं तत्र तत् अस्मच्चक्षुरगोचरं स्वर्गादिकं

गतं मनुष्यमनुशोचन्तीति यत्तदपार्थं व्यर्थं गतानुगतिकत्वात् "अदर्शनादिहायातः पुनश्चादर्शनं गतः" (भारते) इति वचनात् यत्र स्वर्गादेरुद्भवो यस्य स यत्रोद्भवस्तत्र गतं स्वर्गादिगतमिति वा अपार्थमनुशोचन्तीति वा सर्वस्य दैवाधीनत्वं स्वानुभवसिद्धमिति ज्ञापयत्यहो इति। यद्वा यत्र उत्पन्नं तत्र पृथिव्यां गतं मनुष्यशरीरं प्रति व्यर्थं अनुशोचन्तीति।।३७।।

तस्मात्सर्वं दैवाधीनमिति मत्वा न शोकः कार्य इत्याशयेनाह-**अहो वय**मिति। पितृभ्यां अबला दुर्बलाः कुतश्चिन्ता। नास्तीति तत्राह-अरक्षितेति, यो गर्भेऽस्मान् रक्षति स भगवानधुना बहिर्गतान् रक्षिता हि यस्मात्तस्मादिति शेषः।।३८।।

न केवलं रक्षिता अपि तु सृष्ट्यादिकर्ताप्यतो न संशयः कार्य इति भावेनाह-**य इच्छयेति**, अत्रेच्छयेति इच्छाग्रहणेन सर्वत्र सृष्टिप्रसङ्गे मायाशब्दस्य इच्छार्थो ज्ञायते हे अबलाः! सृष्ट्यादि कर्ता यतः अतो मरणलक्षणस्य निग्रहस्य सङ्ग्रहे परिहारलक्षणे प्रभोः समर्थस्य तस्येशितुश्चराचरं क्रीडनं लीलासाधनम्।।३९।।

"दैवाधीनं जगत्सर्वं" इत्युक्तेः कथमीश्वराधीनं चराचरमित्याशङ्क्य दिष्टदैवादिशब्देन संस्तुतोऽच्युत इत्याशयेनाह-**पथीति**। भक्तायाभीष्टं दिशतीति दिष्टशब्दवाच्यो मुकुन्दः तेन रक्षितं, तेन विहतम् अस्यानेन हतः, सकाशाद्वा।।४०।।

**भूतानि तैस्तैर्निजयोनिकर्मभिः भवन्ति काले न भवन्ति सर्वशः।**
**न तत्र हात्मा प्रकृतावपि स्थितः तस्या गुणैरन्यतमो निबध्यते।।४१।।**

**इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम्।**
**[1]तथौदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति।।४२।।**

**यथाऽनलो दारुषु भिन्न ईयते यथानिलो देहगतः पृथक्स्थितः।**
**यथा नभः सर्वगतं न सज्जते तथा [2]पुमान् सर्वगुणाश्रयः परः।।४३।।**

**सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ।**
**यः श्रोता योऽनुवक्तेह समदृश्येत कर्हिचित्।।४४।।**

1 A,B,G,J,T यथौ°, M,Ma तथो° 2 M,Ma गुणैः

**न श्रोता नानुवक्ता[1] वा मुख्योऽप्यत्र महानसुः।**
**यस्त्विहेन्द्रियवानात्मा सचान्यः प्राणदेहयोः।.४५।।**

**भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः।**
**भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा।।४६।।**

**यावल्लिङ्गान्वितो ह्यात्मा तावत्कर्मनिबन्धनम्[2]।**
**ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते।।४७।।**

**वितथाऽभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः।**
**यथा मनोरथः स्वप्नः[3] सर्वमैन्द्रियकं मृषा।।४८।।**

**श्रीध॰** तदेवमात्मनो जन्ममरणादिकं अङ्गीकृत्य ईश्वराधीनत्वात् न शोकः कार्य इत्युक्तम्। इदानीन्तु देहानामेव जन्मादि न त्वात्मन इत्याह-**भूतानीति** त्रिभिः। भूतानि देहाः निजयोनिः स्वकारणभूतं लिङ्गशरीरं तन्निमित्तैः कर्मभिः भवन्ति [4-]जायन्ते न भवन्ति नश्यन्ति[-4] च सर्वशो देवादिदेहा अपि तत्र ह तदा प्रकृतौ देहे स्थितोऽप्यात्मा तस्याः [5]प्रकृतेः गुणैः देहधर्मैः जन्मादिभिः न निबध्यते न युज्यते यतोऽन्यतमो देहादत्यन्त-विलक्षणः।।४१।।

नन्वहं कृशः स्थूल इत्यादौ वैलक्षण्यं न प्रतीयते तत्राह-**इदमिति।** इदं [6]शरीरं मोहजमविवेकादात्मत्वेन ज्ञातं वस्तुतस्तु पृथगेव यत ईयते दृश्यते। भौतिकं च यथा गृहमित्यन्वयः। अत्रैवं प्रयोगः द्रष्टुरभौतिकाच्च पुरुषाच्छरीरं भिन्नम्, दृश्यत्वाद्भौतिकत्वाच्च, यथात्यन्ताविवेकिनः आत्मत्वेनाभिमतमपि गृहं ततः पृथक् तद्वत् इति। भौतिकत्वानुमानं विवृण्वन्नात्मनो जन्माद्यभावमुपसंहरति। यथा औदकैः परमाणुभिः जातो बुद्बुदादिर्यथा च पार्थिवैर्जातो घटादिर्यथा च तैजसैर्जातः कुण्डलादिर्विनश्यति तथा तैरेव त्रिविधैः परमाणुभिः जातो जनो देह एव विकृतः परिणतः सन् विनश्यति, नत्वात्मेत्यर्थः।।४२।।

पृथगवस्थानाऽभावेऽपि भिन्नत्वे दृष्टान्त द्वयमाह-**यथेति**। यथाऽनलो दारुष्वेव स्थितोऽपि दाहकत्वेन[7] प्रकाशकत्वेन भिन्न एव प्रतीयते यथा च [8]देहगतोऽप्यनिलो मुखनासिकादिषु पृथक्स्थित एव प्रतीयते। देहस्थ-

1 A,B,G,J,M,Ma,T वक्ताऽयं 2 M,Ma ॰नः 3 W स्वा॰ 4- -4 H, V omit 5 H V omit प्रकृतेः 6 H, V omit शरीरं 7 H, V त्वऽप्र॰ 8 H,V omit मुख

त्वेऽप्यात्मनः तद्धर्मयोगाभावे दृष्टान्तमाह-यथा नभो न सज्जते क्वाऽपि संगं न प्राप्नोति तथा पुमानपि सर्वेषां गुणानां देहेन्द्रियादीनामाश्रयः तेष्वाश्रितो वा परः पृथगेवेत्यर्थः।।४३।।

किञ्च **सुयज्ञ** इति। हे मूढाः! यमनुशोचथ सोऽयं युष्मद्भर्ता सुयज्ञः शेते। किमिति शोचथ। नन्वेतावन्तं कालमसौ शृणोत्यनन्तरं प्रतिवक्ति च। इदानी तस्यादर्शनान्मृत इति शोचाम इति चेत् स तु शोच्यो[1] न भवति प्रागपि तस्यादर्शनादित्याह यः श्रोतेति।।४४।।

ननु मुखनासिकासञ्चारी प्राणः श्रोता वक्ता च दृष्ट एवेति चेन्नासौ श्रोता वक्ता वा अचेतनत्वादित्याह-**न श्रोतेति**। महान् सर्वेन्द्रियचेष्टा हेतुः, अत एव मुख्यः "प्राणो वै मुख्यः" इति श्रुतेः। कस्तर्हि श्रोता वक्ता च तत्राह यस्त्विह देहेन्द्रियैः तत्तदर्थद्रष्टा आत्मा स तु प्राणदेहाभ्यां अचेतनाभ्यां अन्यश्चेतनः[2]।।४५।।

ननु चेतनत्वेऽन्यत्वे च तस्याहं कृशः स्थूलः काणो बधिर इत्यादि देहधर्मोपलब्धिः कुतस्तत्राह-**भूतेति**। भूतेन्द्रियमनोभिर्लिङ्ग्यन्ते लक्ष्यन्त इति तथा तान् देहांस्तेभ्योऽन्य एव आत्मा[3] भजति अहमिति मन्यते। तर्हि कथं मोक्षस्तत्राह-तच्च भजनं स्वेन तेजसा विवेकबलेनोत्सृजति, अपि हीत्यनुभवं प्रमाणयति।।४६।।

ननु विवेकानन्तरमप्याहारादिकर्मसु प्रवृत्तेर्बन्धः स्यादेवेत्यत आह-**यावदिति**। यावल्लिङ्गशरीरेणान्वितः तदभिमानवानात्मा भवति तावदेव तस्य तत्कर्मनिबन्धनं बन्धहेतुर्भवति ततो विपर्ययो देहधर्मभाक्त्वं ततः क्लेशश्चानुवर्तते न तु लिङ्गाभिमाने निवृत्तेऽपि, यतोऽयं मायायोगो विपर्ययादिः। मायया युज्यत इति तथा। न परमार्थ इत्यर्थः[4]।।४७।।

ननु सुखदुःखादीनां तत्साधनानां च सत्यत्वप्रतीतेः कुतो मायामयत्वम्। तथा च बहवो वादिनः सत्यत्वमेव वदन्ति तत्राह-**वितथेति**। वितथो मिथ्याभूतोऽयमभिनिवेशः कोऽसौ गुणेषु तत्कार्येषु सुखदुःखादिषु अर्थः। परमार्थ इति दृग्वचश्चेति यत् स कुत इत्यत आह यथेति।।४८।।

**वीर॰** किं तर्हि अयमीश्वरोऽपि विषमः? नेत्याह-**भूतानीति**। सर्वाणि भूतानि देवमनुष्यादीनि तैस्तैः निजयोनिकर्मभिः स्वस्वजातिप्राप्तिनिमित्तकर्मभिः काले निजयोनिकर्मपरिपाककाले भवन्ति पुनस्तत्कर्मक्षयेन भवन्ति देवमनुष्यादिभूतानां भावाभावौ तत्तत्कर्मानुगुणप्रवृत्तेश्वरायत्तौ, इति न तस्य वैषम्यमिति भावः। ननु,

---

1 H,V शोचनीये 2 A,B,J एव स 3 A,B,J omit आत्मा 4 H, V omit इत्यर्थः।

मास्तु वैषम्यं तस्यापि तु अन्तरात्मतयाऽवस्थितः स्वानर्थरूपं संसारं स्वयमेवोपपादयन् किमयमज्ञः ? नेत्याह-नेति। तत्र प्रकृतौ देवादिशरीरे जीवान्तरात्मतया स्थितोऽप्यात्मा परमात्मा न बध्यते न संसरतीत्यर्थः। हेति विस्मये। देहे स्थितस्याप्येकस्य न बन्धः अन्यतरस्य तु बन्धः इति विस्मयः, इतरस्य बन्धमेवाह-तस्याः प्रकृतेः गुणैः देवोऽहं स्थूलोऽहं इत्यादिरूपप्रतीतिविषयैः देहगतदेवत्वमनुष्यत्वादिभिः देहात्मभ्रमादिभिरित्यर्थः। अन्यतमो देहेन्द्रियादीनां अन्यतमो जीव इह परमात्मनोऽपीति च बोध्यम्। निबद्ध्यते निबद्धो भवति संसरतीत्यर्थः। यद्वा, गुणैः शब्दादिभिर्विषयैः हेतुभिः तद्भोगहेतुभूतेषु वस्तुषु निबध्यत इत्यर्थः। तद्भोग एव हि तस्य संसृतौ कारणमिति भावः। तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" (मुण्ड.उ. 3-1-1)।।४१।।

एवं सर्वभूतानां उत्पत्तिलयादेः तत्तत्कर्मानुगुणप्रवृत्तेश्वरायत्तत्वात् न शोकः कार्य इत्यभिधाय इदानीं देहस्य विनाशस्वभावत्वादात्मनस्तु तद्विपरीतरूपत्वादुभावपि न शोकविषयाविति वक्तुं तावद्देहात्मनोः परस्पर वैलक्षण्यमाह-**इदमिति** द्वाभ्याम्। इदं परिदृश्यमानं राजादिशरीरं पुरुषस्य जीवस्य मोहजमविद्यासञ्चितकर्मकृतं पुरुषस्य मोहजं इदं शरीरम् इति व्यतिरेकनिर्देशेन देहात्मनोः परस्परभेदो दर्शितः। तत्र देहस्य अनात्मत्वं दृष्टान्तेनाह- यथा गृहं गृहिणः पृथक् भिन्नं तथा भौतिकं भूतसंघातपरिणाममिदं शरीरमपि पृथक् शरीरिणो भिन्नमीयते अवगम्यत इत्यर्थः। यथा गृहस्य गृहिस्वरूपत्वमत्यन्तासम्भावितं तद्वत् देहस्य देहिस्वरूपत्वमिति दृष्टान्ताभिप्रायः। एवं गृहदृष्टान्तेन जीवाद्देहस्य भेद उक्तः, तेनैव दृष्टान्तेन देहस्य विनाशिस्वभावत्वं चाह-तथेति। यथा मृत्काष्ठादिविकारात्मकं गृहं कालेन विनश्यति तथा औदकैः पार्थिवैः तैजसैश्चेदं वायवीयाकाशीययोरप्युपलक्षणम्। उदकादीनामंशैः कालेन तत्तद्देवादिजातिप्राप्तिनिमित्तकर्म[1]फलपरिपाककालेनेत्यर्थः। जातो जनो देहः जन्मनः पश्चादपि विकृतः बाल्ययौवनस्थविरत्वादिभिः अवस्थाभिः विकारं प्राप्तः पुनः स्वारम्भककर्मविनाशकाले विनश्यति।।४२।।

अथात्मनो देहाद्भेदं सदृष्टान्तमाह-**यथेति**। यथाऽनलोऽग्निर्दारुषु स्थितो भिन्न ईयते दारुगतह्रस्वत्व-दीर्घत्वकुटिलत्वादिधर्मरहितस्तेभ्ये भिन्न एव दृश्यते। यथा च देहगतोऽप्यनिलः ततः पृथगेव दृश्यते यथा च नभः [2]सर्वगतं सर्वत्र व्याप्तमपि न सज्जते सर्वगतधर्मैः न सम्बध्नाति तथा सर्वगुणाश्रयः सत्त्वादिसर्वगुण

1. W omits फल 2. A,B,T omit सर्वगतं

परिणामरूप-देहेन्द्रियाश्रयोऽपि पुमान् जीवः परः गुणेभ्यः परः[1] देहाद्भिन्नः इत्यर्थः[2]। देहगतजन्ममरणादिभिः अविकृतस्तस्माद्विलक्षणत्वेनावतिष्ठत इत्यर्थः। अविभागेनावस्थितस्याऽपि **तद्गतधर्मस्पर्शे** आद्यं निदर्शनं, विजातीयस्यापि सहावस्थाने द्वितीयं तृतीयं तु तदवस्थानेऽपि **पुनस्तद्गतधर्मास्पर्श** इति भेदः।।४३।।

एवं देहात्मनोः परस्परविलक्षणस्वरूपयोरभिहितयोरप्यतीव देहात्मभ्रान्त्याऽनुशोचतां शोकमपनेतुं कः शोकविषय इत्याशङ्क्य प्रतिक्षिपति-**सुयज्ञ** इति। हे मूढ! भवत्पक्षे **यमनुशोचथ सोऽयं** सुयज्ञः शेते युष्माभिः शोच्यः सुयज्ञः शेते विद्यत एव किमर्थं शोक इति भावः। ननु, **भवत्पक्षे शयान एव हि सुयज्ञ** इति शङ्कार्थस्तत्प्रतिक्षिपति-य इति। यः श्रोता भवद्विलापश्रवणक्षमो **यश्चानुवक्ता प्रतिवचनक्षमश्च स इह कर्हिचिदपि** चिरं सुसूक्ष्मं निरीक्षमाणोऽपि न दृश्यते शयानो देह एव सुयज्ञश्चेद्भवद्विलपितं किमिति न शृणोति न प्रति वक्तीत्यर्थः।।४४।।

मुख्यः प्राणोऽपि श्रवणप्रतिवचनक्षमो न स्यात् किम्पुनर्देहो न क्षम इत्याह-**नेति**। मुख्योऽप्यसुः प्राणो वा न श्रोता न भवद्विलपितस्य श्रोता नाऽप्यनुवक्ता किं पुनर्देह इत्यर्थः। ननु श्रोतारं प्रतिवक्तारं प्रत्येवानुशोचाम इत्यत्राह-यस्त्विति। यस्त्विन्द्रियवान् श्रवणप्रतिवचनादिसाधनश्रोत्रवागादीन्द्रिययुक्तः सन्नात्मा इह शरीरे प्राणदेहाभ्यामन्य एवाऽऽसीत् स तु तत् तेभ्यो देहेभ्यः अन्य एव सन्नित्यर्थः।।४५।।

स्वेन तेजसा ज्ञानेनोपलक्षितो भूतैः पृथिव्यादिभिः इन्द्रियैः ज्ञानकर्मोभयेन्द्रियैः मनसा च लिङ्ग्यन्ते लक्ष्यन्ते इति तथा तान् उच्चावचान् उत्कृष्टापकृष्टान् देहान् भजति बिभर्ति उत्सृजति त्यजति च। अपि हीत्यनुभवं प्रमाणयति। इन्द्रियवानात्मा देहत्याग तदुपादानशीलः शयानमिमं देहं त्यक्त्वा गत इति सोऽपि इदानीं न शोच्यत इति भावः।।४६।।

ननु अस्माकमुपभोग्यमिमं देहमन्तरेणाऽपि हेतुं त्यक्त्वा गत इत्यनुशोचामस्तत्राह-**तावदिति**। यावन्निबन्धनं देहसम्बन्धकारणं कर्म पुण्यापुण्यात्मकं कर्म वर्तते तावल्लिङ्गान्वितः देहेनान्वितो भवति। आत्मा तत एव देहान्वयादेव हेतोः विपर्ययो देहात्मभ्रान्तिः ततः क्लेशः इत्येवंरूपो मायायोगः प्रकृतसम्बन्धरूपसंसृतिरनुवर्तते, अयं भावः- सति देहसम्बन्धनिमित्ते कर्मणि देहेनान्वयः तस्मिंश्च सति ममायं पतिरहमस्य भार्या इत्याद्यात्मको

---

1 A,B,T omit परः 2 A,B,T omit इत्यर्थः

देहात्मभ्रमः। तस्मिंश्च सति क्लेशः तत्र निदानस्य कर्मण एव निवृत्तत्वान्नास्यात्मनः पुनः शयानदेहसम्बन्धस्यैवाभावान्निर्हेतुको व्यर्थश्च शोकः। देहसम्बन्धावहकर्मनिवृत्तिरेव च देहोत्सर्गे हेतुरिति।।४७।।

देहस्योपभोग्यत्वं प्रतिक्षिपति **वितथेति**। अयमभिनिवेशोऽभिमानो वितथो व्यर्थः, देहादेः अपुरुषार्थरूपत्वादिति भावः। कोऽसावभिनिवेशः? यद्गुणेषु सत्त्वादिगुणपरिणामात्मकेषु देहादिषु तदुपभोग्येषु शब्दादिषु चार्थदृग्वचः प्रयोजनत्वदर्शनवचने इत्येषः देहादिषूपभोग्यत्वज्ञानं तद्व्यवहारश्चेत्यभिमानो व्यर्थः। वैतथ्यमेव दृष्टान्तमुखेन विशदयति-यथेति। यथा मनोरथरूपः स्वाप्नः स्वप्नद्रष्टृकर्मानुगुणमनोवृत्तिरूपः सङ्कल्पविकल्पात्मक स्वप्नानुगुणतयेश्वरसृष्टपदार्थः मृषा अनित्यः स्वप्नकालमात्रावस्थायी तथा सर्वमैन्द्रियकं बाह्येन्द्रियविषयं शब्दादिकमपि मृषा अनित्यः अनित्यत्वादपुरुषार्थः स्वप्नद्रष्ट्रेकानुभाव्यतत्कालमात्रावस्थायिपदार्थसृष्टिनिमित्तकर्मानुगुणमीश्वरसृष्टं स्वाप्नं पदार्थं प्रतीव जाग्रदवस्थानुभाव्यसर्वेन्द्रियगम्यभोक्तृदृष्ट समानकालिकपदार्थं प्रत्युपभोग्यत्वाद्यभिमानो व्यर्थः, अनित्यत्वेनापुरुषार्थरूपत्वादिति भावः। मृषाशब्दस्यानित्यत्ववाचित्वं "अथ नित्यमनित्यञ्च" (भाग. 7-2-49) इत्यनन्तरग्रन्थादवगम्यते। "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते" (विष्णु.पु.2-14-24) इति। पराशरव[1]चनाच्च परमार्थानाश्यादि शब्दानामनाशिपरत्वमवगम्यते।।४८।।

**विज०** सृष्ट्यादिकं कुर्वन्नात्मा तत्तत्प्राणिकर्माण्युल्लङ्घ्य करोति उत तदनुसारेणेति तत्राह-**भूतानीति**। निजयोनिकर्मभिः स्वजातिविहितकर्मभिः भूतानि विहितकाले भवन्ति न भवन्तीति आत्मप्रेरितैरिति शेषः। "द्रव्यं कर्म च कालश्च" (भाग. 2-5-14) इत्यादेः कालशब्दवाच्यपरमात्माधिकरणतया सृष्ट्यादिक माप्नुवन्तीति वा। ननु जीवात्मनोः उभयोरपि देहस्थितेः कस्य संसारबन्धाभाव इति सुहृद्भावेन पृच्छन्तमाह-न तर्वेति। तत्र तयोः जीवपरयोः अन्यतम आत्मा प्रकृतौ प्रकृतिनिर्मितशरीरे स्थितोऽपि तस्याः प्रकृतेः गुणैः सत्त्वादिभिः न निबध्यते ह किल "सत्त्वं सुखे संजयति रजः कर्माणि भारत। ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत" (भ.गी.14-9) इत्यादिवाक्योक्तबन्धो नास्तीत्यर्थः। हेत्यनेन "तुच्छ्येनाभ्वपि हितं यदासीत्तपसस्तन्महिमा जायतैकम्" (ऋक्. सं. 10-129-3) इति वाक्यं सूचयति। सुविरुद्धस्वरूपत्वाज्जीवादन्यतमो हरिरित्यतो हरेरन्यतमत्वं

---

1 A,B,T रोक्तेश्च

प्रामाणिकमेव, परमात्मा न बद्ध्यते अन्यतमो बद्ध्यते इत्येतदुत्तरश्लोकेन **पुनरुक्तं** स्यादित्यन्यथा व्याख्यात-माचार्यैरन्यतम आत्मा परमात्मेति।।४१।।

परमात्मनो बन्धाभाववचनेन जीवात्मनोः यो भेदः अर्थादाप्तः स केन प्रकारेणेत्याशङ्क्याह-**इदं शरीरमिति।** पुरुषस्य संसारिणो मोहेनान्यथा ज्ञानेन "मुह वैचित्त्ये" इति धातोः विपरीतज्ञानजं यस्मात्तस्मादात्मनो भिन्नमिति ज्ञातव्यम्, तथा हि भौतिकं भूतविकृतैः वृक्षैः विरचितं गृहं गृहस्थात्पृथग्भिन्नमीयते यथा विनश्यति च, तथोदकैः पार्थिवतैजसैः परमाणुभिः कालनाम्ना हरिणा चोदितैर्विकृतो विकारं प्राप्तो जातो जन्यत इति जनो देहो विनश्यति स्वकारणावस्थितिमाप्नोतीति यस्मात्तस्माज्जीवाद्भिन्न इति निश्चीयते "नित्योऽनि त्यानाम्" (कठ. उ. 5-13) इति श्रुतेः। जीवस्य नित्यत्वात्।।४२।।

तदेव दृष्टान्तान्तरेण स्पष्टयति-**यथेति।** यद्वा ननु जीवस्य शरीराद्भेदोऽस्तु तस्य नश्वरत्वात् परमात्मना जीवस्याभेदः किं न स्यादिति मन्दाशङ्कां परिहरति-यथेति। दारुषु स्थितो वह्निर्दारुभ्यो भिन्नस्तद्गुणैस्तेषु न सज्जते यथा देहिनां देहगतो वायुर्देहात् पृथक् स्थितः तद्गुणैश्च न लिप्यते यथा सर्वगतं नभः सर्वस्माद्भिन्नं ज्ञायते सर्ववस्तुगुणैश्च न लिप्यते यथा तथा ज्ञानानन्दादिसर्वगुणाश्रयः परः परमात्मा सर्वेषां जन्तूनां गुणभूतं भोगायतनं शरीरमाश्रयो यस्य सः सर्वगुणाश्रयः सर्वजीवदेहगतः परो विलक्षणो भिन्न इति यावत्। जीवादिति शेषः। प्रकृतत्त्वाज्जीवगुणैर्न लिप्यत इति। देहाद्भेदस्य प्रकृतत्त्वात् स एवात्रोच्यत इति किं न स्यादितीयं शङ्का-"देहदारुगतौ प्राणवह्नी सर्वगतं नभः। देहादिभ्यो यथा भिन्ना न लिप्यन्ते च तद्गुणैः।। तथा जीवगतो विष्णुः जीवाद्भिन्नो न तद्गुणैः।।" (वामने) इति वाक्येन परिहर्तव्या। अत्राऽयं फलितोऽर्थः भगवन्माहात्म्यकथनेन सर्वस्य तद्वशत्वात् स एव भजनीयो न शोकेन प्रयोजनमिति।।४३।।

किञ्च, भवच्छोकयोग्यस्य सुयज्ञस्य दृश्यमानत्वात् तं प्रति शोको न कार्य इति गूढाक्षेपं करोति। **सुयज्ञ** इति। हे मूढाः ! यमनुशोचथाऽयं सुयज्ञः शेते निद्रां करोति। ननु न मृतः "ननु च स्याद्विरोधादौ" इत्यभिधानात्। शेत एव लोकान्तरं न गत इति वा "प्रश्नावधारणानुज्ञानुनयाऽऽमन्त्रणे ननु" (अम.को. 3-403) इत्यभिधानात्। अवधारणार्थो ननुशब्दः। श्रोत्रादीन्द्रियव्यापारादर्शनादिना मरणानुमानात् कथं न मृत इत्याक्षिप्यत इति तत्राह-यः श्रोतेति। इह सुयज्ञशरीरे यः श्रोता यश्चानुवक्ता स परमात्मा कर्हिचित्कदाचिदपि न दृश्येत तस्य सूक्ष्मस्वभावत्वात्-

"तदव्यक्तमाह हि" (ब्र.सू.3-2-22) इति सूत्राच्च, तस्यैव श्रोतृत्वादिकं कुत इति चेन्न "नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता" (बृह. उ. 5-7-23) इत्यादेः।।४४।।

ननु सुयज्ञशरीरस्थस्य मुख्यप्राणस्य श्रोतृत्वादिसम्भवात्कथं तदन्ययोगव्यवच्छेदः क्रियत इति तत्राह **न श्रोतेति**। अत्र सुयज्ञदेहे श्वासोच्छ्वासादिलक्षणेन मुखे व्यज्यमानत्वात् मुख्यो यो महानसुः मुख्यप्राणः सोऽपि स्वतो न श्रोता नाऽनुवक्ता च "तस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणः तेजसि तेजः परस्यां देवतायाम्" (छान्दो.उ.6-8-6) इति श्रुतेः अन्ययोगव्यवच्छेदो युक्त इति। ननु, तर्हि सुयज्ञनाम्नो जीवस्य श्रोतृत्वादिकमासीत्प्राक् तदिदानीं न तस्मान्मृत इति प्राचीनशङ्काशेषं कैमुत्यन्यायेन परिहरति-यस्त्विति। तुशब्देन नेत्यनुकृष्यते इह सुयज्ञ इत्युपलक्षणं जीवराशिदेहे य इन्द्रियवान् यश्च प्राणदेहयोरन्यः स जीवात्मा श्रोतुं वक्तुं च न शक्य इति किं वक्तव्यम् "एतद्बाणमवष्टभ्य विधारयामि" इति श्रुतेः। सर्वशक्तिमतोऽपि प्राणस्य स्वतः श्रोतृत्वाद्ययुक्तेरुक्तत्वात् तस्मात्सुयज्ञं प्रति शोकेन किं प्रयोजनं तस्माज्जीवतामपि श्रोतृत्वाद्यनुपपत्तेः प्रामाणिकत्वेन मृतोऽयमित्यस्य लक्षणान्तरं वक्ति अन्य इत्यनेन। हरेः माहात्म्यातिशयः प्रकटित इति सूचितम्। न केवलं प्राणदेहयोरन्यः किं तु पूर्णश्रोतृत्वादिगुणयुक्ताद्धरेश्चान्य इति चशब्दार्थः।।४५।।

हरेः देहस्थितिसद्भावे न तस्मादप्यन्य इति च वक्तुं युक्तं तत्कुत इति तत्राह-**भूतेन्द्रियेति**। भूतेन्द्रियमनांसि लिङ्गं रूपं येषां ते तथा तान् उच्चावचान् सुरनरतिर्यगात्मन उत्तममध्यमाधमान् देहान् भजति पश्चादुत्सृजति हि यस्मात्तस्मादन्य इति वक्तुं युक्तं, स्पष्टं चाह-अन्य इति। देहयोगवियोगभाजो जीवादिति शेषः। "लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च" (शब्दानिर्णये) इति वचनाल्लिङ्गशब्दस्य स्वरूपार्थो युक्तः यदि देहभजनोत्सर्जने हरेस्तर्हि जीवात्को विशेष इति तत्राह-तच्चेति, परिच्छिन्नविषये भजनोत्सर्जने व्याप्तस्य विष्णोः कथं घटेत इत्यतो वाह-**तच्चेति**। ततः चशब्देन जीवस्य पारतन्त्र्येणेति विशेषमाह। अपिशब्देन रूपान्तरेणेत्युपपत्तिमाह, अत्र जीवपरमात्मनोः भेदस्य तयोरुभयोः देहादेः भेदस्य च हरेरेव मुख्यश्रोतृत्वादेश्च प्रकरणावान्तरभेदस्य च ज्ञापनायाचार्यैः पूर्वापरभावेनेन्द्रियवान् जीव इत्यादि व्याख्यातम्।, ननु, जीवस्य प्राणदेहयोः अन्यत्वे मरणे देहनाशान्मुक्तौ तदभावाद्विषयभोगाभाव इत्याशङ्कापरिहारायोक्तमाचार्यैः(१) अन्यो जीव इत्यादि। जडदेहादन्यत्वं न स्वरूपभूतादुच्यते इत्यर्थः।(२) अचितो जडादिन्द्रियत्वं चामुख्यं तेषामवशत्वादभिमानादेव(३) तद्द्वयं पश्यामीत्यभिमानोऽस्येत्यादेः तर्हि चक्षुरादीनि कस्याधीनानि इत्यतः प्राणाधीनानि इति द्योतयितुं "चक्षुराद्या मनो जीवः" (गारुडे) इत्यादेः

प्राणेऽपि न पर्याप्तमित्युक्तं तस्यापि ज्ञातृगन्तृत्वं न स्वतः शक्यते क्वचिदिति यस्तस्य ज्ञातृगन्तृत्वदाता स भगवानित्याद्यपि सूचितम्, यः श्रोतेत्यत्र प्रमाणम् "ज्ञाता च मन्ता च"(गारुडे) इत्यादि ज्ञनादिदानं तस्यान्य इत्येतदन्विति सूचितम्, "सर्वस्य ज्ञानदो हरिः" (गारुडे) इत्येतत् "न स दृश्येत" इत्यनेन सूचितं स्वविषयज्ञानदातेति चेति दृश्य इत्यर्थः। भूतेन्द्रियमन इत्यादिना विष्णु रुच्यते न जीव इत्यत्र मानं "स देहान् भजत" (गारुडे) इत्यादिना।।४६।।

नन्वयं जीवः कियन्तं कालं देहान्वितो भवति इति चोद्यं परिहरति-**यावदिति**। यावन्तं कालं अन्नमय-प्राणमयमनोमयलक्षणेषु लिङ्गेषु अन्वितो भवति आत्मा परमात्मा तावन्तं कालं कर्मभिर्नितरां बन्धनं यस्य स तथा जीवः येषु देहेषु अन्वितो भवति। हिशब्दाद्धरिर्यदा त्रिविधदेहानुत्सृजति तदा स्वयमप्युत्सृजतीति ग्राह्यम्। अत्रायं विशेषः। यदा परमात्मा देहं सर्वात्मनोत्सृजति तदाऽयमपि सर्वात्मना तदनुग्रहेणोत्सृज्य संसारान्मुक्तो भवति। न चेदनेन सह देहान्तरं भजतीति तस्मादद्या[1-]नेन रूपा[-1]न्तरेण कृतदेहोत्सर्जनत्वादनेनापि सुयज्ञेन तदाचरितमिति देहोत्सर्जनलक्षणमरणस्य पराधीनत्वेनापरिहार्यत्वान्न शोकेन प्रयोजनमिति भावः। "यावद्देहान्वितो विष्णुः तावज्जीव" (गारुडे) इत्येतदत्र मानम् "यदोत्सृजति देहं स हरिः सर्वात्मना विभुः" (गारुडे) इति च। ननु परमात्मा जीवाभिन्नस्सन् देहान् भजत्युत्सृजति इत्युच्यते इति किं न स्यात्, कल्पनालाघवादेकमेव ब्रह्मज्ञानात्संसरति मुच्यते इत्यङ्गीकाराच्चेति तत्राह तत इति। तस्माद्धरेर्जीवो विपर्ययो विरुद्धः पर्ययः निश्चयः यस्य सः तथा विरुद्धलक्षण इत्यर्थः "अतिभिन्नस्वरूपौ तौ जीवेशावेकदेहगौ" (गारुडे) इत्यादेः। अतो ब्रह्मणोऽज्ञानकल्पनं अप्रामाणिकमिति भावः "देहाभिमानीत्वेकोऽत्र न मानी मानदः परः" (गारुडे) इत्येतद्भेदोपपादकम्। इतोऽपि भिन्न इत्याह-क्लेश इति, नानाक्लेशाधिकरणत्वाद्वा भिन्न इत्यर्थः। विपर्ययस्तावत् क्लेशादयश्चास्येत्यादेः क्लेशफलमाह-मायेति।।४७।।

कोऽयं मायायोगो नाम येनासौ क्लेशफलः स्यादिति तत्राह-**वितथेति**। गुणेषु शब्दादिषु अर्थदृग्वचः प्रयोजनदर्शनं तद्वाचकं वचनं च स्वर्गे लोके न भयं किञ्च नास्तीत्यादिलक्षणं यत् अयं वितथाभिनिवेशः मिथ्याग्रहः भ्रान्तिज्ञानमित्यर्थः। क्लेशपरिजिहीर्षया शब्दादिष्विन्द्रियप्रवर्तनं तत्फलमित्युपचारः। वचनाद्धि

---

1--1 A °द्यानन्दरू°

वितथाभिनिवेशो भवति गुणेष्वर्थदर्शनस्यापि तथाभिनिवेशित्वं सदृष्टान्तमाह-यथेति। "सप्तसु प्रथमा" (शब्दनिर्णये) इति सूत्रात्, मनोरथे कल्पितं राज्यं स्वप्ने दृष्टं रत्नं यथा मृषा वृथा तथा सर्वमिन्द्रियप्रवर्तनं मृषा सदसद्विलक्षणमित्यर्थं वृथेन्द्रियवृत्तय इत्येतद्धिरुणद्धि-"इन्द्रियाद्यभिमानेन तद्वान् जीव उदीर्यते। अतन्मानाद्धरिः प्रोक्तस्त्वदेहोऽनिन्द्रियस्तथा।। जीवानभिमते देहे न विष्णुर्जीवति स्थितः। अतस्त्वदेह उद्दिष्टः परमात्मा सनातनः।।"(प्रकाशिकायाम्) इत्येतज्जीवपरयोः भेदस्य जीवस्येन्द्रियवत्त्वमौपचारिकमित्यस्य चोपपादने प्रमाणं जीवस्येन्द्रियवत्वमुपचरितं चेत् कस्य तन्मुख्यमित्याशङ्का- "लेपाभिमानी जीवस्तु स्वरूपानुभवी न च। मुक्तेः प्राक् तेन मान्युक्तो न मानी विष्णुरुच्यते।। सर्वं ममेति पश्यन्नप्यलेपाभिमतिर्यतः। सम्यक् स्वरूपानुभवात्स्वतन्त्रत्वाददोषतः।।" (ब्रह्मतर्के) इत्यनेन परिहर्तव्या। स्वानधीने वस्तुनि स्वाधीनताबुद्धिः लेपाभिमानः सोऽस्यास्तीत्येतादृशदोषो वितथाभिनिवेश इत्युच्यते। हरेर्जीव देहेन्द्रियादिषु स्वाधीनेषु स्वाधीनताबुद्धिः लेपाभिमानः स गुणो यथार्थज्ञानलक्षणः तस्माद्धरेः देहेन्द्रियादौ स्वामित्वेन तद्वत्त्वं मुख्यं तत्राविवेकग्रहणं कर्मनिबन्धनं ततो विपर्यय इत्यादिलक्षणैः जीवोऽनीदृशः श्रीनारायण इति स्मर्तव्यम्।।४८।।

**अथ नित्यमनित्यं वा [1]नानुशोचन्ति तद्विदः।**
**नान्यथा शक्यते कर्तुं स्वभावः शोचता[2]मपि।।४९।।**
**लुब्धको विपिने कश्चित्पक्षिणां निर्मितोऽन्तकः।**
**वितत्य जालं विदधे तत्र तत्र प्रलोभ[3]नम्।।५०।।**
**कुलिंगमिथुनं तत्र विचरत्समदृश्यत।**
**तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता।।५१।।**
**साऽसज्ज[4]तशिचस्तन्त्यां महि[5]षी कालयन्त्रि[6]ता।**
**कुलिङ्गस्तां तथाऽऽपन्नां निरीक्ष्य भृशदुःखितः।**
**स्नेहादक[7]ल्पः [8-]कृपणः कृपणां [-8]पर्यदेवयत्।।५२।।**

---

1. A,B,G,J,M,Ma,T नेह 2 A,B,G,H,J,M,Ma,T,V °र्मति 3 A,B,G,J,T °यन् 4 M,Ma शिचा तन्त्या 5 W °षा° 6 M,Ma ताम् 7 H,V °ल्यः 8- -8 M,Ma कृपणां पर्यदेवयदातुरः, W कृपणमातुरः पर्यदेवयत्

अहो अकरुणो देवः स्त्रिया[1]ऽऽकरुणया विभुः।
कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति।।५३।।

कामं नयतु मां देवः किमर्धेनात्मनो हि मे।
दीनेन जीवता दुः[2]खं मन्देन विधुरायुषा।।५४।।

कथं [3]त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम्।
मन्दभाग्याः प्रतीक्षन्ते नीडे मे मातरं प्रजाः।।५५।।

एवं कुलिङ्गं वि[4]लपन्तमारात् प्रिया-वियोगातुरमश्रुकण्ठम्।
[5]स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो [6]विलीनः।।५६।।

**श्रीध०** उपसंहरति-**अथेति**। अथ तस्मात् नित्यमात्मानं अनित्यं देहं वा तद्विदो नित्यमनित्यं च जानन्तो [7-]न शोचन्ति[-7]। नन्वेवमुपदेष्टारोऽपि शोचन्तो दृश्यन्ते तत्राह-नान्यथेति। ज्ञानदार्ढ्याभावात्स्वभावो न निवर्तत इत्यर्थः।।४९।।

स्वयं सधर्मा अपीति यदुक्तं तत्र इतिहासमाह **लुब्धक** इत्यादिना। पक्षिणामन्तक ईश्वरेण निर्मितः सन् यत्र यत्र ते तत्र तत्र तान् [8-]कणादिभिः[-8] प्रलोभयन् जालं विस्तार्य विशेषेण धृतवान्। पाठान्तरे तेषामामिषादिभिः प्रलोभनं कृतवानित्यर्थः।।५०।।

**कुलिङ्गेति**। कुलिङ्गः कन्दभक्षी पक्षिविशेषः। कुलिङ्गयोः मिथुनम्।।५१।।

**सेति**। शिचस्तन्त्यां जालस्य सूत्रे असज्जत बन्धं प्राप। तामापन्नां आपदं प्राप्तां [9-]दृष्ट्वा कुलिङ्गः पक्षी तां मोचयितुमकल्पः सन् पर्यदेवयत् वृक्षशाखामाश्रित्य विलापं चकार[-9]।।५२।।

**अहो** इति। आकरुणया [10-]सर्वतोऽनुकम्पया स्त्रिया[-10] किं करिष्यति?।।५३।।

काममिति। आत्मनो देहस्य अर्धेन। अनेन विधुरायुषा भार्याशून्यजीवितेन दुःखं यथा भवत्येवं जीवता किं मे प्रयोजनम्? अतो मामपि कामं नयत्विति [11]पूर्वेणान्वयः।।५४।।

---

1 M,Ma °या कृपणया 2 A,B,G,J,T दुःखमनेन 3 H,V स्व°, W न° 4 M,Ma रुवन्त° 5. M,Ma तदैव 6. M,Ma नि° 7- -7 H, V omit 8- -8 H V omit 9- -9 H. V omit 10- -10 H.V omit 11 A,B,J omit पूर्वेण

**कथमिति।** सुष्ठु[1] न जाताः पक्षाः येषां तान् बालकान्[2] कथं बिभर्मि पोषयामि[3]। मन्दभाग्या मे प्रजा मातरं प्रतीक्षन्ते।।५५।।

**एवमिति।** शाकुनिकः पक्षिहन्ता विलीनः सन्।।५६।।

**वीर॰** एवं देहात्मनोरुभयोरपि शोकाविषयत्वमुक्तम्, सहेतुकमुपसंहरति- **अथेति**। अथ हे अबलाः! नित्यमात्मानं अनित्यं देहं प्रत्यपि तद्विदः देहात्मयाथात्म्यविदो न शोचन्ति। कुतः? इतिशब्दो हेत्वर्थकः, यस्मात्स्वभावः वस्तुनः स्वाभाविको धर्मः शोचतामपि शोचद्भिरप्यन्यथा कर्तुं न शक्यते। न ह्यात्मनः स्वाभाविकं नित्यत्वमपनीय अनित्यत्वं केनचिच्छोकाद्युपायेनापादयितुं शक्यं, न वा देहस्य अनित्यत्वमपनुद्य नित्यत्वम्, न हि वह्नेरौष्ण्यापनयेन शैत्यमापादयितुं शक्यमिति भावः।।४९।।

यदुक्तं 'स्वयं सधर्मा अपि शोचन्ति'' (भाग 7-2-37) इति तत्र दृष्टान्ततयेतिहासं प्रस्तौति **लुब्धक** इति। कश्चिल्लुब्धको व्याधः पक्षिणामन्तकः मृत्युः निर्मितः ईश्वरेण मृत्युत्वेन निर्मितः, अत एव स तत्र तत्र जालं वितत्य पक्षिणां प्रलोभनं वञ्चकं विदधे कृतवान्।।५०।।

एवं लुब्धको प्रलोभयति सति तत्र समीपे कुलिङ्गयोः पक्षिणोः मिथुनं द्वन्द्वं सञ्चरत्सत् लुब्धकेनादृश्यत तयोः स्त्रीपुंसयोः मध्ये कुलिङ्गी स्त्री सहसा वञ्चनोपायेन लुब्धकेन प्रलोभिता बभूव।।५१।।

सा महिषी कुलिङ्गभार्या कालवशा सती शिचस्तन्त्यां जालसूत्रे असज्जत लग्ना बभूव। अथ ततस्तां आपन्नां आपदं प्राप्तां दीनां कर्मानुगुणेन कालेन यन्त्रितां शिचस्तन्त्याम् आसञ्जितां महिषी भार्यां कुलुङ्गी वीक्ष्य कुलिङ्गः पुमान् स्नेहादतीव दुःखितोऽकल्पो विमोचनेऽदक्षः अत एव केवलं स्वयमप्यातुरः दीनस्सन् [4-]कृपणं दीनं यथा तथा[-4] पर्यदेवयत् परितस्तप्तो बभूव।।५२।।

तदेवाह-**अहो** इति त्रिभिः[5]। अहो देवो विधाता अकरुणो निर्घृणः, अकरुणत्वमेवाविष्करोति-स्त्रिया आकरुणयेति छेदः। अकरुणया सर्वतोऽनुकम्प्यया स्त्रिया मम भार्यया नितरां कृपणं दीनं मां प्रत्यनुशोचन्त्या दीनया कुलिङ्ग्या विभुर्देवः किं करिष्यति, न किमपि तस्य प्रयोजनम्, किन्तु मय्यकारुण्येन मां वियोज्य स्त्रियं नीतवान् इति भावः।।५३।।

1 A,B,J omit सुष्ठु 2 H,V omit बालकान् 3 A,J पुष्यमि. B पुष्णामि 4- -4 W omits 5 W omits त्रिभिः

यतो मय्यकरुणो देवस्ततो मामपि कामं यथेष्टं नयतु आत्मनोऽर्धेन मम किं प्रयोजनम्? एकस्मिन्मयि अर्धं भार्याख्यं नष्टम् अवशिष्टेनार्धेन न किमपि प्रयोजनमस्तीत्यर्थः। अर्धं विशिनष्टि, दीनेन कृपणेन दुःखं यथा भवति तथा जीवता प्राणान्धारयता विधुरायुषा विधुरं भार्यारहितमायुः यस्य तेन भार्याशून्यजीवितयुक्तेनेत्यर्थः। [1-]अनेनेति निःस्पृहत्वमुक्तम्, कार्योपयोगित्वाभावादिति भावः[-1]।।५४।।

किञ्च, अजातौ पक्षौ येषां तान्, मात्रा हीनान् रहितान् [2]शाबकान् कथमहं बिभर्मि पुष्णामि, किञ्च मे मम प्रजाः नीडे मातरं प्रतीक्षन्ते।।५५।।

एवं प्रियाया वियोगेनातुरं दुःखितं अतो विशेषेण रुदन्तम् अश्रुकण्ठमश्रुपूर्णकण्ठं तं कुलिङ्गं स एव शाकुनिकः शकुनीन् हन्तीति शाकुनिकः लुब्धकः, आरात्समीपे निलीनः तिरोहितस्सन् कालेन कर्मानुगुणेन प्रहितः प्रेरितः शरेण विव्याध ताडितवान्।।५६।।

**विज०** यस्मात्सर्वस्येश्वराधीनत्वेन जन्तूनां मरणादिकमपरिहार्यं, तस्मात् सर्वथा देहेन्द्रियादेरनित्यत्वं नित्यत्वं चास्तु, तथाऽपि शोककरणं न पण्डितमतम्। "गतासूनगतासूंश्च नाऽनुशोचन्ति पण्डिताः" (भ. गी. 2-11) इत्यादेरित्याह **अथेति**। अतस्तन्मूर्खमतमिति सन्तोष्टव्यं स्वभावत्वादित्याह-नान्यथेति।।४९।।

अस्मिन्नेवार्थे कञ्चनेतिहासमाह-**लुब्धक** इति। लुब्धको मृगयुः निर्मितो विधिनेति शेषः। वितत्य विस्तृत्य प्रलोभनं वञ्चनम्।।५०, ५१।।

शिचा जालेन सह यन्त्रितया तन्त्या सूत्रेण महिषी कुलिङ्गभार्या कालयन्त्रिता कालाधीना, अकल्पोऽसमर्थो मोचयितुमिति शेषः, पर्यदेवयत् विलपितवान्।।५२,५३।।

दुःखं जीवता दीनेन क्षीणेन आत्मनोऽर्धेन मे मम किं प्रयोजनम्, न किमपि। कुतः विधुरायुषाऽऽ-यूरहितेनात्मनोऽर्धस्य नष्टत्वात्।।५४।।

मे प्रजाःपुत्राः।।५५।।

शाकुनिकः पक्षिमारकः कालेनान्तकेन प्रहितः प्रेरितः निलीनो वृक्षमूले छन्नः कुलिंगं दीर्घतुण्डं "दार्वाघाटो दारुकुट्टः कुलिङ्गो दीर्घतुण्डकः" इत्यभिधानम्।।५६।।

---

1- -1 W omits 2 A,B,T बालकान्

एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः।

नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि।।५७।।

हिरण्यकशिपुरुवाच

बाल एवं प्रवदति सर्वे विस्मितचेतसः।

ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम्।।५८।।

यम एतदुपाख्याय तत्रैवान्तरधीयत।

ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत्साम्परायिकम्।।५९।।

अतः[1] शोचत मा यूयं परं चात्मानमेव च।

क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा[2]।।

स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम्[3]।।६०।।

नारद उवाच

इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा।

पुत्रशोकं क्षणात्त्यक्त्वा तत्त्वे चित्तमधारयत्।।६१।।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां सप्तमस्कन्धे

दितिशोकापनयनं नाम द्वितीयोऽध्यायः।।२।।

**श्रीध० एवमिति**। आत्मापायं स्वमृत्युम्।।५७।।

**बाल** इति। अयथोत्थितं मिथ्येवाविर्भूतम्।।५८।।

**यम** इति। साम्परायिकं परलोककृत्यम्।।५९।।

---

1 A,B,G,J,M,Ma,T ततः 2 M,Ma च 3 M,Ma °नः

**अत** इति। अशोचतेति पाठेऽडागम आर्षः। स्वः पर इत्यभिनिवेश एवाऽज्ञानं तेन विना।।६०।।

**इतीति**। सस्नुषा स्नुषासहिता।।६१।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां द्वितीयोऽध्यायः।।२।।

**वीर०** एवमितिहासं प्रस्तुत्य प्रकृतोपयोगित्वेनोपसंहरति-**एवमिति**। एवं यथा कुलिङ्गस्तथा यूयमप्यात्मापायं स्वमृत्युमपश्यन्त्यः अनालोचयन्त्योऽत एव अबुद्धयः विवेकशून्याः वर्षशतैरपि शोचन्त्यः एनं पतिं न प्राप्स्यथ।।५७।।

एवं प्रेतबन्धुयमसंवादरूपमितिहासं प्रस्तुत्य उपसंहरति दैत्य· **बाल** इति द्वाभ्याम्। एवं इत्थं बाले प्रवदति सति सर्वे ज्ञातयः सुयज्ञस्य सपिण्डाः विस्मितं चेतो येषां ते अयथोत्थितं अपुरुषार्थत्वेनाप्रतीतं किन्तु पुरुषार्थत्वेन विपरीतरूपेण प्रतीतं सर्वं देहादिकमनित्यमस्थिरमपुरुषार्थरूपं मेनिरे निश्चितवन्तः इत्यर्थः।।५८।।

यमस्त्वेतदुक्तमुपाख्याय कथयित्वा तत्रैवाऽन्तर्दधे। ततो ज्ञातयः सुयज्ञस्य यत्कर्तव्यं साम्परायिकं मृतोद्देशेन कर्तव्यं कर्म तत् चक्रुः।।५९।।

एवमितिहासमुपसंहृत्य तत्फलितार्थमुपदिशन्नुपसंहरति-**तत** इति। यतो देहात्मनोरेवंविधस्स्वभावोऽतो हिरण्याक्षादिरूपं परमन्यमात्मानं स्वं प्रति वा यूयं मा शोचत, अहो मां विहाय स गत स्तं विहायाऽहं कथं जीवामीत्येवं स्वं परं प्रति वा माशोचतेत्यर्थः। स्वः पर इत्यभिनिवेशोऽभिमानो यस्मात्तेनाज्ञानेन अनाद्यज्ञानमूलकेन कर्मणा विना देहिनां कः परः को वाऽऽत्मा, कश्च स्वकीयः[1] पारक्यो वा स्वपरविभागाः स्वीयपरकीयविभागाश्च सर्वोऽप्यनाद्यविद्यामूलककर्मायत्तदेहसम्बन्धप्रयुक्तदेहात्माभिमानप्रयुक्त औपाधिकः, आत्मनस्तु केनाऽपि प्रकारेण स्वाभाविकसम्बन्धः शोकहेतुर्न विद्यते अतो मा शोचत इत्यभिप्रायः।।६०।।

उपरितनं दैत्यस्य वृत्तान्तं वक्तुं तावद्वाक्यमुपसंहरन् दितेरवस्थितिप्रकारमाह भगवान् नारदः-**इतीति**।

1 W स्वीयः

इतीत्थं दैत्यपतेर्हिरण्यकशिपोर्वाक्यमाकर्ण्य स्नुषया पुत्रस्य भार्यया सहिता दितिः क्षणमात्रेण पुत्रशोकं त्यक्त्वा तत्त्वे देहात्मयाथात्म्ये चित्तमधारयत् तत्त्वचिन्तनपरा बभूवेत्यर्थः।।६१।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्वितीयोऽध्यायः।।२।।

**विज॰** अनेन प्रकृते किमभूत्तत्राह-**एवमिति**। आत्मापायं युष्मन्नाशं देहनाशं वा।।५७।।

किं ज्ञातयो बालभाषित मित्युपेक्षां चक्रुरिति तत्राह-**बाल** इति। यद्देहादिकं तत्सर्व मनित्यं मेनिरे यद्देहात्मत्वं यदयथोत्थितं स्वप्नजाग्रत्ववद्भ्रान्तिं मेनिरे "अहं ममाभिमानादित्व यथोत्थमनित्यकम्" (ब्रह्मतर्के) इति स्मृतेः। नन्वेवं तर्हि महदादिजगतः चित्प्रकृतेश्च भ्रान्तिकल्पितत्वमायातं तयोरपि सर्वान्तर्गतत्वा दित्याशङ्का वाऽनेन परिहर्तव्या। तथा हि, यन्महदादि तत्सर्वं जगदाकारवाच्यस्य हरेरनुग्रहान्नित्यं आत् परमात्मनो यथार्थत्वेन सत्यत्वेनोत्थितं सृष्टं चित्प्रधानस्यापि नित्यत्वं भगवन्तमन्तरेण यथाऽस्वातन्त्र्येण स्थितत्वं च, तदुक्तं च "महदादि यथोत्थं च नित्या चापि यथोत्थिता। अस्वतन्त्रैव प्रकृतिः स्वतन्त्रो नित्य एव च। यथार्थभूतश्च पर एक एव जनार्दनः"।। (ब्रह्मतर्के) इति। अनेन महदादेरपि अनित्यत्वादिकं नास्तीति किमु हरेरिति कैमुत्यन्यायो दर्शितः।।५८।।

साम्परायिकं मृतविषयम्।।५९।।

आत्मपरावुद्दिश्य किमिति शोको न कार्य इति तत्राह-क आत्मेति। देहादिकमप्यपेक्ष्यात्मपरावाक्षिप्येते तथा हि, आत्मपरयोः चेतनत्वेन नित्यत्वाद्देहादेः भौतिकत्वेन नश्वर त्वात्किंशब्दस्याऽक्षेपत्वमेव, न त्वनिर्वचनीयः। तर्ह्यहं पर इति व्यवहारस्य किं मूलमिति तत्राह-स्वपरेति। स्वः पर इति दुराग्रहलक्षणमज्ञानमन्तरेण न किमपि कारणं तस्मात् आत्मनो वृद्धिः श्रीवासुदेवे दृढा मनोरतिरज्ञाननामशत्रुनाशश्चापादनीयां पुरुषेणेति निश्चेतव्यम्। "न हि देहादिरात्मा स्यान्न च शत्रु रुदाहृतः। अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनम्।। (ब्रह्मतर्के) यस्तु देहगतो जीवः स हि नाशं न गच्छति। अतः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः।।

देहदिव्यतिरिक्तौ तु जीवेशौ प्रति जानताम्। अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा।। शत्रुनाश-स्तथाऽज्ञाननाशो नान्यः कथञ्चन"।। (ब्रह्मवैवर्ते) इत्यनेन तात्पर्य मवगन्तव्यमिति सिद्धम्।।६०।।

प्रकरणसमाप्ताविति शब्दः।।६१।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे द्वितीयोऽध्यायः।।२।।

* * *

# तृतीयोऽध्यायः

**नारद उवाच**

हिरण्यकशिपू राजन्नजेयमजरामरम्।
आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत।।१।।

स तेपे मन्दरद्रोण्यां तपः परमदारुणम्।
ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः।।२।।

जटादीधितिभी रेजे संवर्तार्क इवांशुभिः।
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे।।३।।

तस्य मूर्ध्नः समुद्भूतः स[1]धूमोऽग्निस्तपोमयः।
तिर्यगूर्ध्वमधोलोका न[2]तपद्विष्वगीरितः।।४।।

चुक्षुभुर्नद्युदन्वन्तः [3]साद्रिद्वीपा[3] चचाल भूः।
निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश।।५।।

तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः।
धात्रे विज्ञापयामासुर्देवदेव जगत्पते।।६।।

दैत्येन्द्रतपसा त[4]प्ते दिवि स्थातुं न शक्नुमः।
तस्यचोपशमं भूमन् विधेहि यदि मन्यसे।
लोका न यावन्नङ्क्ष्यन्ति बलिहारा[5]स्तवाभिभोः।।७।।

---

1. M,Ma ०धूम्रो० 2 H,V ०सकृ० 3 A,B,G,J,M,Ma,T सद्वीपाद्रिश्च०4 A,B,G,J,M,Ma,T तप्ता 5. A,B,G,J,T स्तवाभिभूः. M,Ma स्तवप्रभोः !

**तस्याऽयं किल सङ्कल्पश्चरतो दुश्चरं तपः।**
**श्रूयतां किन्त्वविदितं तवाथापि निवेद्यते।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये तस्यतपसा तप्तं वीक्ष्य जगद्विधिः। आगत्य विस्मितस्तेन संस्तुतस्य वरानदात्।।

तदेवं साधूनां कदने दानवानादिश्य बन्धूनां शोकं च तत्त्वनिरूपणेन अपनीय यत्कृतवां स्तदाह- **हिरण्यकशिपुरित्यादिना**। अप्रतिद्वन्द्वं प्रतिपक्षहीनमेकराजमेकमेव राजानं व्यधित्सत कर्तुमैच्छत्।।१।।

**स** इति। ऊर्ध्वौ बाहू यस्य। नभसि दृष्टिर्यस्य। पादाङ्गुष्ठेनाश्रिताऽवनिर्येन।।२।।

**जटेति**। जटानां दीधितिभिः कान्तिभिः अंशुभिरश्मिभिः प्रलयकर्ताऽर्क इव रेजे। पूर्वं येऽलक्षिताः सन्तो भुवि चेरुः ते देवाः तदा पुनः स्वानि स्थानानि भेजिरे।।३।।

**तस्येति**। विष्वगीरितः सर्वतः प्रसृतः सन्।।४।।

**चुक्षुभुरिति**। द्वीपैः अद्रिभिश्च सहिता भूश्चलिता।।५,६।।

**दैत्येन्द्रेति**। तव बलिहाराः करप्रदाः पूजाकारिण इति वा अभितो भवतीत्यभिभूः तस्यामन्त्रणं हे अभिभूः! हे सर्वाधिपते। पाठान्तरे भो इति सम्बोधनम्। अभितो यावन्न नक्ष्ङ्यतीति सम्बन्धः।।७।।

ब्रह्मणस्तस्मिन् द्वेषमुत्पादयितुं तत्सङ्कल्पमाहुस्तस्येति चतुर्भिः। तस्य सङ्कल्पस्तव किं न विदितः अथाप्यस्माभिर्निवेदितम्, त्वया श्रूयताम्।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं तत्त्वोपदेशेन दित्यादीनां शोकं परिहृतवतो दैत्यस्योपरितनं वृत्तान्तमाह भगवान्नारदः- **हिरण्यकशिपुरित्यादिना**। हेराजन्! युधिष्ठिर! हिरण्यकशिपुरात्मानं व्यधित्सत विधातुमैच्छत्। कथम्भूतम्? अजेयमितरैर्जेतुमशक्यम्, जरामरणरहितम् अप्रतिद्वन्द्वं प्रतिपक्षरहितं, एकराजं एकःस्वयमेवराजा इत्येक राजः तमेवम्भूतमात्मानं साधयितुमैच्छदित्यर्थः। येन साधनेन स्वयमुक्तविधो भवेत्तादृशं साधनंकर्तुमैच्छदिति यावत्।।१।।

---

1- -2 A,B,G,J,T किन विदितः, M,Ma कि न विदितं 2 A,B,G,J,T °र्दतः 3 A,B,J °तश्च 4. H,V omit कान्तिभिः 5 H,V omit रश्मिभिः 6 A,B,J omit तदा 7 A omits भूश्चलिता 8 A,B,J omit तस्यामन्त्रणं 9 H,V °भो 10- -10 H,V omit 11. A,B,J °तः 12 W omits इति

तत्साधनानुष्ठानप्रकारमेव प्रपञ्चयति-**स** इति। सः दैत्यः मन्दरगिरेर्द्रोण्यां अत्युग्रं तपस्तेपे कृतवान्। कथम्भूतस्सन् ऊर्ध्वौ बाहू यस्य। नभसि दृष्टिः यस्य, पादाङ्गुष्ठेनाश्रिताऽवनिः भूमिः येन।।२।।

एवं तपः कुर्वन् दैत्यो जटानां दीधितिभिः कान्तिभिः अंशुभिः रश्मिभिः सांवर्तकः प्रलयकालिकः सूर्य इव रेजे रराज। तस्मिन् दैत्ये एवं तपः कुर्वति सति ये देवाः पूर्वं राक्षसैः[1] अलक्षितास्सन्तः भुवि चेरुः ते स्थानानि [2-]स्वस्थानानि[-2] भेजिरे प्रापुः। प्रतिपक्षस्यासुरस्य तपस्स्थिततत्वात् उपद्रवाभावात् स्वस्थानानि भेजिरे इति भावः, तस्य दैत्यस्य मूर्ध्नः सकाशात्समुद्भूतः निष्क्रान्तस्तपोमयः तपस आगतः तपोमयः तत आगत इत्यर्थे "मयट् च" इति मयट्। तपः कार्यभूत इत्यर्थः। धूमेनसहितोऽग्निः प्रवृध्दः तिर्यगूर्ध्वमधश्च सर्वतो लोकानतपत् ततापः।।३,४।।

नद्यः उदन्वन्तःसमुद्राश्च चुक्षुभुः द्वीपैरद्रिभिश्च सहिता भूः भूमिः चचाल, ग्रहैः सहिता स्ताराः नक्षत्राणि निपेतुः, दश दिशो जज्वलुश्च।।५।।

तेन तप्ता अग्निना तप्ता देवाः दिवं स्वर्गं त्यक्त्वा सत्यलोकं ययुः धात्रे ब्रह्मणे विज्ञापयामासुश्च। विज्ञप्ति मेवाह हे देवदेव, देवानामिन्द्रादीनामपि देव! हे जगत्पते! दैत्येन्द्रस्य तपसा तप्ताः वयं दिवि द्युलोके स्थातुं न शक्नुमः।।६।।

हे भूमन्! यदि त्वं लोकानां क्षेमं मन्यसे तर्हि हे अभिभो। सर्वाभिभवक्षम! तव बलिहाराः हविर्भागप्रदाः पूजाकारिणो वा सर्वे लोकाः यावन्न नङ्क्ष्यन्ति नाशं न यास्यन्ति तावदेव ततः पूर्वमेव, तस्य दैत्येन्द्र तपोग्ररुपशमं [3-]वरप्रदानरूपोपायेन[-3] विधेहि कुरु।।७।।

दैत्यस्य गूढाभिसन्धिं ब्रह्मणः तस्मिन् द्वेषमुत्पादयितुं [4-]विज्ञापयन्त[-4] आहुः **तस्येति**। दुश्चरमन्यैः कर्तुमशक्यं तपश्चरतः कुर्वतः तस्य दैत्यस्यायं किल सङ्कल्पः यद्यपि सर्वज्ञस्य तवाविदितं किन्नु, किमपि नास्ति तथाप्यस्मिन्निवेदितं श्रूयतां त्वयेति शेषः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

बहुकोटिसंख्या, तत्कालेन अनेकसम्भारैः आर्जितैरयोग्यं दुष्प्रापं, योग्यं चानेकविधसाधनैः, सुसाध्यं तूष्णीम्भावेनेत्यादिकं हिरण्यकशिपुतपश्चरणकथनव्याजेन अभिप्रेयतेऽस्मिन्नध्याये। व्यधित्सत कर्तुमैच्छत्।।१,२।।

1. A,B,T दैत्यैः 2- -2 A,B,T omit 3- -3 W omits 4- -4 W ०यन्ति

संवर्तार्कः प्रलयसूर्यः, स्थानानि गमनवर्जनानि, इतस्ततो यात्रां मुक्त्वा स्वस्थानानि भेजुः।।३-६।।

उपशमं परिहारं, बलिहारा उपहारार्थकाः।।७,८।।

**सृष्ट्वा चराचरमिदं तपोयोगसमाधिना।**
**अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम्।।९।।**

**तदहं वर्धमानेन तपोयोगसमाधिना।**
**कालात्मनोश्च नित्यत्वात्साधयिष्ये तथाऽऽत्मनः।।१०।।**

**अन्यथेदं विधास्येऽहमयथापूर्वमोजसा।**
**किमन्यैः कालनिर्धूतैः कल्पान्ते[1] वैष्णवादिभिः।।११।।**

**इति शुश्रुम निर्बन्धं तपः परममास्थितः।**
**विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर।।१२।।**

**तवासनं द्विजगवां[2] पारमेष्ठ्यं जगत्पते।**
**भवाय श्रयसे भूत्यै क्षेमाय विजयाय च।।१३।।**

**इति विज्ञापितो देवैर्भगवानात्मभूर्नृप।**
**परितो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम्।।१४।।**

**न[3] ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः।**
**पिपीलिकाभिराचीर्णमेदस्त्वङ्मांसशोणितम्[4]।।१५।।**

**तपन्तं तपसा लोकान् यथाभ्रपिहितं[5] रविम्।**
**विलक्ष्य विस्मितः प्राह हसंस्तं[6] हंसवाहनः।।१६।।**

**श्रीध० सृष्ट्वेति।** तपोयोगयोः समाधिना निष्ठया सर्वधिष्ण्येभ्यः श्रेष्ठं निजासनं सत्यलोकं यथाऽध्यास्ते-ऽधितिष्ठति।।९।।

---

1 M,Ma °ल्पान्तैः 2 M,Ma हि जगतां 3 M,Ma तं 4 M,Ma कीर्णं 5 A,B,G,J,T °भ्रापिहितं, M. Ma भावितत्तं 6 A,B,G,J,T प्रहसन् ह°

**तदिति**। तत्तथैवात्मनः साधयिष्यामि। ननु ब्रह्मणाऽतिदीर्घायुषा तपस्तप्त्वा तत्साधितमन्यः कृत स्तत्साधयेत्तत्राहुः[1]-**कालात्मनो** रिति। यद्यप्यायुषोऽल्पत्वेन देहो वारं वारं म्रियेत तथापि कालस्यत्मनश्च नित्यत्वा द्बहुभिः जन्मभिस्तपस्तप्त्वा तत्पदं[2] साधयिष्याम्येवेति।।१०।।

वर्धमानेनेति यदुक्तं [3-]तस्यफलमाह[-3] - **अन्यथेति** इदं[4] सुरासुरादि व्यत्ययेन[5]अयथापूर्वं पुण्यपापादिव्यत्ययेन इदं जगद्विधास्यामि। अन्यै[6]र्वैष्णवादिभिः ध्रुवादिपदैः किं प्रयोजन मतस्तदेव साधयिष्यामि।।११।।

**इतीति**। इति त्वत्पदापहरणे तस्य निर्बन्धं शुश्रुम। अत एवाऽसौ तपः परममास्थितो वर्तते[7] यदत्र युक्तं तदनन्तरमेव विधत्स्व।।१२।।

अन्यथा तव स्थानभ्रंशे सति साधूनामनिष्टं स्यादिति शोचन्त आहुः **तवेति**। तव पारमेष्ठ्यमिदमासनम्। द्विजानां गवां च भवायोद्भवाय। श्रेयसे सुखाय, भूत्यै ऐश्वर्याय। क्षेमाय लब्धपालनाय विजयायोत्कर्षाय।।१३,१४।।

**नेति**। वल्मीकादिभिः प्रतिच्छन्नं प्रथमं न ददर्श। पश्चात् कथञ्चिद्विलक्ष्य तं प्राहेति द्वयोरन्वयः। [8]पिपीलिकाभिः आचीर्णं समन्ताद्भक्षितं मेदश्च त्वक्च मांसं च शोणितं च यस्य।।१५।।

**तपन्तमिति**। अभ्रैः पिहितं छन्नं रविमिव विलक्ष्य [9-]विस्मितः प्राह[-9]।।१६।।

**वीर०** कोऽसौ सङ्कल्पः, तत्राहुः - **सृष्ट्वेति**। सर्वधिष्ण्येभ्यः इन्द्रादिस्थानेभ्यः परमे स्थाने तिष्ठतीति परमेष्ठी ब्रह्मा, तपोयोगे यस्समाधिः निष्ठा तेन चराचरात्मकमिदं कृत्स्नं[10] जगत्सृष्ट्वा यन्निजासनं सर्वोत्कृष्टं सत्यलोकमध्यास्ते।।९।।

तदेवासनमहमात्मनो मम वर्धमानेन तपोयोगसमाधिना साधयिष्ये इति। ननु ब्रह्मणा दीर्घायुषा तप स्तप्त्वा तत्साधितम् अन्यः कथं तत्साधयेत्, तत्राहुः - कालात्मनोश्च नित्यत्वादिति। यद्यप्यायुरल्पं तथाऽपि कालस्य आत्मनश्च नित्यत्वात् बहुभिर्जन्मभिः साधयिष्ये इत्यभिसन्धिरित्यर्थः।।१०।।

अभिसन्ध्यन्तरमाहुः - **अन्यथेति**। तपोबलेनाहमिदं जगदन्यथा अधरोत्तरमयथापूर्वं देवासुरादिव्यत्ययञ्च करिष्ये कल्पान्तैः कल्पावधिभिरत एव कालेन निर्धूतैर्विनाश्यै वैष्णवादिभिः पदैर्वैकुण्ठादिभिः किं प्रयोजनं, न

---

1 H,V ॰ह 2 H,V omit पदं 3- -3 A,B,T तदभिप्रायमाह 4 A,B,J अन्यथा 5 H,V omit व्यत्ययेन 6. H,V omit अन्यै. 7 H V omit वर्तते 8 H,V omit पिपीलिकाभिः 9- -9 H,V omit 10 A,B,T सर्वं

किमपि [1-]प्रयोजनम्[-1] इत्य[2]र्थः। अनेन "सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ, तामसी" (भ. ग. 18-32) इत्युक्तरीत्या स्थायिनो वैष्णवपदस्य अस्थिरत्वं सत्यादिलोकानां स्थिरत्वं चाभिसंहितवतो दैत्यस्य केवलतामस-बुद्धिमत्त्वमावेदितम्।।११।।

इतीत्थं त्वत्पदापहरणे तस्य निर्बन्धमभिसन्धिरूपं शुश्रुमः तदर्थमेव परमं तप आस्थितः। अतो हे त्रिभुवनेश्वर! अत्र कर्तुं यद्युक्तं तदनन्तरमाश्वेव स्वयमेव विधत्स्व [3]विधेहि।।१२।।

हे जगत्पते! तवेदं पारमेष्ठ्यं सर्वोत्कृष्टमासनं स्थानं द्विजानां गवाञ्च भवाद्यर्थं, तव स्थानभ्रंशे [4-]द्विजानां गवाञ्च[-4] न भवादिकमस्तीति भावः। तत्र भवः अलभ्यलाभः, क्षेमो लब्धपालनं, श्रेयो धर्मादिपुरुषार्थः, भूतिरैश्वर्यं, विजयः उत्कर्षः।।१३।।

इतीत्थं दैवैर्विज्ञापितो भगवानात्मभूः परमात्मनो जातो ब्रह्मा [5-]भृगुदक्षादिभिः[-5]परिवृतो दैत्येश्वरस्याऽऽश्रमं प्रति ययौ।।१४।।

[6-]वल्मीकादिभिः[-6] वल्मीकैस्तृणैः, कीचकैः वेणुभिश्च प्रतिच्छन्नं तं दैत्यं प्रथमं हंसवाहनो ब्रह्मा न ददर्श। ततश्च पश्चात्कथञ्चिद्विलक्ष्य विस्मितः [7]प्रहसन् तं प्राहेति द्वयोरन्वयः। कथम्भूतं विलक्ष्य? पिपीलिकाभिः आचीर्णम् आसमन्ताद्भक्षितं मेदश्च त्वक्च मांसञ्च शोणितं च यस्य।।१५।।

तपसा तपोऽग्निना लोकां स्तपन्तं, कमिव विलक्ष्य? अभ्रैः पिहितं छन्नं रविं यथा सूर्यमिव।।१६।।

**विज॰** किं तद्विज्ञापनमत्राह - सृष्ट्वेति। ब्रह्मा तपोज्ञानादिनेदं चराचरं सृष्ट्वा सर्वधिष्ण्येभ्यो रुद्रादिपदेभ्यः परं यन्निजासनमध्यास्ते। "अधिशीङ्स्थासां कर्म" (अष्टा. 1-4-46) इति सप्तम्यर्थे द्वितीया। अहं तदात्मनः साधयिष्ये इत्यन्वयः। स्वनाशे दुर्घटमत्राह - कालात्मनोरिति। कालस्यात्मनश्चेतनस्य च नित्यत्वात् अविनाशात् अन्यस्य त्वत्साध्यत्वे हिरण्यकशिपो रीदृशं कर्म नाद्भुतं यतो, ब्रह्माणमेकमन्तरेण आत्मयोग्यज्ञानेन रागादिना वा मोहिताः जानन्तोऽपि स्वासदृशं कर्माचरन्तो दृश्यन्ते, तदुदितम् - "जानतामपि कर्तव्यं कर्मात्मसदृशं सदा। तत्रात्मसदृशाज्ञानाद्रागाद्यैर्वा विमोहिताः। जानन्तोऽपि ह्यसदृशं कर्म कुर्युः ऋते विभुम्। चतुरास्यं स नायोग्यं कर्म कुर्यात्कथञ्चन" (नारदीये) इति। न चैतत्तपआदिसाध्यम् अयोग्यत्वात्। "तपसा विद्यया वापि ज्ञानध्यानादिना

1- -1 A,B,T omit 2 W omits अर्थः 3 A,B,T कुरु 4- -4 W द्विजगवां 5- -5 A,B,T भृग्वाद्यैः 6- -6 W omits 7 W omits प्र.

तथा। व्यस्तैः समस्तैरथवा कुर्वता यत्नमुत्तमम्। सम्भारविक्षेपशतैर्बहुकोटिभिरेव च। न शक्यते समारोढुं स्वात्मायोग्यपदंत्त्विति।।" (प्रकाशिकायाम्) तस्माद्योग्यमेवानुष्ठेयं नायोग्यमिति सिद्धम्।एवं तत्त्वं चेत्तर्हि किमर्थं तपआदेर्विघ्नं कुर्वन्तीति चेन्न। तप आदीनां निष्फलत्वपरिहारार्थत्वात् - "तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः। विघ्नं तु तप आदीनां वैयर्थ्यस्यापनुत्तये" (प्रकाशिकायाम्) इति वचनात्।।९,१०।।

वैष्णवो ब्रह्मादिः कर्ता येषां ते तथा तैर्ब्रह्मनिर्मितैरित्यर्थः। "ब्रह्मास्वयम्भूर्द्रुहिणो वैष्णवः शतधृत्तथा" इति शब्दनिर्णये, तथापि साक्षाद्विष्णोः पदमत्रोच्यत इति। किं न स्यादत्राह - कालनिर्धूतैरिति तर्हि कियन्तं कालं स्थितैरिति तत्राह, कल्पान्तैरिति। मन्वन्तरादिकल्पावसानिकैः "न यत्र माया न रजस्तमश्च" इत्यादिना विष्णोः पदस्य वैलक्षण्योक्तेः।।११।।

निर्बन्धमसदाग्रहम्।।१२।।

ननु, हिरण्यकशिपोरन्येषां पदानि विहाय तव पदाकांक्षायां को विशेषहेतुरत्राह - तर्वेति। तवासनं सकलदुःखानि निरस्य स्थातुं योग्यं पदं पारमेष्ठ्यं अत्यन्तसुखकारणं यस्मात्तस्माज्जगतां भवाय ज्ञानादिगुणसमृद्धये भूत्यै समृद्धस्य पुनर्हासराहित्याय श्रेयसे संसारान्मुक्तये क्षेमाय रक्षणाय विजयाय इन्द्रियजयाय च भवति तस्मादत्युत्तम पदत्वाद्धिरण्यकशिपुरचीक्लृपत्, तदुक्तम् - "भवाय श्रेयसे चैव न कश्चित्तदपेक्षते। मधुकैटभयोश्चैव हिरण्यादेस्तथैव च। नान्यो ब्रह्मपदं वाञ्छत्यृजून्योग्यान्विना क्वचित्। ततः श्रेयांसि वाञ्छन्ति, नतु तत्पदमाप्तये" (ब्रह्माण्डे) इति। "भवो वृद्धिः समुद्दिष्टा श्रेयोमोक्ष उदाहृतः। वृद्धस्य न पुनर्हासो भूतिरित्येव कथ्यते" इति शब्दनिर्णये, दिवि स्थातुं न शक्नुमः इत्यतो हिरण्यकशिपुना ब्रह्मपदावाप्त्यै सकामं तपसि स्थितमिति ज्ञायते, यः सकामं तप आचरति तस्य तपसा तप्ते लोके स्थितिर्न घटते सन्तप्तकटाहान्तःस्थितिवद्यस्तु निष्कामं तपः करोति तेन सुखावाप्तिः स्यात्। तदुक्तं "सकामं तु तपः क्रूरं लोकानां क्षोभकृद्भवेत्।इतरच्छान्तये सर्वलोकानां भवति ध्रुवम्" (प्रकाशिकायाम्) इति। "ब्रह्माणमभजद्ब्रह्मपदार्थं स हिरण्यकः" (स्कान्दे) इति च।।१३,१४।।

कीचकैरनिलोद्धृतत्वेन स्वनद्भिर्णुभिः पिपीलिकाभिः व्याप्तत्वात् क्वचिच्छरीरावयवैर्मेदसा क्वचित्त्वचा क्वचिच्छोणितेन च युक्तम्।।१५।।

तपन्तमित्यनेनापि तपसः क्रूरत्वमाह - भासा विततम् अहो दैत्यानामयोग्ये वस्तुनि प्रयत्नातिशय इत्यालोच्य हसन् मन्दस्मितं कुर्वन् हंसवाहनो ब्रह्मा "विष्णुपद्मासना वुक्तौ पण्डितैर्हंसवाहनौ" इत्यभिधानम्।।१६।।

### ब्रह्मोवाच

उत्तिष्ठोत्तिष्ठ भद्रं ते तपस्सिद्धोऽसि काश्यप।
वरदोऽह मनुप्राप्तो व्रियतामीप्सितो वरः।।१७।।

अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम्।
दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते।।१८।।

नैतत्पूर्वर्षयश्चक्रुः न करिष्यन्ति चापरे।
निरम्बु[1]र्धारयेत्प्राणान् को वै दिव्यसमाः शतम्।।१९।।

व्यवसायेन [2]तेनैव दुष्करेण मनस्वि[3]भिः।
तपोनिष्ठेन भवता जितोऽहं दितिनन्दन।।२०।।

तत स्त आशिषः सर्वा ददाम्यसुरपुङ्गव।
मर्त्यस्य ते [4]ह्यमर्त्यस्य दर्शनं [5-]नाफलं मम[-5]।।२१।।

### नारद उवाच

इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः।
कमण्डलु जलेनौक्षद्दिव्येनामोघराधसा।।२२।।

[6]ततः कीचक वल्मीकात् सह ओजो बलान्वितः।
सर्वावयवसम्पन्नो वज्रसंहननो युवा।।
उत्थित स्तप्तहेमाभो विभावसुरिवैधसः।।२३।।

स निरीक्ष्याम्बरे देवं हंसवाह[7]मधिष्ठितम्।
ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः।।२४।।

---

1 W म्बुधा° 2 A,B G J,T तेऽनेन, M,Ma तेनेन. 3 A,B,G,J,T °नाम् 4 A,B,G,J,T अम° 5- -5 M,Ma न च निष्फलं 6 A,B,G,J M,Ma,T स तत्° 7 A,B,G,H,T,V मवस्थितम्, M,Ma °नमास्थितम्

**श्रीध० अद्राक्षमिति**। हृत्सारं धैर्यम्। दंशैर्मक्षिकादिविशेषैर्भक्षितो देहो यस्य।।१७,१८।।

**नैतदि**ति। निरम्बुः निषिद्धमम्बु येन सः, त्यक्तोदक इत्यर्थः। [1-]निरम्ब्विति पाठे क्रियाविशेषणम्[-1]।।१९।।

**व्यवसायेने**ति। ते त्वया[2]ऽनेन व्यवसायेनैव [3-]दृढसङ्कल्परूपोद्यमेनैव[-3] तावज्जितोऽहं तपोनिष्ठेन भवता तु सुतरां जितः।।२०।।

**तत** इति! [4-]मर्त्यस्य तव[-4] अमर्त्यस्य मम दर्शनमफलं [5]निष्फलं न भवति।।२१।।

**इतीति**। आदौ भवतीति आदिभवो [6]ब्रह्मा [7-]अमोघराधसा अमोघप्रभावेन[-7] औक्षत्प्रोक्षितवान्।।२२।।

**तत** इति। वज्रवत्संहननं अङ्गदार्ढ्यं यस्य, तप्तस्य हेम्नः आभेवाभा [8]देहकान्तिर्यस्य।।२३।।

**स** इति। तस्य दर्शनेन महानुत्सवो यस्य।।२४।।

**वीर०** [9]उक्तिमेवाह-**उत्तिष्ठेति**। हे काश्यप!, उत्तिष्ठोत्तिष्ठ ते तव भद्रं कुशलमभीष्टमिति यावत् भविष्यति। यतस्त्वं तपस्सिद्धः तपसा सिद्धः फलपर्यन्ततपस्सम्पन्नः अत एव च वरदस्त्वदभीष्टदोऽहमनुप्राप्तः, अत ईप्सित इष्टोऽर्थो व्रियतां याच्यताम्।।१७।।

ते तवैतत् हृत्सारं धैर्यं, महदद्भुतमद्राक्षम् दृष्टवानस्मि, हि यस्माद्दंशैः भक्षितो देहो यस्य, तस्य प्राणा अस्थिषु शेरते अस्थीनि [10-]भक्षयन्तः तिष्ठन्तीत्यर्थः[-10]।।१८।।

पूर्वर्षयो भृग्वादयोऽपि नैवं विधाः तपश्चक्रुः अपरे अर्वाचीना न करिष्यन्तीति किम्पुनर्वक्तव्यम्। को वै पुमान् देवमानेन शतं समाः वर्षाणि निरम्बु त्यक्तोदकं यथा भवति तथा प्राणान् धारयेत् न कोऽपीत्यर्थः।।१९।।

हे दितिनन्दन! मनस्विभिः योगिभिरपि दुष्करेण तेनानेन [11-]अध्यवसायेनैव[-11] तावज्जितोऽहं तपोनिष्ठेन भवता तु सुतरां जितः।।२०।।

यतोऽहं जितस्ततस्ते तुभ्यं हे असुरश्रेष्ठ! सर्वा आशिषः इष्टार्थान्ददामि, मर्त्यस्य [12-]मरणधर्मवतस्ते[-12] तव, अमर्त्यस्य [13-]तद्रहितस्य[-13] मम दर्शनमफलसाधनं न भवति, किन्तु सफल मेवेत्यर्थः।।२१।।

---

1--1 A,B,J omit 2 H,V omit त्वया 3--3 A,B,J omit 4--4 H,V omit 5 H,V omit निष्फलं 6 H,V omit ब्रह्मा 7--7 A,B,J omit 8 H,V omit देहकान्तिः 9 A,B,T उक्त० 10--10 A,B,T °यन्तीत्यर्थः 11--11 W व्यवसाये नैव 12--12 W omits 13--13 W omits

इतीत्थमुक्त्वा आदिदेवो ब्रह्मा, अमोघराधसा अमोघप्रभावेन दिव्येन कमण्डलुजलेन पिपीलिकैर्भक्षितमङ्गं यस्य तं दैत्यम् औक्षत्प्रोक्षितवान्।।२२।।

ततः प्रोक्षणानन्तरं कीचकाच्छन्नवल्मीकादेधसः काष्ठनिचयाद्विभावसुरग्निरिव उत्थितः [1-]वल्मीकं भित्त्वा बहिर्निर्गत इत्यर्थः[-1]। कथम्भूतः? सहसा प्राण्बलेन ओजसा इन्द्रियबलेन देहबलेन चान्वितः तथा सर्वैः अवयवैः पाणिपादादिभिः सम्पन्नो युक्तः वज्रवत्संहनन मङ्गदार्ढ्यं यस्य स युवा यौवनयुक्तश्च तप्तस्य हेम्न इवाभा यस्य सः तप्तसुवर्ण तुल्यकान्तिरि[2]त्यर्थः।।२३।।

एवं विधः उत्थायाम्बरे हंसवाहनमवस्थितमधिष्ठितं देवं ब्रह्माणं निरीक्ष्य स दैत्यस्तस्य ब्रह्मणो दर्शनेन महानुत्सवः सन्तोषो यस्य तादृशः शिरसा भूमौ ननाम।।२४।।

**विज०** हृदो हृदयस्य सारं दार्ढ्यं दंशाः सूचीमुखाः शूकाः, ते तव अस्थिष्वेव शेरत इति यस्मात्तस्मा दद्भुतम्।।१८।।

इतोऽप्यत्यद्भुतमित्याह-**नैतदि**ति। निरम्बुर्जलपानरहितः "निर्निश्चय निषेधयोः" (अम.को. 3-408) इत्यमरः "स्युरेवतुपुनर्वैवेत्यवधारणवाचकाः" (अम.को. 3-427) इत्यभिधानाद्वा इत्यनेन दिव्यशतसमास्वेकाऽपि किञ्चिदूना न भवतीत्याह।।१९।।

इनः समर्थः तेन व्यवसायेन अमनस्विभिः मनोबलरहितैः दुष्करेण दुस्साधनेन जितो वशीकृतः "पराभूतं वशस्थञ्च जितमित्युच्यते बुधैः" इति शब्दनिर्णये।।२०।।

ददामि दास्यामि इति इच्छामि मर्त्यस्य मरणशील मनुष्यशरीरं प्राप्तस्य ते तव अमर्त्यस्य जरामरणशून्यस्य देवस्य मम दर्शनमभूद्धि यस्मात्तस्मान्निष्फलं नैव।।२१।।

आदेर्हरेर्भवो जन्म यस्य स तथा विष्णुभूरित्यर्थः। सर्वस्यादौ भवतीति वा। औक्षत् प्रोक्षितवान् दिव्यत्वमाह, आमोघेति।।२२।।

एधसः इन्धनात्।।२३,२४।।

1- -1 W omits 2 W omits इत्यर्थः

उत्थाय प्राञ्जलिः [1]प्रह्वः प्रेक्षमाणो दृशा विभुम्।
हर्षाश्रुपुलकोद्भेदो गिरा गद्गद[2-]याऽगृणात्[-2]।।२५।।

हिरण्यकशिपुरुवाच

कल्पान्तेकालसृष्टेन योऽन्धेन तमसाऽऽवृतम्।
अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा।।२६।।

आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति।
रजस्सत्त्वतमोधाम्ने पराय महते नमः।।२७।।

नम आद्याय बीजाय [3]नमोविज्ञानमूर्तये।
प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे।।२८।।

त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम्।
चित्तस्य [4]चित्तेर्मन इन्द्रियाणां पतिर्म[5]हान् भूतगुणाशयेशः।।२९।।

त्वं सप्ततन्तून् वितनोषि तन्वा त्रय्या [6]चतुर्होत्रकविद्यया च।
त्वमे[7]क आत्माऽऽत्मवता मनादिरनन्तपारः कवि[8]रन्तरात्मा।।३०।।

त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि।
कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा।।३१।।

त्वत्तः परं नापरमप्यने[9]जज्जगच्च किञ्चित् व्यतिरिक्तमस्ति।
विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः।।३२।।

**श्रीध० उत्थायेति**। हर्षेण अश्रूणि पुलकोद्भेदश्च यस्य सः।।२५।।

**कल्पान्त** इति। अन्धेन निबिडेन। तत्र हेतुः कालसृष्टेन प्रकृतिगुणरूपेण [10]न तु ध्वान्तेन। तमसाऽऽवृत

---

1 A,B,G,J,M,Ma,T ०प्रह्वइंक्ष० 2- -2 या गृणन्, M,Ma याऽगृणत् 3 A,B,G,J,M,Ma,T ज्ञान वि० 4. M,Ma चित्ति 5 M,Ma ०हाभृ०

6. A,B,G,J,T चा० 7 A व० 8. M,Ma ख्ययात्मा 9 A,B,G,J,M,Ma,T जदेजज्ञ 10 H,V omit नतु

मिदं जगद्योऽभिव्यनक् अभिव्यक्तमकरोद्यश्च त्रिगुणेनात्मनेदं [1]जगत्सृजति अवति [2]पालयति लुम्पति [3]संहरति च तस्मै रजस्सत्त्वतमसां धाम्ने आश्रयाय महते पराय परमेश्वराय नम इति द्वयोरन्वयः।।२६,२७।।

अत्र च स्वप्रकाशकत्वं जगत्प्रकाशकत्वं तत्कारणत्वं तत्सृष्ट्यादिकर्तृत्वं महत्वं परमेश्वरत्वं चेति षड्विधत्वमुक्तम्। तदेव प्रपञ्चयन् नमस्करोनि-**नम** इति। चतुर्भिः। बीजाय कारणय। तत्र हेतु· आद्याय। ज्ञानं ज्ञप्तिर्विज्ञानं विषयाकारं ज्ञानं मूर्तिर्यस्य तस्मै। अनेन स्वप्रकाशकत्वं जगत्प्रकाशकत्वं च दर्शितम् बीजार्येति निमित्तत्वमुक्तम् उपादानत्वमाह-प्राणादयो ये विकारास्तैः [4]रूपेः व्यक्ति कार्यकारणमीयुषे प्राप्तवते।।२८।।

एवमात्मना त्रिवृता चेत्यनेनोक्तं कारणत्वं द्वेधा दर्शितम्। महत्त्वमीश्वरत्वं चाह-**त्वमिति**। त्वमेव जगतो जङ्गमस्य तस्थुष· स्थावरस्य च, ईशिषे नियन्ता भवसि। केन मुख्येन प्राणेन सूत्रात्मरूपेण। अतस्त्वं प्रजानां पति· तासां चित्तस्य चित्तेश्च तत्परिणामभूतायाश्चेतनाया मनसश्च तन्नियाम्यानां इन्द्रियाणां च पति·। अतस्त्वमेव महान्। भूतानां आकाशादीनां तद्गुणानां शब्दादिविषयाणां आशयानां तद्वासनानां ईशश्च, एतेनेव स्रष्टृत्व दर्शितम्।।२९।।

इदानीं यज्ञप्रवर्तकत्वेनान्तर्यामित्वेन च जगत्पालकत्वमाह-**त्वमिति**। त्वमेव सप्ततन्तून[5]ग्निष्टोमः अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अप्तोर्यामः, अतिरात्रः एते सप्त तन्त[5]वः विस्तारयसि। कथम्? त्रय्या तन्वा वेदत्रय रूपेण। कथम्भूतया? चत्वारो होतारो यत्र ताञ्चातुर्होत्रकं कर्म, तद्विषयया विद्यया। आत्मवतां प्राणिनां आत्मभूतस्त्वमेवान्तरात्मा चान्तर्यामी। कुतः? यतः कविः सर्वज्ञः। तत्कुतः? एकोऽखण्ड । तत्र हेतुरनादिरनन्तपारश्चेति। नास्त्यन्तः कालतः; पारश्चदेशतो यस्य सः।।३०।।

कालरूपेण संहर्तृत्वमाह-**त्वमेवेति**। लवाद्यैः [6]कालावयवैः क्षिणोषि क्षपयसि। तदेव सृष्ट्यादिकर्तृत्वेऽपि निर्विकारत्वमेवाह कूटस्थ इति। तत्र हेतवः। आत्मा ज्ञानरूपः परेमेष्ठी परमेश्वरोऽजो जन्मशून्यो महानपरिच्छिन्नः किच, जीवलोक एव कर्म[7]वशाञ्जन्मादिभि विक्रियते त्वं तु तस्य जीवो जीवनहेतु· यतस्तस्यात्मा नियन्ता।।३१।।

---

1 H V omit जगत 2 H V omit पालयति 3 H V omit सहरति 4- -4 H V रूप्यर्व्यक्ति शोर्याकार° 5- -5 A B J °मादि यज्ञान 6 H V omit काल 7 A B J °पा°

तत्कुतस्तत्राह-**त्वत्त** इति। त्वत्तो व्यतिरिक्तं यदि किञ्चिद्भवेत्तर्हि तस्मात्तवजन्मादिविकारो नियम्यत्वादिकं वा भवेत् तत्तु नास्तीत्याह। परं कारणम् अपरं कार्यम्। तत्र चैजञ्जङ्गममनेजत्स्थावरं च तद्व्यतिरिक्तं नास्ति। ननु मद्बोधकशास्त्रं व्यतिरिक्तमस्तीति चेन्न। यतो विद्या वेदोपवेदादिविद्यास्थानानि कलाश्च तदङ्गानि तवैव तनवो नतु त्वद्व्यतिरिक्ताः। तत्कुतः? यतस्त्वं बृहद्ब्रह्मैवाऽसि तदपि कुतस्तत्राह, हिरण्यरूपं ब्रह्माण्डं गर्भे यस्य सः त्रिपृष्ठः त्रिगुणात्मकस्य प्रधानस्य पृष्ठे परतः स्थितः। "अक्षरात्परतः परः" (मुण्ड.उ.2-1-4) इत्यादि श्रुतेः।।३२।।

**वीर॰** तत उत्थाय प्राञ्जलिः बद्धाञ्जलिः प्रह्वः नम्रः, दृशा चक्षुषा, विभुं ब्रह्माणं निरीक्षमाणः हर्षेण अश्रूणि पुलकोद्भेदो रोमोद्गमश्च यस्य तादृशः गद्गदया गिरा अगृणात् अस्तौषीत्।।२५।।

तदेवाह कल्पान्तइत्यादिनवभिः। तामसत्वाद्ब्रह्माणमेव सर्वकारणं सर्वेश्वरञ्च मत्वा स्तौति। यद्वा परमेश्वरधर्मारोपेण स्तौति-**कल्पान्त** इति। कल्पान्ते दैनान्दिनकल्पान्ते कालेन निमित्तेन सृष्टेनान्धेन तमसाऽऽवृतमिदं जगत्पुनर्यः स्वयंज्योतिः स्वप्रकाशरूपः स्वरोचिषा अभिव्यनक् अभिव्यक्तमकरोत् तस्मै नमः इत्युत्तरेणान्वयः।।२६।।

यश्च त्रिवृता सृष्ट्यादिशक्तित्रयवता आत्मना स्वेनैव इदं जगत्सृजति रक्षति लुम्पति संहरति च तस्मै रज आदिगुणत्रयस्य धाम्ने आश्रयाय, पराय सर्वोत्कृष्टाय, महते भूरिगुणाय, तुभ्यं नमः।।२७।।

यत एव मत एव आद्याय बीजाय कारणकारणाय ज्ञानविज्ञानमूर्तये शास्त्रविवेकोत्थज्ञानगम्यमूर्तये प्राणैरिन्द्रियैरुभयेन्द्रियैः मनसा बुद्ध्या विकारैः पृथिव्यादिभूतैश्च व्यक्तिं कार्यरूपताम् ईयुषे प्राप्तवते तुभ्यं नमः।।२८।।

एवं कार्यकारणरूपेण अवस्थितत्वमुक्तम्। अथान्तरात्मत्वमाह-**त्वमिति**। जगतो जङ्गमस्य, तस्थुषः स्थावरस्य च त्वमेव ईशिषे, अन्तरात्मतया नियमनधारकत्वमाह - प्राणेन मुख्येन मुख्यप्राणेनोपलक्षितस्त्वमेव। मुख्यप्राणनिर्वाहकस्त्वमेवेत्यर्थः। अत एव प्रजापतिः प्रजानां पतिः, यत एव मनः पर्यन्तसकलेन्द्रियधारक मुख्य प्राणनिर्वाहकस्तत एव चित्तस्य चित्तेः बुद्धेर्मनसः इन्द्रियाणां च पतिः निर्वाहकः, न केवलं घटादे भूतलादिवद्धारकः किन्तु महाभूतानां पृथिव्यादीनां गुणानां शब्दादिगुणग्राहकाणां इन्द्रियाणामाशयस्य अन्तःकरणस्य च ईशोऽन्तःप्रविश्य नियन्ताऽन्तः प्रविश्य प्रशासनेन धारक इत्यर्थः।।२९।।

1- -1 H,V omit 2. H,V omit तत् 3- -3 H,V बोध॰ 4 W अस्तावीत् 5 W स्तुतिः 6- -6 W omits 7 W omits धाम्ने 8 W सर्वेन्द्रिय

अन्तरात्मत्वमेव प्रपञ्चयति। सप्ततन्तून् सप्तविधान् तन्तून् तन्यन्ते विस्तार्यन्ते इति तन्तवः वैदिकाः क्रियाः पशुसोमेष्टिसत्राहीन होमेष्टकचिदग्निरूपेण सप्तविधांस्तान् यद्वा सप्तभिस्तन्यन्ते इति तथा तान् अध्वर्यु होतृ प्रस्तोतृप्रतिहर्तृद्गातृ ब्रह्मयजमानैः सप्तभिः वितन्यन्त इति वा सप्ततन्तवस्तान् सप्त संस्था वा वितनोषि अन्तरात्मतया प्रवर्तयसि। कया? त्रय्या वेदत्रयेण, कथम्भूतया? चतुर्होतृकविद्यया चतुर्होत्रादिसंज्ञकमन्त्रविद्यायुक्तया। अनेन यज्ञादिकर्तृकत्वमन्तरात्मतयोक्तम्, अथोपासनात्मकज्ञानप्रवर्तकत्वमाह - आत्मवतां प्रशस्तमनस्कानां योगिनां त्वमेक एव आत्मा अन्तरात्मतया योगप्रवर्तक इति भावः। त्वमेव सत्यादिवाक्यप्रतिपाद्यस्वरूप इत्याह- अनादीति। अनादिः कालतः परिच्छेदरहितः अनन्तपारः अन्तो देशतः परिच्छेदः पारो वस्तुतः परिच्छेदः तदुभयं यस्य नास्ति सोऽनन्तपारः अनेनानन्तशब्दार्थ उक्तः, कविः सर्वज्ञः अनेन ज्ञानशब्दार्थ उक्तः, अन्तरात्मान्तर्व्याप्य व्याप्[1]यगतविकारास्पर्शेन नियन्ता त्वमेव, अनेन सत्यशब्दार्थ उक्तः।।३०।।

अथ कालान्तरात्मतया तन्नियन्तृत्वमाह-**त्वमेवेति**। त्वमेव अनिमिषः, कालः कालशरीरक स्तन्नियन्ता, अत एव लवाद्यैः कालावयवैस्त्वमेव जनानामायुर्जीवनं क्षिणोषि क्षपयसि, त्वमेव कूटस्थो निर्विकारः, आत्मा परमात्मा, परमेष्ठी निरतिशयस्थानवर्ती, अजः कर्मायत्तजन्मादिशून्यः। "महानज आत्मा" इति श्रुत्यर्थोऽत्राभिसंहितः कृत्स्नस्य जीवलोकस्य जीवः जीवयिता आत्मा त्वमेव "को ह्येवान्यात्कः प्राण्यात्" (तैत्ति.उ. 2-7) इति श्रुत्यर्थोऽत्राभिसंहितः।।३१।।

किं बहुना यत्किञ्चिदेजच्चरम्, अनेजत् स्थावरञ्च त्वत्तः परमुत्कृष्टमपरं तुल्यञ्च नास्ति तथा व्यतिरिक्तम् अत्वदात्मकञ्च नास्ति, त्वत्तोऽपकृष्टं त्वदात्मकञ्च सर्वं चराचरं जगदित्यर्थः। एवं रूपस्य तदात्मकत्वमुक्तम्, अथ नाम्नः तदात्मकत्वमाह - विद्याः वेदाः, कलाः उपवेदादयः सर्वाः शब्दात्मिकाः ते तव तनवः शरीरभूताः हिरण्यगर्भोऽसि हिरण्यात्मकं[2] ब्रह्माण्डं गर्भे यस्य तथाभूतोऽसि - "हिरण्यगर्भः समवर्तताग्रे" (तैत्ति. सं. 4-1-8-3) इत्याद्यष्टर्चे प्रतिपाद्यस्वरूपोऽसीत्यर्थः। स्वरूपेण गुणैश्च बृहत् त्रयाणां लोकानां पृष्ठो[3] बहिर्भूतः परमव्योमनिलय इत्यर्थः।।३२।।

**विज॰** प्रह्वः प्रवणः।।२५।।

मिश्रामिश्रभेदेन द्विविधा स्तुतिः वर्तते। तत्र हिरण्यकशिपुर्मिश्रया परोक्षात्मगतया स्तुत्या देवतातृप्तिर्भवतीति तादृश्या स्तौति - **कल्पान्त** इत्यादिना। अत्र ये चतुर्मुखस्यासम्भाविता गुणास्ते तदन्तर्यामिण्येककार्यत्वेन

---

1 A,B,T omit व्याप्य 2 W हिरण्मयात्मकं 3 W omits पृष्ट.

एकस्थानस्थिते सर्वोत्तमे हरौ योज्या: तद्योग्यास्तत्र योज्या: नचैतावता स्तुतेर्भिन्नाधिकरणत्वमापन्नं तस्य तदधीनत्वेन नित्योपसंह्रियमाणगुणान्तर्भूतत्वेन तच्छ्रवणस्मरणाभ्यामन्त:करणस्योल्लाससम्भवात्। तदुक्तम् "प्रायस्तु स्तुतिशब्देषु मिश्रावाचो हरिं विना। केचिज्जीवगुणास्तत्र तन्नियन्तुर्हरे: परे।। एकस्थानैककार्यत्वाद्विष्णो: प्राधान्यतस्तथा। जीवस्य तदधीनत्वान्नभिन्नाऽधिकृतं वच:।।" (ब्रह्मतर्के) इति प्रलयकालप्रवर्तकेन हरिणा सृष्टेनान्धेन तमसा दुर्गाभिमन्यमानेनावृतमिदं जगदभिव्यनक् अभिव्यक्तं कृतवान् स्वरोचिषा स्वसामर्थ्येन।।२६।।

एतदेव विवृणोति-**आत्मने**ति। आत्मना क्षोभितया त्रिवृता त्रिगुणात्मिकया तेजोऽबन्नात्मिकया वा प्रकृत्या चेदं जगत्सर्जनादिक्रियाविशिष्टं करोति तस्मै नम इत्यन्वय: "रज:सत्त्वतमोधाम्ने" इत्यनेन सृष्ट्यादौ रजआदि गुणानां प्रधान्यं सूचयति-"पराय महत" इत्यनेन "अणोरणीयान् महतो महीयान्" (कठ. उ. 2-20) इति श्रुतिसिद्धोभयविधानं संस्मारयति। दृश्य विषययाऽनया स्तुत्या, किं स्यादिति नाश्रद्धेयम्। तथाहि, आत्मना परमात्मना प्रेरितो वा उपादानभूतया प्रकृत्या रज: प्रधानयेदं सृजति सत्त्वप्रधानया जातैर्मन्वादिभि रिदमवति, तम:प्रधानया जातेन रुद्रेण संहरति, तस्मै महते महत्तत्त्वाभिमानिने पराय रुद्राच्छ्रेष्ठाय भगवते नम:।।२७।।

आद्याय पुरुषरूपेण जगदादौ व्यक्ताय अन्यत्रादिकर्ता श्रीनारायण: तस्माज्ज्ञाताय बीजाय व्यञ्जकाय फलरूपायेति वा जगदुत्पत्तौ बीजशक्तियुक्ताय वा ज्ञान विज्ञाने एव मूर्तिर्विग्रहो यस्य स तथा तस्मै। अन्यत्र ज्ञान विज्ञानयो: उपदेष्टृविग्रहाय प्राणेन्द्रियमनोबुद्धिलक्षणै र्विकारै: सप्तदशकै: व्यक्तिमीयुषे ब्रह्माण्डान्तर्विराट्पुरुषतयेति शेष:। उभयत्र समम्।।२८।।

मुख्येन प्राणेन सह त्वं स्थावरजङ्गमात्मकस्य ईशिषे प्रवर्तकोऽसि चित्तस्य चित्ति: स्मरणशक्तिप्रद: साक्षी वा महाभूतानां गुणानां[1] शब्दादीनाम् आशयस्यान्त:करणस्य प्रवर्तक:। पुनर्वचनं दैनन्दिनप्रवृत्त्यर्थम्।।२९।।

त्रय्या तन्वा प्रतिमास्थानीयेन वेदत्रयेण चातुर्होत्राख्यमन्त्रप्रकाश्ये चातुर्होत्रं तद्विषयया विद्यया च सप्ततन्तून् वितनोषि विस्तृत्य करोषि द्रव्यमन्त्रक्रिया-देवतास्थत्वेन बहिरुपदेष्टृत्वेन कर्तृत्वेन कारयितृत्वेन शास्त्रेज्यास्तुति प्रायश्चित्तादिरूपया च "अग्निमीले पुरोहितम् यज्ञस्य देव मृत्विजम् होतारं रत्नधातमम्" (ऋक् सं 1-1-1) इत्यादि श्रुते:। "यज्ञ: सवोऽध्वरो याग: सप्ततन्तु: मख:क्रतु:" (अम. को. 2-412) इति आत्मवतामात्मज्ञानिनां प्रेष्ठ:-

1 A,B omit गुणानां

"आत्मा प्रेष्ठे स्वरूपे च जीवे ज्ञातरि केशवे। वायौ देहे स्वयं स्वान्ते नवसु प्रोच्यते बुधैः" अनादिः कारणशून्यः पुरातनो वा अनन्तपारोऽप्रमेयोऽव्यये हरावात्मा मनो यस्य स तथा "न भारती मेऽङ्ग! मृषोऽपलक्ष्यते" (भाग. 2-6-33) इत्यादेरन्यत्राऽव्ययानां मुक्तानां आत्मा स्वामी "असंसार्यव्ययो मुक्त अचिरानन्द उच्यते"।।३०।।

अनिमिष इत्यनेन नित्यं जाग्रत्स्वभाव उच्यते, कूटस्थो। निर्विकारः आत्मा व्याप्तः परमेष्ठी सर्वोत्तमः महानजः ब्रह्मणोऽप्यधिक इत्यनेन सर्वोत्तमत्त्वं निर्णयति। अन्यत्र आत् जातोऽत एव महानव्यवधानेन तत्पुत्रत्वात् जीवलोकस्य जीवराशेर्जीवः प्राणधारकः "जीव प्राणधारणे" इति धातोः। कथं धत्ते इत्यत्र उत्तमात्मेति। इष्टादानादिकर्ता "अव सन्तर्पणे" इति धातोरवतिरूपोऽयं शब्दः सामान्यविशेषाभ्यां योजनीयः।।३१।।

इदानीं भगवत्येव सम्भाव्यमानैः विशेषणैः विशिष्टं तदन्तर्यामिणं अभिष्टौति त्वत्त इति। परमतीतमपर मेष्यदपि वर्तमानं यत्किञ्चिदनेजत स्थावरमेजज्जङ्गमञ्च वस्तु तत्सर्वं त्वत्तो व्यतिरिक्तं नाऽस्ति। त्वयैवान्तर्बहिश्च व्याप्तत्वात्, त्वामन्तरेण स्वातन्त्र्येण स्थितं नास्तीत्यर्थः "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना. उ.9-5) इति श्रुतेः। "सर्वं खल्विदं ब्रह्म" (छान्दो. उ. 3-14-1) इति च -"परावरेषु यस्मात्त्वं व्याप्तो विष्णुः सनातनः। तस्मान्न व्यतिरिक्तत्वमित्याहुर्वेदवादिनः" (पाद्मे) इति। अतस्त्वत्तो भिन्नं नाऽस्ति, किन्तु त्वमेवेत्यर्थो न घटत उक्त एवार्थः। ज्ञानं वेदादिविद्ययैव तदवाप्तिरपि तस्यास्त्वत्तनावाश्रितत्वात्त्वदनुग्रह मन्तरेण सुशका न स्यादित्यभिप्रेत्याह - विद्येति। विद्याश्च कलाश्च विद्याकलाः परविद्याऽपरविद्येति ते तनवः तव वपुषि स्थितत्वात्तथोच्यते, कलाः चतुष्षष्टिलक्षणा वा विद्या कला वेदाङ्गानीत्यन्यथाऽप्रतीतिनिरासाय आचार्यैः विद्याश्चकलाश्चेति विगृहीतम् एतस्मिन्नर्थे "महाविद्याः कलाश्चैव त्वत्तनावाश्रिता यतः विद्यातनुरिति प्राहुरतस्त्वां तत्त्ववेदिनः" (पाद्मे) इति मानञ्चोदाहरति। तस्मादयमेवार्थः इति इदञ्च माहात्म्यं हरेरेव युक्तमित्याह हिरण्यगर्भ इति। हिरण्यमण्डं गर्भे उदरे यस्य स तथा, गर्भीकृतानन्तब्रह्माण्डत्वात् तन्नाम तवैव युक्तम्। "हिरण्यकोशं रजसा परीवृतम्" इति श्रुतेः हिरण्मयब्रह्माण्डोदराभिव्यक्तत्वाद्वा तन्नामासि। निर्गुणस्य हरेरेते गुणाः कथं सम्भवेयुरत्राह - बृहदिति। गुणपूर्तित्वात् बृहत् ब्रह्म "अथ कस्मादुच्यते ब्रह्मेति बृहन्तोऽह्यस्मिन् गुणाः" इति श्रुतेः। ननु तर्हीदं शबलं किं न स्यादत्राह- त्रिपृष्ठ इति। जाग्रदाद्यवस्था अतिक्रम्य स्थितत्वात् त्रिपृष्ठ इत्युच्यते। त्रयाणां लोकानां पृष्ठे वर्तमान इत्यपव्याख्याननिरासाय तुरीय इत्याचख्युराचार्या इति। चतुर्मुखादप्यधिकं विष्णुं जानता हिरण्यकशिपुना तदन्तर्यामियोग्यगुणैरयं ब्रह्मा न स्तूयते किन्त्वन्तर्यामी स्तूयत इति ज्ञापनाय, तदुक्तम्-"ब्रह्मणोऽप्यधिकं विष्णुं

जानन्नपि हिरण्यकः। ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णु विवक्षया।।" (पाद्मे) इति बृहद्भासि महत्तत्वात्मकं चासीत्येकदेशीयैरिति व्याख्यातं तत्सम्प्रदायज्ञैर्हरे महत्तत्त्वात्मकमेवङ्गुणत्वेन सङ्गच्छत इति निरूप्य "ब्रह्माणं तद्गुणैःस्तौति तद्गविष्णुविवक्षया" (पाद्मे) इत्युक्तत्वात्। न च तद्व्यापित्वेन तदात्मकत्वमुच्यत इति वाच्यम् तर्ह्ययं व्याख्याता चतुर्मुखस्य तदभिमानित्वेन घटतां तस्याप्युक्तदोषाऽनिरस्तारादिति।।३२।।

**व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम्।**
**भुङ्क्षे[1] स्थितो धामनि पारमेष्ठ्ये[2] ह्यव्यक्त आत्मा पुरुषः पुराणः।।३३।।**

**अनन्ताव्यक्तरूपेण येनेदमखिलं ततम्।**
**चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः।।३४।।**

**यदि दास्यस्याभिमतान् वरान्मे वरदोत्तम।**
**भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो।।३५।।**

**नान्तर्बहिर्दिवा नक्त मन्यस्मादपि चायुधैः।**
**न भूमौ नाऽम्बरे मृत्युर्न नरैर्न मृगैरपि।।३६।।**

**व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः।**
**अप्रतिद्वन्द्वतां[3] युद्धे ह्यैकपत्यं[4] च देहिनाम्।।३७।।**

**सर्वेषां लोकपालानां महिमानं तथाऽऽत्मनः[5]।**
**तपोयोगप्रभावानां[6] यन्नरिष्यति कर्हिचित्।।३८।।**

इति श्रीमद्भागवते महापुराणे श्री वेय्यासक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः।।३।।

**श्रीध०** ननु, ब्रह्माण्डशरीरस्य जीवस्य मम कुतो वा ब्रह्माण्डगर्भत्वादि तत्राह - **व्यक्तमिति**। व्यक्तकार्यमिदं तव शरीरं व्यक्तं सत्यमिति वा येन शरीरेण त्वमिन्द्रियप्राणमनसां गुणान् विषयान् भुङ्क्षे, किञ्च पारमेष्ठ्ये

1. M,Ma भुङ्क्ते० 2. A,B,G,J,M,Ma,T ष्ठ्ये अ० 3 M,Ma ०ता 4. A,B,G,J,M,Ma,T ऐक० 5. A,B,G,J,T,V य० 6 M,Ma वेन यो न०

पारमैश्वर्ये। धामनि स्वरूपे स्थित एव भुङ्क्षे, नत्व[1]स्मदादिवत्स्वरूपतिरोधानेन। अतस्त्वमव्यक्त आत्मा निरुपाधिर्ब्रह्मैव पुराणः पुरुषश्चेत्यर्थः।।३३।।

ननु ब्रह्मत्वं पुराणपुरुषत्वं कथमेकस्य तत्राह-**अनन्तेति**। हे अनन्त! येन त्वयाऽ[2]व्यक्तरूपेण मनोवचनागोचरेण रूपेणेदं विश्वं ततं व्याप्तं तस्मै तुभ्यं भगवतेऽचिन्त्यैश्वर्याय नमः। भगवत्त्वे हेतुः [3-]चिदचिच्छक्तियुक्ताय[-3] चिच्छक्तिर्विद्या, अचिच्छक्तिर्माया ताभ्यां युक्तायेति।।३४,३५।।

**नेति**। अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि आयुधै[4]र्मृत्युर्[5-]माभूदिति पूर्वेणान्वयः[-5]।।३६।।

**व्यसुभिरिति**। व्यसुभिरप्राणैः असुमद्भिः सप्राणैः। यथा आत्मनस्तवाऽस्ति [6]महिमा तथाऽप्रतिद्वन्द्वतादिकं देहीतिशेषः।।३७।।

**सर्वेषामिति**। तपसा योगेन च प्रभावो येषां तेषां [7]यदणिमाद्यैश्वर्यं न रिष्यति न नश्यति तच्च देहीत्यर्थः।।३८।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां तृतीयोऽध्यायः।।३।।

**वीर०** यदुक्तं कृत्स्नस्य तच्छरीरत्वं तस्य सर्वान्तरात्मत्वञ्च तदुपसंहरन् नमस्करोति - **व्यक्तमिति** द्वाभ्याम्। हे विभो! देव! स्थूलं चिदचिदात्मकमिदं जगत्तव व्यक्तं शरीरं स्थूलशरीरमित्यर्थः। तर्हि किं सूक्ष्मं शरीरम्? तत्राह - अव्यक्तः प्राकृतैरिन्द्रियैरगम्यः आत्मा सर्वान्तरात्मा जगत्कारणपुरुषः। एवं विधस्त्वं येन शरीरेण चतुर्मुखशरीरेण परमेष्ठ्ये स्थाने स्थितः इन्द्रियादीनां गुणान् विषयान् शब्दादीन् भुङ्क्षे, तत्सूक्ष्ममिति शेषः। येन शरीरेण जीवानामिन्द्रियादीन् सृष्ट्वा तद्व्यापारान् लीलारसत्वेन भुङ्क्षे अनुभवसि तत्सूक्ष्मं शरीरमित्यर्थः।।३३।।

अनन्तं त्रिविधपरिच्छेदरहितमतीन्द्रियं यत्स्वरूपं तदनन्ताव्यक्तरूपं, येनानन्ताव्यक्तरूपेण इदमखिलं जगदन्तरात्मतया ततं व्याप्तं तस्मै चिदचिच्छक्तिभ्यां कार्योपयुक्ताऽपृथक् सिद्धस्वविशेषेण भूताभ्यां चेतनाचेतनाभ्यां युक्ताय, तच्छरीरकायेत्यर्थः। भगवते पूर्णषाड्गुण्याय तुभ्यं नमः।।३४।।

एवं परमात्मत्वाभिमानेन तद्धर्मारोपेण वा तद्गुणयुक्तत्वेन परम् [8]आत्माऽऽवेशावताररूपं ब्रह्माणं स्तुत्वाऽथ वरान् वृणुते - **यदीति**। हे वरदश्रेष्ठ! यदि ममाभिमतान् वरान् दास्यसि तर्हि तावत्वया सृष्टेभ्यो भूतेभ्यः

1 H,V omit अस्मदादिवत् 2 A,B,J °ऽव्यक्तेन 3- -3 H,V omit 4 H,V omit मृत्यु 5- -5 A,B,J omit 6. H,V omit महिमा 7. H,V अणि°
8 A,B,T आवेशा°

सकाशात् मम मृत्युर्मरणं माभूत्। एव मनुगृहाणेत्यर्थः[1]। विष्णोरपि चतुर्मुखसृष्टत्वाभिमानेन त्वद्विसृष्टेभ्य इत्युक्तम्।।३५।।

तथान्तः गृहादीनामन्तः, तेभ्यो बहिः, दिवा अह्नि, नक्तं रात्रौ, अन्यस्मात् त्वत्सृष्टव्यतिरिक्तात् त्वत्तोऽप्यायुधैरपि भूमौ पृथिव्याम्[2], अम्बरे च आकाशे, मृगैर्नरैश्च।।३६।।

व्यसुभिरप्राणैः असुमद्भिः प्राणिभिश्च सुरैरसुरैः महोरगैः[3] महासर्पैश्च मम[4] मृत्युर्माभूत् अयमेको वरः। वरान्तरञ्च याचते अप्रतिद्वन्द्वतामिति युद्धे अप्रतिद्वन्द्वताम् अप्रतिपक्षताम्, अयं द्वितीयः। देहिनां प्रजानामैकपत्यं एकाधिपतित्वम्, अयं तृतीयो वरः।।३७।।

तथा आत्मनो मम सर्वेषां लोकपालानाम् इन्द्रादीनां महिमानं माहात्म्यम् अयं चतुर्थः। किञ्च तपसा योगेन च प्रभावो येषां तेषां योगिनां यन्नरिष्यति न नङ्क्ष्यति अणिमाद्यैश्वर्यं, तदपि देहीति शेषः। पञ्चमोऽय वरः[5-5]।।३८।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां तृतीयोऽध्याय.।।३।।

**विज०** ज्ञानानन्दादिलक्षणगुणमूर्तिं निरूप्याधुना व्यक्तमूर्तिं निरूपयति - **व्यक्तमिति**। हिरण्यगर्भ इत्यनेन ब्रह्माण्डस्य शरीरस्थानीयत्वं सूचितम्। तत्र तिष्ठन् हरिः सुखलक्षणान् गुणान् भुङ्क्ते, नतु देवदत्तवद्दुःख लक्षणा नित्यतो वाऽह - व्यक्तमिति। पारमेष्ठ्ये धामनि वैकुण्ठादिस्थाने सत्यलोके वा स्वरूपभूते महिम्नि वा स्थितः पुराणः पुरुषस्त्वं येन शरीरेणेन्द्रियप्राणमनसां गुणान् विषयानेव भुङ्क्षे, नतु दुःखलक्षणान्, कुत एतत्? अत्राहात्मेति "एष ह्यानन्दमादत्ते त आत्मेति" इति श्रुतेः, आनन्दस्वभावत्वात्। तर्ह्येतद्विषयज्ञानं कथं नोत्पद्यते? इति तत्राह - अव्यक्त इति। "तदव्यक्त माह हि" (ब्र.सू. 3-2-22) इति सूत्रात्। हे विभो तदिदं व्यक्तं ब्रह्माण्डलक्षणं तव स्थूलमाचक्षत इति शेषः। यद्वा अनेन ब्रह्माणमेव तद्योग्यैर्विशेषणैः स्तौति, तथाहि-पुरं शरीरमणतीति पुराणः आत्मेत्यभिधानादात्मा चतुर्मुखः, अवतारेण व्यक्तिर्नास्तीत्यव्यक्तः। जगत्सृष्ट्याद्यैश्वर्यलक्षणान् गुणान् इतरत्स्पष्टम्।।३३।।

---

1 W omits इत्यर्थः 2 W omits पृथिव्याम् 3 W omits महोरगैः 4 W omits मम 5- -5 W omits

स्थावरजङ्गमाख्यं जगत् त्वद्व्यतिरिक्तं नास्ति त्वया व्याप्तत्वादित्यर्थतो व्याप्तिरुक्ता, तदिदं कीदृशेन रूपेण व्याप्तमिति मन्दाशङ्कापरिहाराय स्पष्टमाह - **अनन्तेति**। अनेन परिच्छिन्नस्य सर्वस्य अपरिच्छिन्नाद्धरेर्बहिष्ट्वं युक्तिविरुद्धमित्युक्तं भवति। "तम आसीत्तमसा गूढमग्रे" (यजुर्वे. 2-8-9) इति श्रुतेः। प्रकृत्या व्याप्तत्वप्रतीतेः कथं हरेरेवेति शिष्योक्तिर्घटते? इति। तत्राह - चिदचिर्दिति। शक्तिपदस्य द्विरावृत्तिः कर्तव्या "शक्यत्वाच्छक्तयो भार्याः" इति वचनात्। उभयविधा या शक्तिः प्रकृतिस्तस्याः या कार्येषु शक्तिस्तस्या अपि भगवच्छक्त्यविनाभूतत्वात् तद्व्याप्तिस्तन्नियतेत्यत एव युक्तायेत्युक्तं, न च अनेन गुणभूतत्वं हरेरिति वाच्यम्। शिष्येणोपाध्याय आगतः इत्यत्रोपाध्यायप्राधान्यवदुपपत्तेः। ननु लोके प्रतिवस्त्वेकनियतत्वादर्शनात् चिदचिदात्मकप्रपञ्चे कस्यचित्तद-नियतनियतत्वसम्भवेन स्वातन्त्र्येण सर्वव्याप्तत्वं हरेः कथं युज्यते? इत्यतो वाह - चिदचिदिति। "द्रव्यं कर्म च कालश्च" (भाग. 2-10-12) इत्यादेःपरमाणुमात्रवस्तुनोऽपि भगवदनियतत्त्वासम्भवात् एतादृशी शक्तिरस्याऽस्तीति कुत इत्यत उक्तं भगवत इति उक्तार्थ पदम् "भूयिष्ठां ते नमउक्तिं विधेम" इति वाक्यार्थं स्मरता हिरण्यकेन नम इत्युक्तं तदुक्तेः फलाधिकत्वात्।।३४।।

किं बहुनोक्तेन त्वदभीष्टं वदेत्याशङ्कित आह - यदीति। विविधत्वेनै सृष्टेभ्यः।।३५।।

अन्यस्मादपि कालात् अथवा भावात् अवयवविशिष्टात् भूतेभ्य इत्युक्तेऽप्यन्येभ्यः किमित्यतो विशिनष्टि न नरैरिति।।३६।।

व्यसुभिर्विगतप्राणैः पाषाणादिभिः असुमद्भिः ग्रहादिभिः एकपत्यम् एकाधिपत्यम्।।३७।।

महिमानं वृण इति शेषः। आत्मनस्तव यो महिमा स यथा न रिष्यति न नश्यति तथा मम महिमाऽस्तु। यो महिमा यथा कर्हिचित् न रिष्यति तथात्मनो [1]मम महिमा न नश्यत्विति चेति।।३८।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचतायां पदरत्नावल्यां टीकायां

सप्तमस्कन्ध तृतीयोऽध्यायः।।३।।

* * * *

1 A,B omit मम.

# चतुर्थोऽध्यायः

नारद उवाच

एवं वृतः शतधृतिर्हिरण्यकशिपोरथ।

प्रादात्तत्तपसा प्रीतो वरांस्तस्या[2]ऽऽशु दुर्लभान्।।१।।

ब्रह्मोवाच

तातेमे दुर्लभाः [3]पुंसां यान् वृणीषे वरान् मम।

तथाऽपि वितराम्यङ्ग वरान् [4]यदतिदुर्लभान्।।२।।

[5-]श्रीशुक उवाच[-5]

ततो जगाम भगवानमोघानुग्रहो विभुः।

पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः।।३।।

एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः।

भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन्।।४।।

स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः।

देवासुरमनुष्येन्द्रान् गन्धर्वगरुडोरगान्।।५।।

[6]सिद्धचारणविद्याध्रानृषीन् पितृपतीन् [7]मुनीन्।

यक्षरक्षःपिशाचेशान् [8-]प्रेतान् भूतपतीनपि[-8]।।६।।

सर्वसत्त्वपतीञ्जित्वा वशमानीय विश्वजित्।

जहार लोकपालानां स्थानानि सह तेजसा।।७।।

---

1--1 H,V श्रीशुक उवाच 2 A,B,G,J,M,Ma,T °स्य सु° 3 M,Ma पुंसां 4 A,B,G,J,M,Ma,T °दपि दु° 5--5 A,B,G,J,M,Ma,T,W omit

6. H,V साध्यादी° 7 A,B,G,J,M,Ma,T मनून् 8--8 A,B,G,J,T प्रेतभूतपतीनथ, M,Ma प्रेतभूतपतीनपि

**देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम्।**

**महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा।।**

**त्रैलोक्यलक्ष्म्यायतन मध्युवासाखिलर्द्धिमत्।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावर्थदीपिका

चतुर्थे तु वरान् लब्ध्वा विजित्याखिललोकपान्। विष्णुद्वेषेण तान् सर्वान् दैत्येन्द्रः समपीडयत्।।

**एवमिति**। शतधृतिः ब्रह्मा।।१।।

**तातेति**। मम मत्तः। यदपि यद्यपीमे दुर्लभाः।।२।।

**तत इति**। अमोघोऽनुग्रहो यस्य, [1-]प्रजेश्वरैर्मरीच्यादि[-1]भिः।।३।।

यदर्थं तपस्तप्तं तदाह-**एवमित्यादिना**।।४-६।।

**सर्वेति**। सर्वेषां सत्त्वानां प्राणिजातानां ये ये पतयस्तान्।।७।।

**देवेति**। त्रिविष्टपं स्वर्गमध्यास्ते स्म अधिष्ठितवान्। तत्र [2]स्वर्गेऽपि महेन्द्रभवनमध्युवासाऽधिवसति स्म।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं दैत्येन वृतान् वरान् ददौ ब्रह्मेत्याह भगवान्नारदः-**एवमिति**। एवमित्थं वृतो याचितः शतधृतिर्ब्रह्मा हिरण्यकशिपोस्तपसा तोषितः तस्य दुर्लभान् वरान् प्रादात्।।१।।

दत्वेदमाह - [3]ब्रह्मा, हे तात! मम मत्तो यान् वरान् वृणीषे ते इमे वराः पुंसो यद्यपि दुर्लभाः, तथापि दुर्लभानपि तान् वरान् अङ्ग! हे हिरण्यकशिपो! तुभ्यं वितरामि वर्तमानसामीप्ये लट् दत्तवानस्मीत्यर्थः।।२।।

एवमुक्त्वा अमोघः सत्योऽनुग्रहो यस्य, स विभुः भगवान् ब्रह्मा असुरवर्येण पूजितः प्रजेश्वरैः भृगुदक्षाद्यैः स्तूयमानः स्वस्थानं जगाम।।३।।

एवं लब्ध्वा वरा येन स दैत्यो हिरण्यवत्प्रकाशबहुलं देहं बिभ्राणो भ्रातुर्हिरण्याक्षस्य वधं भगवत्कृतं स्मरन् भागवतद्वेषसहितं भगवति द्वेषमकरोत्।।४।।

---

1--1 H,V omit 2 H,V omit स्वर्गेऽपि 3 A,T omit ब्रह्मा

तदेव प्रपञ्चयितुमुपोद्घातमाह - **स** इत्यादिना। स महासुरो हिरण्यकशिपुः त्रीन् लोकान् सर्वा दिशश्च विजित्य तथा देवादीन् सर्वसत्त्वपतीन् सर्वभूताध्यक्षांश्च जित्वा वशमानीय विश्वजिद्बभूव। लोकपालानां तेजसा सह स्थानानि जहार अपहृतवान्।।५-७।।

देवोद्यानञ्च जहारेत्यनुषङ्गः। श्रिया सर्वसमृद्ध्या जुष्टं युक्तं त्रिविष्टपं स्वर्गमध्यास्ते स्म अधिष्ठितवान् [1-]"अधिशीङ्स्थाऽऽसां कर्म" (अष्टा.1-4-46) इति कर्मत्वम्[-1]। विश्वकर्मणा निर्मितं त्रैलोक्यलक्ष्म्या आयतनमाश्रयं भोग्यभोगोपकरणादिसर्वसमृद्धिमत् महेन्द्रस्य भवनं साक्षादध्युवास अध्युषितवान्।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

वरदानादिना सम्भूतं लवणाब्धिजलवृद्धिह्रासवत् क्षणिकं भगवद्भक्तैश्वर्यं श्रीनारायणप्रसादाविर्भूत-मनन्तकालीनं शाश्वतं स्यात्तदेवापाद्यं बुभूषुभिरित्यादितात्पर्यं निरूप्यते कतिपयेष्वध्यायेषु। तत्र हिरण्यकशिपवे ब्रह्मवरदानप्रकारं, तेनास्य सर्वविजयप्रकारञ्च निरूपयति-**एवं वृत** इत्यादिना। अथशब्देन न केवलं ब्रह्मणो वरदानमेवोच्यते अपि तु हिरण्यकशिपुविषया कथा साकल्येन कथ्यते इति सूचयति।।१।।

मम सकाशाद्यदपि दुर्लभान् अन्ततो दुःखप्रापकान्।"दुरशोभानदुःखयोः" (वैज.को. 8-7-4) इति यादवः।।२।।

भगवान् पूज्यः अत्र प्रतिक्षणं दुष्टश्रुतविस्मरणशीलानां मन्दानां स्फुरणार्थं कृतव्याख्यानानां पादानां पुनरपि तथा वचनं न दोषाय तदर्थं हीदं प्रवृत्तमिति, अमोघानुग्रहः, भोग्यानामिति शेषः।।३।।

समग्रैश्वर्यादिगुणरत्नाकरे परे द्वेषमकरोदसुरावेशात् जयांशत्वेन स्वतो भक्तोऽपीति तात्पर्यम्। तदुक्तम् "स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विषः" (पाद्मे) इति। "परोऽरि परमात्मनोः" (वैज.को. 6-5-49) इत्यभिधानादत्र परः शत्रुरसुरः तदावेशादित्यर्थः।।४-६।।

सर्वसत्त्वपतीन् सिंहादीन् बलश्रेष्ठान् वा। किं बहुना? चराचरं विजितवानिति, तेजसा प्रभावेन सह जहार।।७।।

त्रिविष्टपं स्वर्गं, स्वर्गे त्रीणि स्थानानि सन्ति, ततोऽपि श्रेष्ठं महेन्द्रभवनं अमरावती नाम तत्स्थानापेक्षया साक्षत्तुरीयमित्युच्यते। "साक्षात्प्रत्यक्षतुर्ययोः" (अम. को. 3-3-98) इत्याभिधानात्। अत एव अखिलर्द्धि

1- -1 H,V omit

मदित्युक्तम्। साक्षात्प्रत्यक्षमध्युवासेत्यनेन वा सङ्गमयितव्यम्, त्रीणि विष्टपानि स्थानानि सकलसमृद्धिमन्ति अस्मिन्निति त्रिविष्टपशब्दार्थपर्यालोचनयाऽयमर्थस्सम्पद्यते। त्रिदिवपदस्याऽप्ययमेवार्थः, अन्यथा त्रिशब्दस्य गतिर्वक्तव्येति।।८।।

**यत्र विद्रुमसोपाना महामारकता भुवः।**
**यत्र स्फाटिककुड्यानि वैदूर्य[1]स्तम्भपङ्क्तयः।।९।।**

**यत्र चित्रवितानानि पद्मरागासनानि च।**
**पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः।।१०।।**

**कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः।**
**रत्नस्त[2]म्भेषु पश्यन्ति सुदत्य[3]ः सुन्दरं मुखम्।।११।।**

**तस्मिन्महेन्द्रभवने [4-]महाबलो महामना[-4] निर्जितलोक एकराट्।**
**रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः।।१२।।**

**तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः।**
**उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम्।।१३।।**

**जगुर्महेन्द्रासनमोजसा स्थितं विश्वावसुस्तुम्बुरुरस्मदादयः।**
**गन्धर्वसिद्धा ऋषयोऽस्तुवन्मुहुः विद्याधरा अप्सरसश्च पाण्डव!।।१४।।**

**स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः।**
**इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा।।१५।।**

**अकृष्टपच्या तस्यासीत् सप्तद्वीपवती मही।**
**तथा कामदुघा द्यौश्[5]च नानाश्चर्य[6]प्रदं नभः।।१६।।**

**श्रीध॰** अखिलसमृद्धियुक्तत्वमेवाह- **यत्रेति**[7] त्रिभिः।।९।।

---

1. H,V ॰डू॰ 2. A,B,G,J,T ॰स्थलीषु; M,Ma ॰स्थलेषु 3. A,B,G,H,J,M,Ma,T ॰ती· 4- -4 M,Ma महाऽसुरो महाबलो 5. A,B,G,J,T ॰स्तु 6 A,B,G,J,M,Ma,T पदं. 7 H,V यत्रेत्यादि

**यत्रेति**। मुक्तादामानि परिच्छदाः परिकरा यासाम्।।१०।।

**कूजद्भिरिति**। सुदतीः सुदत्यः।।११।।

**तस्मिन्निति**। ऊर्जितमधिकं चण्डं तीव्रं शासनं यस्य।।१२।।

**तमिति**। अङ्ग! हे राजन्! उरुगन्धिना[1] उग्रगन्धेन मधुना सुरया मत्तम्। अत एव विवृत्ते विघूर्णिते ताम्रे अक्षिणी यस्य तम्। अशेषधिष्ण्यपाः सर्वलोकपाला उपायनयुक्तैः पाणिभिरुपासत सेवन्ते[2]। त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना पदमाश्रयभूतम्।।१३।।

उपासना[3]प्रकारमेवाह - **जगुरिति**।।१४-१६।।

**वीर०** महेन्द्रभवनं विशिनष्टि-यत्र भवने विद्रुममयानि सोपानानि यासु ताः, भुवस्स्थलानि वेदिकादीनि महा[4]मरकताः इन्द्रनीलमय्यः, यत्र भवने स्फटिकमयानि कुड्यानि भित्तयः, यत्र वैदूर्यमणिमयाः स्तम्भपङ्क्तयः सन्ति।।९।।

यत्र च चित्रवितानानि [5]चित्रकविस्तराणि[-5] पद्मरागरत्नमयान्यासनानि च पयःफेननिभाः दुग्धफेनवन्मृदुलाः [6]शुभ्राश्च शय्याः मुक्तादामानि परिच्छदाः परिकराः यासां ताः।।१०।।

यत्र च देव्यः देवानां सम्बन्धिन्यः सुदत्यः स्त्रियः कूजद्भिः ध्वनद्भिः नूपुरैः तत्र तत्र शब्दयन्त्यः शब्दं कुर्वत्यो रत्नस्थलीषु सुन्दरं स्वीयं मुखं पश्यन्ति।।११।।

तस्मिन्नेवम्भूते महेन्द्रस्य भवनेऽधिवसन्नपारबलः महामनाः अव्याहतसङ्कल्पः अत एव निर्जितो लोको येन स्वयमेक एव राजा, ऊर्जितमधिकं चण्डं तापकं शासनं यस्य सः, अत एव प्रतापितैः सुरादिभिः वन्द्यौ अङ्घ्री यस्य तादृशो रेमे।।१२।।

अङ्ग! हे युधिष्ठिर! उरुगन्धिनोग्रगन्धेन मधुना सुरया मत्तमत एव विवृत्ते विघूर्णिते ताम्रे अक्षिणी यस्य तपोयोगस्य बलस्य देहबलस्य ओजस इन्द्रियबलस्य च पदमाश्रयं तं दैत्यं त्रिभिर्विना ब्रह्मविष्णुशिवैर्विना अन्ये सर्वे उपायनं पूजाद्रव्यं तद्युक्तपाणिभिरुपासत उपासितवन्तः।।१३।।

---

1. H,V °न्धि° 2. H,V omit सेवन्ते 3. A,B,J °न° 4. A,B,T मा 5- -5 W omit 6. A,B,T शुभा°

उपासनाप्रकारमेवाह- **जगुरिति** चतुर्भिः। ओजसा स्वबलेन महेन्द्रस्यासनमास्थितमधिष्ठितं तं दैत्यं विश्वावसुतुम्बुरुनारदादयश्च जगुर्गानञ्चक्रुः, तद्गुणान् जगुरित्यर्थः। गन्धर्वाः सिद्धाः ऋषयश्च विद्याधरा अप्सरसश्च मुहुर्मुहुरस्तुवन्, हे पाण्डव!।।१४।।

स एवाऽसुरो वर्णाश्रमनिष्ठैः ब्राह्मणगृहस्थादिभिः कर्तृभिः भूरिर्दक्षणा येषु तैः क्रतुभिः मुहुर्मुहुः इज्यमान आराध्यमान स्वबलेन हविर्भागानग्रहीत्।।१५।।

तस्यासुरस्य सम्बन्धिनी या सप्तद्वीपयुक्ता पृथिवी अकृष्टपच्या कर्षणेन विना फलिन्यभूत् [1]तथा द्यौः स्वर्गाभिमानिनी देवता यथाकामं यथेष्टं दोग्धि इष्टार्थान् पूरयतीति तथा अभूत् तथा नभः अन्तरिक्षाभिमानि-देवता नानाश्चर्यमयं विविधविचित्रवस्तुप्रदमभूत्।।१६।।

**विज॰** सोपानमारोहावरोहलक्षणम् कुट्टिमम्।।९।।

वितानम् उपरिपिधानवस्त्रम्।।१०।।

सुदतीः प्रशस्तदन्तपङ्क्तयः स्त्रियः।।११,१२।।

त्रिभिः आदित्यवसुरुद्रैः मरुदादिदेवानामेष्वन्तर्भावविवक्षया त्रिधा भिन्नैः, तदुक्तम्- "आदित्या वसवोरुद्रा स्त्रिविधा हि सुरा यतः। मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः। अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृताः। उपायनं ददुः सर्वे विना देवान् हिरण्यके" (स्कान्दे) इति वचनात्, न ब्रह्मविष्णुमहेश्वरैरित्यर्थो ग्राह्यः। किञ्चात्रेदं तात्पर्यम्-तथा हि द्विविधा देवाः यज्ञभागभुजः, तदभुज इति। तत्र प्रथमे त्रिधा भिन्ना जातिभिन्नत्वात् मन्त्रेणाह्वाने समूहेनागमनाच्च, चरमेषु सुरशब्दमात्रं वर्तते तदन्तेवासिवद्वर्तमानाः-"अयज्ञभागेष्वपि तु सुरशब्दः प्रयुज्यते। यज्ञभागभुजस्त्वेव त्रय इत्यभिशब्दिताः" (स्कान्दे) इति वचनादयं विशेषः कल्प्यत इति इतोऽप्यत्र त्रित्वसंख्यया आदित्यादय उच्यन्त इत्यङ्गीकर्तव्यम्। दैत्यस्य देवोपास्यत्वे देवानां सदा सद्यशोभाजामयशः स्यात् तदनुपपन्नम्। प्रमाणविरोधात्तदितरेषाम् उभयभाक्त्वमितीश्वरकॢप्तमिदमिति- "यत्र क्व च यशस्स्थानमन्येषामिति केशवः। सर्वत्रापि तु देवानामित्यन्यान् पूजयेत्क्वचित्" (स्कान्दे) इत्युक्तेश्च। "योगः सन्नहनः" (अम. को. 3-179) इत्यभिधाना-दणिमादिनानोपायस्थानीभूतः।।१३-१५।।

अकृष्टपच्या उल्लेखनमन्तरेण सस्यादि परिपाकोपेता।।१६।।

1 W omits तथा

रत्नाकराश्च [1] रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः।
[2] क्षारशीधुघृतक्षौद्रदधिक्षीरामृतोदकाः।।१७।।

[3] शैलाद्रोणीभिराक्रीडं [4-] सर्वर्तुषु [-4] गुणान् द्रुमाः।
दधार लोकपालानामेक एव पृथग्गुणान्।।१८।।

स इत्थं निर्जितककुबेकराट् विषयान् प्रियान्।
यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः।।१९।।

एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः।
कालो महान् व्यतीयाय ब्रह्मशापमुपेयुषः।।२०।।

तस्योग्रदण्डसंविग्राः सर्वे लोकाः सपालकाः।
अन्यत्रालब्धशरणाः शरणं ययुरच्युतम्।।२१।।

तस्यै नमोऽस्तु काष्ठायै यत्राऽऽत्मा हरिरीश्वरः।
[5] यद्गत्वा न निवर्तन्ते शान्ताः सन्न्यासिनोऽमलाः।।२२।।

इति ते संयतात्मानः [6] समाहितधियोऽमलाः।
उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः।।२३।।

*ओं नमो भगवते [7-] तस्मै पुरुषाय [-7] महात्मने।
विशुद्धानुभवानन्द सन्दोहाय यतो [8] ऽभयम्।।२४।।

तेषामाविरभूद्वाणी [9] ह्यरूपा मेघनिस्वना।
सन्नादयन्ती ककुभः साधूनामभयङ्करा [10]।।२५।।

**श्रीध० रत्नेति**। तत्पत्न्यो नद्यः ऊहुर्वहन्ति स्म। रत्नाकरानेवाह - क्षारेति।।१७।।

---

1. M,Ma रत्नानि त° 2 A,B,G,J,M,Ma,T,W सी° 3 H,V,W शैलो 4--4 H,V,W °र्तु स्वगु° 5 H,V यं ग° 6 H,V °श्शान्त° *This verse is not found in A,G,J,T Editions 7--7 B तुभ्यं पुरुषाय; H,V वासुदेवाय; M,Ma महापुरुषाय 8. H,V. भयः। 9 A,B,G,J,T,M,Ma,T अ° 10 A,B,G,J,M,Ma,T °री

**शैल** इति। आक्रीडं क्रीडास्थानम्। [1-]द्रुमाः सर्वेषु ऋतुषु[-1] गुणान् पुष्पफलादीन्। स च लोकपालानां पृथग्विधान् गुणान् वर्षण-दहन-शोषणादीन् एक एव दधार।।१८।।

**स इति**। निर्जिताः ककुभो येन। यथोपजोषं यथाप्रीति।।१९।।

[2-]**एवमिति**। महान् कालः एकसप्ततियुगानि किञ्चिदधिकानि[-2]।।२०-२४।।

**तेषामिति**। अरूपा वक्तृरहिता।।२५।।

**वीर०** रत्नाकराः समुद्राः तत्पत्न्यो गङ्गादिनद्यश्च, ऊर्मिभिः तरङ्गैः रत्नसमूहानूहुः प्रापयामासुः। रत्नाकरानेवाह क्षारेति। सीधुः सुरा, क्षौद्रमिक्षुरसः, अमृतं शुद्धं क्षारादिमयान्युदकानि येषां ते, [3-]क्रमोऽत्र न विवक्षितः[-3]।।१७।।

शैलः पर्वतः, जात्यभिप्रायकमेकवचनम्। द्रोणीभिः कन्दरैः, द्रुमान् दधार। कथम्भूतान्? सर्वर्तुषु वसन्तादिषु षट्सु [4]सर्वे स्वे स्वे गुणाः फलपुष्पादयो येषां तान् आक्रीडान् क्रीडास्थानोपयुक्तान्, सर्वर्तुषु सर्वान् वृक्षान्, सफलपुष्पानेव दधारेत्यर्थः। तदेव स्पष्टयति लोकपालानां तदाधिपत्यवेलायामित्यर्थः। एको द्रुमः वसन्तादिकालनियमेन पृथग्गुणान् फलपुष्पादीन् दधार, अस्य त्वाधिपत्ये अनियतकालं सर्वान् गुणान् दधारेत्यर्थः। यद्वा, अयमसुर एक एव सर्वेषां लोकानां पृथग्गुणान् प्रतिनियतान् गुणान् दधार, सर्वेषामाधिपत्यमेक एव चकारेत्यर्थः।।१८।।

इत्थं निर्जिताः ककुभो दिशो येन स दैत्यः एक एव राजा सन् यथोपजोषं यथाप्रीति प्रियानिष्टान् विषयाननुभवन्नपि नातृप्यत् न तृप्तवान्, यतोऽयं अजितेन्द्रियः।।१९।।

इत्थमैश्वर्येण मत्तस्य अत एव दृप्तस्याऽत एव च उच्छास्त्रवर्तिनः वैदिकमार्गाननुवर्तिनः उत्पथप्रतिपन्नस्येत्यर्थः। ब्रह्मशापं सनकादीनां शापमुपेयुषः प्राप्तवतः महान् कालो बहुवर्षात्मकः कालः, व्यतीयाय अतिक्रान्तोऽभूत्। ब्रह्मशापमुपेयुष इत्यनेन तज्जन्मावसानकालः प्राप्त इति सूच्यते।।२०।।

तदेव वक्तुं तन्निमित्तं तावदाह-तस्य दैत्यस्योग्रदण्डेन उग्रशासनेन संविग्राः भीताः सपालकाः सर्वे लोकाः अन्यत्रालब्धं शरणं निवासस्थानं यैस्ते, अच्युतं भगवन्तं शरणं ययुः प्राप्ताः। अन्यत्रालब्धशरणा इत्यस्य

1- -1 H,V omit 2- -2 H,V omit 3- -3 W क्रमस्त्वविवक्षितः 4. W omits सर्वे

अनन्यरक्षका इति वाऽर्थः। पूर्वं दैत्यतपःपीडिताः तदुपशमनाय ब्रह्माणं शरणं उपगम्य वरप्रदानेन स्वानिष्टमेव चक्रुः पुनरेतदनिष्टपरिहारो ब्रह्मणाऽपि कर्तुमशक्य इत्यालोच्य अनन्यशरणा भगवन्तमेव शरणं ययुरित्यर्थः।।२१।।

शरणवरण प्रकारमेवाह-**तस्या** इति। तस्यै काष्ठायै दिशे नमः। काष्ठां विंशिषन्ति-यत्रेति। यत्र यस्यां काष्ठायां ईश्वरः सर्वनियन्ता हरिराश्रितार्तिहरो भगवानास्ते। शान्ताः रागादिरहिताः, अत एव शुद्धन्तःकरणाः सन्यासिनः न्यासविद्यानिष्ठाः यत् याञ्च काष्ठां गत्वा प्राप्य न निवर्तन्ते न पुनस्संसरन्ति तस्यै काष्ठायै नम इति यस्यां दिशि प्रणतार्तिहरो भगवानास्ते तद्दिगधीनोऽस्मद्रक्षणोपाय इत्यध्यवसायपूर्वकं भगवन्तं शरणं ययुः। काष्ठायै नम इति दिक्शरणवरणकथनेन देवानामपि भगवत्स्वरूपं दुर्ग्रहमिति सूचितम्।।२२।।

इतीत्थं ते देवाः संयतात्मानः स एव भगवान् रक्षिष्यतीति विस्रम्भयुक्तमनसः समाहितधियः, यद्वा संयतात्मान इति बाह्येन्द्रियजय उक्तः, समाहितधिय इत्यनेन अन्तरिन्द्रियजयः, वायुभोजना इत्यनेन प्राणजयः, विनिद्रा इत्यनेन कायजयः। एवंविधाः हृषीकेशमुपतस्थुः, तुष्टुवुः वक्ष्यमाणं मन्त्रं जेपुर्वा।।२३।।

भगवते षाड्गुण्यपूर्णाय, पुरुषाय सर्वान्तरात्मने, महात्मने महान् अनुकम्पायुक्त आत्मा मनो यस्य तस्मै, विशुद्धः अनुभवो ज्ञानम् आनन्दः सुखं तयोः सन्दोहः पूरः तद्रूपाय, यतः यत्समाश्रयणादाश्रितानामभयं तस्मै नमः।।२४।।

तेषां देवानामेवं उपतिष्ठतां वाणी शब्दः[1] आविरभूत् तैः श्रुतेत्यर्थः। कथम्भूता? अरूपा अदृष्टवक्तृका, मेघनिस्वना मेघघोष तुल्या, ककुभो दिशः, सन्नादयन्ती प्रतिध्वनयन्ती, साधूनामभयङ्करा[2]।।२५।।

**विज०** तत्पत्न्यः तेषां समुद्राणां पत्न्यो नद्यः, क्षारं लवणम्।।१७, १८।।

यथोपजोषं यथासुखम्।।१९-२३।।

यतो यस्माद्धरेरभयं भवति तस्मा इति, अरूपा अशरीरिणी।।२४, २५।।

**मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः।**
**मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये।।२६।।**
**[3]ज्ञातं मे तस्य दौरात्म्यं दैतेयापश[4]दस्य य[5]त्।**
**तस्य शान्तिं करिष्यामि [6-]कालस्तावत्प्रतीक्ष्यताम्[-6]।।२७।।**

1 W omits शब्दः 2 A,B,T °री 3. A,B,G,J,M,Ma,T ज्ञातमेत° 4. A,B,G,J,M,Ma,T °स° 5. A,B,G,J,T च 6- -6 A,B,G,J,T कालं तावत्प्रतीक्षत

**यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु।**
**धर्मे मयि च विद्वेषः स वा आशु विनश्यति।।२८।।**

**निर्वैराय प्रशान्ताय स्वसुताय महात्मने।**
**प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम्।।२९।।**

**[1-] नारद उवाच [-1]**

**इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः।**
**न्यवर्तन्त गतोद्वेगा मेनिरे चाऽसुरं हतम्।।३०।।**

**तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः।**
**प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः।।३१।।**

**ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः।**
**आत्मवत्सर्वभूतानामेकः प्रियसुहृत्तमः।।३२।।**

**दासवत्संनतार्याङ्घ्रिः पितृवद्दीनवत्सलः।**
**भ्रातृवत्सदृशे[2] स्निग्धो गुरुष्वीश्वरभावनः।**
**विद्यार्थरूप[3] जन्मादि मानस्तम्भविवर्जितः।।३३।।**

**श्रीध० मेति**। मम दर्शनं श्रवणं सर्वेषां श्रेयसामुपपत्तये प्राप्तये[4] भवति[5]।।२६-२८।।

ननु देवादिविद्वेषेऽप्यस्य विनाशो नास्ति ब्रह्मवरेणोर्जितत्वात्, तत्राह-**निर्वैरायेति**। सर्वमहं सहे न मद्भक्तद्रोहमिति भावः।।२९।।

**इतीति**। असुरं च हतं मेनिरे। तदानीं तद्द्वेषस्य[6] प्रवृत्तत्वादिति भावः।।३०।।

तमेव द्वेषं वक्तुमादौ सुतस्य महत्त्वमाह[7]-**तस्येति**। गुणैर्महानभूत्। गुणानेवाह महदुपासक इत्यादिना।।३१।।

**ब्रह्मण्य** इति। सत्या सन्धा प्रतिज्ञा यस्य। एक एव प्रियश्च सुहृत्तमश्च।।३२।।

---

1--1 H, V omit 2 H,V,W °श स्नि° 3 A,B,G,J,T जन्माढ्यो ; H,V जनरूपाद्यैः; M,Ma जन्माद्यैः 4. A,B,J omit प्राप्तये 5 H,V omit भवति
6 A,B,J °षे 7. H,V त्त्वं वक्तु°

[1]दासवत्सम्यङ् नता आर्याणामङ्घ्रयो येन। [2]गुरुषु ईश्वर इति भावना यस्य।।३३।।

**वीर॰** वाणीमेवाह - **मा भैष्टेति**। हे विबुधश्रेष्ठाः! यूयं मा भैष्ट भयं मा कुरुत। वो युष्माकं सर्वेषां भद्रं सुखमेवाऽस्तु। हि यस्मात् मम दर्शनं कटाक्षो भूतानां श्रेयसे उपपत्तये प्राप्तये भवति।।२६।।

दैतेयाधमस्य तस्य हिरण्यकशिपोः यद्दौरात्म्यं तन्मया ज्ञातं विदितमेव तस्य दैत्यस्य शान्तिं वधं करिष्यामि कालः तद्वधोचितकालः तावत्प्रतीक्ष्यतां किञ्चित्कालविलम्बं सहध्वमित्यर्थः।।२७।।

कोऽसौ तद्वधोचितः कालः? तत्राह-**यदेति**। यस्मिन् काले देवादिषु तस्य नितरां द्वेषः तदा स आशु विनश्यति।।२८।।

ननु देवादिषु विद्वेषेऽपि न तस्य नाशः, [3]कथम्? ब्रह्मवरेणोर्जितत्वादित्यत्राह - **निर्वैरायेति**। यदा प्रह्लादस्य द्रुह्येत्तदा वरैरूर्जितमपि हनिष्ये हनिष्यामि। कथम्भूताय? मदात्मने अहमेवाऽऽत्मा यस्य स मदात्मा [4-]यद्वा, मय्यात्मा मतिर्यस्य स मदात्मा[-4] तस्मै निर्वैराय सर्वभूतसुहृदे प्रशान्ताय रागादिरहिताय स्वस्यात्मजाय निरतिशयप्रियभक्तविषये यदा द्रोहं करिष्यति, आश्वेव तदा हनिष्यामि मद्भक्तविषयापराधस्य मम नितरां असह्यत्वादिति भावः।।२९।।

इतीत्थं लोकगुरुणा भगवता उक्ताः दिवौकसो देवाः भगवन्तं तं प्रणम्य गतोद्वेगाः गत उद्वेगो भयं येषां तादृशास्सन्तो न्यवर्तन्त भगवदुपस्थितेरिति शेषः। असुरं [5-]हिरण्यकशिपुं[-5] हतप्रायञ्च मेनिरे अमन्यन्त।।३०।।

तस्य पूर्वमेव विप्रशापमुपेयुषः उचितकाले हनिष्यामीत्येवंविधभगवत्सङ्कल्पविषयस्य दैत्यपतेः हिरण्यकशिपोः परमाद्भुताः चत्वारः प्रह्लादानुह्लादसंह्लादाह्लादाख्याः पुत्राः तेषां मध्ये प्रह्लादो गुणैरक्रोधादिभिः महान् श्रेष्ठोऽभूत् माहात्म्यावहगुणैस्तं विशिनष्टि महदुपासक इत्यादिना। महतां भागवतानां उपासकः भागवत भक्तिपर्यन्तभगवद्भक्तिनिष्ठः; इयमेव भगवद्भक्तेः परा काष्ठेति भावः।।३१।।

ब्रह्मण्यः ब्राह्मणकुले साधुरनुकूलो ब्रह्मण्यः। यद्वा ब्रह्मणि परस्मिन्नितरां साधुः ब्रह्मण्यः शीलेन सुस्वभावसद्वृत्त्यात्मकेन युक्तः सत्यसन्धः सत्यप्रतिज्ञः जितानि इन्द्रियाणि अन्तर्बाह्यानि येन सर्वभूतानामात्मना तुल्यमात्मवत् एक एव असाधारणः प्रियतमः सुहृत्तमश्च प्रियसुहृत्तमः। आत्मा यथा प्रियतमः स्वहितैकैषी च तद्वदयमपि सर्वभूतविषयकप्रीतियुक्तस्तद्धितैषीत्यर्थः।।३२।।

---

1. H,V omit दासवत् 2 H,V omit गुरुषु 3. W omits कथम्? 4- -4 A,B,T omit 5- -5 W omits

दासवत् सम्यङ्नताः नमस्कृताः आर्याणां महतां अङ्घ्रयो येन पितृवद्दीनेषु वात्सल्ययुक्तः, भ्रातृवत्सदृशेषु स्वतुल्येषु स्निग्धोऽनुरागयुक्तः, गुरुषु ईश्वरत्वेन भावना दृष्टिर्यस्य, विद्यादिभिः हेतुभिः योऽभिमानो गर्वो दम्भश्च ताभ्यां विवर्जितः। तत्रार्थो वित्तं रूपं सौन्दर्यं जन्माऽऽभिजात्यम् आदिशब्दः प्रकारार्थः विद्यादिसदृशमन्यदपि मानादिनिमित्तं विवक्षितम्।।३३।।

**विज॰** मद्दर्शनं मद्विषयज्ञानम्।।२६,२७।।

यस्य वेदादिषु विद्वेषः स, आशु साधनसामग्र्याम्।।२८-३१।।

आत्मवत् परमात्मवत् "अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदीरितम्। सम्यक्साम्यं तु मत्स्यादेरिति शास्त्रस्य निश्चयः" (स्कान्दे) इति वचनादत्र हरिसाम्यकथनं तात्पर्यादवगन्तव्यम्।।३२।।

मानस्तम्भविवर्जितः अभिमाननिमित्तस्तम्भदोषरहितः।।३३।।

**नोद्विग्नचित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक्।**
**दान्तेन्द्रियप्राणशरीरधीस्सदा प्रशान्तकामो रहितासुरोऽसुरः।।३४।।**
**यस्मिन्महा[1]गुणा राजन् [2]गृह्यन्ते कविभिर्मुहुः।**
**न तेऽधुना पिधीयन्ते यथा भगवतीश्वरे।।३५।।**

**यं साधुगाथासदसि रिपवोऽपि सुरा नृप।**
**प्रतिमानं प्रकुर्वन्ति किमुताऽन्ये भवादृशाः।।३६।।**

**[3]गुणैरलमसंख्येयैः माहात्म्यं तस्य सूच्यते।**
**वासुदेवे भगवति यस्य नैसर्गिकी रतिः।।३७।।**

**न्यस्तक्रीडनको बालो जडवत्तन्म[4]नस्तथा।**
**कृष्णग्रह गृहीतात्मा न वेद जगदीदृशम्।।३८।।**

**आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन्।**
**नानुस[5]न्दध एतानि गोविन्दपरिरम्भितः।।३९।।**

---

1 A,B,G J,T,W °हद्गुणा 2 H,V दृश्यन्ते 3 W °गुणे पर° 4 M,Ma °नास्सदा 5 A,B,G,J,T °न्धत्त

**क्वचिद्[1]रुदति[-1] वैकुण्ठचिन्ता[2]शबलचेतनः।**

**क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित्।।४०।।**

**नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित्।**

**क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह।।४१।।**

**श्रीध॰ नेति**। व्यसनेषु [3]प्राप्तेष्वपि नोद्विग्नचित्तः। [4]दृष्टेषु श्रुतेषु[-4] गुणेषु विषयेषु निस्स्पृहः। यतस्तेष्ववस्तुदृक् दान्ता इन्द्रियादयो यस्य। रहितः आसुरो भावो मत्सरादिर्यस्य सः। असुरोऽपि सन् [5]प्रशान्तकामः।।३४।।

**यस्मिन्निति**। अधुना ते गुणा नापिधीयन्ते तिरोहिता न भवन्ति।।३५।।

**यमिति**। साधु गाथासदसि साधु कथाप्रसङ्गवत्यां सभायां [6]यं प्रह्लादम्[-6]। प्रतिमानं दृष्टान्तम्। [7]रिपवोऽपि सुराः कुर्वन्ति किं वक्तव्यं भवादृशा विष्णुभक्ताः[-7]।।३६।।

**गुणैरिति**। सूच्यते मया केवलं द्योत्यते, सुष्ठु कथ्यत इति वा।।३७।।

नैसर्गिकरतेः लिङ्गानि आह-**न्यस्तक्रीडनक** इति षड्भिः। तन्मनस्तया सदेकचित्तत्वेन।।३८।।

**आसीन** इति। एतान्यासनादीनि। गोविन्देन परिरम्भितः, आत्मना एकीकृतः।।३९।।

**क्वचिदिति**। [8]रुदति रोदिति रौति[-8] वैकुण्ठस्य चिन्तया शबला व्यामिश्रा क्षुभिता चेतना यस्य तस्य चिन्तयाऽऽह्लादो यस्य।।४०।।

**नदतीति** क्वचिदिति। [9]क्वचिदुत्कण्ठो मुक्तकण्ठस्सन् अनुचकार तच्चेष्टादिकं स्वयं कृतवान्।।४१।।

**वीर॰** व्यसनेषु दुःखहेतुषु नोद्विग्नमभीतं चित्तं यस्य, दृष्टेष्वैहिकेषु श्रुतेष्वामुष्मिकेषु च स्वर्गस्वाराज्यादिषु गुणेषु विषयेष्ववस्तुदृक् अनित्यबुद्धियुक्तोऽत एव तेषु स्पृहादिरहितः, सदा दान्ताः नियमेन वशीकृताः इन्द्रियादयो यस्य, प्रशान्ताः कामा यस्य। निस्स्पृह इत्यनेन सन्निहितेषु विषयेषु इच्छाराहित्यमुक्तम्; प्रशान्तकाम इत्यनेन तु असन्निहितेष्वित्यतो न पौनरुक्त्यम्। स्वयमसुरोऽपि रहितासुरः मात्सर्याद्यासुरभावरहितः।।३४।।

---

1- -1 M,Ma द्रोदिति गोविन्द 2. M,Ma चञ्चल 3 H,V omit प्राप्तेष्वपि 4- -4 H,V omit 5 H,V omit प्रशान्तकामः 6- -6 H,V omit 7- -7 H,V omit 8- -8 H,V omit 9 H,V omit क्वचित्

हे राजन्! यस्मिन् प्रह्लादे गुणा उक्ता वक्ष्यमाणा अन्ये च कविभिः मुहुर्मुहुः महद्यथा भवति तथा गृह्यन्ते बहुमन्यन्त इत्यर्थः। महदिति क्रियाविशेषणमन्यथा समानाधिकरणसमासे "आन्महतः" (अष्टा. 6-3-46) इत्यात्वापत्तिः महतः प्रह्लादस्य गुणा इत्यर्थे यस्मिन्नित्यनेन पौनरुक्त्यापत्तिः महतां गुणा इति वा, ते गुणाः अधुना अद्यापि नापिधीयन्ते न तिरोहिता भवन्ति, न विस्मृता भवन्ति इति यावत्। यथा भगवति ईश्वरे गुणाः पुनः पुनः कविभिः गृह्यन्ते नापिधीयन्ते तद्वत्।।३५।।

हे नृप! युधिष्ठिर! साधु गाथासदसि साधुकथाप्रसङ्गवत्यां सभायां रिपवः शत्रवोऽपि यं प्रह्लादं प्रतिमानं साधनत्वे दृष्टान्तं कुर्वन्ति किं पुनर्भवादृशा अन्ये प्रतिमानं कुर्वन्तीति।।३६।।

मया परं केवलं असंख्येयैः गुणैः तस्य माहात्म्यं सूच्यते, न साकल्येन तद्गुणा वर्णयितुं शक्या इति भावः। अलमिति पाठेऽधिकं तस्य माहात्म्यं सूच्यते। मया दिङ्मात्रं गुणप्रदर्शनेन माहात्म्यं सूच्यते। न तु एतावत्तस्य माहात्म्यमित्युच्यते इत्यर्थः। अपारमाहात्म्ये हेतुं वदन् विशिनष्टि-वासुदेवेति। यस्य प्रह्लादस्य वासुदेवे भगवति नैसर्गिकी स्वाभाविकी उत्पत्तिसिद्धेत्यर्थः। रतिः स्वभावतः वासुदेवे रतानां वासुदेवस्येव अनन्तं माहात्म्यमिति भावः।।३७।।

नैसर्गिकलिङ्गानि वदन् विशिनष्टि-**न्यस्तेत्यादि** षड्भिः। बाल एव बाल्यात्प्रभृतीत्यर्थः। तन्मनस्कतया भगवद्गतहृदयत्वेन न्यस्तक्रीडनकः परित्यक्तबालक्रीडः कृष्णग्रहः श्रीकृष्ण एव ग्रहस्तेन गृहीत आत्मा-मनो यस्य ग्रहगृहीतवद्वर्तमान इत्यर्थः। अत एव जगदीदृशं न वेद बाह्यवस्तुविषयकचिन्तारहित इत्यर्थः।।३८।।

एतदेव प्रपञ्चयति-**आसीन** इति। आसनाद्यवस्थावस्थितोऽपि एतान्यासनादीनि नानुसन्दधे नानुसंहितवान्।, तत्र हेतुः यतो गोविन्देन भगवता, परिरम्भितः संश्लिष्टः गोविन्दानुसन्धानरूपतत्परिरम्भविस्मृतदेहधर्म इत्यर्थः[1]।।३९।।

क्वचिद्गोविन्दानुसन्धानविच्छेददशायां रुदति रोदिति आर्षत्वाच्छब्लुक्। इड्गुणाभावश्च। गोविन्दचिन्तया शबला व्यामिश्रा क्षुभिता चेतना बुद्धिर्यस्य तादृशः क्वचिद्धसति, क्वचित्तच्चिन्तया आह्लादो यस्य तादृश उच्चैर्गायति, गोविन्दगुणानिति शेषः।।४०।।

क्वचित्तच्चिन्ताह्लाद एव नदति ध्वनति क्वचिदुत्कण्ठः कण्ठोपरिव्याप्तहर्षः विगतलज्जो नृत्यति उत्कण्ठो मुक्तकण्ठस्सन् ध्वनतीति वा क्वचित्तद्भावनया भगवदनुस्मृत्या युक्तस्तन्मयः तदात्मकः स्वात्मानं तदपृथक्

1. W omits इत्यर्थः।

सिद्धत्वेन पश्यन्नपि तदपि तदनुसन्धानेन विस्मृत्य तद्रूपतामित्यभिमानेन अनुचकारानुकरोति भगवानिव चेष्टते इत्यर्थः।।४१।।

**विज॰** गुणेषु शब्दादिषु शरीरस्य दान्तत्वमुपवासादिना रहितासुरः असुरस्वभावकर्मरहितः जात्याऽसुरः।।३४।।

यथा भगवति ईश्वरे इत्यत्रापि "अन्येषां हरिसाम्यन्तु किञ्चित्साम्यमुदीरितम्" (स्कान्दे) इत्यादिप्रमाण-मित्यत्रापि ज्ञातव्यमिति।।३५।।

प्रतिमानं दृष्टान्तम्।।३६,३७।।

कृष्णाख्यो ग्रहस्तेन वशीकृतमनाः।।३८।।

अनुसन्दधे सस्मार।।३९।।

तद्भावनायुक्तः तस्य श्रीनारायणस्य ध्यानोपेतः तन्मयः तत्प्रधानः।।४१।।

**क्वचिदुत्पलक[1-]स्तूष्णीमास्ते संस्पर्शनिर्वृतः[-1]।**
**अस्पन्द[2]प्राणयानन्दसलिलामीलितेक्षणः।।४२।।**
**स उत्तमश्लोकपदारविन्दयोः निषेवयाऽकिञ्चन सङ्गलब्धया।**
**तन्वन् परां निर्वृतिमात्मनो मुहुः दुस्सङ्ग[3]दीनस्य मनःशमं व्यधात्।।४३।।**
**तस्मिन् महाभागवते महाभागे महात्मनि।**
**हिरण्यकशिपू राजन् अकरोदघमात्मजे।।४४।।**

**युधिष्ठिर उवाच**

**देवर्ष एतदिच्छामो वेदितुं तव सुव्रत।**
**यदात्मजाय शुद्धाय पिताऽदात् साधवे [4]ह्यघम्।।४५।।**
**[5-]पुत्रान् विप्रतिकूलान्स्वान्[-5] पितरः पुत्रवत्सलाः।**
**उपालभन्ते शिक्षार्थं नैवाऽघमपरो[6] यथा।।४६।।**

1--1 M,Ma °मशेष स्पर्श निःस्पृहः 2 M,Ma प्राण आ° 3 A,B,G,J,T °दीनान्य °: M,Ma °हीनः स्व ° 4.M,Ma अ° 5--5 H,M,Ma,V पुत्रान् विप्रतिकूलां श्च, W पुत्रेषु प्रतिकूलेषु 6 A,B,G,J,T °रो

**किमुतानुवशान् साधूंस्तादृशान् गुरुदेवतान्।**
**एतत् कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो।।**
**पितुः पुत्राय यो[1] द्वेषो मरणाय प्रयोजितः।।४७।।**

इति श्रीमद्भागवते महापुराणे श्री वयासिक्यां अष्टादशसाहस्यां
श्री हयग्रीवब्रह्मविद्यायां पारमहस्या संहितायां
सप्तमस्कन्धे प्रह्लादचरिते चतुर्थोऽध्याय.।।४।।

**श्रीध॰ क्वचिदिति।** संस्पर्शस्तद्भावापत्तिः तेन निर्वृतः अस्पन्दः स्थिरो यः प्रणयस्तेन य आनन्दस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः।।४२।।

**स** इति। आत्मनः परां निर्वृतिं तन्वन्दुःसङ्गेन दीनस्याऽन्यस्यापि मनः शमं शान्तं व्यधात्।।४३।।

**तस्मिन्निति।** अघं द्रोहमकरोत्।।४४।।

प्रथमाध्यायान्ते पृष्टमेवार्थमिति विस्मयेन पुनः पृच्छति **देवर्ष** इति। तव त्वत्तः तव वाक्यमिति वा साधवेऽघमदात् साधोः द्रोहं कृतवानिति यत् एतद्वेदितुं ज्ञातुमिच्छामः।।४५।।

**पुत्रानिति।** उपालभन्ते आक्षिपन्ति। अघं तु नैव कुर्वन्ति। [2]अपरे **शत्रव** इव[2]।।४६।।

**किमुतेति।** अनुवशाननुकूलात् साधूनरागरोषान्। गुरुः पितैव देवता येषां तानुद्दिश्याऽघं न कुर्वन्तीति, किमु वक्तव्यमित्यर्थः। [3]पुत्राय पुत्रमुद्दिश्य पितुः द्वेषः पित्रा कृतो द्वेषः पुत्रस्य **मरणार्थं प्रयोजितः** प्रवर्तित इति यदेतत्कौतूहलं विधम अपाकुरु। [4]यद्वा यद्यस्मात् पुत्राय यो द्वेषः स [5]पितुर्मरणाय[5] प्रयोजितोऽत [6]एव एतत्कौतूहलं विधमेत्यर्थः।।४७।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्याय।।४।।

---

1 A,B,G J,M,Ma,T यद्वे ° 2- -2 A,B,J अपर शत्रुरिव 3 H,V omit पुत्राय 4 H,V omit यद्वा 5- -5 H,V पितृमरणार्थ °

6 A,B,J omit एव

**वीर॰ क्वचिच्च** संस्पर्शेनाऽविच्छिन्नानुध्यानेन निर्वृतः सुखितः अस्पन्दः स्थिरो यः प्रणयः स्नेहस्तेन य आनन्दस्तेन यत्सलिलं तेनाऽऽमीलिते ईषन्मीलिते ईक्षणे यस्य, उत्पुलकः उदञ्चितरोमा तूष्णीमास्ते।।४२।।

**स प्रह्लादः** अकिञ्चनसङ्गः निरुपाधिकस्नेहः तेन लब्धया उत्तमश्लोकस्य भगवतः पादारविन्दयोः निषेवया मुहुर्मुहुरात्मनः स्वस्य परां निर्वृतिमानन्दं [1]तन्वन् वितन्वन्, मन इत्यार्षत्वाल्लुप्तषष्ठीकं पृथक् पदम्। यद्वा, तत एव सविशेषणस्याऽपि समासः, विषयासङ्गेन दीनस्य मनसः शमं शान्तिं रागादिराहित्यं व्यधाच्चक्रे दुस्सङ्गदीनस्येति विशेषणं लोकपरिपाटीकृतं, न तु तस्य कदाचिदपि विषयासक्तमभून्मन इति भावः।।४३।।

हे राजन्! तस्मिन्नेवम्भूते महाभागवतश्रेष्ठे महाविवेकिनि महात्मनि उक्तविधमाहात्म्ये तत्राप्यात्मजे हिरण्यकशिपुरघं द्रोहमकरोत्।।४४।।

एवंविधस्य द्रोहानर्हत्वशङ्कया पृच्छति युधिष्ठिरः-**देवर्ष** इति। हे देवर्षे! एतद्वेदितुं ज्ञातुमिच्छामः, किं तत्? हे सुव्रत! शुद्धाय निरपराधाय साधवे [2-]महाभागवताय[-2] तत्राप्यात्मजाय, अनेन द्रोहानर्हविषयत्वमुक्तम्। पितेत्यनेन द्रोग्धृत्वानर्हत्वम्, अघं द्रोहमधाच्चक्रे इत्येतत्।।४५।।

उक्तविशेषणलब्धार्थमेव विशदयति-**पुत्रेष्विति**। प्रतिकूलेषु पुत्रेषु विषयभूतेषु पुत्रवत्सलाः पितरः शिक्षार्थं केवलमुपालभन्ते आक्षिपन्ति। अपरे यथा शत्रव इव अघं द्रोहं नैव कुर्वन्ति। प्रतिकूलानपि पुत्रान् केवलं शिक्षार्थं उपालभन्ते न तेभ्यो द्रुह्यन्ति, किम्पुनरनुकूलान् साधून्। गुरुः पितैव दैवतं येषां तानुपालभन्ते न तु तेभ्यो द्रुह्यन्ति इति [3]भावः।।४६।।

**अतो हे ब्रह्मन्!** अस्माकमेतत्कौतूहलम् एतत्प्रश्नकौतूहलं विधम अपनय। हे प्रभो! पुत्राय यः पितुर्द्वेषः स मरणाय पितुर्मरणाय प्रयोजितः प्रयोजकोऽभूदिति यदेतत्प्रश्नकौतूहलमित्यन्वयः। पितुः पुत्रविषयकद्वेषः स्वस्यैव मरणप्रयोजकः कथमभूदित्येवंविधप्रश्नविषयकौतूहलं विधमेत्यर्थः।।४७।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

चतुर्थोऽध्यायः।।४।।

---

1 W omits तन्वन् 2- -2 W omits 3 W omits भावः

**विज॰** स्पर्शेषु विषयेषु स्पृहारहितः अस्पन्दप्राणः प्राणचेष्टारहितः आनन्दसलिलेन सन्तोषाश्रुजलेन निमित्तेन किञ्चिन्निमीलितनेत्रः।।४२।।

अकिञ्चनानां महतां सतां सेवालक्षणसङ्गेन प्राप्तया।।४३।।

अघं मरणलक्षणं व्यसनम्।।४४।।

"विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि" (भाग. 7-1-47) इति स्वपृष्टं कथान्तरासक्त्या नारदेनापरिहृतं जानन् राजा युधिष्ठिरः पुनरपि जानन्नकरोदघमात्मजे इति प्रसक्तं श्रुत्वा तदेव पृच्छति-**देवर्ष** इति। पुत्रस्य मरणकारणमासुरकर्म न तु शास्त्रीयमिति ज्ञापनाय साधवे अघमिति संहिताकार्यं न कृतम्।।४५।।

अपरे शत्रवः।।४६।।

विधम परिहर पुत्राय प्रयोजितो विद्वेषः पितुर्मरणायाऽभूदिति यत्तस्मात्कौतूहलमिति।।४७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे चतुर्थोऽध्याय.।।३।।

* * * *

# पञ्चमोऽध्यायः

नारद उवाच

पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः।
शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके।।१।।

तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम्।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान्।।२।।

यत्तत्र गुरुणा प्रोक्तं शुश्रुवे[1]ऽनुपपाठ च।
न साधु मनसा मेने [2]स्वपरासद्ग्रहाश्रयम्।।३।।

एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान्।।४।।

प्रह्लाद उवाच

तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात्।
हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत।।५।।

नारद उवाच

श्रुत्वा पुत्रगिरो दैत्यः पर[3]पक्ष[4]समाहिताः।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः।।६।।

---

1 M,Ma °वे न 2. M,Ma स्वरूपा° 3 H,V पक्षो 4 M,Ma समी°

**सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः।**
**विष्णुपक्षैः[1] प्रतिच्छन्नैः न भिद्येतास्य धीर्यथा।।७।।**

**गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः।**
**प्रशस्य श्लक्ष्णया वाचा [2]तमपृच्छन्[2]हि सामभिः।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम्। घातयन्[3]द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत्।।

भगवद्भक्तिरेव विद्वे[4]षे कारणमिति वक्तुमाह-**पौरोहित्यायेत्यादिना**। काव्यः शुक्रः। अतस्तस्य सुतौ [5]दैत्यराजगृहान्तिके[5] न्यवसतामिति शेषः।।१।।

**ताविति**। पाठ्यान् दण्डनीत्यादीन्। पाठ्यानसुरबालकानिति वाऽन्वयः।

**यदिति**। अनुश्रवणानन्तरं तथैव पपाठ च। किन्तु तत्साधु न मेने। तत्र हेतुः-स्वः पर इत्यसद्ग्रहो मिथ्याभिनिवेश एवाश्रयो यस्य तत्।।३,४।।

**तदिति**। हे असुरवर्य! असद्ग्रहादहंममेति मिथ्याभिनिवेशा[6]ध्देतोः सम्यगुद्विग्ना [7]विषण्णा धीर्येषां ते। वनं गतस्सन् हरिमाश्रयेतेति यत्तदेवाऽहं साधु मन्ये। कथम्भूतं गृहम् [8]हित्वा, आत्मपातमात्मनोऽधःपातनिमित्तम्। कुतः? अन्धकूपवन्मोहावहम्।।५।।

**श्रुत्वेति**। परपक्षे विष्णौ समाहिताः परिनिष्ठिताः। [9]हासे हेतुः[9] - बुद्धिरिति।।६।।

**सम्यगिति**। विष्णुपक्षैः भागवतैः हेतुभूतैः। ननु त्वद्गृहे कुतस्तेषां प्रवेशः। सत्यम्। तथाऽपि प्रतिच्छन्नैः वेषान्तरेण छन्नैः।।७।।

**गृहमिति**। दैत्यैर्गृहमानीतम्।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवमापृष्टद्वेषनिमित्तस्तद्वक्तुं तावदुपोद्घातमाह भगवान्नारदः-**पौरोहित्यायेत्यादिना**। भगवान् काव्यः

1. M,Ma °क्षप्र° 2--2 A,B,G,J,M,Ma,T,W समपृच्छन्त 3 H,V यन्विष 4 H,V °ष° 5--5 H,V तत्र 6. H,V °शनाद्धे° 7 H,V omit विषण्णा 8 A,B,J omit हित्वा 9--9 H,V हासमेवाऽऽह

शुक्रः पौरोहित्याय पुरोहितकर्मकर्तुमसुरैः वृतः, किलेति प्रसिद्धिं द्योतयति। तस्य काव्यस्य सुतौ शण्डामर्काख्यौ दैत्यराजस्य हिरण्यकशिपोः गृहसमीपे, आस्तामिति शेषः।।१।।

तौ च शण्डामर्कौ दैत्यराजेन प्रापितं नीतिशास्त्रपठनार्थं प्रापितं प्रह्लादमन्यांश्चासुरबालकांश्च पाठ्यान् दण्डनीत्यादीन् पाठयामासतुः पठनं कारितवन्तौ। अत्र[1] नयकोविदर्मितिक्रियाविशेषणं, यथानयकोविदाः नीतिशास्त्र निपुणा भवन्ति तथा पाठयामासतुः इति।।२।।

तत्र एवं स्थिते प्रह्लादो यद्गुरुणा प्रोक्तं तच्छुश्रुवे श्रुतवान् अनुपठितवांश्च परन्तु तत्प्रोक्तं मनसा साधु यथा तथा न मेने। तत्र हेतुं वदन् प्रोक्तं विशिनष्टि-स्वपरासद्ग्रहाश्रयम् अयं स्वः स्वकीयो मित्रम्, अयन्तु परः शत्रुरित्येवं रूपो योऽसद्ग्रहो वृथाग्रहरूपोऽभिमानस्तस्याश्रयं हेतुभूतम्।।३।।

एवं स्थिते, हे पाण्डव! कदाचिदसुरराट् पुत्रं प्रह्लादमङ्कमारोप्य उत्सङ्गे निधाय, हे वत्स! हे पुत्र! भवानाचार्यप्रोक्तेषु मध्ये यत्साधु मन्यते तत्कथ्यताम् इत्येवं पप्रच्छ।।४।।

एवं दैत्येन पृष्टः प्रह्लादस्तमाह-**तदित्येकेन**। हे असुरवर्य! दैत्यराज! असद्ग्रहात् देहात्माभिमान स्वतन्त्राभिमान तन्मूलशब्दादिविषयाभिनिवेशादिरूपादसद्ग्रहाद्धेतोः सदा नित्यं समुद्विग्रा नितरां भीता धीर्येषां तेषां देहिनां कुत्सितदेहधारिणां आत्मपातं पतन्त्यनेनेति पातम् आत्मनः अधःपतनहेतुमन्धकूपतुल्यं गृहं त्यक्त्वा वनं अरण्यं प्रविष्टो हरिम् आश्रितबन्धहरं भगवन्तमाश्रयेतेति यत्तदेव साधु मन्ये इति। हित्वेति पदेन हेयसंक्षेपः हरिमाश्रयेतेत्यनेन उपादेयतत्त्वतदनुष्ठानसंक्षेपः, वनं गत इति विविक्तदेशोपलक्षणम्।।५।।

एवमुक्तो दैत्यराजः किमाहेत्याह-नारदः[2]-**श्रुत्वेति**। परपक्षसमाहिताः परपक्षे विष्णौ समाहिताः परिनिष्ठिताः पुत्रस्य प्रह्लादस्य, गिरः श्रुत्वा दैत्यो जहास हासपूर्वकमुवाचेत्यर्थः। तदेवाह-बालानां बुद्धिः परबुद्धिभिः परस्मिन् शत्रौ विष्णौ बुद्धिर्येषां तैर्भिद्यते अन्यथा क्रियते, विपरीता क्रियते इत्यर्थः।।६।।

नूनं गुरुगेहे प्रतिच्छन्नैः विष्णोर्भक्तैः द्विजातिभिः ब्राह्मणैः अयं बालो भिद्यते विपरीतबुद्धिः क्रियते, अतोऽस्य बालस्य बुद्धिर्यथा न भिद्येत तथा सम्यग्विधार्यतां विचार्यतामिति[3]।।७।।

---

1 W omits अत्र 2. A,B,T देवर्षिः 3 A,B,T add अर्थः

ततो दैत्ययाजकाः दैत्यपुरोहिताः स्वगृहम्प्रति दैत्यभटैरानीतं प्रापितं प्रह्लादमाहूय प्रशस्य प्रस्तुत्य सामोक्तिभिः श्लक्ष्णया मृद्व्या उक्त्या च सम्यगपृच्छन्।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

हिरण्यकशिपु प्रह्लादसम्वादच्छलेन भक्तिस्वरूपं हरेर्निरतिशयस्वातन्त्र्यञ्च निरूपयत्यस्मिन्नध्याये-काव्यः शुक्रः शण्डश्च मर्कश्च (अ?) शण्डामर्कौ तस्य शुक्रस्य दैत्यराजगृहान्तिके न्यवसतामिति शेषः।।१।।

राज्ञा हिरण्यकशिपुना।।२।।

अपाठस्य विशेषणभूतेन हेत्यनेन सूचितं हेतुमाह-नेति। असाधुत्वे किङ्कारणमत्राह-स्वरूपेति, "स्वातन्त्र्यात्स्व इति प्रोक्तः" इत्यतः स्वस्य स्वतन्त्रस्य हरे रूपस्याऽसत्त्वं शून्यत्वं गृह्णातीति निराकारो हरिरिति यः पक्षः स आश्रयो यस्य तत्तथा निराकारपक्षविषयत्वादित्यर्थः। प्रपञ्चस्वरूपस्य असद्ग्रहः शून्यत्वप्रतिपादकः शून्यवादः स आश्रयो यस्य तत्तथा अद्वैतविषयत्वादित्यर्थ इति वा, जीवपरस्वरूपयोरसत्पृथगभावं गृह्णातीति स्वरूपासद्ग्रहः जीवपरमात्मनावभिन्नाविति यः सिद्धान्तः स आश्रयः यस्य तत्तथा अद्वैतविषयत्वादित्यर्थ इति वा, स्वरूपासद्ग्रहः औत्पत्तिकदुराग्रहोऽवैष्णवपक्षपातः स आश्रयो यस्य तत्तथा वैष्णव सिद्धान्तविरुद्धत्वादित्यर्थ इति वा, विन्यासभेद एवायं तात्पर्यतस्त्वेक एवेति।।३,४।।

हे असुरवर्य! असद्ग्रहाद्विषयाभिनिवेशात् समुद्विग्नधियां परवशीकृतबुद्धीनां देहिनां तत्साधुसंसाररनिर्मूलसाधनं मन्ये इत्यन्वयः। किं तदिति तत्राह- हित्वेति। आत्मपातं स्वस्य निरयपातं अन्ध मज्ञानं यत्तस्य कूपं निधानस्थानं गृहं हित्वा वनं सज्जनसङ्गमलक्षणं गतः।।५।।

सज्जनशिक्षार्थं प्रह्लादेन तत्त्वमुक्तम् न तु तं ग्राहयितुं, तस्यासुरावेशेन दुराग्रहगृहीतत्वात्तत्फलमाह **श्रुत्वेति**। परिहासः फलं परबुद्धिभिः प्रतिपक्षबुद्धिभिः परपक्षसमीहिताः पूर्वपक्षविषयत्वेन प्रवृत्ताः।।६।।

पुत्रस्नेहेनाभिमतोऽयं न हासः किन्त्वनभिमत एवेत्यभिप्रेत्याह-**सम्यगिति**। विधार्यतामवधार्यतां विष्णुपक्षः प्रतिच्छन्नो येषां ते तथा तैः विष्णुसिद्धान्तमभिगृह्य स्थितैरित्यर्थः।।७।।

अवशवशीकरणाय चत्वार उपाया विहिताः तत्र द्विजातीनां सामोपाय एव श्रेयानिति दर्शयितुं परकृत बुद्धिभेदञ्च ज्ञातुं, तत्रापि योग्यानां भगवत्तत्त्वविषयज्ञाननिश्चयाय च दैत्यभयाच्च दैत्ययाजकाः प्रह्लादमपृच्छन्नित्याह **गृहमिति**। सामभिर्वचनैः।।८।।

वत्स, प्रह्लाद! भद्रं ते सत्यं कथय मा मृषा।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः।।९।।

बुद्धिभेदः परकृत उताहो ते स्वतो[1]ऽभवत्।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन!।।१०।।

प्रह्लाद उवाच

[2-]स्वः परश्चेत्य[-2]सद्ग्राहः पुंसां यन्मायया कृतः।
विमोहितधियां दृष्टस्तस्मै भगवते नमः।।११।।

स यदानुवृ[3]तः पुंसां पशुबुद्धिर्विभिद्यते।
अन्य एष तथाऽन्योऽहमिति भेदगता सती।।१२।।

स एष आत्मा स्वपरेत्यबुद्धिभिः दुरन्व[4]यानुक्रमणो नि[5]रूप्यते।
मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम्।।१३।।

यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ।
तथा मे भिद्यते चेतश्चक्रपा[6]णेर्यदृच्छया।।१४।।

नारद उवाच

एतावद्ब्राह्मणायो[7]क्त्वा विरराम महामतिः।
तं [8-]सुनिर्भर्त्स्य[-8] कुपितः स[9] दीनो राजसेवकः[10]।।१५।।

आनीयतामरे वेत्रमस्माकमयशस्कृ[11]तः।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थो[12]ऽस्योदितो दमः।।१६।।

---

1. M.Ma भवेत् 2. H,V परस्स्वात्मेत्य 3. A,B,G,J,T व्रतः; M,Ma गतः 4 A,B,G,J,T °त्य° 5 M,Ma निरुच्यते 6 M,Ma पाणो य°
7 W °नु° 8- -8 A,B,G,J,M,Ma,T निर्भर्त्स्याथ 9 M,Ma सु° 10 W °कम् 11 A,B,G,J,M,Ma,T °स्करः 12 W °र्थस्स्यादितो

**श्रीध० वत्सेति।** बालान् सर्वानति अतिक्रम्य तुभ्यं तव।।९, १०।।

अहो मायामोहिता भवन्तो मामाक्षिपन्ति इत्याशयेन तावदाह-**स्वःपरश्चेति।** मिथ्याभिनिवेशो यदीयया माययैव कृतो न तु वास्तवः। अत एव [1-]तदीयया माया[-1] विमोहितबुद्धीनां **भवतामेव** दृष्टो न तु मम। तस्मै अचिन्त्यमायेश्वराय नमः।।११।।

अहो किमेतत्प्रलपसि तव बुद्धिभेदो यतो जातः [2]तं कथयेत्याक्षिप्तस्सन् तत्प्रसादादेवेत्युत्तरमाह **स** इति त्रिभिः। स भगवान्यदाऽनुव्रतोऽनुकूलो भवति तदा पशूनामविवेकिनामिव बुद्धिभेदगताऽसती मिथ्यासंसारविषया विभिद्यतेऽभिन्नात्मनिष्ठा भवति।।१२।।

भेदस्यासत्त्वं दर्शयन्नाह-**स एष** इति। स एष परमात्मैव स्वः पर इति चाविवेकिभिर्निरूप्यते। युक्तञ्चैतत्। यतो यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोऽपि मुह्यन्ति। तत्र हेतुः। दुरत्ययं दुर्घटमनुक्रमणं अनुचरितमनुवर्णनं वा यस्यास्सा।।१३।।

ननु निर्विकारस्य कथं मतिभेदकत्वं तत्राह-**यथेति।** यथाऽयो[3]लोहमाकर्षस्य अयस्कान्तस्य समीपे स्वयमेव भ्रमति। [4-]तथा मे[-4] चेतश्चक्रपाणेः सन्निधौ। तव कुतो जातस्तत्सन्निधिः तत्राह-यदृच्छयेति। कस्य तपोदानादेः फलमेतदिति न ज्ञायत इत्यर्थः।।१४।।

**एतावदिति।** राजसेवक उवाचेति शेषः।।१५।।

**आनीयतामिति।** अरे वेत्रं कश आनीयताम्। सामदानभेददण्डानां मध्ये चतुर्थो दमो दण्डोऽस्य दुर्बुद्धेरुदित उक्तः शास्त्रेषु। दुर्बुद्धित्वे हेतुः [5-]कुलाङ्गारस्य[-5] कुलस्य अङ्गारवन्नाशहेतोः।।१६।।

**वीर०** प्रश्नमेवाह-**वत्सेति** द्वाभ्याम्। हे वत्स! प्रह्लाद! ते तव भद्रमस्तु। **न** त्वां ताडयाम इति भावः। सत्यं यथार्थं कथय, मृषा [6]मिथ्या मा कथय। किं कथयेयम्? तत्राऽऽहुः [7]बालानिति। बालानति अतिक्रम्य सर्वान् बालान् विहाय तुभ्यं तवैव एष बुद्धिविपर्यासः कुतो हेतोः अभूत् इति।।९।।

किमयं बुद्धिविपर्यासः परैर्विष्णुपक्षपातिभिः कृतः उताहो आहोस्वित् स्वत एव तवाऽभवत्, हे दैत्यकुलनन्दन! त्वद्गुरूणां श्रोतुकामानामस्माकं भण्यतां कथ्यतामिति।।१०।।

---

1--1 H,V तया 2 H,V तत् 3. H,V लोहः आ० 4--4 H,V omit 5--5 H,V omit 6 W omits मिथ्या 7. A,B,J °ह

एवमुक्त आह प्रह्लादः-**पर** इत्यादिना चतुर्भिः। यत्पृष्टं बुद्धिभेदः परकृत उत स्वाभाविक इति तत्र तमिमं स्वपरविभागं देहात्माभिमानरूपाज्ञानमूलकं भगवन्मायामोहितानामिति निन्दितुं तावत् देहात्माभिमानादिरूपमोहनिमित्तविचित्रमायाशक्तियुक्तं भगवन्तं नमस्करोति-पर इति। यस्येश्वरस्य मायया हेतुना स्वः परश्चेत्यसद्ग्राहः इदं मित्रमयं शत्रुः[1] अयं देवो मनुष्यो ब्राह्मण इत्यादि देहात्मभ्रमः कृतः सम्पादितः, विमोहितधियां भगवन्मायया विमोहिता धीर्येषां तेषां भवतामेव दृष्टौ न ममेति भावः, तस्मै पूर्णषाड्गुण्याय नमः। विमोहित-धियामित्यनेन "दैवी ह्येषा गुणमयी मम माया दुरत्यया" (भ.गी. 7-14) इति भगवदुक्तरीत्या भगवदप्रपन्नानां भवतामेवासद्ग्राहः, न तु तत्प्रपन्नस्य मम इति सूचितम्।।११।।

तदेव व्यञ्जयन्नसद्ग्राहं निन्दति- **स इति**। स भगवान् यदा पुम्भिस्तु वृतः[2] आश्रितः तदा पुंसां पशुबुद्धिः पशुष्विव बुद्धिः देहात्माभिमानरूपा बुद्धिः विपद्यते निरस्यते। काऽसौ पशुबुद्धिः? या अन्य एषः अन्योऽहम् इत्येवंरूपा सर्वशरीरेषु ज्ञानैकाकारतया परमात्मशरीरतया चावस्थितानात्मनो विस्मरतां स्वः पर इत्येवंरूपा[3] भेदगता अनात्मभूतदेवासुरमनुष्यादिशरीरगता अत एवासती दुष्टा अनर्थावहा सैषा पशुबुद्धिरित्यर्थः।।१२।।

एवं स्वपरविभागहेतुभूतदेहात्मभ्रमादेः भगवन्मायाहेतुकत्वकथनेन तद्वरणात्तन्निवृत्तिकथनेन च भगवत एवाज्ञानप्रदत्वं तन्निवर्तकत्वं चोक्तम्। अथ ज्ञानप्रदातृत्वमपि तस्यैवेत्यह-**स** इति। स उक्तविध[4] एष आत्मा प्रकृतः परमात्मा स्वपरेत्यबुद्धिः, स्वः पर इति बुद्धिरहितः सर्वान्तरात्मतया सर्वत्र समत्वादित्यर्थः। दुरन्वयं पुरुषान्तरेष्वघटमानमनुक्रमणं व्यापारो यस्य तादृशो निरूप्यते अन्यैरशक्यं सर्वं सर्वशक्तिलीलया करोतीत्यर्थः। यस्य वर्त्मनि मार्गे यत्स्वरूपविमर्शने वेदवादिनो ब्रह्मादयोऽपि मुह्यन्ति स एष एव परमात्मा मम मतिं बुद्धिं भिनत्तीत्यर्थः[5]। स्वपरेत्यबुद्धिरित्यनेन देवासुरादिविभागमन्तरेण सर्वेषां ज्ञानप्रदत्वमुक्तम्। दुरन्वयानुक्रमण[6] इत्यनेन सर्वशक्तित्वं वैषम्यादिराहित्यञ्चोक्तम्।यद्वर्त्मनि ब्रह्मादयोऽपि मुह्यन्तीत्यनेन तत्प्रसादादेव ब्रह्मादीनामपि ज्ञानोदयः, अन्यथा केवलं तेषामपि मोह एवेत्युक्तम्। स्वपरेत्यबुद्धिभिरिति [7-]तृतीयान्तमपि[-7] पाठान्तरम्। तत्र स्वःपर इति न विद्यते बुद्धिर्येषां तैः स्वपरविभागात्मक विवेकरहितैरित्यर्थः। तादृशैः दुरन्वयानुक्रमणोऽनितरसाधारणव्यापारो निरूप्यते, ज्ञायत इत्यर्थः। तत्प्रसादान्निवृत्तदेहात्माभिमानादिभिः, ज्ञानाज्ञानादिप्रदत्वेन परमात्मा ज्ञायते इत्यर्थः।।१३।।

एवं ज्ञानप्रदत्वमुक्तम्। अथ तस्यैव तत्प्रसादनेन स्वस्य प्रवर्तकत्वमाह-**यथेति**। आकर्षसन्निधौ

---

1. W अमित्रः 2. A,B,T व्रतः 3. A,B,T °क° 4. W omits उक्तविधः 5 W omits इत्यर्थः 6 A,B,T °त्यया° 7- -7 W omits

अयस्कान्तसन्निधाने[1] अयोलोहं स्वयमेव यथा भ्रमति, भ्राम्यति चञ्चलं भवतीत्यर्थः। तथा मम चेतोऽपि [2-]चक्रं पाणौ यस्य तस्य हरेः सन्निधौ[-2] यदृच्छया हेत्वन्तरनिरपेक्षं भिद्यते तत्प्रसादायत्ततत्सान्निध्यादेव ममैवंविधा बुद्धिवृत्तिरभूदित्यर्थः। अनेन "बुद्धिभेदः परकृतः उताहो ते स्वतोऽभवत्" (भाग. 7-5-10) इति प्रश्नस्योत्तरमुक्तं भवति।।१४।।

[3-]एवमुक्तो गुरुराहेत्याहमुनिः-**एतावदिति**[-3]। ब्राह्मणान् दैत्ययाजकान्प्रत्येवम् एतावदेवोक्त्वा महामतिः स प्रह्लादो विरराम तूष्णीम्बभूव ततो दीनः उपायान्तरेण तं स्ववशीकर्तुमशक्तो गुरुः तं निर्भर्त्स्य कुपितस्सन् राजसेवकमुवाचेति शेषः।।१५।।

तदेवाह-**आनीयतामिति** द्वाभ्याम्। अरे! हे राजभट! वेत्रं प्रहरणसाधनयष्टिविशेषः आनीयताम् अस्माकमयशोऽपकीर्तिं करोतीत्ययशस्कृत् तस्य, अत एव कुलस्य दैत्यकुलस्य अङ्गारवन्नाशकः तस्य दुर्बुद्धेरितः परं दमः शिक्षणोपायः चतुर्थ एव स्यात्, दण्ड एवोपायः कर्तव्यो न सामादिरित्यर्थः। "चतुर्थोऽस्योदितो दम" इति पाठे उदितः शास्त्रेषूक्तः चतुर्थो दण्डोपाय एवाऽस्य दमो दमनसाधनमित्यर्थः।।१६।।

**विज॰** तुभ्यं तव यो बुद्धिविपर्यय एव बालान् वयस्यान् अतिक्रम्य कुतोऽभूदिति शेषः। बालानां बुद्धिमतिक्रम्यैष बुद्धिभेदः कुतः कस्मात् तुभ्यं रोचित इति वा।।९।।

एतदेव विवृण्वन्ति-**बुद्धिभेद** इति। अस्माकं तत्त्वमेव वक्तव्यम् त्वयेत्यतो गुरूणामिति।।१०।।

उत्तरं वक्ति-पर इति। पुंसां योऽयं परः[4] स्वात्मा? इत्यसद्ग्राहः। "एकमेवाऽद्वितीयं ब्रह्म" (छान्दो. उ. 6-2-1) इति श्रुतेः। परमार्थवस्तुन एकत्वे प्रामाणिके सिद्धे तत्र श्रीनारायणमन्तरेण परविषयकर्तृत्वं स्वविषयकर्तृत्वमिति भेदः, स्वातन्त्र्यकल्पनालक्षणमन्यथा ज्ञानम्। एष यस्येश्वरस्येच्छया कृतः कल्पितः, सर्वकर्तृत्वात्तस्य। तस्मै भगवते महामहिम्ने नम इत्यन्वयः। तत्प्रत्यक्षमित्याह विमोहितधियामिति। दृष्टः प्रत्यक्षः। तस्मात्तादृशी बुद्धिः भवादृशैर्न कार्येति शेषः। विमोहितेत्यनेनाऽपि ईश्वरकर्तृत्वं ज्ञायते।।११।।

यन्मायामयेत्युक्तं स्पष्टं दर्शयति-स **यदेति**। स भगवान् यदा पुंसां स्वात्मपरबुद्धिजनकत्वेऽनुगतोऽनुकूलो भवति, तदा पशुबुद्धिरज्ञबुद्धिर्विभिद्यते, तत्कथमित्यत उक्तम्-अन्य इति। एष देवदत्तोऽन्यः, स्वतन्त्रोऽहं

---

1 W °धौ 2- -2 W चक्रपाणेः सन्निधौ 3- -3 W omits 4 A,B परः स्वश्च।

मन्यः स्वतन्त्र इति किमस्याधिकरणमिति तत्राऽऽह-देहगतेति। अत एवाऽसती वृत्तिज्ञानत्वेन मोक्षानुपयोगित्वात् "अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" (बृह. उ. 1-4-10) इति श्रुतिप्रतीकेनानेन श्लोकेन जीवपरयो र्भेदं निषिध्य चिदैक्यं विधीयत इतीममर्थं विधाय अर्थान्तरकल्पनायां किं प्रमाणमिति इयमाशङ्का स्वातन्त्र्येणान्यसद्भावनिषेधाय। श्रुतिस्त्वियम् "अन्योऽसावन्योऽहमिति पश्यन्नज्ञ इति स्म" (ब्रह्मतर्के) "आत्मानमन्तर्यमये दिति भेदं स्वरूपतः। आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु।। स्वरूपसत्ताकर्तृत्वं भोगो मोक्षस्तथैव च। मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा।।" (ब्रह्मतर्के) इत्यनेन परिहृतेति ज्ञातव्यम्।।१२।।

ननु, यदि जीवपरौ मिथो भिन्नौ तर्हि किमिति घटपटभेदज्ञानवत्तद्विषयज्ञानं नोत्पद्यत इत्याशङ्क्य प्रतियोगिज्ञानस्य दुस्साध्यत्वादित्यभिप्रेत्याह-**स एष** इति। यः स्वस्व कर्मानुसारेण स्वस्वयोग्यज्ञानमुत्पादयति स एष आत्मा परमात्मा स्वपरेत्यबुद्धिभिः यथार्थज्ञानविरोधिज्ञानवद्भिः पुरुषैर्दुरन्वयानुक्रमणः दुरन्वयं दुर्ज्ञानमनुक्रमणं तत्तद्योग्यतानुसारेण प्रवर्तनं यस्य स तथा, दुर्ज्ञेयचेष्ट इत्यर्थः। निरुच्यते निश्चीयते। ननु "वेदाहमेतं पुरुषं महान्तमादित्यवर्णम्" (पु.सू. 2-1) इति श्रुतेः। ब्रह्मादेस्तद्विषयज्ञानश्रवणात् कथं प्रतियोगिज्ञानस्य दुस्साध्यत्वमित्यत आह-मुह्यन्तीति। ब्रह्मादीनां भगवद्विषयज्ञानं दुस्साध्यं, किन्त्वितरेषामित्यतो वाह-मुह्यन्तीति। हिशब्दः अप्यर्थे हेतौ वा। वेदवादे कोविदाः ब्रह्मादयोऽपि यद्वर्त्मनि यत्र स्वरूपविषये मुह्यन्ति यस्मात्तस्मात्स एष दुरन्वयानुक्रमण इति निरुच्यते। अनेन हरेरनुग्रहमन्तरेण तद्विषयज्ञानं नोत्पद्यते। तस्मिन् सति तत्स्यात्। "यमेवैष वृणुते तेन लभ्यः" (कठ.उ. 2-22) इति श्रुतेः। अन्वयव्यतिरेकौ दर्शितावित्युक्तं भवति। ननु, त्वदुक्त्यैव त्वद्बुद्धिभेदजनकः कश्चित्स्यात् स क इति विचार्यत इति तत्राह एष इति। मुह्यन्ति इत्येतदत्राऽप्यनुकूल्यते। यद्वर्त्मनि मुह्यन्त्येष हरिः मम गतिं भिनत्ति विषयीकरोति सर्वस्य स्ववशत्वं स्वस्य अनन्याधीनत्वं स्वप्रसादान्मोक्षादिस-कलपुरुषार्थप्राप्तिरित्यादिबुद्धिं जनयतीति भावः। तदुक्तम्-"आह तद्ब्रह्मणोऽधीना भिन्ना जीवास्सदैव तु" (ब्रह्मतर्के) इति।।१३।।

एतदर्थं सदृष्टान्तमाह-**यथेति**। यथाऽऽकर्षस्य अयस्कान्तस्य सन्निधौ सति अयः स्वयं भ्राम्यति, स्वात्मानमुद्दिश्य गमनशक्तिं करोति, तदिति शेषः। तथा मे चेतो यदृच्छया तदिच्छया चक्रपाणौ भिद्यते तद्विषयीकरणशक्तीक्रियते। अयोगमनशक्तिवत् चेतनस्याऽपि नैसर्गिकीति भावः। एतेन सर्वं हर्यधीनमित्युक्तं

भवति। "एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योन्या नद्यः स्यन्दन्ते, य आत्मानमन्तर्यमयेत्" (बृह. उ. 3-8-9) इति भेदस्वरूप आहेत्यदि श्रुतिस्मृतिभ्याम्। विशेषेण चराचरस्य सर्वस्य श्रीहर्यधीनप्रवृत्त्यवगमात्। पश्यन्नज्ञ इत्यनेन पशुबुद्धि स्वबुद्धिभिरित्येतत्पदद्वयाभिप्रायो दर्शितः।।१४।।

सुदीनः वाचां शिक्षायां क्षीणोऽशक्त इत्यर्थः। राजसेवक इत्यनेन भेदज्ञानासामर्थ्यं च सूचितम्। उभयोरपि वित्तसाध्यत्वात्।।१५।।

अयशस्कृतो दुष्कीर्तिकरस्याऽस्य चतुर्थो दमो दण्डसंज्ञ इति उदित इत्यर्थः।।१६।।

**दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः।**
**[1]यन्मूलोन्मूल परशोर्विष्णोर्नालायितोऽर्भकः।।१७।।**

**इति तं विविधोपायैः भीषयंस्तर्जनादिभिः।**
**प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम्।।१८।।**

**तत [2]एनं गुरुर्ज्ञात्वा [3]ज्ञातज्ञेयचतुष्टयम्।**
**दैत्येन्द्रं दर्शयामास मातृमृष्टमलङ्कृतम्।।१९।।**

**पादयोः पतितं बालं प्रतिनन्द्याऽऽशिषाऽसुरः।**
**परिष्वज्य चिरं दोर्भ्यां [4]परमां प्राप निर्वृतिम्।।२०।।**

**आरोप्याऽङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः।**
**आसिञ्चन्विकसद्वक्त्रमिदमाह युधिष्ठिर!।।२१।।**

**[5-]हिरण्यकशिपु रुवाच[-5]**

**[6]प्रह्लादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम्।**
**कालेनैतावताऽऽयुष्मन् यदशिक्षद्गुरोर्भवान्।।२२।।**

**श्रीध०** तत्कुतस्तत्राऽह - **दैतेयेति**। दैतेया एव चन्दनद्रुमाः तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः।

1. M,Ma त° 2. H,V एवं 3. H,V ज्ञातोपाय 4. A,B,G,J,M,Ma,T °मामाप 5- -5 M,Ma omit 6. M,Ma °द उच्य°

तदेवाह-यस्य दैतेयचन्दनवनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नाल मिवाऽऽचरत्। यथा परशोश्छेदकत्वे बब्बूलादिद्रुमनिर्मितो दण्डः सहकारी। तं[1] विना छेदनासम्भवात्। तथाऽयं विष्णोः दैत्यमूलोच्छेदे हेतुर्जात इत्यर्थः।।१७।।

**इतीति।** इति तं प्रह्लादं भीषयन् धर्मार्थकामवर्गस्य प्रतिपादकं शास्त्रमध्यापयामास।।१८।।

**तत** इति। ज्ञातं ज्ञेयमुपायानां चतुष्टयं सामदानादि येन तं दैत्येन्द्रं प्रति, मात्रामृष्टमुद्वर्त्य स्नापितम्। [2-]अलङ्कृतं भूषणतिलकादिभिः[-2]।।१९-२२।।

**वीर॰** कुलनाशकत्वं व्यनक्ति-दैतेया एव चन्दनद्रुमाः, तेषां वनेऽयं कण्टकद्रुमतुल्यो जातः, तन्मूलेऽपि एषां दैतेयचन्दनवनानां यानि मूलानि, तेषामुन्मूलने छेदने परशोः परशुस्थानीयस्य विष्णोः अयमर्भको नालायितः नालवदाचरितवान्। यथा परशोश्छेदकत्वे कर्बुरादिद्रुमनिर्मितो[3] दण्डः सहकारी, तं विना छेदनासम्भवात्। तथा अयं विष्णोः दैत्यमूलस्य छेत्तुः सहकारी जात इत्यर्थः।।१७।।

इति इत्थं वदन् तर्जनादिभिः नानोपायैः भीषयन् प्रह्लादं तं त्रिवर्गस्योपपादनं धर्मार्थकामप्रतिपादकं शास्त्रं ग्राहयामास।।१८।।

ततो गुरुरेनं प्रह्लादं ज्ञातं ज्ञेयानामुपायानां सामादीनां चतुष्टयं यस्य तादृशं ज्ञात्वा आलक्ष्य मात्रा मृष्टं उद्वर्त्य स्नापितं अलङ्कृतञ्च प्रह्लादं दैत्येन्द्रं प्रति दर्शयामास पितृसन्निधिं प्रापयामासेत्यर्थः।।१९।।

ततः पादयोः प्रणमन्तं नमस्कुर्वन्तं बालं[4] आशिषा आशीःपूर्वकं प्रतिनन्द्य असुरो हिरण्यकशिपुः दोर्भ्यां भुजाभ्यां (पुत्रस्य शिरः) परिष्वज्य परमां निर्वृतिं आनन्दं प्राप्तवान्।।२०।।

हे युधिष्ठिर! उत्सङ्गे निधाय मूर्धन्युपाघ्राय च अश्रुकलाम्बुभिः[5] हर्षाश्रुजलबिन्दुभिः आसिञ्चन् विकसद्वदनं[6] यस्य तादृशो [7-]दैत्यः सुतं प्रति[-7] इत्थं[8] वक्ष्यमाणमाह।।२१।।

तदेवाऽऽह **प्रह्लादेति**। हे आयुष्मन्! [9-]तात! पुत्र[-9]! प्रह्लाद! भवानेतावता कालेन गुरोस्सकाशाद्य दुपाशिक्षत् अधीतवान् इत्यर्थः[10]। तन्मध्ये किञ्चिदुत्तमं स्वधीतं सम्यगावृत्त्या गृहीतं तत् हे तात! प्रह्लाद!

---

1. H,V तेन 2- -2 H,V omit 3. A,T ब॰ 4. W omits बालम् 5. W ॰ण्णा॰ 6. W ॰द्वक्त्रं 7- -7 W omits 8 W इदं 9- -9 W omits

10. A,B,T omit इत्यर्थः

अनूच्यतां सम्यग्[1]नुक्रमेण पठ्यताम्।।२२।।

**विज०** उन्मूलयतीत्युन्मूलः स चाऽसौ परशुश्च उन्मूलपरशुः तत् स्वदैतेयचन्दनवनस्य मूलं तन्मूलपरशुः, तस्य नालायितः मण्डपवत्तन्वानः।।१७।।

त्रिवर्गस्योपपादनं शास्त्रम्।।१८।।

ज्ञातं ज्ञेयानां धर्मादिपुरुषार्थानां चतुष्टयं येन स तथा तं ज्ञातज्ञेयसाधन चतुष्टयं वा मातृमृष्टं शरीरमलत्यागेन स्नानं कारितम्।।१९-२१।।

सुष्ठु अधीतं पठितम्।।२२।।

**प्रह्लाद उवाच**

**श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।२३।।**
**इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नव लक्षणा।**
**क्रियते भगवत्यद्धा तन्मन्येऽधीत मुत्तमम्।।२४।।**

**[2-]नारद उवाच[-2]**

**निशम्यैतत्सुतवचो हिरण्यकशिपुस्तदा।**
**गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः।।२५।।**

**[3-]हिरण्यकशिपुरुवाच[-3]**

**ब्रह्मबन्धो किमेतत्ते विपक्षं श्रयताऽसता।**
**असारं ग्राहितो बालो मा मनादृत्य दुर्मते।।२६।।**

**श्रीध०** **श्रवण** मिति। पादसेवनं परिचर्या, अर्चनं पूजा, दास्यं कर्मार्पणं, सख्यं तद्विश्वासादि, आत्मनिवेदनं

---

1 W omits अनुक्रमेण 2- -2 A,B,G,J,T omit 3- -3 A,B,G,J,T omit

[1-]स्वशरीर[-1]समर्पणम्, यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिन्ता न क्रियते तथा देहं तस्मै समर्प्य तच्चिन्तावर्जनमित्यर्थः ।।२३।।

**इतीति।** इति नव लक्षणानि यस्याः सा अधीतेन चेद्भगवति विष्णौ भक्तिः क्रियेत सा चार्पितैव सती यदि क्रियते न तु कृता सती पश्चादर्प्येत तदुत्तममधीतं मन्ये, नत्वस्माद्गुरोरधीतं शिक्षितं वा तथाविधं किञ्चिदस्तीति भावः ।।२४,२५।।

[2-]**ब्रह्मेति।** न विद्यते सारं यत्र तदसारम्। न विद्यते सारं यस्मादिति वास्तवोऽर्थः[-2] ।।२६।।

**वीर०** यदुत्तममधीतमध्ये किञ्चिदनूच्यतामिति तत्राऽऽह **श्रवणमिति।** यदुक्तं पूर्वं "वनं गतो यद्धरिमाश्रयेत" इति तदेकाश्रयणं विवृणोति-श्रवणमिति द्वाभ्याम्। पुंसां श्रवणादीनि नव लक्षणानि यस्याः सा भक्तिश्चे-न्नवलक्षणा भक्तिप्रतिपादकशास्त्रमधीतश्चेत् तदेव स्वधीतमुत्तमं मन्ये, न त्वधुना गुरोः सकाशादधीतं; तत्तु गुरुभिर्नाध्यापितमिति भावः। स्वधीत प्रश्नोत्तरनिगमनमुत्तममधीतमिति। श्रवणमित्यादि तु पूर्वोक्ताश्रयणविवरणपरम्। भगवत्यद्धा क्रियते चेत् अधीतविद्या प्रतिपाद्या नवलक्षणा भक्तिः निष्कपटभावेन भगवति क्रियत इति यत्कृताऽपि सा भक्तिर्विष्णावर्पितेति यच्च तदेतदुत्तमं मन्ये। न केवलं नवलक्षणा भक्तिप्रतिपादक शास्त्राऽध्य-यनमात्रमेवोत्तमं, अपि तु तदर्थानुष्ठानं, अनुष्ठितस्येश्वरे समर्पणञ्चे[3]त्येत्युत्तमं मन्ये, केवलाध्ययनमात्रस्य व्यर्थत्वादितिभावः। अर्पिता विष्णावित्यनेन भक्तेरनन्यप्रयोजनत्वेन कर्तव्यतोक्ता। तत्र विष्णोःश्रवणं तत्स्वरूपरूपगुण विभूतिश्रवणं, कीर्तनं नामोच्चारणाद्यात्मकम्, स्मरणं स्वरूपादिविषयकमेव। पादसेवनार्चन वन्दन दास्यस-ख्यानि तु तदीयपर्यन्तानि। वन्दनं नमस्कारः, पादसेवनं पादयोः संवाहनं, तच्च अर्चाविग्रहतदीयपादयोश्चेति वेदितव्यम्। परव्यूहविभवादेरतीन्द्रियत्वेन तत्पादसे[4]वनासम्भवात्। यद्वा भगवद्विषये मानसिकं तदीयविषये तु कायिकं विवक्षितम्। आत्मनिवेदनम् "ओमित्यात्मानं युञ्जीत" (म.ना.उ. 17-15) इति श्रुत्युक्तरीत्या तच्छेषत्वानुसन्धानम्। यद्यपि भक्तिर्नाम ध्यानोपासनादि शब्दवाच्याऽहरहरभ्यासाधेयातिशया आप्रयाणादनुवर्तमाना विवेकादि साधनसप्तकानुगृहीता तैलधारावदविच्छिन्नस्मृतिसन्तानात्मिका प्रीत्यात्मिका प्रत्यक्षतापन्ना ध्रुवाऽनुस्मृतिः न तु श्रवणादिरूपेण नवलक्षणा, तथाऽपि उक्तविधाया भक्तेरेव कर्मज्ञानयोगादिवच्छमदमादिवच्च श्रवणादीन्यप्यविलम्बेन निवर्तकान्युच्यन्ते। यद्वा, नवलक्षणा लक्ष्यते एभिरिति लक्षणानि चिह्नानि ज्ञापकानि भक्तियोगपरिपाकावस्था

1 H देह 2- -2 H,V omit 3. W °प्य° 4 W पीडना

ज्ञापकानीति यावत्। उक्तविधभक्तियोगनिष्ठेन रागत एव श्रवणादीनि क्रियन्ते। लोकेऽपि हि यद्वस्तुविषया प्रीतिस्तद्विषयकश्रवणादीनि स्वत एव प्राप्तानीति न तत्र यत्नेन भवितव्यम्। अतः श्रवणादीनि प्रीत्यात्मक-भक्तियोगकारितावस्थाविशेषरूपाणि तन्निष्पत्तिसूचकानि इति तात्पर्यम्। एवं प्रीतिकारितश्रवणादि पर्यन्तभक्तियोगानुष्ठानमेव "वनङ्गतो यद्धरिमाश्रयेत" (भाग. 7-5-5) इत्युक्तमाश्रयणमित्युक्तं भवति।।२३,२४।।

एतदेवंविधं सुतस्य वचो निशम्याकर्ण्य तदा हिरण्यकशिपुः रुषा प्रस्फुरितः कम्पमानः अधरोष्ठो यस्य तादृश इदं वक्ष्यमाणं गुरुपुत्रं प्रत्युवाच।।२५।।

तदेवाऽऽह- हे ब्रह्मबन्धो! ब्राह्मणाभास! किमेतत्ते त्वया, कृतमिति शेषः। अतीवानुचितमेतत्कृत मित्यर्थः। किं तत्? यन्मामनादृत्य विपक्षं शत्रुपक्षमाश्रयता, अत एव असता मह्यमहितकारिणा त्वया हे दुर्मते! असारं ग्राहितो बाल इति एतत्।।२६।।

**विज०** नियन्तृत्वेनाऽऽत्मनि मयि स्थितो भगवानिति नितरां वेदनं ज्ञानं[1] आत्मनिवेदनम्। "मुक्तस्याऽपि ममान्तस्थो नियन्तैव हरिस्सदा। इति ज्ञानं समुद्दिष्टं सम्यगात्मनिवेदनम्।।" (ब्रह्मतर्के) इत्येतदात्मसमर्पणं नाऽर्थः, किन्तूक्त एवाऽर्थः इत्युक्तप्रकारेण श्रवणादिभिः [2]नवभिः लक्ष्यते असम्भव- व्यभिचारपरिहारेण ज्ञायत इति।।२३।।

नवलक्षणा विष्णौ भक्तिर्यस्मिन् शास्त्रेऽर्पिता प्रतिपादिता। पुंसा सा भगवत्युत्तमश्लोके अद्धा निर्व्याजेन क्रियते चेद्यदि तर्हि तदधीतं शास्त्रमुत्तमं मन्ये नाऽन्यदित्यन्वयः। नव श्रवणादीनि लक्षणानि चिह्नानि यस्यां सा तथा।।२४,२५।।

ते त्वया।।२६।।

**सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः।**
**तेषामुदेत्यघं काले रोगः पातकिनामिव।।२७।।**

**गुरुपुत्र उवाच**

**न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो!**
**नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं [3]कदद[3]ाः स्म मा नः।।२८।।**

1. A,B omit ज्ञानं 2. A,B omit नवभिः 3- -3 M,Ma क तदात्म °

नारद उवाच

**गुरुणैवं प्रतिप्रोक्तो भूय एवाऽसुरः सुतम्।**
**न चेद्गुरुमुखीयं ते कुतो भद्राऽसती मतिः।।२९।।**

प्रह्लाद उवाच

**मतिर्न कृष्णे परतः[1] स्वतो वा मिथो[2]ऽभिपद्येत गृहव्रतानाम्।**
**अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम्।।३०।।**

**न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थ[3]मानिनः।**
**अन्धा यथान्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः।।३१।।**

**नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः।**
**महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत्।।३२।।**

**श्रीध०** मित्रत्वेन [4]प्रवर्तमानस्याऽपि तव विरोधाचरणं नाऽसम्भावितमित्याह-**सन्ति हीति**। दुष्टं मैत्रं मित्रत्वं येषां ते [5]दुर्मैत्राः। रोग इवेति। "ब्रह्महा क्षयरोगी स्यात् सुरापः श्यावदन्तकः। स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः" (याज्ञ.स्मृ. 3-209) इत्यादिस्मृत्युक्तपातकिनां [6-]काले नरकभोगानन्तरं[-6] रोगो यथोदेति, तथा तेषां दुर्जनानां [7-]सुजनत्वेन वर्तमानानाम[-7]पि अघं विद्वेषादिकमुदेतीत्यर्थः।।२७।।

**नेति।।** मत्प्रणीतं [8]मया पाठितम्। नोऽस्मभ्यं, कत् कुत्सितं दोषं मास्मदाः। अडागम आर्षः। मयि दोषारोपणं मा कृथा इत्यर्थः। इन्द्रशत्रो इत्य[9]नेनेन न हि ब्राह्मणेषु तव कोप उचित इति भावः।।२८।।

**गुरुणेति।** गुरुमुखी गुरुवाक्यजनिता, हे अभद्र!।।२९।।

आस्तामियं वार्ता भवादृशानां विषयासक्तानां अत्रानधिकारादित्याशयेनाऽऽह **मतिरिति**। परतो गुरोः, स्वतो वा, मिथो वा ऽन्योन्यतो वा नाऽभिपद्येत न सम्पद्येत। [10-]केषाम्?[-10] गृहव्रतानां गृह एव व्रतं सङ्कल्प इति

1. M,Ma °तोऽपि 2. M,Ma थो विपद्येत 3. M,Ma °भावाः। 4. H,V omit प्र 5 H,V omit दुर्मैत्राः 6- -6 H,V omit 7- -7 omit 8 H,V °याऽऽ पादितम्।° 9 A,B,J omit अनेन 10- -10 H,V omit

कृत्यचिन्ता येषाम्। अत एव अदान्तैरनुपस्तैर्गोभिरिन्द्रियैर्हेतुभूतैस्तामिस्रं संसारं विशताम्। तत्र चर्वितस्यैव चर्वणं येषाम्।।३०।।

ननु श्रीकृष्णस्य परमानन्दस्वरूपत्वात्तेऽपि तन्निष्ठा एव किं न स्युरिति चेत्तदज्ञानादित्याह-**नेति**। ये दुराशयाः विषयवासितान्तःकरणास्ते हि विष्णुं न विदुः। अत्र हेतुः-स्वस्मिन्नेवाऽर्थः पुरुषार्थो येषां तेषां गतिं गम्यम्[1]। ननु तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यन्ति, तत्राऽऽह बहिर्विषयेष्वर्थो येषां ते बहिरर्थाः, तानेव गुरुत्वेन मन्तुं शीलं येषां ते; अतोऽन्धैरुपनीयमाना अन्धा यथा पन्थानं न विदुः, किन्तु गर्ते पतन्ति, तथा तेऽपीशस्य तन्त्यां दीर्घरज्ज्वां वेदलक्षणायां उरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव[2] भवन्तीत्यर्थः। तदुक्तम्-"विषयाविष्टचित्तानां विष्ण्वावेशस्सुदूरतः। वारुणी दिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्" इति।।३१।।

ननु च "एको देवः सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा" (श्वेता. उ. 6-11) इत्यादिश्रुतिपादितं विष्णुं कथं न विदुः, कुतो वा तेषां तमिस्रप्रवेशस्तत्राऽऽह[3]-**नैषामिति**। निष्किञ्चनानां निरस्तविषयाभिमानानां महत्तमानां पादरजसाऽभिषेकं यावन्न वृणीत तावच्छ्रुतिवाक्यतो जाताप्येषां मतिः उरुक्रमस्याङ्घ्रिं न स्पृशति न प्राप्नोति, असम्भावनादिभिर्विहन्यत इत्यर्थः। अनर्थस्य संसारस्यापगमो यदर्थो यस्या अङ्घ्रिस्पर्शिन्या मतेरर्थः प्रयोजनम् महदनुग्रहाभावान्न तत्त्वनिश्चयो, नाऽपि मोक्षस्तेषामित्यर्थः।।३२।।

**वीर०** मित्रत्वेन वर्तमानस्यापि तव विरोधाचरणं नासम्भावितमित्याह-**सन्तीति**। दुष्टं मैत्रं मित्रत्वं येषां ते, अत एव असाधवः छद्मवेषिणः कपटवेषधारिणो भवादृशा अपि हि लोके सन्ति तेषामयं द्रोहः काले उचित काले प्रकटो भवति रोगः पातकिनामिव। यथा -"ब्रह्महा क्षयरोगी स्यात् सुरापी श्यावदन्तकः। स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः" (याज्ञ स्मृ. 3-209) इति स्मृत्युक्तः पातकिनां रोगः उचितकाले उदेति तथा तेषामघं द्रोहादिकमुचितकाले उदेतीत्यर्थः।।२७।।

एवमुपालब्धः आह गुरुपुत्रः - **नेति**। न मया पाठितं, नाऽपि परेण। किन्तु केवलमेष तव पुत्र एव वदत्येवम्। हे इन्द्रशत्रो ! तव ब्राह्मणेष्वाग्रहोऽनुचितोऽविषयत्वादिति भावः। ननु न परप्रणीतश्चेत्कुतोऽस्याभूदियं मतिः? तत्राऽऽह नैसर्गिकीति। हे राजन्! अस्य त्वत्पुत्रस्य इयं मतिः नैसर्गिकी स्वाभाविकी; न तु परैरुत्पादिता। अतो मन्युं क्रोधं नियच्छ उपसंहार। नोऽस्मभ्यं कत् कुत्सितं दुःखमित्यर्थः, मास्मदाः न देहि

1 B शम्यतां 2 H,V एवं 3 H,V तमः प्र०

त्यर्थः, माङ्योगेऽप्यडार्षः। कदनात्मनां नः इति पाठान्तरम्। तत्र कदनात्मनां दीनात्मनां न मन्युं मद्विषयं क्रोधं नियच्छेत्यर्थः।।२८।।

इत्थं गुरुणा प्रत्युक्तो दैत्यः सुतं प्रह्लादमाहेत्याह[1] नारदः[2]-**गुरुणेति**। तदेवाऽऽह-न चेदिति। हे अभद्र! इयं बुद्धिः गुरुमुखी गुरूपदेशजा[3] न चेत् तव कुतो हेतोस्तवाऽसती दुष्टा मतिरभूत्।।२९।।

एवमुक्त आह प्रह्लादः - **मतिरिति**। यत्पृष्टं कुतस्तवेयं मतिरिति, तत्र महतामनुग्रह एवेदृशी मतिहेतुरिति वक्तुं तावन्महद्भिरननुगृहीतानां भवादृशानामीदृशी[4] मतिर्दुर्लभेत्याह-मतिरिति। गार्हस्थ्यरतानां स्वतः परतो वा मिथोऽन्योन्यस्माद्वा कृष्णे मतिः भक्त्यात्मिका नाऽभिपद्येत [5]न सम्पद्येत[-5]। तत्र हेतुं वदन् गृहव्रतान्विशिनष्टि- अदान्तगोभिः अदान्तैरजितैर्गोभिरिन्द्रियैर्हेतुभिस्तमिस्रं निरयरूपं संसारं पुनः पुनर्विशतां चर्वितमनुभुक्तं तस्यैव पुनःश्चर्वणमुपभोगो येषां, पूर्वपूर्वैर्भुक्तमेव विषयं भुञ्जानानां पूर्वेद्युर्भुक्तानेव वनितादीन् विषयान् पुनः अपरेद्युर्भुञ्जानानामिति वा। एवं विषयासक्तचित्तनां त्वादृशां कृष्णे मतिर्दुर्लभा इत्युक्तम्, [6-]यद्वा, चर्वितचर्वणाः पशवः तत्तुल्यानामिति[-6]।।३०।।

माऽस्तु कृष्णे मतिः, स्वश्रेयोऽपि न स्वयं जानन्तीत्याह-**नेति**। स्वार्थश्च गतिश्च स्वार्थगतिः, तं स्वस्य पुरुषार्थभूतं तदुपायभूतञ्च विष्णुं ते गृहव्रता न विदुः। तत्र हेतुं वदन् तान् विशिनष्टि-बहिरर्थमानिनः बहिः शब्दादिविषयेषु अर्थमानिनः पुरुषार्थाभिमानिनः, अतस्ते अन्धैरुपनीयमाना अन्धा यथा पन्थानं न विदुः, किन्तु श्वभ्रे पतन्ति तथा तेऽपि ईशस्य[7] तन्त्यां वेदलक्षणायां स्थूलरज्वामुरुदाम्नि वर्णाश्रमधर्मादिरूपनानाविधकण्ठसूत्रे बद्धा भवन्ति वेदोक्तकेवल काम्यकर्मण्यासक्तैः प्रलोभिता स्तत्रैवासक्ताः पुनः पुन स्संसरन्तो दुःखमेव प्राप्नुवन्ति न तु निरतिशयानन्दरूप परम[8]पुरुषार्थलक्षणं भगवन्तं प्राप्नुवन्तीत्यर्थः!।।३१।।

तदेव व्यनक्ति **नैषामिति**। एषामुक्तविधानां विषयासक्तचित्तानां मतिर्बुद्धिः उरुक्रमस्य निरतिशयमहिमशालिनो भगवतो निरतिशयपुरुषार्थरूपमङ्घ्रिं न स्पृशति न विषयीकरोति तदङ्घ्रिस्पर्शनं विशिनष्टि-यदर्थं यस्योरुक्रमाङ्घ्रिस्पर्शनस्य अर्थः प्रयोजनं फलमनर्थापगमः दुःखनिरासरूपः कियत्पर्यन्तं न स्पृशति, तत्राऽऽह यावन्निष्किञ्चनानामनन्यप्रयोजनानां महीयसां महाभागवतानां पादरजस्सेवां न वृणीत न वृणुयात् महत्सेवां न कुर्यात् तावन्न स्पृशतीत्यर्थः। मम मातृगर्भावस्थानदशायामेव महीयसः श्रीनारदस्याऽनुग्रहादियं बुद्धिरुरुक्रमाङ्घ्रि विषयाभूदिति गूढोऽभिप्रायः।।३२।।

---

1 A,B,T omit प्रह्लादं 2 A,B,T देवर्षिः 3 A,B,T जाता 4 W °शमी° 5- -5 A,B,T omit 6- -6 W omits 7 W ईश्वरस्य 8 A,B,T omit परम

**विज०** साधुत्वेन वृत्तस्य गुरोर्दुर्मते इति सम्बोध्य निन्दनं कथं घटते? इति तत्राऽऽह - **सन्तीति**। "गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्" (रामा. 2-21-13) इति वाक्यं हिशब्देन स्मारयति। पातकिनां पापफलत्वेन रोग उदेति यथा, तथा तेषामघमपराधलक्षणं व्यसनं, प्रकाशत इत्यन्वयः।।२७।।

लोके सन्त्वसाधवः, नाऽहं तादृशः, यतस्त्वत्पुत्रो न मया रचितं नापि परेण पठत्यत इत्याह - **न मदिति**। तर्हि कस्मादियं मतिरभूदिति तत्राऽऽह-नैसर्गिकीति। तदा तस्मिन् पक्षे ममाऽऽत्मनः स्वरूपाभिमानो मया ग्राहितेयं मतिरिति। तस्मात् कोपं संहरेति।।२८।।

पुत्राय क्रुध्यन्नाह-गुरुणेति। **गुरुमुखी** गुरुमुखादुत्पन्नेयं मतिः।।२९।।

सत्येव मन्मतिः, त्वन्मति रेवाऽसतीति पितरं कटाक्षीकृत्य परिहरति **मतिरिति**। परतो गुर्वादिबोधनप्रयत्नेन स्वतः स्वप्रयत्नेन। तत्र निमित्तमाह-गृहेति। वनादि निवासमन्तरेण गृह एवावस्थानलक्षणं व्रतं येषां ते तथा तेषाम्। ननु "कुटुम्बी शुचौ देशे स्वाध्यायमधीयानः" इति श्रुतेर्गृहस्थानामपि श्रेयः प्राप्त्युपपत्तेरिति तत्राऽऽह-अदान्तेति। अदान्तानामिन्द्रियनिग्रहरहितानां पुरुषाणां गोभिर्वाग्भिः तमिस्रं नरकमुखकल्पं विषयसुखं विशतां भुञ्जानानां तत्राऽपि नूतनापूर्वभोगो नाऽस्तीत्यभिप्रेत्याह-पुनरिति। पुनः पुनर्भुक्तविषयानेव भुञ्जानानामित्यर्थः। अदान्तगोभिरशिक्षिताभिर्वाग्भिर्वेदगताभिस्तमिस्र मतत्त्वार्थविषयमज्ञानम् अन्यथाज्ञानञ्च विशतां गाहमानानां न तत्राऽपि यत्नोऽस्तीत्याह-पुनरिति वा।।३०।।

एतदेव स्पष्टमाह **न त** इति। दुष्टेषु प्रतीतिसुन्दरेषु परिणामविषयेषु आशयो येषां ते तथा। तत्र हेतुमाह बहिरिति। बहिरर्थेषु मुखतः प्रतीयमानार्थेष्वेव भावस्तात्पर्यार्थनिश्चयो येषां ते तथा श्रुतितात्पर्यार्थानभिज्ञा इत्यर्थः। एते स्वार्थगतिं पुरुषार्थस्वरूपं स्वभक्तप्रयोजनसाधकं वा कृष्णं न विदुरित्यन्वयः। अत्र कारणमाह-वाचीति। ईशतन्त्यामीशस्य वेदवाक्लक्षणतन्त्यां ब्राह्मणादिबहुनामाख्यलक्षणनाम दाम्नि बध्दाः। अत्रोदाहरणमाह-अन्धा इति। अन्धैरज्ञैरुपनीयमाना उपदिश्यमानकर्ममार्गाः अन्धाः अज्ञाः उपदिष्टान्यमार्गं यथा न विदु स्तथेति। अनेन "अन्धेनैव नीयमाना यथान्धाः" (कठ. उ. 2-5) इति स्मृतिं स्मारयन्ति।।३१।।

नन्वेवं तर्हि गृहव्रतानां मुक्त्युपायः कः? इत्याह - **नैषामिति**। यावदेषां गृहव्रतानां मतिर्महीयसां निष्किञ्चनानां सन्नासिनां पादरजोभिषेकं न वृणीत तावन्तं कालमुरुक्रमस्याऽङ्घ्रिं न स्पृशति न विषयी करोति। उरुक्रमस्य

अङ्घ्रिस्पर्शस्य कि फलम्? अत्राऽऽह-अनर्थेति। यस्य हररङ्घ्रिस्पर्शोऽन्य फलमनर्थापगम ससारनिवृत्ति। अथवा-अनर्थापगमो यस्मात्पादरजोऽभिषेकादुत्थित प्रकाशिता भवति, तम।।३२।।

## [1]नारद उवाच[1]

इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा।
अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले।।३३।।

आहाऽमर्षरुषाऽऽविष्टः कषायी[2]भूतलोचनः।
वध्यतामाश्वयं वध्यो निस्सारयत नैऋताः।।३४।।

अयं मे भ्रातृहा [3]नूनं हित्वा स्वान् सुहृदोऽधमः।
पितृव्यहन्तु यः पादौ विष्णोर्दासवदर्चति।।३५।।

विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः।
सौहृदं दुस्त्यजं पित्रो[4]रहाद्यः पञ्चहायनः।।३६।।

परोऽ[5]प्यपत्यं हितकृद्यथौषधं स्वदेहजोऽप्यामयवत्सुतोऽहितः।
छिन्द्यात्तदङ्गं यदुताऽऽत्मनोऽहित शेष सुखं जीवति यद्वि[6]वर्जनात्।।३७।।

सर्वैरुपायैर्हन्तव्यः सम्भो[7]जशयनासनैः।
सुहृल्लिङ्गधरश्शत्रुर्मुनेर्दुष्टमिवेन्द्रियम्।।३८।।

नैऋता [8]स्ते समादि[8]ष्टा भर्त्रा [9]वै शूलपाणयः।
तिग्मदं[10]ष्ट्राकरालास्या ताम्रश्मश्रु शिरोरुहाः।।३९।।

नदन्तो भैरवा[11]न्नादांश्छिन्धि भिन्धीति वादिनः।
आसीन[12]ञ्चाऽहनन् शूलैः प्रह्लादं सर्व[13]मर्मसु।।४०।।

---

1 1 A B G H J T V W omit 2 M Ma कृत 3 A B G J T साऽय M Ma शाच्या 4 H V °रजहात्, M Ma रत्यजत प° 5 M Ma °प्यवश्य 6 M Ma °स ° 7 M Ma °गा° W °ज्य° 8 8 H V W °स्त्वvमादिष्टा M Ma °स्ते समुद्दिष्टा 9 H V W त 10 A B G J T दष्ट्र° 11 M Ma °वनाद 12 H V W °नमह° 13 M Ma व°

**श्रीध॰ इतीति।** निरस्यत,[1] निरास्यत्[2] चिक्षेपेत्यर्थः।।[3-]निरस्येति ल्यबन्तपाठे तु उत्तरेणान्वयः[-3]।।३३।।

**आहेति।** अमर्षोऽसहनं, तेन सहितया रुषाऽऽविष्टो व्याप्तः कषायीभूते आताम्रे लोचने यस्य। हे नैऋताः! राक्षसाः!।।३४।।

वध्यत्वे हेतुः **अयमिति।** यतोऽयं मे भ्रातृहा। कुतः? यो विष्णोः पादौ दासवदर्चति, तत्पक्षपातीत्यर्थः। अतः स एवाऽयमित्यन्वयः।।३५।।

अहो! विष्णुरप्यविश्वसनीयं किमिति स्वीकृतवानित्याऽऽह-**विष्णोर्वेति।** [4]अहात् जहौ।।३६।।

ननु तवाऽयमपत्यं कथं वध्यः, तत्राऽऽह-**पर** इति। परोऽप्यौषधमिव हितकृच्चेत् तर्ह्यपत्यमेव ज्ञेयम्। स्वदेहजोऽपि अहितश्चेदामय इव त्याज्यः। आस्तां ममतास्पदस्य कथं [5-]वधः? तत्राऽऽह-स्वयं ममतास्पदं[-5] अङ्गमपि च यत्करचरणादि तदप्यात्मनोऽहितश्चेत् छिन्द्यादेवेत्यर्थः।।३७।।

**सर्वैरिति।** अतस्सर्वैरुपायै र्हन्तव्यः। सम्भोजो **भोजनम्**,भोजनादिषु विषादिप्रयोगै रित्यर्थः। यथा दुष्ट मिन्द्रियं मुनेश्शत्रुः।।३८।।

**नैऋता** इति। तिग्मास्तीक्ष्णा दंष्ट्रा येषां करालान्यास्यानि [6-]भयङ्कराणि मुखानि[-6] येषां ते च, ते च ताम्राणि श्मश्रूणि शिरोरुहाश्च येषाम्।।३९,४०।।

**वीर॰** इतीत्थमुक्त्वोपरतं तूष्णीमासीनं पुत्रं रुषा क्रोधेनान्धीकृतः आत्मा विवेको यस्य स हिरण्यकशिपुः स्वस्योत्सङ्गात् महीतले निरस्य [7]तं पातयित्वा, आह चेत्युत्तरेणाऽन्वयः। निरस्यतीति पाठे न्यपातयदित्यर्थः।।३३।।

अमर्षः असहनं, तत्सहितया रुषा आविष्टो व्याप्तः, अत एव कषायीभूते आताम्रे लोचने यस्य स आह च उक्तवांश्च। तदेवाऽऽह-वध्यतामिति। हे नैऋताः, इत एनं निस्सारयत बहिर्गमयत। अयं बालो वध्यो वधार्हः, अतः आशु वध्यतां हन्यताम्।।३४।।

वध्यत्वे हेतुः यतोऽयं मे मम भ्रातुर्हन्ता। कुतः? योऽयमधमः बालः स्वान् स्वकीयान् सुहृदोऽस्मान् हित्वा पितृव्यस्य [8-]पितृभ्रातुर्हिरण्यक्षस्य[-8] हन्तुः विष्णोः पादौ चरणौ दासवदर्चति, तत्पक्षपातीत्यर्थः। अतस्स एवाऽयमित्यन्वयः। "हित्वाऽसून् सुहृद" इति पाठे, अयं मे भ्रातृहा, कुतः? यद्यस्मात् अधमोऽयं सुहृदः प्रियानसून् प्राणान् हित्वा विष्णवे समर्प्य दासवत्तत्पादावर्चति। अतोऽयमेव प्रह्लादो मे भ्रातृहा इत्यर्थः।।३५।।

---

1 A,B,J omit निरास्यत् 2 A,B,J omit इत्यर्थः। 3--3 A,B,J omit 4. H,V अजहात् 5--5 A,B,J omit 6--6 H,V omit 7. W omits तं 8--8 W omits

मद्दृष्टान्तेन विष्णोरप्यसावसमञ्जसोऽननुकूलः साधु करिष्यति किन्तु? न करिष्यत्येव अव्यवस्थितचित्तत्वादिति भावः। यतोऽसौ पञ्चहायनः पञ्चवर्षवयस्क एव सन् दुस्त्यजं त्यक्तुमशक्यं पित्रोः मातापित्रोः सौहृदमहात् अत्याक्षीत्।।३६।।

ननु तवाऽयं पुत्रः, तत्कथं वध्यः? तत्राह-**परोऽपीति**। परोऽपि शत्रुपक्षप्रभवोऽपि यथौषधं तथा हितकृत् हितकारी चेत्तर्हि सोऽपत्यं पुत्र एव। देहाज्ज्ञातोऽपि आमयवदहितो दुःखकृच्चेत्तर्हि आमयवत्परित्याज्यः। आस्तां, ममतास्पदस्य कथा हि यस्मादङ्गं करचरणादिकमपि सर्पदंशव्रणादिदूषितं सदात्मनोऽहितं दुःखकृच्चे त्तर्हि तदङ्गं छिन्द्यादेव यस्य दुष्टाङ्गस्य विसर्जनात्परिहारात् शेषमवशिष्टमङ्गं सुखं जीवति।।३७।।

अतोऽयं सुहृल्लिङ्गधरः पुत्रवेषधारी शत्रुः यथा दुष्टमिन्द्रियं मुनेः शत्रुः, तद्वद्वर्तमानः सर्वैः गरलादि-मिश्रितसम्भोजनादिभिरुपायैर्हन्तव्यः।।३८।।

एवं भर्त्रा दैत्येन्द्रेण समादिष्टाः ते नैऋताः शूलपाणयः तिग्माः तीक्ष्णाः दंष्ट्राः[1] दन्ताः येषां, करालानि आस्यानि येषां, ताम्राणि श्मश्रूणि शिरोरुहाणि च येषां तादृशः।।३९।।

भैरवान् भयङ्करान्नादान् नदन्तः कुर्वन्तः छिन्धि भिन्धि इति च वदन्तः आसीनमुपविष्टं प्रह्लादं सर्वेषु मर्मस्थानेषु शूलै रहनन् हतवन्तः[2]।।४०।।

**विज०** कषायीकृतलोचनः रक्तनेत्रः।।३३,३४।।

पितृव्यस्य हिरण्याक्षस्य हन्तुः असावसमञ्जसः प्रह्लादः विष्णोः किं वा साधु करिष्यति?।।३५।।

कथमसमञ्जसोऽभूत्तत्राह - सौहृदमिति।।३६।।

परः शत्रुरपि अवश्यं द्वेषेणाऽपि हितकृच्चेत् स एव सुतः यथा औषधं तिक्तत्वेन "हरीतकी मनुष्याणां मातेव हितकारिणी" इति वचनात्।स्वदेहजोऽपि सुतोऽपि अहितोऽपकारी चेत्तं छिन्द्यादामयवत्। किञ्च आत्मनः स्वस्य यदहितमङ्गं सर्पदष्टं तच्छिन्द्यम्। तदेव विशिनष्टि यद्विवर्जनादिति। शेषमङ्गं सुखं जीवतीत्यन्वयः।।३७।।

सम्भोगो[3] भोजनम्।।३८,३९।।

भैरवं नादमुद्दिश्य।।४०।।

---

1. W omits दंष्ट्राः 2 W omits हतवन्तः 3 A,B °जो

परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि।
युक्तात्मन्यफला आसन्नपुण्यस्येव [1]सत्क्रियाः।।४१।।

प्रयासेऽपहते तस्मिन् दैत्येन्द्रः परिशङ्कितः।
चकार तद्वधोपायान्निर्बन्धेन युधिष्ठर!।।४२।।

दिग्गजैर्दन्द[2]शूकेन्द्रैः [3]अभिचारावपातनैः।
मायाभिस्सन्निरोधैश्च गरदानैरभोजनैः।।४३।।

हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि।
चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाऽभ्यपद्यत।
न शशाक यदा हन्तुमपापमसुरस्सुतम्।।४४।।

एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः।
तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा।।४५।।

वर्तमानोऽविदूरे [4]वा बालोऽप्यजडधीरयम्।
न विस्मरति [5]मेऽनार्यं शुनश्[6]शेप इव प्रभुः।।४६।।

अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः।
नूनमेतद्विरोधेन मृत्युर्मे भविता न वा।।४७।।

इति [7]तच्चिन्तया किञ्चिन्म्लानश्रियमधोमुखम्।
शण्डामार्कौ वौशनसौ विविक्त इति होचतुः।।४८।।

**श्रीध० पर** इति। परे ईश्वरे युक्तःसमाहित आत्मा मनो यस्य तस्मिन् [8]प्रह्लादे तेषां [9]नैऋतादीनां प्रहारा निष्फला [10]आसन् जाताः। तत्र हेतवः। ब्रह्मणि निर्विकारेऽनिर्देश्येऽविषये भगवति निरतिशयैश्वर्येऽखिलात्मानि [11-]शास्त्रवादिनाम[-11]पि नियन्तर्येवम्भूते परेऽपुण्यस्य निर्दैवस्य सत्क्रिया महोद्यमा इव।।४१,४२।।

---

1 M,Ma त° 2 A,B,G,J,T शूकैश्च 3. H,V आ 4 A,B,G,J,M,Ma,T वै 5 H,V,W माऽ: 6. H,V °फ 7. A,B,G,J,T तं चि° 8. H,V omit प्रह्लादे 9. H,V omit नैऋतादीनां 10 H,V omit आसन् 11- -11 A,B,J शस्त्रादीना°

**दिग्गजै**रिति। [1-]दन्दशूकैस्सर्पैः[-1]। अभिचाराः कृत्यादयः। अवपातनानि गिरिशृङ्गादधःपातनानि तैः। [2-]मायाभिः शम्बरनिर्मिताभिः[-2] अवटादिषु सन्निरोधैश्च।।४३।।

**हिमेति।** पर्वताक्रमणैः पर्वतानां तदुपरिक्षेपैः। बहुवचनै रभिचाराद्यावृत्तिं दर्शयति। तद्धननं कर्तु नाऽभ्यपद्यत न प्राप नाऽशक्नोदित्यर्थः।।४४।।

चिन्तामेवाऽऽह-**एष** इति त्रिभिः। मे मया असाधुपरुषं यथा भवति तथोक्तः। असद्धर्मैरपकारै-रभिचारै र्वा।।४५।।

**वर्तमान** इति। अविदूरे [3]समीपे वर्तमानोऽपि बालोऽप्ययमजडधीर्निर्भयचित्तो मेऽनार्यमन्याय्यं शत्रुत्वं वा न विस्मरति। अजीगर्तस्य मध्यमपुत्रः शुनश्शेपो नाम पितृभ्यां हरिश्चन्द्राय विक्रीतस्सन् यथा तयो रपकारमविस्मरन् तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रान्तरमापन्नः, तद्वत्। यद्वा, स्वभावापरित्यागे दृष्टान्तः शुन श्शेफः पुच्छमिवेति।।४६।।

**अप्रमेय** इति। अप्रमेयोऽपरिमेयोऽनुभावो यस्य [4-]अमरो मृत्युशून्यश्च[-4]। [5-]न कुतश्चित् भयं यस्य[-5]। न वा भविता अन्यथा मृत्युर्नैव भविष्यतीत्यर्थः।।४७।।

**इतीति**। औशनसौ उशनसः पुत्रौ नीतिज्ञौ। विविक्ते एकान्ते।।४८।।

**वीर॰** अनिर्देश्ये चेतनाचेतनसजातीयत्वेन निर्देष्टुमशक्ये अखिलात्मनि हन्तृहन्तव्याद्यन्तरात्मनि पूर्ण षाड्गुण्ये परे ब्रह्मणि युक्तः [6]नियुक्तः आत्मा मनो यस्य तस्मिन् प्रह्लादे नैरृतैः कृता [7]अपि शूलघातादयो मारणोपायाः अफलाः व्यर्थाः बभूवुः। मरणहेतवो दुःखहेतवश्च न बभूवुरित्यर्थः। यथा अपुण्यस्य पापरतस्य कृता अपि सत्क्रियाः सन्ध्योपासनादयः अफलास्तद्वत्, वैफल्यहेतुगर्भं विशेषणम्। अखिलात्मनि युक्तात्मनीति। अयं भावः-कर्मायत्तदेहसम्बन्ध प्रयुक्तसुखदुःखभोक्तृत्व तदनुगुणपुण्यपापकर्तृत्वानुगुणं जीवपर्यन्तदेहेन्द्रियादिप्रेरणरूप मखिलात्मत्वमत्र विवक्षितम्। तत्र हन्त्रान्तरात्मतया हन्तव्यदुःखजनननानुगुणव्यापारानुगुणं नियमयन्नपि पुन र्हन्तव्यस्य हन्तृव्यापारजन्यदुःखाननुभावानुगुणतया नियमयतीति, कथमेकस्य एवंविधं परस्परविरुद्धं नियमनमिति शङ्कानिराचिकीर्षयाऽनिर्देश्य इत्युक्तम्। लोकविलक्षणविविधविचित्रशक्तेरीदृशं नियन्तृत्वमुपपन्न मित्यभिप्रायः।।४९।।

1- -1 H,V omit 2- -2 H,V omit 3 H,V omit समीपे 4- -4 H,V omit 5- -5 A omits 6 W निहितः 7 W omits अपि

एवं शूलघातादिरूपमरणोद्योगरूपे प्रयासे अपहते व्यर्थे सति दैत्येन्द्रो हिरण्यकशिपुः परिशङ्कितः किमहो ! अयं शूलघातादिभिरपि नाऽहन्यत किम् ? अस्मादेव मम मृत्युर्भविष्यतीत्याशङ्कितः, हे ! युधिष्ठिर ! निर्बन्धेन तस्य प्रह्लादस्य वधोपायान् चक्रे ।।४२।।

विविधोपायानेव प्रपञ्चयंस्तैरप्यहतत्वमाह **दिग्गजैरिति**। दिग्गजाक्रमणैः दन्दशूकेन्द्रैः सर्पश्रेष्ठदंशनैः, अभिचारैः मारणहोमैः अवपातनैः गिरिशृङ्गेभ्योऽधःपातनैः मायाभिः अकस्मादशनिपातनादिभिः सन्निरोधैः नवरन्ध्रपिधानैः गरदानैः विषप्रयोगैः अभोजनैरुपवासैः ।।४३।।

हिमादिषु पातनैः, पर्वताक्रमणैः पर्वतानां तदुपरिनिक्षेपैः एवं विधैरुपायैरसुरैः प्रयोज्यकर्तृभिः यदा [1-]निरपराधं[-1] सुतं हन्तुं न शशाक नाऽशक्नोत् तदा तत्कर्तुं तद्धननं कर्तुं नाऽभ्यपद्यत उपायान्तरं न लेभे इत्यर्थः। प्रत्युत दीर्घतमां चिन्तां प्राप्तः ।।४४।।

चिन्तामेव प्रपञ्चयति-**एष** इति। एष बालो मे मया बह्वसाधु यथा भवति यथोक्तः तथा वधोपायाश्च निर्मिताः कारिताः। असद्धर्मैरभिचारादिभिः तैस्तैर्द्रोहैः शूलघातादिभिश्च मुक्तोऽविहतः स्वेनैव तेजसा माहात्म्येन उक्तोपायेभ्योऽविदूर एव वर्तमानो बालोऽप्यय मजडा निपुणा धीर्यस्य तादृशः मे मम अनार्यं द्रोहं न स्मरति। शुनश्शेफ इव यथा शुनश्शेफाख्यः पितृभ्यां हरिश्चन्द्राय विक्रीतस्सन् तयोरपकारं विस्मरन् तद्विपक्षं विश्वामित्र माश्रित्य गोत्रान्तरमापन्नः, तद्वत्।यद्वा स्वभावापरित्यागे दृष्टान्तः-शुनश्शेफः पुच्छमिवेति। प्रभुः जितेन्द्रियः ।।४५,४६।।

अप्रमेयोऽपरिमेयोऽनुभावो यस्य, न कुतश्चिद्भयं यस्य, अतएवाऽमरो मरणरहितः, एतस्य विरोधेन हेतुना नूनं ममैव मृत्युः भविता भविष्यति न वा भविता एतद्विरोधेन मम मृत्व्भावे हेत्वन्तरेण नैव भविष्यतीत्यर्थः ।।४७।।

इतीत्थं तच्चिन्तया पुत्रविषयकचिन्तया म्लानश्रियं निस्तेजस्कं किञ्चिदधःकृतमुखं तं हिरण्यकशिपु मौशनसौ उशनसः [2]शुक्रस्य पुत्रौ [3]शण्डामार्काख्यौ विविक्ते निर्जने देशे [4-]तस्य प्रतिष्ठाभङ्गादिति भावः[-4]। इति वक्ष्यमाणप्रकारेण ऊचतुः ।।४८।।

**विज०** अनिर्देश्यत्वादिगुणशालिनि हरौ युक्तात्मनि प्रयोजितमनस्के प्रह्लादे अपुण्यस्येव पापिन इव तत्क्रियाः, तेषां नैऋतानां ताडनादिक्रियाः ।।४१,४२।।

1- -1 W omits 2. W omits शुक्रस्य 3 W शण्डामार्कौ 4- -4 W omits

वधोपायमाह **दिग्गजै** रित्यादिना। अवपातनं गिरिशृङ्गादधःपातनं, संनिरोधैः अनिर्गमगर्तगृहे निक्षिप्य पीडनैः, **पर्वताक्रमणैः** पर्वतारोहणैः उपरि पर्वतपातनैर्वा।।४३,४४।।

तत्कर्तुं हननं कर्तुम्।।४५।।

असद्धर्मैः असतां योग्यैः, अविदूरे समीपे विदूरे वा वर्तमानोऽजडधीः पटुतरबुद्धिः अनार्यं मूर्खकर्म। अन्याय्यमिति पाठे नयशास्त्रविरुध्दं मह्यमपरं शतं दत्तं अहमेनं विशसिष्यामीत्याद्यजीगर्तकृतकर्म शुनश्शेपेन यथा सोढं तथेति।।४६,४७।।

इति वक्ष्यमाणप्रकारं हेत्युच्यमानेऽर्थे तात्पर्यातिशयं वक्ति।।४८।।

**जितं त्वयैकेन जगत्त्रयं[1] भ्रुवो विजृम्भणत्रस्तसमस्तधिष्ण्यपम्।**
**न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम्।।४९।।**

**इमन्तु पाशैर्वरुणस्य बद्धं[2] निधेहि भीतो न पलायते यथा।**
**बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति।।५०।।**

**तथेति गुरुपुत्रोक्त मनुज्ञायेदमब्रवीत्।**
**धर्मा ह्यस्योप ष्टव्याः राज्ञां ये गृहमेधिनाम्।।५१।।**

**धर्ममर्थञ्च कामञ्च नितरां[3]मनुपूर्वशः।**
**प्रह्लादायोचतू राजन् प्रश्रितावनताय च।।५२।।**

**श्रीध० जितमिति**। भ्रुवोर्विजृम्भणेनैव त्रस्ताः [4]समस्ताः धिष्ण्यपा[5] लोकपालाः यस्मिंस्तस्य[6] तव चिन्त्यं न चक्ष्महे न पश्यामः पदमालम्बनं नैवाऽस्ति। यद्वा शिशूनां वृत्तं गुणदोषयोः पदं विषयो न भवतीत्यर्थः।।४९।।

तथाऽपि तु बन्धनमस्योचितमित्याहतुः-**इमन्त्विति**। यावद्गुरुर्भार्गव आगमिष्यति तावद्बद्ध्वा निधेहि। ततः किमत ऊचतुः। [7]यतः पुंसो बुद्धिश्च वयसा [8-]तथा आर्यसेवया[-8] समीचीना भवति।।५०।।

---

1. H,V प्रभो 2. A,B,G,J,M,Ma,T बद्ध्वा 3. A,B,G,J,M,Ma,T राज्ञानु° 4 H,V omit समस्ताः 5. H,V omit लोकपालाः 6 H.V omit तव
7 H,V omit यतः पुंसो 8- -8 H,V omit

**तथेति**। अनुज्ञाय तथेत्यङ्गीकृत्य।।५१।।

**धर्ममिति**। ततश्च तौ प्रह्लादाय धर्मादिकमूचतुः। प्रश्रितश्चासाववनतश्च, तस्मै।।५२।।

**वीर०** तदेवाऽऽह-**जितमिति**। तव भ्रुवोर्विजृम्भणेन चलनमात्रेण **त्रस्ता भीतास्सर्वे धिष्ण्यपाः** लोकपालाः यस्मिन् तज्जगत्रयं त्वयैकेनाऽसहायेन जितम्, एवम्भूतस्य तव हे **नाथ**! प्रभो! चिन्त्यं[1] चिन्तनीयं न चक्ष्महे न पश्यामः, शिशूनां वृत्तमिति शेषः। तद्गुणदोषयोः पदं विषयो **न वै न** भवतीत्यर्थः।।४९।।

अत इमं बालं यावद्गुरुर्भगवान् भार्गवः शुक्र आगमिष्यति तावद्वरुणस्य पाशैः बद्धं निधेहि कुरु भीतोऽयं यथा न पलायते तथा बद्धं निधेहीत्यर्थः। ततः किम्? तत्राऽऽहतुः वयसा आर्याणां सेवया च पुंसो बुद्धि र्भविष्यति।।५०।।

एवं गुरुपुत्रोक्तं तथेत्यनुज्ञायाऽङ्गीकृत्य दैत्येन्द्र इदं वक्ष्यमाणमब्रवीत्। तदेवाऽऽह-धर्मा इति अस्य बालस्य धर्मा उपदेष्टव्याः। के ते? ये राज्ञां, ये च गृहस्थानां, ते।।५१।।

एवमुक्तौ गुरुपुत्रौ तथैवोपदिदिशतुरित्याह नारदः-**धर्ममिति**। धर्मार्थकामस्वरूपाणि[2] साधनानि[3] नितरामत्यन्तमनुपूर्वशः। हे राजन्! प्रश्रयेण विनयेन अवनताय नम्राय प्रह्लादायोचतुरुपदिदिशतुः।।५२।।

**विज०** धिष्ण्यपाश्चन्द्रादित्यादयो, लोकपाला वा, चक्ष्महे पश्यामः। शिशूनां प्रेङ्खायां शयनशीलानां बुद्धिविकासरहितानां वा तत्करणं गुणदोषयोः पदमास्पदं न वै हि गुणदोषग्रहणबुद्धिविकासाभावादित्यर्थः। शिशूनां गुणदोषयोः पदं नास्तीति वा।।४९।।

तर्हि का परबुद्धिरित्यत्रोच्यते-**इममिति**। तुना अधुनेयमेव बुद्धिरिति विशिनष्टि, कियन्तं कालमेव मिति तत्राऽऽह-यावदिति। तावदिति शेषः। ततश्च किं तत्राऽऽह-बुद्धिश्चेति। पापजननी च वयसा कालविशेष-विशिष्टेनाऽऽयुर्लक्षणेन आर्याणां सेवया, स्यादिति शेषः।।५०-५२।।

***यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम्।***
***न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम्।।५३।।***

---

1 A,B,T omit चिन्त्यं 2 W °पान् 3 W °नान्

***यदाऽचार्यः परावृत्तो गृहमेधीयकर्मसु।**

**वयस्यैर्बालकै स्तत्र सोपहूतः कृतक्षणैः।।५४।।**

**अथ तान् श्लक्ष्णया वाचा प्रत्याहूय [1]महाबुधः।**

**उवाच विद्वांस्तन्निष्ठां कृपया प्रहसन्निव।।५५।।**

**ते तु तद्गौरवात्सर्वे त्यक्तक्रीडा परिच्छदाः।**

**बाला [2]अदूषितधियो द्वन्द्वारामेरिते हितैः।।५६।।**

**पर्युपासत राजेन्द्र तन्न्यस्त हृदयेक्षणाः।**

**तानाह करुणो मैत्रौ महाभागवतोऽसुरः।।५७।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

सप्तमस्कन्धे प्रह्लादानुचरिते पञ्चमोऽध्यायः।।५।।

**श्रीध॰ यथेति**। [3]यथायथावत्। त्रिवर्गम[4]मुपशिक्षितमपि न साधु मेने तत्तां शिक्षाञ्च। कुतः ? द्वन्द्वै रागद्वेषादिभि र्विषयेष्वारमणं येषां तैरुपवर्णिताम्।।५३।।

**यदेति**। परावृत्तोऽन्यत्र गतः स उपहूतः [5-]अत्र "सोऽचि लोपे चेत्पादपूरणम्" (अष्टा. 6-1-134) इति सूत्रेण[-5] सन्धिः पादपूरणार्थः। क्रीडार्थं कृतक्षणैः कृतोत्सवैः, लब्धावसरैरिति वा।।५४।।

**अथेति**। [6]तन्निष्ठां तेषां निष्ठां जन्ममरणादिलक्षणां विद्वान्।।५५।।

**ते इति**। द्वन्द्वारामाण[redacted]मीरितैरीहितैश्च न दूषिता धीर्येषां यतो बालाः।।५६।।

**पर्युपासतेति**। तस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च यैः।।५७।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां व्याख्यायां

पञ्चमोऽध्यायः।।५।।

---

* व्यावहारप्रसिद्ध्यर्थं विकल्पोऽत्र नृभिःकृतः। यथा भात्यस्य सत्यार्थं प्रत्याभासश्च दिग्भ्रमः।। The above additional verse is found between V 53 & 54 in H,V editions only 1. W महान्सुधीः 2 A,B,G,J,M,Ma,T न दू॰ 3. H,V omit यथा 4 H,V ॰मनु॰ 5- -5 A,B,J omit 6. H,V omit तन्निष्ठां

**वीर०** तद्यथावत् त्रिवर्गमात्मने स्वस्मै उपशिक्षितमपि साधु न मेने नाऽमन्यत तच्छिक्षां च कुतः ? द्वन्द्वै रागद्वेषादिभिः विषयेष्वारमणं येषां तैरुपवर्णिताम्।।५३।।

किञ्च। यदा आचार्यः गार्हस्थ्यधर्मेषु परावृत्तः परोक्षं प्रवृत्तः, व्यासङ्गान्तरपर इत्यर्थः। तदा कृतक्षणैः लब्धावकाशैःवयस्यैः समानवयस्कैः बालैः तत्रोपहूतः सः प्रह्लादः।।५४।।

महान् सुधीर्विद्वान् श्लक्ष्णया मधुरया वाचा तान् बालकान् प्रत्याहूय सम्बोध्य कृपया प्रहसन्निव तन्निष्ठां विज्ञानमार्गनिष्ठाम् उवाच।।५५।।

ते तु बालकास्सर्वे तद्गौरवात् तद्वचनगौरवात् त्यक्ताः क्रीडापरिच्छदाः क्रीडोपकरणानि यैः द्वन्द्वारामाणा मीरितैरीहितैश्च न दूषिता धीर्येषां ते।।५६।।

हे राजेन्द्र! तस्मिन्नेव प्रह्लादे न्यस्तं हृदयं मन ईक्षणञ्च यैस्ते तं प्रह्लादमेव पर्युपासत शुश्रूषवः परिवेष्ट्योपविविशुरित्यर्थः। तान्पर्युपासीनान् कारुण्यमैत्र्ययुक्तो महाभागवतोऽसुरः प्रह्लाद आह।।५७।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां पञ्चमोऽध्यायः।।५।।

**विज०** यथा द्वन्द्वारामोपवर्णितां रागद्वेषादिव्यापृतबुद्धिभिर्व्याख्याताम्।।५३।।

यदाऽचार्योऽध्यापनात्परावृत्त उपरतः गृहमेधीयकर्मसु अग्निहोत्रादिलक्षणेषु व्यापृतो वा तत्र तदा कृतक्षणैः कृतावसरैः वयस्यैर्बालकैः स उपहूतः, क्रीडार्थमिति शेषः। "सोक्षिन्नुभद्राक्षुमता सोचिन्नु सर्वा", "सैष दाशरथी रामः" इत्यादिषु द्रष्टव्योऽयं प्रयोगः।।५४।।

अथाऽऽगतस्सन् तस्यां क्रियायां निष्ठामिच्छां विद्वान् तेषां वयस्यानां निष्ठां स्वस्मिन् स्नेहविशेषं वा।।५५।।

द्वन्द्वारामैरितैर्वचनैरीहितैः प्रवृत्तिभिश्च न दूषितधियः।।५६।।

स एषोऽसुः "स एष प्राणः" (बृह.उ. 1-2-3) इति श्रुतेः मुख्यप्राणे रमत इत्यसुरः।।५७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे पञ्चमोऽध्यायः।।५।।

* * * *

# षष्ठोऽध्यायः

## प्रह्लाद उवाच

*हन्तार्भका मे शृणुत वचो व स्सर्वत शिवम्।
वयस्यान् पश्यत मृतान् क्रीडान्धा[1] मा प्रमाद्यथ[2]।।१।।

न [3-]पुरा विवशं [-3]बाला आत्मनो[4]ऽर्थे प्रियैषिणः।
गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम्।।२।।

यदुक्त्या[5] न प्रबुध्येत सुप्तस्त्वज्ञाननिद्रया।
न श्रद्दध्यान्मतं तस्य यथान्धो ह्यन्धनायकः।।३।।

कश्शत्रुः क उदासीनः किं मित्रं चेह[6] आत्मनः।
भवत्स्वपि नयैः[7] किं स्याद्दैवं सम्पद्विपत्[8]पदम्।।४।।

यो न हिंस्याद्धर्मका[9-]ममात्मानं स्वजने व[-9]शः।
पुनः श्रीलोकयो[10] हेतुः [11-]स मुक्तान्ध्यो[-11]ऽतिदुर्लभः।।५।।

कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम्।।६।।

यथा[12] हि पुरुषस्येह विष्णोः पादोपसर्पणम्।
यदेष सर्वभूतानां प्रिय आत्मेश्वरस्सुहृत्।।७।।

---

* इत आरभ्य पञ्चश्लोकाः J,T,W, प्रकाशेषु न दृश्यन्ते । परन्तु विजयध्वजतीर्थैनैव व्याख्याताः।। 1. H,V °डन्तो 2 H V °द्यन 3--3 H,V पुराऽपि वयं बा ° 4 H,V नोऽथ 5 H,V °क्त्वा 6 H,V कोऽर्थं 7 H,V विनयैः 8. H,V त्प्र ° 9 H,V °भावात्मनो व जनस्य च 10. H,V त्रिलोके यो हे 11 H,V सम्मतोऽर्थोऽति° 12 M,Ma °दा

सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम्।
सर्वत्र लभ्यते दैवा[1]द्यथादुःख मयत्नतः ।।८।।
तत्प्रयासो न कर्तव्यः [2-]यत आयु[-2]र्व्ययः परम्।
न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम्।।९।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान्। अनुकम्प्य परं तत्त्वं नारदोक्तमुपादिशत्।।

निरर्थक क्रियालापैरायुर्व्ययमजानताम्। प्रह्लादस्सदयं प्राह धर्मं भागवतं कृती।।

**कौमार** इत्यादिना। इहैव मानुषजन्मनि धर्मानाचरेत्; यतोऽर्थदमेतत्। तत्र च कौमार एव, यतस्तदप्यध्रुवम्। न चैवम्भू[3]ते जन्मान्त[4]रे, यतो दुर्लभम्। तत्र धर्मानेवाऽऽचरेन्न सुखार्थे[5] प्रयासान्। तत्र भागवतानेव न काम्यान्।।१-६।।

इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति-**यथा** हीति चतुर्भिः। इह प्रुरुषस्य विष्णोः पादोपसर्पणमेव यथानुरूपं योग्यमित्यर्थः, यद्यस्मादेष प्रिय इत्यादि।।७।।

ननु भोगोद्यमः कथं त्याज्य इति चे त्तत्राऽऽह **सुखमिति**। सर्वत्र पश्चादावपि। दैवात् पूर्वादृष्टादेव।।८।।

**तदिति**। अतस्तदर्थं प्रयासो न कर्तव्यः, यतः प्रयासात्परं केवलमायुषो व्यय एव, यतस्तथा तेन प्रकारेण क्षेमं न प्राप्नोति।।९।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं दैत्यकुमारैः पर्युपासितो महाभागवतः प्रह्लादः तेभ्यः करुणयाऽनन्तस्थिरफलब्रह्मानन्दानुभवसाधन-भागवतधर्मानुपदिदिक्षुः उपदेक्ष्यमाणधर्मप्रतिष्ठापनाय तद्धेतुवैराग्यजननाय च वैषयिकसुखानामल्पास्थिरत्वं दुःखगर्भत्वम्, अत एव हेयत्वमयत्नलभ्यत्वञ्च विवक्षुस्तावन्मनुष्यजन्मन एव भागवतधर्माचरणार्हत्वं तत्राऽप्यस्थिरत्वेन बाल्यात्प्रभृत्येव तद्धर्मानुष्ठानस्य कर्तव्यत्वञ्चाऽऽह-**कौमार** इति। इह मनुष्यजन्मन्येव प्राज्ञः हेयोपादेयविभागाभिज्ञः पुमान् कौमारे बाल्ये एव, तत्प्रभृतीत्यर्थः। भागवतान् भगवत्सम्बन्धिनः भगवत्प्राप्तिसाधनान् धर्मानेवाऽऽचरेत्।

1 H,V °द्व° 2--2 M,Ma आयासायुर्व्ययः। 3 A,B,J °तं 4. A,B,J °रं 5 H,V °र्थं

भगवच्छब्देन तेषां निष्फलत्वशङ्का प्रत्युक्ता। अननुष्ठेयत्वशङ्काऽपि उदस्यते[1]। तथाहि-"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय! भगवच्छब्दस्सर्वकारणकारणे। सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः। नेता गमयिता स्रष्टा गकारार्थस्तथा मुने। ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः। ज्ञानशक्तिबलैश्वर्य वीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयै र्गुणादिभिः" (विष्णु. पु. 6-5-72 to 79) इत्यादिना श्रीमत्पराशरोक्तप्रत्यक्षरसमुदायनिर्वचनावगताः सम्भर्तृत्वनेतृत्वगमयितृत्वस्रष्टृत्वसर्वशरीरकत्वसर्वभूतान्तरान्तरात्मत्वनिरस्तनिखिलदोषत्वषाड्गुण्यपूर्णत्वादयोऽर्थाः अत्र विवक्षिताः। तत्र सम्भरणं नामोपकरणसंविधानं, तच्च प्रकृतिपुरुषकालानां कार्योत्पत्तियोग्यतापादनरूपम् ; भर्तृत्वं निरुपाधिकस्वामित्वम्, नेतृत्वं गमयितृरूपं स्थितिकर्तृत्वं, गमयितृत्वं सङ्गमयितृत्वरूपं संहर्तृत्वं, स्रष्टृत्वमुद्गमयितृत्वरूपं सृष्टिकर्तृत्वम्, यशो गुणवत्ता प्रथा, श्रीर्भोगसम्पत्, वैराग्यं विरक्तिः, सा च परिपूर्णत्वादनादररूपा। एवञ्चानुष्ठितैर्धर्मैः प्राप्यस्य भगवत एवंविधत्वात्, तत्प्राप्तेः निःश्रेयसरूपत्वात् तत्प्राप्तिसाधनभूताधर्माः परमपुरुषार्थार्थिभिरवश्यमनुष्ठेयाः। ते च बाल्यादारभ्यैव कर्तव्या इत्यर्थः। इहैवेत्यनेन मनुष्यजन्मन एव भगवद्धर्माचरणोपयुक्तत्वम्, अन्यस्य तु तदननुगुणत्वञ्चाऽभिप्रेतम्। तत्राऽपि पुरोवर्तिपरामर्शेन इहशब्दप्रकृतिभूतेन इदंशब्देन अधुना वर्तमानमनुष्यजन्मन्येव भगवद्धर्मकर्तव्यताऽभिप्रेता। ननु अन्यस्मिन्नपि मनुष्यजन्मनि तेषां कर्तुं शक्यत्वात्, किं विशेषेणाऽधुनिक एव[2] जन्मनि कर्तव्यतोच्यते? इत्यत आह-दुर्लभं मानुषं जन्मेति। विविधविचित्रपुण्यपापात्मकर्मभिः देवतिर्यङ्मनुष्यस्थावरादिरूपेण संसरतो जीवस्य नियमेन प्रतिजन्म मानुषं जन्मैवेति विश्वासहेतोरभावात् । दुर्लभं मानुषं जन्म सुकृतपरिपाकविशेषलब्ध[3]मिति. तत्रैव भगवद्धर्मानाचरेदिति भावः। ननु किं विशेषेण कौमार एवाऽऽचरेत्- इत्युच्यते । यथेष्टं विषयभोगानन्तरं चतुर्थे वयसि तेषां कर्तुं शक्यत्वात् इत्यत आह-तदप्यध्रुवमिति। चतुर्थवयःपर्यन्तजीवनहेतोर्विश्वसनीयस्याभावात् कौमारात्प्रभृत्येवाऽऽचरेदिति भावः। ननु चिरकालसाध्याभगवद्धर्माः कथमस्थिरेण मनुष्यजन्मना[4] निर्वर्त्यन्ते? कथन्तरां निःश्रेयसप्राप्तिः? अत आह-अर्थदमिति। यद्यप्यध्रुवं तथाऽप्यर्थदमित्यर्थः। अयं भावः-यद्यप्यध्रुवं तथाऽपि चिरकालजीवननिमित्ते कर्मण्यारब्धभगवद्धर्मविरोधिकर्माभावे च सति यथावत्फलपर्यन्तभगवद्धर्मोपसंहारद्वारा निःश्रेयसरूपनिरतिशयपुरुषार्थदं; चिरजीवनहेत्वभावे वा आरब्धभगवद्धर्मविरोधिकर्मसद्भावेऽपि

1. W °युं 2 W adds तत् 3. A,B,T, °षाल्ल° 4 W मानुष

वा "नेहाऽभिक्रमनाशोऽस्ति" (भ.गी.2.40), "न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति" (भ.गी. 6-40) इत्यादिभगवदुक्तरीत्या जन्मान्तरे यथावद्भगवद्धर्मोपसंहारद्वारा निःश्रेयसरूपार्थदं भवतीति। अत्र "सर्वं वाक्यं सावधारणम्" इति न्यायेन अब्भक्षो वायुभक्ष इत्यादिवत्कौमार एव भागवतान् धर्मानेव, इहैव इत्यवधारणमभिप्रेतम्।।१-६।।

तत्र भागवतानेव धर्मानाचरेदित्यवधारणं तावदुपपादयति-**यथा हीति।** हि तथा हीत्यर्थः। यथाशब्दो योग्यताद्योतकः। इह मनुष्यजन्मनि विष्णोः परमपुरुषस्य[1] पादयोरुपसर्पणं भजनं यथायोग्यं तदेव युक्तमित्यर्थः। कुतः यद्यस्मात् एष परमपुरुषः सर्वभूतानामात्मेश्वरः अन्तःप्रविश्य प्रशासनपूर्वकं भर्ता शरीरस्याऽऽत्मानुवर्तनं युक्तमिति भावः। नन्वात्माऽपि अपुरुषार्थरूपत्वान्नाऽनुवर्तनीयोऽत आह–प्रिय इति। प्रियः इष्टतमः, निरतिशयानन्दरूप इत्यर्थः। आनन्द एव हीष्टः, स एव हि पुरुषार्थरूप इति भावः। न त्वेवम्भूतोऽपि निष्कृपत्वादनुवर्तमानान् प्रख्यापयेत्तत्राऽऽह-सुहृदिति। "एष ह्येव साधुकर्मकारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" (कौ.षी.उ. 2-8) इति श्रुत्युक्तरीत्या स्वानुवृत्त्युपक्रममात्रेणाऽऽविर्भूतपरमकारुण्ययुक्तउत्तरोत्तरं स्वानुवृत्तिप्रवर्तनारूप हितकारीत्यर्थः।।७।।

विष्णोः पादोपसर्पणमेव युक्तमित्यनेन वैषयिकसुखसाधनयत्नो न युक्त इत्युक्तम्। तदेव सहेतुकं सदृष्टान्तञ्चोपपादयन्निहैवेत्यवधारणमप्युपपादयति–**सुखमिति**। हे दैत्याः! देहिनां देहयोगेन देहसम्बन्धमात्रेण ऐन्द्रियकं सुखं सर्वत्र पश्वादिजन्मस्वपि आधुनिकयत्नमन्तरेणाऽपि दैवात्प्राचीनकर्मणैव लभ्यते। तत्र दृष्टान्तः यथाऽसुखमिति। असुखं दुःखं यथा यत्नमन्तरेणाऽपि दैवादेव लभ्यते, तथा वैषयिकं सुखमपीत्यर्थः। सर्वत्र लभ्यते इत्यनेन वैषयिकसुखलाभः सर्वजन्मसाधारणः। भगवद्धर्मलाभस्तु मनुष्यजन्मासाधारण इत्युक्तं भवति।।८।।

यतो वैषयिकं सुखं सर्वजन्मसाधारणं तच्च दैवादेव सुलभमसुखवत्। तस्मात्प्रयासो वैषयिकसुखप्रयासो न कर्तव्यः। एवमविजानताकृतोऽपि प्रयासः केवलमायुर्व्ययकर इत्याह–यत इति । यतो वैषयिकसुखार्थात्प्रयासात् परं केवलमायुःक्षय एव, नाऽन्यत्किञ्चिदस्ति प्रयोजनमित्यर्थः। ननु जन्मान्तरे पुनरैन्द्रियक सुखलाभाय कर्तव्य एव यत्नः। तत्राऽऽह-न-तथेति। यद्यपि कृतोऽपि तदर्थप्रयासो जन्मान्तरीय वैषयिकसुखसाधनः, तथाऽपि तथा तद्वत्क्षेमं न प्राप्नोति। कथम्? यथा मुकुन्दचरणाम्बुजं, भजन्निति शेषः, यथा भगवच्चरणाम्बुजं भजन् पुमान् निश्शेषदुःखनिवृत्तिपूर्वकं नित्यनिरुपाधिकनिरतिशयापरिच्छिन्नब्रह्मानन्दानुभवरूपं क्षेमं प्राप्नोति तथा

1 A,B,T, पुरुषार्थस्वरूपस्य।

वैषयिकसुखार्थं यतमानस्तादृशं क्षेमं न विन्दते। किन्तु दुःखमिश्रानित्यसोपाधिकात्यल्पमिदानीमनुभूयमान-सजातीयं प्राप्नोतीत्यर्थः।। १।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मुकुन्दचरणारविन्दनिरन्तरसेवैव इहामुत्रानश्वरानन्दनिदानम्, नाऽन्यत्। अतस्सैव बुभूषुभिरनुदिनं कर्तव्येति विधीयतेऽस्मिन्नध्याये। तत्र प्रह्लादो बालकान् किमाहेत्याशङ्क्याऽऽह **हन्तेति**। बालानुकम्पायां वाक्यारम्भे वा तद्वचःश्रवणात्किं फलं स्यादिति तत्राऽऽह - व इति। वः सर्वतस्सर्वस्मात् शिवं सुखं,स्यादिति शेषः। कीदृशं वच इत्यतो वाऽऽह - व इति। शिवं शुभं मङ्गलम्। ननु कस्मान्मङ्गलमिति तत्राऽऽह वयस्यानिति। संसारविरक्तिजनकत्वेन पुरुषार्थहेतुत्वान्मङ्गलमित्यर्थः। अनेन अधुनाऽस्माकं बाल्यम्, उत्तरत्र श्रेयस्सम्पादनाय प्रयतामहे इत्याशा निरस्तेति ज्ञायते, यतोऽस्मदायुः कृतान्तविलुलितम् तस्मात्क्रीडासक्तत्वेन युष्मद्धितविमर्शप्रमादो न कार्य इत्याह-क्रीडान्धा इति।।१।।

ननु बालानां लीलान्धत्वं स्वभाव इति तत्राऽऽह - **नेति**। इतः पुरातना बालाः अन्तःकरणं क्रीडायां विवशं, न कुर्वन्तीति शेषः। तर्हि किङ्कारं वर्तन्त इति तत्राऽऽह - आत्मन इति। अर्थे जन्मप्रभृति आत्मनोऽर्थे आत्मनः प्रियैषिणः परमात्मनः ज्ञानेच्छवः मोक्षलक्षणप्रियेच्छवो वा आत्मनः प्रियैषिणः स्वप्रयोजन-माकाङ्क्षमाणा आबाल्यात्प्रवर्तन्त इति वा। नन्वस्माभिरपि शण्डामर्काभ्यां गुरुभ्यामुपदिष्टत्रिवर्गविषयशास्त्र श्रवणश्रेयसि प्रवर्त्यते। तत्र गुर्ववसरप्रतीक्षणायेयं क्रीडेति, तत्राऽऽह-गुरूक्तमिति। कुतो न ग्राह्यमिति तत्राऽऽह-यदनर्थ इति। संसारहेतुत्वादनर्थे त्रिवर्गलक्षणे श्रेयस्यर्थकल्पनं यत्, तस्मादिति शेषः। "त्रैविद्या मां सोमपाः पूत पापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" (भ.गी. 9-20) "इष्टापूर्तं मन्यमाना वरिष्ठं नाऽन्यच्छ्रेयो वेदयन्ते प्रमूढाः" (मुण्ड.उ. 1-2-10) इत्यादेश्च।।२।।

ननु गुरूक्तेर्यथार्थत्वेन ज्ञानहेतुत्वोपपत्तेः कथं तदनर्थेऽर्थकल्पनमिति? तत्राऽऽह-**यदुक्त्येति**। अज्ञानलक्षणनिद्रयासुप्तः त्रिवर्गविषयलक्षणमाग्रहलक्षणे यथार्थज्ञानविरोधित्वात् अज्ञानं नाम न तु ज्ञानमात्राभावः सुप्तस्याऽपि गुरूक्त्या प्रबोधो हि प्रयोजनं, स नोत्पद्यते चेत्तदुपदेशेन किं प्रयोजनम्। प्रत्युत तदनुष्ठानेनाऽनर्थ एव स्यादिति भावः। अतः फलितमाह-**नेति**। अत्रोदाहरणमाह–यथेति। अन्धो नायको नेता यस्य स तथा। हि-शब्देन उभयोरप्यन्धत्वान्मार्गज्ञानं नोत्पद्यते यथा, तथाऽत्रापीति, अस्मात् श्रद्धा न कार्या।।३।।

ननु "समूलघातमघ्नन्तः परान्नोद्यन्ति भूभृतः" (शिशु.पा.2) "निक्षिप्योदर्चिषं कक्षे शेरतेतेऽभिमारुतम्" (शिशु. वध-2) "आपत्सुमित्रं जानीयात् पुत्रमुत्तरजन्मनि" "य उदास्ते स्वकार्येषु स निन्द्यो यत्नतो नरः" (शिशु. पा-2) इत्यादि नीतिशास्त्रं शत्रुमित्रोदासलक्षणज्ञापकं हितकारित्वादित्याभ्यां नो बोध्येत, तन्मतं कथं न श्रद्दध्यादित्युच्यते इति, तत्राऽऽह क इति। यः शत्रुः स आत्मनो मम पक्षे कः? न कोऽपीत्यादि योज्यम्। त्वत्पक्षे शत्त्राद्यभावेऽप्यस्मत्पक्षे स्युरिति तत्राऽऽह-भवत्स्विति। भवत्पक्षेऽपि के शत्त्रादयः स्युः, न केऽपि। अतो नयैर्नीतिशास्त्रश्रवणजनितैर्नीतिभिः किं फलं स्यात्? न किमपीत्यर्थः। नीतिभिरापत्परिहारः सम्पत्प्राप्तिश्च स्याताम् इति तत्राऽऽह दैवमिति। सर्वोत्कृष्टत्वात् श्रीनारायण एव सम्पद्विपदाश्रयी न नीतिमान्, तस्य अन्वयव्यतिरेकाभावात् अस्मत्पित्रादौ दर्शनात्। आत्मनो देहस्य यः शत्र्वादिः तस्य भवत्सुस्थितैर्नयैः किं स्यात्, अपरिहार्यत्वान्मरणादिकं प्राप्यत एव। कामादिकमज्ञानमन्तरेण न नयमात्रेण परिह्रियत इति। शेषं पूर्ववत्।।४।।

ननु तर्हि माभूत् श्राव्यं नीतिशास्त्रं, प्रवृत्तिलक्षणधर्मशास्त्रमभ्यसनीयं श्रेयो हेतुत्वात्, अत्राऽऽह- **य** इति। यः आत्मानं परमात्मानमुद्दिश्य धर्मकामं धर्मेच्छां न हिंस्यात् न **हिनस्ति** न त्यजति किन्त्वानुतिष्ठति, सोऽतिदुर्लभः प्रशान्तात्मा कोटिष्वपि। महान्मतः स्वोक्ते अवशीकृतेन्द्रियग्रामस्य भगवद्विषयनिवृत्तलक्षणधर्मेच्छा कथं स्यादिति तत्राऽऽह-स्वजन इति। स्वेन सह जन्यत इति स्वजनः इन्द्रियग्रामः तस्मिन् विषये वशो न भवति, वशीकृतेन्द्रियग्राम इत्यर्थः। यद्वा, पुत्रमित्रादिलक्षणे स्वजने वशो न स्वानुष्ठानानुकूले पुत्रादिके इत्यर्थः। अत एव मुक्तान्ध्यः उज्झितान्धस्वभावः। ननु, ऐहिकामुष्मिकफलाकाङ्क्षायां निवृत्तिधर्ममनुतिष्ठतः कथं तत्फलावाप्तिः स्यादत्राऽऽह-पुनरिति। पुनश्चाऽर्थे। निवृत्तिधर्ममनुतिष्ठन् श्रीलोकयो रिहलोकपरलोकयोर्हेतुश्च भवति। पुनर्निवृत्तिधर्मानुष्ठानानन्तरं वा प्रवृत्तिनिवृत्तिधर्मयोरनुष्ठानयोः पुनर्भेदोऽस्ति पूर्वस्य ततः पातोऽस्ति इमं लोकं हीनतरं वा विशन्ति–"क्षीणे पुण्ये मर्त्यलोकं विशन्ति" (भ.गी.9-21) इत्यादेः। अन्यस्य ज्ञानसामग्रीं सम्पाद्य ततः पुनरन्ते वैकुण्ठलोकप्राप्तिश्च स्यात् "स एवास्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते । यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्।तं तं लोकं जयते तांश्च कामान्, तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" इत्यादेः। "पुनरप्रथमे भेदे" (अम.कां.3-408) इत्यमरः। यद्वा आत्मानं धर्मयुक्तः कामो यस्य सः तथा तं वा नरं न हिंस्यात् न पीडयति स्वात्मानं प्रवृत्तिधर्मकांक्ष्येण पीडितं न करोति, सोऽतिदुर्लभः धर्मधारके हरौ कामो यस्य स तथा निवृत्तिधर्मनिरत इत्यर्थः। तं नाऽधःपातयतीति वा सज्जनसेवानिरतत्वेन

तद्वशश्च **श्रिय** ऐहिकयाः सम्पदः स्वतः सम्पन्नायाः लोकस्य ज्ञानस्यापरोक्षलक्षणस्य च पात्रं वा। अत्र प्रवृत्तिनिवृत्तिलक्षणौ धर्मावनुष्ठाय तत्फलानिच्छत्वेन भगवद्भक्तिमनिशं कुर्वाणः पुरुष **उत्तमइति तात्पर्यम्।।५।**

नन्वस्तु निवृत्तिधर्मानुष्ठानस्य श्रेयस्साधनत्वं, तस्य नेदानीमवसरः वार्धके कर्तव्याविनाभूतत्वात् - "बाल्ये विद्यां निषेवेत यौवने दारसङ्ग्रहम्। स्थाविर्ये मोक्षमातिष्ठेत्सर्वदा धर्ममाचरेत्" इति स्मृतिरिति। तत्राऽऽह-कौमार इति। सर्वदेति विशेषणाद्विद्याभ्यासकालेऽपि मोक्षधर्मानुष्ठानं कर्तव्यमिति न तस्य स्मृतिविरोधः। नानायोनिषु का योनिः श्रेयस्साधनमिति तत्राऽऽह दुर्लभमिति। यन्मानुषं जन्म, तदपि तदेवार्थदं ज्ञानादिप्रयोजनप्रदम्। अत एव बहुपुण्यसाधनत्वाद्दुर्लभम्। तर्हि चिरकालस्याऽपि किम्? नेत्याह-अध्रुवमिति। "सस्यमिव मर्त्यः पच्यते सत्यमिव जायते पुनः, अपि सर्वं जीवितमल्प **मेव** " इत्यादिश्रुतेः अध्रुवमपि मानुषं यज्जन्मसुदुर्लभम्, तत्राऽप्यर्थदं दुर्लभतरम् । "एतद्धि दुर्लभतरं लोके जन्मयदीदृशम्" (भ.गी 6-42) इति श्रुतेः।।६।।

ननु कथङ्कारं पुरुषार्थप्रदं तत् अन्यथा तद्वतां सर्वेषामपि पुरुषार्थः स्यात्, न चाऽसौ सम्भवति अदर्शनादश्रवणाच्चेत्याशङ्क्य चिकित्सामाह-**यदा हीति**। इह मानुषे यदा यदि बुभूषोः पुरुषस्य विष्णोः पादोपसर्पणं सम्भवति तर्ह्यर्थदं "यावत्सेवापरे तत्त्वे तावत्सुखविशेषता" इति। एतत् हिशब्देन सूचयति। अतो मानुषी योनिरेव निःश्रेयसः कारणं, नाऽन्या। असङ्गत्वाद्वेदानर्हत्वेनाऽन्यासाम्। अतः कौमारवय आरभ्य भगवत्सेवा कर्तव्येति भावः। ननु श्रीहरिसेवामन्तरेणाऽन्यसेवा अर्थदा किम्? न स्यादिति तत्राऽऽह–यदेष इति। सर्वभूतप्रियत्वादिगुणयुक्त एव इति यत् तस्मादेतत्सेवैव पुरुषार्थदा नाऽन्यसेवा "तदेतत्प्रेयः" (बृह.उ. 1-4-8) इति श्रुतेः। "एष सर्वेश्वरः" (बृह.उ. 6-4-22) इति च।।७।।

इतोऽपि भगवत्सेवालक्षणनिवृत्तिधर्मानुष्ठानमेव कर्तव्यं, न प्रवृत्तिधर्मसेवनं विषयसुखसौलभ्याय तदनुष्ठानमिति नोच्यते, तदन्तरेणाऽपि तल्लभ्यते; यथा दुःखमित्याह-**सुखमिति**। सर्वत्र नरकादावपि "सुखस्यानन्तरं दुःखं, दुःखस्यानन्तरं सुखम्" इति स्मृतेः। दैवात् प्रारब्धकर्मप्रेरकात्।।८।।

अतश्च किमिति तत्राऽऽह - **तदिति**। तस्मात्तत्प्रयासऐन्द्रियसुखप्राप्तये प्रवृत्तिधर्मकरणे बहुक्लेशो न विधेयः। कुतो न विधेयः? इति तत्राऽऽह - आयासेति। परं केवलमायासेनाऽऽयुषो व्ययः क्षय एव, अवशिष्यत इति शेषः। प्रवृत्तिधर्मानुष्ठानस्य दुःखासम्भिन्नप्रदेशोद्देशत्वात्तत्कथं दुःखकल्पत्वेन निन्द्यत इति तत्राऽऽह -

- न तथेति । मुकुन्दचरणाम्बुजं भजन् यथा क्षेमं विन्दते प्रवृत्तिधर्मानुष्ठायी न तथा, नश्वरं सुखं लभत इत्यन्वयः । "प्लवाह्येते अदृढा यज्ञरूपाः" (मुण्ड. उ. 1-2-7) इति श्रुतेः ।। ९ ।।

**ततो यतेत कुशलः क्षेमाय भवमाश्रितः[1] ।**
**शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ।। १० ।।**

**पुंसो वर्षशतं ह्यायुस्तदर्ध[2] मजितात्मनः ।**
**निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ।। ११ ।।**

**मुग्धस्य बाल्ये[3-] कैशोरे[-3] क्रीडतो याति विंशतिः ।**
**जरया ग्रस्तदेहस्य यात्यकल्यस्य[4] विंशतिः ।। १२ ।।**

**दुरापूरेण कामेन मोहेन च बलीयसा ।**
**शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ।। १३ ।।**

***पश्यध्वं मति वैषम्यं ज्ञातीनां नः कुटुम्बिनाम् ।**
**[5]श्रेयो विघातादायासादीहता मनुसंसृतिम्[6]•।। १४ ।।**

**को गृहेषु पुमान् सक्तमात्मानमजितेन्द्रियः ।**
**स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ।। १५ ।।**

**कोन्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि गरीयसीम्[7] ।**
**यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ।। १६ ।।**

**कथं प्रियाया अनुकम्पितायाः स्सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।**
**सुहृत्सु तत्[8]स्नेहसित[9]शिशूनां कलाक्षराणामनुरक्तचित्तः ।। १७ ।।**

---

1. A,B,G,J,T भय , M, Ma नय 2. A,B,G,J,M,Ma,T दर्धञ्चा° 3- -3. A,B,G,J,T °ल्ये कौमरे; M,Ma, °ल्य कौमारे 4. A,B,G,J,M,Ma,T °कल्पस्य *This verse is not found in W edition. •The following two extra verses are found in H.V editions **नानायोनिषु गर्भादिष्ववस्थासु सदापदाम् । कायमापतनं बिभ्रत्किं विन्देच्छं स्वराडपि ।। किं दुष्टं कर्म किं स्वस्ति यतः कालः क्रियापणः । येन क्षणे हि तस्यान्तं नेयाज्जन्मशतैरपि ।।** 5. H.V योऽभिधां 6. H.V °स्मृ° 7. A,B,G,J,T य ईप्सितः 8. A,B,G,J,T च स्ने ° 9. M.Ma वशः

**पुत्रान्[1] स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन् स्वसॄर्वा पितरौ च दीनौ ।**

**गृहान्मनो[2-]ज्ञोरु[-2]परिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ।। १८ ।।**

**श्रीध० तत** इति । [3]भवमाश्रितः संसारं प्राप्तः पुंरुषरूपं शरीरं यावत्पुष्कलमस्ति, न तु विपद्येत [4]अक्षमं न भवेत् न नश्येदिति वा, तावच्छीघ्रं क्षेमाय यतेत ।। १० ।।

आयुर्व्ययक्रममाह - **पुंस** इति त्रिभिः । यद्यस्माच्छेते ।। ११ ।।

**मुग्धस्येति** । विंशतिवर्षाण्यायुर्याति ।। १२ ।।

**दुरापूरेणेति** । दुरापूरेण दुःखैस्समन्तादापूर्यमाणेन ।। १३ ।।

ननु यौवने गृहासक्तोऽपि पश्चाद्विरक्तस्सन् क्षेमं यास्यतीत्याशङ्क्य तदसम्भवं दर्शयन् कौमार एवाचरेदित्येतदुपपादयति - **को गृहेष्विति** सप्तभिः ।। १४, १५ ।।

**क** इति । यमर्थमसुभिः क्रीणाति प्राणहानिमङ्गीकृत्यापि साधयति तस्कारादिः तस्मिन्नर्थे तृष्णां को नु विसृजेत् ।। १६ ।।

किञ्च । **कथमित्यादि** । प्रियायास्सङ्गादिकं स्मरन्कथं त्यजेतेति तृतीयेनाऽन्वयः । मन्त्रान् हितशिक्षालापान्। सुहृत्सु च सङ्गम् । तेषां स्नेहेन सितो बद्धः, कलानि मधुराण्यक्षराणि येषां तेषाञ्च सङ्गं, तेष्वनुरक्तं चित्तं यस्य ।। १७ ।।

**पुत्रानिति** । ताः श्वशुरगृहे स्थिताः हृदय्या हृदयङ्गमाः मनोज्ञाः, उरवः परिच्छदा येषु तान् गृहान् वृत्तीर्जीविकाः, कुल्याः कुलपरम्परागताः ।। १८ ।।

**वीर०** ततः कारणाद्भवमनर्थावहं संसारमाश्रितः पुमान् कुशलः हेयोपादेयविभागकुशलस्सन् क्षेमायैव उक्तविधक्षेमार्थमेव यतेत । कौमार एवेत्युक्तमवधारणं प्रतिपादयितुं तदवतारयति - शरीरमिति । पौरुषं पुरुषस्य

---

1. M, Ma प्रत्ताः 2- -2. °ज्ञान् रुचिरच्छ° 3. A,B,J, भय 4. B अक्षेमं

जीवस्य स्वस्य सम्बन्धिशरीरं यावत् पुष्कलं पटुतरमस्ति, न तु विपद्येत विपन्नं न भवति तावदेव क्षेमाय यतेतेति पूर्वेणान्वयः। बाल्यादारभ्यैव यतेतेति भावः।।१०।।

एतदेव प्रतिपादयन् विषयासक्तस्य केवलं वृथायुर्व्ययमाह-**पुंस** इति। **पुंसो** मनुष्यस्य तावद्वर्षशतं ह्यायुः जीवनयोग्यकालः शतवर्षपरिमितः। तस्य शतवर्षपरिमितस्याऽऽयुषोऽर्धं पञ्चाशद्वर्षात्मकमजितेन्द्रियस्य निष्फलमेव यातीत्युत्तरेणान्वयः। नैष्फल्येन याने हेतुं वदन् पुमांसं विशिनष्टि-यदिति। यद्यस्मात् असावजितात्मा पुमान् रात्र्या मन्धतमः निद्रात्मकं प्रापित स्तूष्णीं शेते। जितेन्द्रियः कौमर एवारब्धभक्तियोगरूपभगवद्धर्मयोगस्तु[1] रात्र्यामपि मध्यमं यामद्वयं निद्रार्थमुपयोज्य पर्वोत्तरयोर्यामयोरनियतकालं भगवद्धर्ममाचरतीति भावः।।११।।

एवं बाल्ये मुग्धस्य मूढस्य दशवर्षाणि कौमारे क्रीडतो दशवर्षाणीत्येवं विंशतिवर्षाणां याति। जितेन्द्रियः कुशलस्तु तस्यामपि विंशत्यां भगवद्धर्ममनुतिष्ठतीति भावः। एवमुत्तरत्राऽप्यूह्यम्। जरया ग्रस्तो देहो यस्य अत एवाऽकल्यस्य असमर्थस्य स्वानधीनदेहस्य वर्षाणां विंशतिर्याति, बाल्यात्प्रभृति आरब्धभगवद्धर्मस्तु तदभ्यासशिक्षितदेहत्वात्तस्यामपि विंशत्यां तमनुतिष्ठतीति भावः।।१२।।

एवमहर्भागात्मकार्धायुषश्चत्वारिंशद्वर्षाणि[2] गतानि[3]। शेषमवशिष्टं दशवर्षात्मकमायुः दुरापूरेण दुःखैः समन्तादापूर्यमाणेन कामेन तदनुबन्धिना बलीयसा मोहेन, चकारात्क्रोधेन च, गृहेषु गृहधर्मेषु सक्तस्यात एव प्रमत्तस्य स्वहितमजानतोऽपयाति। जितेन्द्रियस्तु कुशलः कामाद्युपशमनेन तस्मिन्नपि दशवर्षात्मकवयसि भगवद्धर्ममनुतिष्ठतीति भावः।।१३।।

एवमजितेन्द्रियस्य वैषयिकसुखरतस्य आयुषो वैफल्यमारब्धभक्तियोगस्य कुशलस्य जितेन्द्रियस्य तु निःश्रेयससाधनभगवद्धर्मप्रसाधनोपयुक्तत्वेन साफल्यं भागवतधर्माणामेव निरतिशयश्रेयस्साधनत्वं तेषाञ्च वर्तमानमनुष्यजन्मनैवाऽनुष्ठेयत्वञ्चोक्तम्। अथ वैराग्यमन्तरेणोपदिष्टोऽपि भागवतधर्मः प्रतिष्ठितो न भवतीति वैराग्येण तावदेषां भवितव्यं, तच्च सत्सङ्गतिमन्तरेण न सेत्स्यतीति तया भवितव्यम्। सा च विषयासक्तचित्त-जनसङ्गपरिहारमन्तरेण दुर्लभेत्यभिप्रेत्य तत्परिहारश्च गृहवित्तकलत्रापत्यादिष्वनुरक्तचित्तस्य यद्यप्यशक्यः तथाऽपि उपायेन विवेकात्मना दुस्सङ्गः परिहार्य इति वक्तुं तावत् गृहादिष्वनुरागस्य दुस्त्यजत्वमनर्थावहत्वञ्चाह-**कोगृहेष्वि**त्यादिना। तावद्गृहानुरागस्य दुस्त्यजत्वमाह क इति। **गृहेष्वासक्तं** ममेदं गृहमित्यभिमानयुक्तं दृढः

1 W °मस्तु 2.W °र्षाः 3 W °ताः।

दुर्मोचैः[1] स्नेहा एव पाशाः तैर्बद्धमात्मानं विमोचयितुमजितेन्द्रियश्च कः पुमानुत्सहेत, कोऽप्युत्साहं न कुर्यादित्यर्थः। जितेन्द्रियस्तूत्सहेतैवेति भावः। अनेन "हित्वाऽऽत्मपातं गृहमन्धकूपम्" (भाग. 7-5-5) इति पूर्वमुक्तगृहाभिनिवेशत्याग एव भगवदाश्रयणे प्रथमं कारणमित्युक्तम्।।१४,१५।।

तदभिनिवेशत्यागश्च वित्तकलत्रापत्याद्यनुरागत्यागपूर्वकः, सोऽप्यजितेन्द्रियस्य दुश्शक इत्याह - **कोन्विति।** अर्थतृष्णां वित्तस्पृहां अजितेन्द्रियश्चेत् कः पुमान्विसृजेत् त्यजेत्? दुस्त्यजत्वे हेतुं वदंस्तां विशिनष्टि - य इति। योऽर्थः[2] प्राणेभ्योऽपि गरीयसीमिति प्राणस्पृहापेक्षया गरीयसीं दृढतरामित्यर्थः। प्राणेभ्योऽपि गरीयस्त्वमेव दृष्टान्तमुखेन दर्शयन्नर्थं विशिनष्टि-यमिति। यमर्थमसुभिः प्राणैः तस्करश्चोरः, सेवक आयुधोपजीवी, वणिक् नाविकश्च क्रीणाति प्राणहानिमङ्गीकृत्याऽपि तस्करादिर्यमर्थं साधयति तस्मिन्नर्थे तृष्णां को न विसृजेदित्यर्थः।।१६।।

किञ्च, अनुकम्पितायाः दयायुक्तायाः प्रियायाः रहसि भवं सङ्गं, रुचिरान् मनोज्ञान् हितालापांश्च, सुहृत्सु च सङ्गतं स्मरन् कथं प्रियसङ्गादींस्त्यजेतेति तृतीयेनान्वयः। कथम्भूतः? तत्स्नेहसितः तेषां प्रियादीनां स्नेहेन सितो बद्धः कलानि मधुराण्यक्षराणि येषां तेषां शिशूनाञ्च, सङ्गमित्यनुषज्यते, सङ्गं तेष्वनुरक्तं चित्तं यस्य सः।।१७।।

पुत्रान् हृदय्याः हृदयङ्गमा दुहितॄः श्वशुरगृहे स्थिताः तथा भ्रातॄन्, स्वसॄः भगिनीश्च दीनौ मातापितरौ च उरवः बहवः परिच्छदाः भोगोपकरणानि येषु तान् मनोज्ञान् गृहांश्च कुल्याः कुलक्रमागताः वृत्तीर्जीविकाश्च पशून् भृत्यवर्गांश्च कथं त्यजेत, कथन्तरां विरज्येत विरक्तः स्यात्?।।१८।।

**विज०** तस्मादिदमेव कर्तव्यमिति तत्राऽऽह - **तत** इति । **चशब्दो यद्यदभीष्टं** तत्प्राप्य इत्याह - इतोऽपि बाल्य एव मुक्तये प्रयतेतेत्याह – शरीरमिति। पौरुषं पुरुषस्य विद्यमानं पुष्कलं पुष्टमन्धपङ्गुत्वाद्यवयव वैकल्यविधुरमित्यर्थः। विपद्येत मरणलक्षणविपत्तिं प्राप्नोति। ततः प्राप्नोति, ततः प्रागेव, यतेतेति शेषः।।१९।।

"शतायु वै पुरुषः" इति वचनात्। शतायुः शरीरस्थितेर्निश्चितत्वात् तदन्तरालकालेऽनेकश्रेयस्समार्जनोपपत्तेः बाल्य एव निवृत्तिलक्षणश्रेयसे यतनीयमिति नियमो नापेक्षित इत्याशङ्क्य गर्भवासमारभ्य शतायुःपर्यन्तं स्वतः परतो वा शरीरस्य नाशदर्शनात् न तत्स्थितिनिश्चय श्शाश्वतः। अस्तु वा कस्यचित् तथाऽपि न श्रेयो यत्नो

1. A,B,T °चनीचैः 2. W omits योऽर्थः।

दरीदृश्यते। अन्यव्यापारायासग्रस्तत्वेन दिनमेलनलक्षितवत्सराणां क्षयाद्येवं न लक्षवर्षायुषेणाऽपि मुकुन्दचरणारविन्दसेवालक्षणश्रेयस्सम्पादनं सुशकमित्याह—**पुंस** इति।।११,१२।।

दुरापूरेण नशक्यपूरणेन। हिशब्दो हेतौ।।१३।।

निद्रादिकमन्तरेण अवशिष्टकालान्तरालेऽपि श्रेयोविघ्नहेतुरस्तीत्याह—**पश्यध्वमिति**। कलहलक्षणं मतिवैषम्यं अनुसंसृतिमित्यनेनैकोऽपि क्षणो नावशिष्यत इति सूचयति।।१४।।

नन्वस्माकं श्रेय इच्छा नास्ति चेदनन्तेषु चेतनेषु कस्यचित्सा स्यात् अवसरमापद्येतेति तत्राऽऽह - **क** इति।।१५।।

ननु, प्रवृत्तिधर्मेण माभूच्छ्रेयः अर्थेन तत्स्यात्, अतो मुकुन्दपादसेवा कुतो नियुज्यत इति तत्राऽऽह - कोन्विति। योऽर्थस्तदर्थतृष्णां अर्थान्वेषणवैतृष्णयैवार्जितस्य व्यये लिप्सयाऽर्थेन सुकृतं साधयेति बोधिते साधयिष्यामीति कण्ठोपरिगद्गदनिगदेनैव कालो यातीति पुरुषायुषेणाऽपि वित्तेन सुकृतार्जनं दवीय इति वित्तव्ययमन्तरेण कायक्लेशेनैव श्रीहरिचरणनिषेवणं जन्म सफलङ्करोतीति भावः। तत्र दर्शनं प्रमाणयति तस्करादयो मृता अप्यर्थतृष्णां न मुञ्चन्तीति एतदुपलक्षणम्। परितः प्रत्येकं अलं नानाजीवानां वर्तते।।१६।।

ननु माभूदर्थाच्छ्रेयः, कामादस्तु इत्याशङ्क्य कीदृशोऽसौ? भगवद्भक्तिकामो वा, विषयकामो वा न द्वितीयः अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घजीविते को रमेतेत्यादि शास्त्रनिन्दितत्वान्नाऽद्यः। विषयविरक्त्या तत्त्यागेन भाव्यम् तस्य दुस्साधनत्वादित्याह कथमिति। रहस्यं रहसि भवं सङ्गं मैथुनलक्षणं कथं त्यजेते-त्युत्तरेणाऽन्वयः, मन्त्र्यादिगृहीतानां संलापानां रसेनेति शेषः।।१७।।

प्रत्ताः दत्ताः हृदय्याः हृदयप्रियाः । रुचिरच्छदान् रुचिरपरिकरान् , कुल्याः कुलपरम्परया समागताः वृत्तीर्जीवनकरीः।।१८।।

**त्यजेत कोशस्कृ[1]दिवेहमानः कर्माणि लोभादवितृप्तकामः।**
**औपस्थ्यजैह्व्यं[2] बहुमन्यमानः कथं विरज्येत दुरन्तमोहः।।१९।।**

---

1 M.Ma स्थ इवे ° 2 W ह्वं

**कुटुम्बपोषाय वियन्निजायु[1] र्न बुध्यतेऽर्थं विहितं[2] प्रमत्तः।**
**सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः।।२०।।**

**वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः।**
**प्रेत्येह चा[3]ऽथाप्यजितेन्द्रिय स्तदशान्तकामो हरते कुटुम्बी।।२१।।**

**विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै।**
**यः[4] स्वीयपारक्यविभिन्नभावस्तमःप्रपद्येत यथा विमूढः।।२२।।**

**यतो न कश्चित् क्व च कुत्र[5] विद्वान् दीनः[6] स्वमात्मानमलं समर्थः।**
**विमोचितुं वामदृशां[7] विहार क्रीडामृगो[8] यन्निगडो[9] विसर्गः।।२३।।**

**ततो विदूरात्परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु।**
**उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः।।२४।।**

**न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः।**
**आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वतः।।२५।।**

**परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु।**
**भौतिकेषु विकारेषु भूतेष्वथ महत्सु च।।२६।।**

**श्रीध० त्यजेतेति**। कोशस्कृत् कोशकारीकीटः[10] स[11] यथा हितं[12] गृहं कुर्वन्[13] आत्मनः निर्गमाय द्वारमपि नावशेषयति तथा कर्माणीहमानः। नन्ववितृप्तकामोऽपि दोषदर्शनेन विरक्तस्सन् त्यजेत। तत्राऽह-ऑपस्थ्यं शैश्न्यं जैह्वयञ्च सुखं [14-]बहुमन्यमानः[-14] तदेवाऽधिकं मन्यमानः अतो दुरन्तो मोहो यस्य स कथं विरज्येत विरक्तः स्यात्।।१९।।

दुरन्तमोहत्वं दर्शयन्नाऽऽह-**कुटुम्बेति**। कुटुम्बपोषणाय वियत् क्षीयमाणं निजमायुः पुरुषार्थञ्च विहितं

1.M,Ma च य° 2.A,B,G,J,T,V ह° 3 M,Ma वा 4 M,Ma यत्स्वी° 5 A,B,G,J,T °त्र चिद्वा दी° 6 M,Ma °नं 7 A,B,G,H,J T V काम 8.M,Ma °गोऽयं नि° 9. H,V, W °लो वि°; M,Ma डोऽक्षि° 10 A,B,J कोशस्कारि 11 H,V omit सः 12 H,V omit हितं 13 A,B J कुर्वाणः 14- -14 H,V omit

न बुध्यते। अत एव तापत्रयेण दुःखितचित्तोऽपि न निर्विद्यते। तत्र दुःखबुद्धिं न करोति, यतः स्वकुटुम्बे रामो रतिर्यस्य।।२०।।

प्रत्युत चौर्यं करोतीत्याह-**वित्तेष्विति**। नित्यमभिनिविष्टं चेतो यस्य स परवित्तहर्तुः प्रेत्य नरकलक्षणमिह च दण्डादिरूपं दोषं यद्यपि विद्वान् [1]जानन् अथाऽपि [2]अशान्तकामः[2] अशान्ताभिलाषः तत् परवित्तं हरत्येव।।२१।।

तदेवं 'को गृहेषु पुमा' नित्यादिसप्तभिः श्लोकै रुपपादितं गृहादिषु प्रसक्तस्य वैराग्याद्यसम्भवमुपसंहरति-**विद्वानिति**। स्वलोकाय आत्मपरामर्शाय न कल्पते, किन्तु विमूढो यथातथा विद्वानपि तमोऽभिनिवेशमेव प्रपद्यते तत्र हेतुः-य इति। स्वीयमिदं पारक्यमिदमिति विभिन्नो भावो भावना यस्य सः।।२२।।

तस्मात्कौमार एव भागवतान्धर्मानाचरेदिति सहेतुकमुपसंहरति - **यत** इति। यतः कश्चिदपि स्वमात्मानं मोचितुं न समर्थः, ततो नारायणमुपेत, शरणं यातेत्युत्तरेणान्वयः। असामर्थ्ये हेतुः-अलं दीनो लम्पटः, अतः कामो दृशि यासां तासां विहारे क्रीडायां निमित्ते क्रीडामृगः। विहारमिति पृथक्पाठे तासां विहारसाधनमात्मानं यतस्तासां क्रीडामृगः स इत्यन्वयः। किञ्च, यद्यासु निगडः शृङ्खलातुल्यो विसर्गः [3]पुत्रपौत्रादि[3]रूपो भवति।।२३।।

**तत** इति। विदूरात् दूरतः सङ्गं परिहृत्य। यद्वा अविदूराच्छीघ्रं नारायणमुपेतेत्यन्वयः। यस्मात् स एव अपवर्ग इषित इष्टः।।२४।।

ननु बालानामस्माकं तद्भजनमशक्यमिति चे त्तत्राऽऽह **न हीति**। बह्वायासोऽतिप्रयासः।।२५।।

आत्मत्वात्सर्वत्र सिद्धत्वात् इति च हेतुद्वयमुपपादयति **परावरेष्विति** चतुर्भिः। ब्रह्मा अन्तो येषां, स्थावर आदिर्येषां तेषु भूतेषु [4]जीवेषु भौतिकेषु अजीवेषु घटादिषु महत्सु च भूतेष्वाकाशादिषु।।२६।।

**वीर॰** कथम्भूतः? कोशस्कृदिव कोशकारी कीट इव कर्माणीहमानो यथा कोशस्कृद्दहं कोशात्मकं [5]गृहं कुर्वन्नात्मनो निर्गमाय द्वारमपि नाऽवशेषयति। तथा स्वबन्धकानि कर्माणि कुर्वाण इत्यर्थः। अवितृप्तः कामो यस्य तादृशः औपस्थ्यं [6]जैह्व्यञ्च सुखं बह्वधिकं मन्यमानः अतो दुरन्तो मोहो यस्य।।१९।।

दुरन्तमोहं दर्शयन् विशिनष्टि-कुटुम्बपोषणाय वियत्क्षीयमाणं निजायुः परिच्छिन्नायुः यस्य तादृशो विशेषण हितमनुकूलमर्थं परमं पुरुषार्थं न वेद। विहतमिति पाठे विहतमपि स्वाभिप्रेतमर्थं न वेद, दृष्टान्तत्वेन नाऽनुसन्धत्ते।

1 H,V. omit जानन् 2- -2 A,B,J omit 3- -3 H V पुत्रादि 4 B omits जीवषु, H V देवेषु. 5. W omit गृहं 6 W जतं

सर्वत्र देशे काले च तापत्रयेण दुःखित आत्मा मनो यस्य तादृशो न निर्विद्यते। संसृतौ हेयत्वबुद्धिं न करोति, यतः स्वकुटुम्बे रामे रतिर्यस्य।।२०।।

प्रत्युत अकार्यं करोति इत्याह-**वित्तेष्विति**। परद्रव्यापहारिणो यो दोषः प्रेत्य मरणानन्तरं नरकलक्षणः इह च लोके दण्डरूपश्च तं विद्वान् जानन्नपि वित्तेषु नित्यमभिनिविष्टं चेतो यस्य सोऽजितेन्द्रियोऽशान्तकामः कुटुम्बी च सन् तत्परस्य वित्तं हरति।।२१।।

एवं **को गृहेष्वि**त्यादिभिः सप्तभिः श्लोकैः गृहादिष्वनुरागो दुस्त्यज इत्युक्तम्। अथ तस्यानर्थावहत्वमाह विद्वानिति। हे दनुजाः! इत्थं विद्वानपि उक्तविधं संसारं जानन्नपि कुटुम्बं पुष्णन् बिभ्रत् यः स्वलोकाय आत्मयाथात्म्यदर्शनाय न कल्पते न समर्थो भवति। प्रकृतिपुरुषेश्वरयाथात्म्यावमर्शनपरो न भवति। किन्तु इदं स्वीयमिदं परकीयमित्येवं विभिन्नो भावो यस्य, सर्वस्य परमात्मशेषतामजानन्नित्यर्थः। यथावत् विमूढःस तमो नरकमेव प्रपद्येत। यद्वा तत्त्वविदपि कुटुम्बभरणासक्तो देहात्माभिमानस्वतन्त्रात्माभिमानयुक्तो मूढवत् नरकमेव प्रपद्यते ; न मुक्तिम्। किम्पुनः केवलमूढ इत्याह विद्वानपीति। विद्वानपि प्रकृतिपुरुषेश्वरयाथात्म्यविदपि य. पुनः स्वीयपारक्यविभिन्नभावः इत्थं कुटुम्बं पुष्णन् भवति, सः स्वलोकाय परमपदप्राप्तये न कल्पते, किन्तु नितरां मूढवत् तमएव प्रपद्येत। विदुष एवेयं गतिः, किं पुनरविदुष इति भावः। यथा विमूढ इति दृष्टान्तवशात्किम्पुनर्न्यायोऽत्र द्योत्यते।।२२।।

एवं गृहाद्यासक्तेः दुस्त्यजत्वमनर्थावहत्वञ्चोक्तम्। अथ, उक्तमुपसंहरन् दुस्त्यजगृह्याद्यनुरागत्याग-निमित्तमसत्सङ्गं परित्यज्य सत्सङ्गादि[1]प्रणाड्या भगवन्तमाश्रयेतेत्याह-**यत** इति। यतः कश्चिदपि पुमान् गृहाद्यभिनिविष्टश्चेदात्मानं क्वचिदपि काले कुत्रचिदपि देशे मोचितुं मोचयितुमसमर्थः, तत इत्युत्तरेणाऽन्वयः। असामर्थ्ये हेतुः-अलमत्यर्थं दीनो विषयलम्पटः अ[2]तः वामा दृशो यासां तासां विहारे क्रीडामृगः क्रीडार्थं संवर्धितशाखामृगादितुल्यः। विहारमिति पृथक्पाठे विहारस्थानमात्मानमित्यन्वयः। वामदृशां विहारक्रीडामृगत्वं विशिनष्टि-यदिति। यत् यस्मात् वामदृशां क्रीडामृगत्वाद्धेतोः निगडरूपो विसर्गः संसारबन्धो भवति। अयमिति वा छेदः। यत्क्रीडामृग इत्येतदयमेव निगडरूपस्संसार इत्यर्थः। यदिति छेदपक्षे यच्छब्देन वामदृशां वा

---

1 A,B,T प्रसक्त्या 2 A,B,T omit अत.

परामर्शः। यत् यासु निगडः शृङ्खलारूपो विसर्गः पुत्रादिरूपः सर्ग इत्यर्थः। अविसर्ग इनि वा छेदः। यद्यस्मात् क्रीडामृगत्वादविसर्गः, अविमोच्यो निगडः शृङ्खलातुल्यः संसारबन्धो भवतीत्यर्थः।।२३।।

**तत** इति। ततः यतो गृहादिष्वासक्तः आत्मानं मोचितुमसमर्थस्ततो विषयेषु शब्दादिष्वेव आत्मा मनो येषां तेष्वसत्सु दैत्येषु सङ्गं दूरात्परिहृत्य आदिदेवं जगदुदयस्थितिलयलीलं स्वतेजसा दीप्यमानं नारायणं जीवानां प्राप्यं, प्रापकमाधारञ्च भगवन्तम् उपेत तत्सङ्गादिप्रणाड्या शरणं व्रजत। यद्यप्यत्र सत्सङ्गतेः कण्ठोक्तिर्नास्ति तथाऽपि स्वस्य सत्सङ्गतेरेव हेतो र्ज्ञानोदयस्य स्वेनैव वक्ष्यमाणत्वात् स्वसङ्गत्यैव तैः सत्सङ्गतेः कृतप्रायत्वाच्च तदनुक्तावपि साऽभिप्रेतैव। एवं गृहाद्यासङ्गस्य दुस्त्यजत्वदोषावहत्वादि कथनेनैव तेषां वैराग्यमुदेष्यतीति वैराग्यमपि सम्पादनीयमिति शब्दतो नोक्तं, स्वस्यैव ज्ञानोपदेष्टृत्वादाचार्यत्वेनावस्थितत्वात् गुर्वभिगमनमपि इह शब्दतः कर्तव्यत्वेन नोक्तम्। किन्तु श्रीशप्रपदनमात्रमेव कुरुतेति शब्देनोक्तम्। धर्मान् भागवतानिति भगवच्छब्देनाऽभिप्रेतं निष्फलत्वशङ्काव्युदासं व्यनक्ति-स इति। स उपेयो नारायणः अपवर्गः परमपुरुषार्थलक्षणापवर्गहेतुत्वेन मुक्तस्सङ्गो देहतदनुबन्धिषु यैस्तैरिषित इष्टः, स एव मुक्तसङ्गानामिष्टोऽपवर्गः फलरूप इत्यर्थः।।२४।।

एतदेव प्रतिपादयितुं तावत्तत्समाश्रयणस्य दुश्शकत्वशङ्कां निराकुर्वन्नाह-**न हीति**। हे आसुरात्मजाः! अच्युतं, सकृदाश्रयणादेव आश्रितान्न च्यावयतीति अच्युतः तं प्रीणयतः? पुंसो बह्वायासो न हि विद्यते, देवतान्तरप्रीत्युत्पादकसाधनानुष्ठानवद्भगवत्प्रीत्युत्पादकतद्धर्मानुष्ठानेनाऽऽयासो विद्यते इत्यर्थः। अनायासे हेतुः आत्मत्वादिति। सर्वभूतानामात्मत्वात्सर्वतःसिद्धत्वात्सुलभत्वात्। सर्वत इति सार्वविभक्तिकस्तसिः षष्ठ्यर्थः। इह लोके सर्वतः सर्वेषां देवासुरादिस्त्रीपुंसवर्णाश्रमादिविभागमन्तरेण सर्वेषां सिद्धत्वादित्यर्थः। अयमभिप्रायः- न हि सुलभस्य तृणलोष्ठादेरन्वेषणाय विदूरगमनादिरूपः प्रयासोऽपेक्षितः, सर्वत्र सर्वेषां सुलभत्वात्। एवं सर्वेषामात्मत्वेन सर्वसुलभस्य प्रीणनेनाऽतीवायास इति। यद्वा सिद्धत्वादित्यस्य स्वर्गादिवन्न साध्यः पुरुषार्थः अपि तु सिद्धरूपः। साध्यपुरुषार्थसाधने हि यागाद्यनुष्ठानरूपप्रयासबाहुल्यम्, सिद्धस्य तु तल्लाभोपयुक्तप्रीणनोपायतत्समाश्रयणमात्रमपेक्षितमित्यर्थः। यद्वा, आत्मत्वादित्यनायासे पृथक्हेतुः, आत्मा हि स्वशरीरे निरतिशयप्रीतियुक्तस्तद्रक्षणशीलश्च लोके दृष्टः एवं सर्वेषां जीवानां परमात्मानं प्रति शरीरत्वात् तद्विषयकप्रीतेस्तस्य स्वतस्सिद्धाया अपि विपुलापराधैरनभिव्यक्तायाः तदभिव्यक्त्यावहं किञ्चिदानुकूल्यादिकमात्रमपेक्षितमिति भावः। सिद्धत्वादिति तत्रैवाऽन्यो हेतुः। न हि सिद्धस्य हिरण्यनिधेस्तत्परिज्ञानमन्तरेण तल्लाभोपयुक्तोऽन्यः प्रयासोऽपेक्षितः।

एवं परमात्मनोऽपि निरतिशयपुरुषार्थरूपस्य हृदये सिद्धत्वात् तल्लाभोपयुक्तस्वामित्वशेषित्वादितद्याथात्म्यज्ञान-पूर्वकतत्समाश्रयणमात्रेण तस्य समाश्रितविषयकप्रीतिरुदेष्यतीति नाऽतीवाऽऽयासो विद्यते इत्यर्थः।।२५।।

"आत्मवत्सर्वभूतानाम्"(भाग.7-4-31) इत्येतदेव प्रपञ्चयति-**परावरेष्विति** चतुर्भिः। ब्रह्मा चतुर्मुखोऽन्तो येषां, स्थावरा आदिर्येषां तेषु परावरेषु उच्चावचेषु भूतेषु चराचरात्मकदेहभाक्षु चेतनेष्वित्यर्थः। तथा भौतिकेषु पृथिव्यादिभूतपरिणामरूपेष्वचेतनेषु घटपटादिषु, महत्सु पृथिव्यादिमहाभूतेषु।।२६।।

**विज॰** कोशस्थः कोशकारी कीटः एतदेव स्पष्टयति-औपस्थ्यमिति।।१९।।

यदिति क्लृप्तं निजमात्मीयमायुर्यस्य स तथा, शास्त्रविहितमर्थं श्रेयोलक्षणं न बुध्यते स्वकुटुम्बे भार्यादौ रामः क्रीडा यस्य स तथा, न निर्विद्यते विरक्तो न भवति।।२०।।

परवित्तहर्तुश्चोरादेरिह देहात्प्रेत्य यत्पूर्वमर्जितं अथाऽप्यनन्तरमपि तच्च तदेव दुष्कर्म हरते नयतीत्यन्वयः। परलोकेऽपि विषयेष्वलम्बुद्धिर्नास्तीति भावः।।२१।।

अनुक्तविशेषप्रदर्शनाय कथितमेवाऽर्थं विशिनष्टि **विद्वानिति**। स्वलोकाय स्वक्लृप्तमोक्षाय स्वयोग्यज्ञानाय वा। तत्रहेतुमाह-यदिति। न केवलं मोक्षाय कल्पत इति, प्रत्युत अनर्थञ्चाऽऽप्नोति तम इति। विमूढो विपरीत ज्ञानी यथा तमः प्रतिपद्यते तथाऽयमित्यन्वयः।।२२।।

श्रीमन्नारायणानुग्रहमन्तरेण विद्वत्ताऽप्यकिञ्चित्करीत्याह-**यत** इति शास्त्रगुरूपदेशेन विद्वान्, संसारस्यानित्यता-मिति शेषः। दीनं स्वात्मानं विमोचितुमलं समर्थो नेति यतोऽत इति शेषः। यदि जीवराशौ कश्चिदस्तीत्यभिमानः तर्हि कुत्र कस्मिन् काले न कस्मिंश्चिदित्यर्थः। कुतोऽत्राऽऽह–वामदृशामिति। अयं पुरुषो वामदृशां विहारार्थं निर्मितक्रीडामृग इति यत् कथमयं तथाऽभूदिति तत्राऽऽह–निगड इति। आसामक्षिसर्गः कटाक्षमोक्षो यस्य निगडः शृङ्खलायितः, तस्मात्स इति शेषः।।२३।।

एतावन्तं दैत्यान् कटाक्षीकृत्योक्तं प्रकटयन्मथितार्थमाह-**तत** इति। नन्वेवं तर्हि संसारमोक्षस्य दौर्घट्यमापादितमिति शङ्का माभूत् यद्यर्थिताऽस्ति तर्हि उपायं वदामीत्यतो वाऽऽह–तत इति। यतो धर्मार्थकामैः ब्रह्मार्पणबुद्धिचिकित्सारहितैः संसारमोक्षो न सेत्स्यति ततो दैत्येषु सङ्गं दूरात्परिहृत्य नारायणं शरणमुपेत यातेत्यन्वयः। सोऽपवर्गो मुक्तसङ्गैः पुरुषैरिषितः आप्तोभवति। 'इषु गतौ' इति धातोः।।२४।।

नेदं दुस्साध्यमित्याह–**न हीति**। सर्वभूतानामात्मत्वात् तत्प्रेष्ठत्वात्सर्वत्र व्याप्तत्वेन सुलभत्वाद्वा।।२५।।

नारायणस्य सेव्यत्वे हेतुगर्भविशेषणमाह-**परावरेष्विति**।।२६।।

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः।।२७।।

प्रत्यगात्मस्वरूपेण [1]दृश्यरूपेण च स्वयम्।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः।।२८।।

केवलानुभवानन्दस्वरूपः परमेश्वरः।
माययान्तर्हितैश्वर्य [2]ईयते गुणसर्गया।।२९।।

तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम्।
आसुरं भावमुन्मुच्य [3]यया तुष्यत्यधोक्षजः।।३०।।

तुष्टे च तत्र किमलभ्यमनन्त आद्ये किन्तैर्गुणव्यति[4]करादिह ये [4]स्वसिद्धाः।
धर्मा[5]दयः किमगुणेन च काङ्क्षितेन सारञ्जुषाञ्चरणयोरुपगायतां नः।।३१।।

धर्मार्थकाम इति [6]योऽऽभिहित स्त्रिवर्ग ईक्षात्रयी नयदमौ विविधा च वार्ता।
मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः।।३२।।

ज्ञानं तदेतद[7]खिलं दुरवापमाह नारायणो नरसखः किल नारदाय।
एकान्तिनां भगवतस्तदकिञ्चनानां पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात्।।३३।।*

श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम्।
धर्मं भागवतं शुद्धं नारदादेव दर्शनात्।।३४।।

**श्रीध॰ गुणेष्विति।** गुणसाम्ये प्रधाने गुणव्यतिकरे महत्तत्त्वादौ च परो ब्रह्मस्वरूपः।।२७।।

कथं तर्हि द्रष्टृदृश्य[8]भोक्तृभोग्यादिभेदः, माययेत्याह-**प्रत्यगात्मेति।** प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया निर्देश्यः। दृश्यं भोग्यं देहादितद्रूपेण च व्याप्यतया निर्देश्यो, मायया ईयत इत्युत्तरेणान्वयः। वस्तुतस्तु स्वयमविकल्पितोऽनिर्देश्योऽपि सन्। यद्वा अनिर्देश्योऽप्येवं निर्देश्यः सन् विकल्पित ईयते इत्यन्वयः।।२८।।

---

1 M,Ma काल 2 M Ma °ड्य° 3 M,Ma तया 4--4 M,Ma करैरिह येऽनु 5 M,Ma °दिभिः 6. M,Ma यो वि° 7 A,B,G,J,T °म°. *The following extra verse is found in H,V editions only शान्ता भया विगततृदपरमात्मतत्त्व बोधोदयेन विधुतात्म परिभ्रमाक्षः। योनोऽवधूतवपुषापरमेण चष्ट सुप्तं समुत्थितमिवात्म विकल्पभेदम्। 8 H.V omit भोक्तृ

**केवलेति**। यतः केवलोऽनुभवात्मक आनन्द एव स्वरूपं यस्य। ननु स एव चेत्सर्वत्र तर्हि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत। तत्राऽऽह-गुणात्मकः सर्गो यस्यास्सा गुणसर्गा तया माययाऽन्तर्हितमैश्वर्यं येन सः।।२९।।

**तस्मा**दिति। यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचितं दयां सौहृदञ्च कुरुत; यया दयया, उन्मुच्य सन्त्यज्य।।३०।।

ततः किमत आह-**तुष्टे** इति। तुष्टे च तत्र तस्मिन् किमलभ्यम्। तथाऽपि गुणपरिणामात् दैवादेव स्वसिद्धा अयत्नतस्सिद्धा ये धर्मादयः तैः किम् अगुणेन च मोक्षेण काङ्क्षितेन किम्। तमुपगायतां नोऽस्माकं अकाङ्क्षितस्याऽपि तस्य सिद्धेः। यद्वा माभून्मोक्षः। तस्य चरणयोः सारञ्जुषां सुधां सेवमानानां तेनाऽपि किमित्यर्थः।।३१।।

ननु च धर्मादेरपुरुषार्थत्वे किमित्याचार्याभ्यां वेदोक्तत्वेन सत्य एवाऽभिहितस्तत्राऽऽह–**धर्मेति**। धर्मोऽर्थः कामश्चेति यस्त्रिवर्गः तदर्थञ्च य ईक्षाद्या अभिहिताः। ईक्षा आत्मविद्या। त्रयी कर्मविद्या। नयदमौ [1-]तर्कोदण्डनीतिश्च[-1] विविधा च वार्ता जीविका। तदेतत्सर्वं निगमस्यार्थजातं स्वसुहृदः स्वान्तर्यामिणः परमस्य [2-]पुंसः स्वात्मार्पणं[-2] स्वात्मार्पण साधनं चेत् तर्हि सर्वं सत्यं मन्ये, सत्यपरत्वात्। अन्यथा तदसत्यमेव। यद्वा, तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये। सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेवेत्यर्थः। तदुक्तं भगवता- " त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" (भ.गी.-2-45) इति।।३२।।

तेषां पुनर्विश्वासार्थं गुरुसम्प्रदायमाह–**ज्ञानमिति**। अत्र नारदः श्रोता, तत्र कुतो मादृशानामधिकार इति मा शङ्कीत्याह। भगवत एकान्तभक्तानां यत्पादरजः, तेनाऽऽप्लुतानां देहिनां सर्वेषामपि तज्ज्ञानं स्यात्, न तु उत्तमानामेवेति नियमः।।३३।।

**श्रुतमिति**। अत एव मयाऽपि [3]पूर्वं नारदाच्छ्रुतम्। विज्ञान[4]सहितमनुभवपर्यन्तं [5]ज्ञानं धर्मञ्च श्रुतम्।। ३४।।

**वीर०** गुणेषु सत्त्वादिषु गुणानां सत्त्वादीनां साम्यं यस्मिंस्तस्मिन्, प्रधाने मूलप्रकृतावित्यर्थः। गुणव्यतिकरे गुणवैषम्यवति महदहङ्कारादौ चेत्यर्थः।।२७।।

प्रत्यगात्मस्वरूपेण प्रत्यगात्मा जीवः स्वं स्वासाधारणं रूपं शरीरं यस्य तेन प्रत्यगात्मशरीरकत्वेनेत्यर्थः। दृश्यमचेतनं रूपं यस्य तेन अचेतनशरीरकत्वेन चेत्यर्थः। एकः स्वसमानरहित एव पर आत्मा पारमात्मा,

---

1- -1 H,V नीतिः दण्डश्च 2- -2 A,B,J omit 3 H,V omit पूर्वं 4 H,V संयुत ° 5 H,V omit ज्ञानं

अन्तःप्रविश्य भर्ता, अव्ययः अस्पृष्टशरीरगतविकारः, निरस्तनिखिलदोषः षाड्गुण्य[1]परिपूर्णः, ईश्वरो जीवकर्मानुगुणं नियन्ता, व्याप्यव्यापकनिर्देश्यः व्याप्येषु व्यापकतया निर्देष्टव्यः अविकल्पितः जातिगुणादिरहितः। केवलोऽनुभवः दुःखप्रतिभटं ज्ञानम् आनन्दरूपं तदेव स्वरूपं यस्य सः, परमेश्वरः स्वव्यतिरिक्तेश्वरान्तररहितः गुणसर्गया संसारिणां मोहादिगुणान् सृजतीति तया मायया अन्तर्हितैश्वर्यः संसारिणामप्रकाशमानमहिमा ईयते गम्यते सदाचार्योपदेशेन ज्ञायत इत्यर्थः। उक्तविधतद्याथात्म्यज्ञानपूर्वकं तत्समाश्रयणमात्रमेव तत्प्राप्तिनिमित्ततत्प्रीतिहेतु-रुपाय इति भावः। अत्र अविकल्पितः केवलानुभवानन्दस्वरूपः इति पदद्वयेन "अस्थूलमनण्वह्रस्वम्" (बृह.उ. 3-8-8) "सत्यं ज्ञानमनन्तम्" (तैत्ति.उ. 2-1-1) "विज्ञानमानन्दम्" (बृह.उ. 3-9-28) इति श्रुत्यर्थप्रत्यभिज्ञापनेन प्राप्यं ब्रह्मस्वरूपमुक्तम्। अवशिष्टैरेक एवेत्यादिभिः प्रथमान्तपदैः "प्रत्यगात्मस्वरूपेण,दृश्यरूपेण च" ति पदद्वयेन च प्राप्यस्य गुणा उक्ताः "परावरेषु भूतेषु प्रत्यगात्मस्वरूपेण च " (भाग. 7-6-20) इत्यनेन जीवस्य तच्छेषत्वापरपर्यायतच्छरीरत्वकथनेन प्राप्तृस्वरूपमुक्तम्। "गुणसर्गया माययाऽन्तर्हितैश्वर्यः" इत्यनेनाऽब्रह्मात्मक-त्वस्वतन्त्रात्मत्वादिरूपमोहादि प्राकृतगुणगण एव प्राप्तिविरोधीति कथनेन विरोधिस्वरूपमुक्तम्। तत्प्राप्तिफलन्तु तच्चरणकैङ्कर्यादिरूपं "सारज्ञुषां चरणयोः" (भाग. 7-6-25) इति वक्ष्यति। एवमर्थपञ्चकमुपदिष्टं भवति। पूर्वं "उपेत नारायणम्" इति तत्समाश्रयणं कर्तव्यत्वेन विहितम्। तस्य दुष्करत्वशङ्कापरिहारप्रसङ्गात् समाश्रयणोपयुक्तार्थपञ्चकज्ञानं सदाचार्योपदेशात् सम्पाद्यमित्युक्तम्। एवमर्थपञ्चकज्ञानपूर्वकतत्समाश्रयणमात्रमेव तत्प्रसादजननद्वारा तत्प्राप्तिहेतुरित्यभिप्रेतम्। तत्समाश्रयणञ्च तद्भक्तिप्रपत्त्यन्यतरात्मक मधिकारभेदेन व्यवस्थितमिति तात्पर्यम्।।२८,२९।।

यदुक्तं "न ह्यच्युतं प्रीणयतो बह्वायासः" (भाग. 7-6-19) इति तदुपसंहरन् तत्प्रीतिनिमित्ततत्सन्तोषजनकं हेत्वन्तरमाह-**तस्मादिति**। यस्मात् सर्वान्तरात्मत्वादि प्राप्य ब्रह्मस्वरूपादिज्ञानपूर्वकतत्समाश्रयणमात्रमेव तत्प्राप्त्यावह तत्प्रीतिहेतुः। तस्मात् यूयं सर्वं[2] आसुरं भावं भूतद्रोहशीलत्वादिरूपमुन्मुच्य समूलं त्यक्त्वा परमात्मशरीरेषु सर्वेषु भूतेषु [3-]ब्रह्मादिस्तम्बपर्यन्तेषु[-3] यथोचितं दयां सौहृदञ्च कुरुत, यया दयया अधोक्षजो भगवां स्तुष्यति। तादृशी भूतेषु दयां कुरुतेत्यर्थः।।३०।।

---

1 W omits परि 2 W omits सर्वं 3- -3 W omits

**तुष्यत्यधोक्षजः ततः किम्**-अतआह-**तुष्ट इति**। तत्र[1] तस्मिन्नाद्ये जगत्कारणभूते अनन्ते भगवति तुष्टे सति अलभ्यं किम्? न किमपि, सर्वं तस्मिन् तुष्टे सति अभिलषितं सुलभमेवेत्यर्थः यद्यपि सुलभं, तथाऽपि निरतिशयपुरुषार्थरूपतच्चरणारविद्वानुभवरूपममृतमनुभवद्भिः मादृशैः धर्मैश्वर्यकामकैवल्यादिकममृतं पिबद्भिः ऊषरोदकमिव नेष्यते इत्यभिप्रयन्नाह— किमिति। नोऽस्माकं गुणव्यतिकरात् कर्मानु सत्त्वादिगुणपरिणामादेव स्वसिद्धाः अयत्नतस्सिद्धा ये धर्मादयः धर्मार्थकामाः तैः [2-]धर्मार्थकामैः[-2] किम्? न किमपि प्रयोजनमित्यर्थः। कांक्षितेन अभिलषितेन अगुणेन गुणत्रयरहितेन कैवल्येन मोक्षेण वा किम्? सोऽपि न पुरुषार्थ इत्यर्थः। नः कथम्भूतानाम्? भगवच्चरणयोः सारमनुभवात्मकममृतसारं जुषतां सेवमानानां उपगायतां, तद्गुणान् स्तुवतां, मनसा तच्चरणारविन्दानुभवामृतमनुभवतां वाक्श्रवणाभ्यां तद्गुणानुभवामृतञ्च अनुभवतामस्माकं धर्मादय ऊषरोदकप्राया इत्यर्थः।।३१।।

ननु, त्वदुक्तमेतत्सर्वं जानन्तोऽप्यस्मद्गुरवस्त्रिवर्गमेव पुरुषार्थत्वेनोपदिदिशुः। त्वन्तु त्रिवर्गमनादृत्य भगवच्चरणारविन्दाश्रयणमेव सारतमं मन्यसे। किञ्च, गुर्वनुशिक्षितान्वीक्षिक्यादिशास्त्रेषु न त्वदुक्तधर्मः कर्तव्यत्वेनोपलभ्यते। अतः किं तद्धर्मप्रमापकम्? तत्राऽऽह - **धर्मेति**। धर्मादीनां समाहारद्वन्द्वः पुंस्त्वमार्षम्। धर्मोऽर्थः कामश्चेति यस्त्रिवर्गोऽभिहितः अस्मदाचार्यैः भार्गवादिभिरिति शेषः। यस्त्रिवर्गः पुरुषार्थत्वेन आचार्यै रुक्त इत्यर्थः। यच्च तत्प्रतिपादकेक्षादिरूपा विद्या च तदेतत्सर्वमहं मन्ये। तत्रेक्षा आन्वीक्षिकीसंज्ञा तर्कविद्या, त्रयी वेदपूर्वभागः नयदमौ दण्डनीति प्रतिपादके शास्त्रे, विविधा वर्ता कृष्याद्याजीविकाज्ञानजनकं शास्त्रम्। एतत्सर्वमहं मन्ये जानाम्येव। किन्तु यत्स्वसुहृदः परमस्य पुंसो निरुपाधिकसुहृदे परमपुरुषायेत्यर्थः। सम्प्रदानस्यैव शेषत्वविवक्षया षष्ठी। स्वात्मार्पणं भगवति स्वात्मसमर्पणं तदेतन्निगमस्य वेदोत्तरभागस्य, प्रमेयमिति शेषः। उपनिषद्भागस्य प्रतिपाद्यं सत्यं, नित्यम्, अक्षयिष्णुपुरुषार्थसाधनं, मन्य इत्यर्थः। अस्मद्गुरुभिः ज्ञातमप्यहं जानामि, नित्यनिरतिशयपुरुषार्थसाधनं भगवत्यात्मसमर्पणं वेदान्तप्रतिपाद्यं त्वधिकारं जानामीत्यर्थः। गुरवस्तु नैतज्जानन्तीत्यभिप्रायः। आपाततो जानन्तो वा महदनुग्रहाभावात् नाऽनुष्ठानोपयोगितया निस्संशयं जानन्तीति तात्पर्यम्। निगमस्येत्यनेनाऽस्मदुक्तार्थे वेदान्तमार्गः प्रमाणमित्युक्तम्। स च "ओमित्यात्मानं युञ्जीत मुमुक्षुर्वै शरणमहं प्रपद्ये" (म. ना. उ. 1-7-15) इत्यादिरूपः। स्वात्मार्पणमित्यनेन च उपेत नारायणम्, हरिमाश्रयेत

1 W omits तत्र 2- -2 W omits

इत्याद्युक्तमाश्रयणमात्मसमर्पणरूपमिति विवृतम्। भगवति स्वात्मसमर्पणं नाम स्वात्मनो भगवच्छेषतैक स्वभावत्वानुसन्धानपूर्वकं भगवति स्वात्मरक्षाभरसमर्पणरूपम्। एवं नारायणोपायनं नाम तच्छरणागतिरित्युक्तम्भवति। समनन्तराध्याये तदुपायनस्य तद्भक्त्यात्मकत्वं वक्ष्यति। एवञ्च यथाऽधिकारं भक्तिप्रपत्त्यन्यतरात्मकं भगवत्समाश्रयणं कर्तव्यमिति तात्पर्यम्।।३२।।

ननु गुरुभिरज्ञातमिदमन्तरेणाऽपि तदुपदेशेन कथं त्वं ज्ञातवानित्याशङ्कायां भगवतो नारदस्यानुग्रहा-देवेति वक्तुं तस्य साम्प्रदायिकत्वमाह–**ज्ञानमिति**। तदेतद्दुरवापं दुर्लभं ज्ञानं नरस्य सखा भगवान्नारायणो बदरिकाश्रमवासी नारदायाऽऽह, उपदिष्टवान्। ननु यत्र नारदः श्रोता, नारायणो वक्ता, तस्मिन्मादृशानां कथमधिकार इति शङ्कां निराह–एकान्तिनामिति। एकान्तिनामकिञ्चनानामनन्यप्रयोजनानां भगवतः पादारविन्दरजसा आप्लु तानां स्नातानां देहिनां भगवत्सेवासक्तानां सर्वेषामपि तज्ज्ञानं स्यादेव, न तूत्तमानामेवेति नियमः।।३३।।

अत एव मयाऽपि नारदाच्छ्रुतमित्याह–**श्रुतमिति**। विज्ञानेन विवेकादिजन्येन संयुतं ज्ञानं शास्त्रोत्थं विशुद्धं भागवतधर्मरूपं भगवद्याथात्म्यवेदिनो नारदाच्छ्रुतं श्रवणेन ज्ञातं भगवतो नारदस्य वचसां श्रवणात् मम ज्ञानविज्ञानसम्पत्तिरभूदित्यर्थः।।३४।।

**विज०** गुणसाम्ये प्रलये, गुणव्यतिकरे सृष्टौ।।२७।।

व्याप्तिप्रकारमाह–**प्रत्यगात्मेति**। सर्वपदार्थानामन्तःप्रत्यगात्मस्वरूपेणाऽन्तर्यामिरूपेण बहिःकालरूपेण व्याप्तेन ब्रह्मापरपर्यायेण, एवमेक एव व्याप्यव्यापकनिर्देश्यो विकल्पितो विविधक्लृप्तः "अन्तर्यामी प्रत्यगात्मा व्याप्तः कालो हरिः स्मृतः।" (ब्रह्मतर्के) इति वाक्यसिद्धोऽयमर्थः। घट इव निर्देश्यो नेत्यनिर्देश्यरूपः।।२८।।

"अचिन्त्यमव्यपदेशमैकात्म्यप्रत्ययसारम्" इति श्रुतिनिरूपित इत्याह–**केवलेति**। सर्वत्र सिद्धश्चेत् *किमिति न दृश्यत इति तत्राऽऽह–माययेति। मायया प्रकृत्या "तमसा गूढमग्रे" इति श्रुतेः। सत्त्वादिगुणैः सर्गः* सृष्टिः यस्याः सा तथा, तया।।२९।।

यतस्सर्वभूतानि भगवन्निवासस्थानानि, तस्मात्तया भूतदयया आसुरं भावं द्वेषं "विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानता" (ब्रह्मतर्के) इति स्मृतेः। "प्रद्विषन्तोऽभ्यसूयकाः" (भ.गी. 16-18) इति।।३०।।

भगवत्तुष्ट्या किं प्रयोजनमिति तत्राऽऽह - **तुष्ट** इति। ये अनुसिद्धाः जन्मप्रभृतिप्राप्ताः तैर्गुणव्यतिकरैर्विषयसुखैः हरेश्चरणयोः सारञ्जुषां गुणलक्षणमकरन्दं सेवमानानां, तद्गुणांश्चोपगायतां गायमानानां नोऽस्माकं कांक्षितेनाऽगुणेन

अन्यैर्वाञ्छितेन मोक्षेण किं अपक्व भक्तिलभ्यमुक्तेः, भक्तेः परमानन्दरूपत्वम्। तत्राऽपि सुखाधिक्यहेतुत्वात् सुतरां धर्मादिभिः सुतमां गुणव्यतिकरैः फलं नास्तीति किमु वक्तव्यम्? मोक्षे सुखमनाकाङ्क्षमाणस्य यथा सुखाधिक्यं भवति, तथा मोक्षगतं सुखं कांक्षमाणस्य सुखं पूर्णं न लभ्यत इत्यभिप्रायेण कांक्षितेनेति विशेषणम्। "कांक्षतो मोक्षगमपि सुखमाकांक्षतो यथा" (ब्रह्मतर्के) इति वचनात्।।३१।।

ननु शास्त्रविहितानां धर्मादीनां कथङ्कारं साफल्यं भवतीत्याशङ्कां परिहरन्नाऽऽह–**धर्मेति**। धर्मार्थकाम इति नामभिन्नो यस्त्रिवर्गः शास्त्रे विहितः , तस्येक्षा ज्ञानमनुष्ठानञ्च या त्रयी त्रयोवेदाः, तेषां शब्दतोऽर्थतश्च ज्ञानं यौ नयदमौ नीतिदण्डशास्त्रे तयोरीक्षा तात्पर्यज्ञानं, या च विविधा वार्ता, कृषिवाणिज्यादिलक्षणा तदीक्षा प्रयोगज्ञानं वा " ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वणश्चतुर्थः" इत्यारभ्य "सर्वदेवयजनं विद्या" इत्यनेन यदुक्तं, तस्य सर्वस्यानुकर्षणार्थश्चकारः। यदेतदुक्तं तदेतदखिलं परमपुरुषस्य स्वात्मपूर्वकसमर्पणमर्पितुमुद्दिष्टं भवति। तर्हि निगमस्य ऋग्वेदादिसकलशास्त्रपठितस्य सत्यं यथार्थफलमिति मन्ये इत्यन्वयः।।३२।।

नेदं स्वमनीषोत्थं, किन्तु सम्प्रदायतः प्राप्तत्वात् श्रद्धेयमित्याह–**ज्ञानमिति**। नरसखोऽनन्तसखः। अनेन विशेषणेन सनकादिभ्य उपदिष्टमिदमिति ज्ञापितम्। किलशब्देन पुरातनत्वेन ग्राह्यत्वं दर्शयति। ज्ञानाधिकारिण आह–एकान्तिनामिति।।३३।।

तव कुतः प्राप्तमेतत् आह - **श्रुतमिति**।।३४।।

**दैत्यपुत्रा ऊचुः**

**प्रह्लाद त्वं वयञ्चाऽपि नर्तेऽन्यं विद्महे गुरुम्।**
**एताभ्यां गुरुपुत्राभ्यां बाला[1-]नामपि हीश्वरौ[-1]।।३५।।**
**बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः।**
**छिन्धि नस्संशयं सौम्य स्याच्चे द्विस्रम्भकारणम्।।३६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे प्रह्लादानुचरिते षष्ठोऽध्यायः।।६।।

---

1--1 H,V °नामृत ईश्वरौ

**श्रीध०** तत्राऽतिविस्मिताःपृच्छन्ति दैत्यपुत्राः **प्रह्लादेति।** हे प्राह्लाद ! त्वं वयम् एताभ्यां शण्डामर्काभ्याम् ऋते ऽन्यंगुरुं न विद्मः। एतदागमनात्पूर्वमेवाऽहं नारदपार्श्वं गत इति चेत्तत्राऽऽहुः बालानामप्यतिशिशूनामस्माकमेता वीश्वरौ नियन्तारौ। अत स्तवाऽन्यत्र गमनं न सम्भवति।।३५।।

स एवात्राऽऽगत इत्यपि न सम्भवतीत्याहुः-**बालस्येति।** दुरन्वयो दुर्घटः। विस्रम्भकारणं विश्वासहेतुः।।३६।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

**वीर०** तत्र विस्मिताः पृच्छन्ति दैत्यकुमाराः - **प्रह्लादेति।** हे प्रह्लाद ! त्वं वयञ्चाऽपि एताभ्यां गुरुपुत्राभ्यामृते विनाऽन्यं गुरुं न विद्महे। एतदागमनात्पूर्वमेवाऽऽहं नारदपार्श्वं गत इत्यत्राऽऽहुः–बालानामपि शिशूनामपि सतामस्माकमेतावेव ईश्वरौ नियन्तारौ, अतस्तवाऽन्यत्र[4] गमनं न सम्भवति।।३५।।

नारद एवात्राऽऽगत इत्यपि[5] न सम्भवतीत्याहुः–**बालस्येति।** अन्तःपुरस्थस्य बालस्य तत्र महतो नारदस्य सङ्गो दुरन्वयो दुर्घटः। हे सौम्य, प्रह्लाद![6] नोऽस्माकं संशयं छिन्धि अपनुद। विस्रम्भकारणं विश्वासहेतुः स्याच्चेत् असम्भावितत्वेनाऽस्माभिरविश्वसनीयो नारदसङ्गमः त्वदुक्तस्तत्र[7] यद्यस्मद्विश्वासहेतुरस्ति चेत् तदुपपादनपूर्वकं तत्सङ्गतिविषयं संशयं छिन्धीत्यर्थः।।३६।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः।।६।।

**विज०** एतस्मिन्नवसरे दैत्यपुत्राः प्रह्लादकथितार्थशङ्कया तं पृच्छन्तीत्याह–**प्रह्लादेति** एताभ्यां गुरुपुत्राभ्यां शण्डामर्काभ्यामृते नाऽन्यं गुरुं विद्महे यस्मात्। किञ्च, विज्ञानञ्चेश्वरविषयं विवक्षितं, तदुपाधिनाऽपि बालाना मक्षराभ्यासनिरतानामस्माकं ईश्वरो न कांक्षित इति यस्मात् अन्यगुर्वभावेऽपीश्वर उपदेष्टा स्यादतो वाऽऽह - बालानामिति। बालानामीश्वरोऽस्त्यपि किं? नाऽस्ति प्रतिपत्त्यभावात्।।३५।।

1--1 A.B, J Omit 2--2 H.V Omit 3--3 H,V Omit 4 A,B,T add इति नः शङ्का वर्तत इत्यर्थः। 5. A,B,T इति। 6. W, Omits प्राह्लाद!
7. W, Omits त्वत्।

´कस्मिंश्चिदवसरे देशान्तरेऽन्यगुरुसङ्गतिः किं न स्यादिति तत्राऽऽह–**बालस्येति**।तस्मादुत्पन्नं नस्संशयं जहीत्यन्वयः। तत्र कृत्यमाहुरित्याह–स्यादिति।।३६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे षष्ठोऽध्यायः।।६।।

* * * *

# सप्तमोऽध्यायः

### नारद उवाच

एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः।
उवाच स्मयमानस्तान्[1] स्मरन् मदनुभाषितम्[2]।।१।।

### प्रह्लाद उवाच

पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम्।
युद्धोद्यमं[3] परं चक्रुर्विबुधा दानवान्प्रति।।२।।

पिपीलिकैरहिरिव दष्टो[4] लोकोपतापनः।
पापेन पापोऽभक्षीति वादिनो वासवादयः।।३।।

तेषा मपि[5] बलोद्योगं निशम्याऽसुरयूथपाः।
वध्यमानास्सुरैर्भीता दुद्रुवुस्सर्वतो दिशम्।।४।।

कलत्रपुत्रवित्ताऽप्तान्[6] गृहान्पशुपरिच्छदान्।
नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः।।५।।

व्यलुम्पन्राजशिबिरममरा जयकांक्षिणः।
इन्द्रस्तु राजमहिषी मातरं मम चाऽग्रहीत्।।६।।

नीयमानां भयोद्विग्नां क्रन्दन्ती[7] कुररीमिव।
यदृच्छयाऽऽगतस्तत्र देवर्षिर्दृष्टवान्पथि[8]।।७।।

---

1 B नाम्ता 2 M Ma शासनम 3 M Ma द्याग 4 A B G J M Ma T दिष्ट्या 5 A B G J M Ma T ति 6 A B G J T मित्रा 7 A B G J T रुदतीं M Ma रुदन्तीं 8 A B G J M Ma T ददृश

प्राह मैनां[1] सुरपते नेतुमर्हस्यनागसम्[2][3]।
मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम्।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम्। प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये।।

अश्रावि नारदादेतन्मया गर्भ इतीरितुम्। तत्प्रस्तावकथामाह पद्यैष्षोडशभिस्सुधीः।।

**पितरीति**। अस्माकं पितरि हिरण्यकशिपौ। स्वकृतेनैव पापेन पापोऽसावभक्षिभक्षित इति हर्षेण वदन्तो युद्धोद्यमं चक्रुः।।१-५।।

**व्यलुम्पन्निति** राज्ञश्शिबिरमावासं व्यलुम्पन् सर्वस्वापहारेण नाशितवन्तः ।। ६,७ ।।

**प्राहेति**। अनागसं[4] [5]निरपराधाम्[5] एतां नेतुं मा[6]ऽर्हसीति प्राह।।८।।

## श्रीवीराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

दैत्यकुमारैरेवं पृष्टः प्रह्लादः तत्सङ्गतिहेतु मुपपादयन् तत्त्वत्रययाथात्म्योपदेशपूर्वकं सपरिकरं भगवद्भक्तियोग मुपदिष्टवानित्याह भगवान्नारदः - **एवमिति**। एवमित्थं दैत्यसुतैः पृष्टो भागवतोत्तमः प्रह्लादस्तान् दैत्यपुत्रान्प्रति स्मयमानो मया नारदेन अनुभाषितं स्मरन्नुवाच।।१।।

तदेवाऽह-**पितरी**[7]त्यादिनानाऽधुनाप्यजहात्स्मृतिः इत्यन्ते[7]न। अस्माकं पितरि हिरण्यकशिपौ तपसे तपः कर्तुं मन्दराचलं प्रति प्रस्थिते प्रयाते सति इन्द्रादयो विबुधा देवाः दानवान्प्रति युद्धोद्यमं चक्रुः।।२।।

कथम्भूता स्सन्तः लोकोपतापनः लोकानां दुःखकारी पापः पापात्मा स्वपापेनैव दैवात् पिपीलिकैरहिस्सर्प इव अभक्षि भक्षित इति वादिनो वदन्तस्सन्तः, वासव इन्द्र आदिर्येषां ते, युद्धोद्यमं चक्रुरिति पूर्वेणान्वयः।। ३।।

ततः किं जातम्? तत्राऽह - **तेषां** वासवादीनां बलोद्योगं बलप्रयुक्तयुद्धोद्योगं निशम्य दृष्ट्वा सुरैर्वध्यमाना, अत एव भीतास्सन्तोऽसुरयूथपाः सर्वे त्वरिताः सर्वतो दिशं दुद्रुवुः पलायितवन्तः।।४।।

---

1. H,V,W चैनां; 2. H,V,W तुं नार्हं; 3 H,M,Ma V सीम्. 4. H,V °सां°, 5- -5 A omits, 6. H,V ना; 7- -7 W omit

कथम्भूता:? कलत्रादीन् नावेक्षमाणा: तेषु त्यक्तस्पृहा: इत्यर्थ:। तत्र हेतु:-सर्वे[1] प्राणपरीप्सव: प्राणमात्रपरित्राणेच्छव:। तत्र परिच्छदा भोगोपकरणानि।।५।।

ततो जयशालिनोऽमरा देवा: राज्ञो हिरण्यकशिपो: शिबिरं गृहं व्यलुम्पन् सर्वस्वापहारेणनाशितवन्त:। इन्द्रस्तु राज्ञो हिरण्यकशिपोर्भार्यां मम मातरमग्रहीत्।।६।।

ताञ्च इन्द्रेण नीयमानाम्, अत एव भयोद्विग्नां कम्पितां कुररीमिव क्रन्दन्तीं रुदतीं[2] देवर्षि नारदो यदृच्छयोपगत: पथि ददर्श, प्राह च।।७।।

तदेवाऽह - हे सुरपते! अनागसं निरपराधामेनां नेतुं त्वं[3] नार्हसि। अतो हे महाभाग! परेणान्येन [4]हिरण्यकशिपुना[4] परिगृहीतां परदारानित्यर्थ:। मुञ्च मुञ्च।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रुतेषु सत्सु साधनानां भक्तेरेव प्रधान्यम्, हरे मुंख्यप्रसादजनकत्वात् भक्तिरेव पुरुषेणापाद्येत्यादिकं निरूप्यते ऽस्मिन्नध्याये। भक्तिप्रतिपादनात्मकत्वादस्यशास्त्रस्य पुन: पुन स्तत्प्रतिपादनान्न पुनरुक्तिशङ्काकार्या। तत्र दैत्यपुत्रै: पृष्ट: प्रह्लाद: किं चकारेति युधिष्ठिर शङ्कान्वितस्तां परिहन्नारदआह नारद इति। नारदस्य ममाऽनुशासनम्।।१,२।।

अहिस्सर्प: पिपीलिकैर्यथा भक्ष्यते तथा लोकोपतापन: पापो हिरण्यकशिपु: स्वपापेनाऽभक्षि नष्टप्रायोऽभूत्। दिष्ट्या! सुखमस्तु। लोकार्थमितिब्रुवाणा:। "दिष्ट्या समुपजोषञ्च" (अम.को 3-421) इत्यमर:।।३-५।।

**व्यलुम्पन्** जयकांक्षिणो जितयुद्धा: असुरजयेन प्रकाशमाना वा ।। ६,७ ।।

तवोपभोक्तुं योग्या न भवतीत्याह - **परपरिग्रहमिति** ।। ८ ।।

### इन्द्र उवाच

**आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विष:।**
**आस्यतां यावत्प्रसवं[5] मोक्ष्येऽर्थपदवीं गत:।।९।।**

---

1. W omit सर्वे; 2. W न्ती; 3. W omit त्वं; 4- -4 W omit. 5. H,V,W प्रसवोयावत्

नारद उवाच

सोऽयं[1] निष्किल्बिषः साक्षान्महाभागवतो महान्।
त्वया न प्राप्स्यते संस्था मनन्तानुचरो बली।।१०।।

इत्युक्तस्तां विहायेन्द्रो देवर्षेन्मानयन्वचः।
अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ।।११।।

ततो मन्मातरमृषिः[2] समुन्नीय[3] निजाश्रमम्।
आश्वास्येहोष्यतां वत्से यावत्ते भर्तुरागमः।।१२।।

तथेत्यवात्सीद्देवर्षे रन्ति साऽऽप्यकुतोभया।
यावद्दैत्यपतिर्घोरात्तपसो न-यवर्तत।।१३।।

ऋषिं पर्यचरत्तत्र भक्त्या परमया सती।
अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छा प्रसूतये।।१४।।

ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः।
धर्मस्य तत्त्वं ज्ञानञ्च मामप्युद्दिश्य निर्मलम्।।१५।।

तत्तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे।
ऋषिणाऽनुगृहीतं मां नाऽधुनाऽप्यजहात्स्मृतिः।।१६।।

**श्रीध० आस्ते** इति। अविषह्यं दुस्सहम्। अतोऽनया प्रसवपर्यन्तमत्राऽस्यताम्। ततश्चाऽर्थस्य पदवीं मार्गं गतः प्राप्तस्सन् जातं पुत्रं हत्वा मोक्ष्ये[4] मोक्ष्यामीत्यर्थः।।९।।

**सोऽयमिति**। साक्षात्स्वगुणैरेव महान्, न तु पित्रादि सम्बन्धात्। त्वया हेतुभूतेन संस्थां मृत्युं न यास्यति। तत्र हेतवो निष्किल्बिष इत्यादयः।।१०।।

**इतीति**। अनन्तस्य प्रियो योऽहं, स वा प्रियो यस्य मम भक्त्या एतां प्रदक्षिणीकृत्य।।११।।

---

1. A,B,G,J,M,Ma,T अयं. 2 A,B G,J,M,Ma,T नो मा. 3. A,B,G,J,M,Ma,T समानीय; 4. A,B,J Omit मोक्ष्ये।

**तत** इति। इहोष्यतामित्याह इति शेषः।।१२।।

**तथेति।** अन्ति समीपे।।१३।।

**ऋषिमिति।** अन्तर्वत्नी गर्भिणी। इच्छया भर्तु रागमनानन्तरं प्रसूतये। एव मपि स्वगर्भस्य क्षेमाय।।१४।।

**ऋषिरिति।** तस्याः शोकशान्त्यै धर्मस्य तत्त्वं भक्तिलक्षणं ज्ञान मात्मानात्मविवेकः, तदुभयं प्रादात्। ईश्वरः समर्थः।।१५,१६।।

**वीर॰** इत्युक्त आहेन्द्रः - **आस्त** इति। अस्याः जठरे कुक्षावविषह्यमस्माभिः सोढुमशक्यं सुरद्विषो हिरण्यकशिपो वीर्यं गर्भरूपेण वर्धमानमास्ते तिष्ठति[1], अतोऽनया प्रसवपर्यन्तमास्यताम् मत्समीपे स्थीयताम्। ततश्च अर्थस्य पदवीं मार्गं गतस्सन् मोक्ष्ये जातं पुत्रं हत्वा एनां त्यजामीत्यर्थः।।९।।

एव मुक्तो देवर्षिराह -**सोऽयमिति।** सोऽयं गर्भस्थः शिशुःत्वया हन्त्रा संस्थां मरणं न प्राप्स्यते। तत्र हेतुं वदन् तमिमं विशिनष्टि - निष्किल्बिषः मरणनिमित्त प्राचीन किल्बिषरहितः। तत्कुतः ? महाभागवतः भगवद्भक्त्यैव ध्वस्तकिल्बिष इति भावः। महागुणै श्रेष्ठः, अनन्तस्य भगवतोऽनुचरः बली महाबलसम्पन्नः। यद्यपि गर्भस्थ दशायां स्वानुग्रहात्पूर्वं न भागवतत्वादयोधर्मास्तथाऽपि समनन्तरमेव स्वेनाऽनुग्रहीष्यमाणस्य पुनर्जन्मकाले "जायमानं हि पुरषं यं पश्येत्" (भार.मो 12-336-68) इत्युक्तरीत्या भगवता ईक्षिष्यमाणस्य[2] उक्तधर्मान्वय इत्यभिप्रायेण निष्किल्बिष इत्यादीनि विशेषणान्युक्तानि। ननु इन्द्रेण मुक्तां प्रति स्वोपदेशे सति तद्गर्भस्थस्योक्तधर्मसम्पत्तिः। तस्य तद्धर्मसम्पत्तौ हि तद्धेतुकस्तत्त्यागः इतीतरेतराश्रयत्वमिति कथं देवर्षिणैवमुक्तमिति चेत् मैवं, गर्भस्थं नितरामीश्वरकटाक्षविषयमत एव " ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा। विष्णोः कटाक्ष अद्वेषआनुकूल्यञ्च सात्त्विकैः, सम्भाषणं षडेतानि ह्याचार्यप्राप्तिहेतवः" इत्युक्तहेतुषट्कसम्पन्नं दैवज्ञो देवर्षिरालक्ष्य त्वयैतस्याममुच्यमानायामप्यहमुक्तधर्मयुक्तं नूनं करवाणि, अतोऽयं त्वया संस्थां न प्राप्स्यतीत्युक्तवानिति नेतरेतराश्रयः।।१०।।

इति इत्थं उक्त इन्द्रो देवर्षेर्नारदस्य वचो मानयन् गौरवादभ्युपगच्छन् तां राजमहिषीं विहाय अनन्तस्य भगवतः प्रियो योऽहं तस्य मम भक्त्या एनां मन्मातरं परिक्रम्य प्रदक्षिणीकृत्य दिवं प्रति ययौ।।११।।

---

1 W omits; तिष्ठति 2 A,B,T ईक्ष्यमाणस्य

ततः ऋषिर्नारदः मम मातरं स्वाश्रमं प्रति समानीय सम्यगनायासेन उन्नीय गमयित्वा आश्वास्य सान्त्वयित्वा हे! वत्से बाले ! तव भर्तुर्यावदागमः तावत्पर्यन्तं त्वया इह अस्मिन् मदाश्रमे उष्यतां स्थीयता मित्युवाच इति शेषः।।१२।।

ततस्तथेत्यङ्गीकृत्य सा मन्माता देवर्षेरन्तिके समीपे नास्ति कुतोऽपि भयं यस्यास्तादृशी अवात्सी दुषितवती। दैत्यपतिरुग्रात्तपसो यावन्न न्यवर्तत, तावत्सती मन्माता अन्तर्वत्नी गर्भिणी स्वगर्भस्य क्षेमाय रक्षणाय इच्छया स्वभर्तुरागमनानन्तरं प्रसूत ये च परमया भक्त्या ऋषिं नारदं पर्यचरत् शुश्रूषितवती।।१३,१४।।

तत स्तां देवर्षिरनुजग्राहेत्याह - **ऋषिरिति**। ईश्वरः समर्थऋषिः तस्याः परिचरन्त्याः मन्मातुर्मामप्युद्दिश्य निर्मलं धर्मस्य तत्त्वं, ज्ञान ञ्चेत्युभयं प्रादात्। धर्मो भगवद्भक्तियोगलक्षणः तस्य तत्त्वं याथात्म्यं, तदङ्गभूतं ज्ञानं देहविविक्त प्रत्यगात्मयाथात्म्यज्ञानञ्च प्रादात् उपदिष्टवान् इत्यर्थः।।१५।।

तद्दशायामुपदिष्टं तदुभयं मम मातुः स्त्रीत्वात् कालस्य दीर्घत्वाच्च तिरोदधे, विस्मृतमभूदित्यर्थः। ऋषिणा भगवता नारदेनाऽनुग्रहीतं मान्तु सा स्मृतिः तदुपदेशजनितं स्मृत्यात्मकं ज्ञानमधुनाऽपि नाजहात् नतत्याज।।१६।।

**विज॰** सुरद्विषो हिरण्यकशिपोर्वीर्यं रेतोलक्षणं, अस्याः यावत्प्रसवः तावन्मम वशे आस्यतां, पश्चादहं मोक्ष्ये ततः पूर्वं कस्मान्न मुञ्चसि इति तत्राऽह-अर्थपदवीमिति।।९।।

अनया प्रसूतः पुत्रो हन्तुं त्वया न शक्यत इत्याह - नत्वयेति। संस्थां मरणं, कुतः? अत्राऽह अनन्तेति।।१०।।

अनन्तप्रियःश्रीनारायणो। अस्य भक्त्या अनन्तस्य हरेः प्रिया बहुमानलक्षणा भक्तिः, अनन्तप्रिया भक्तिस्तया वा।।११।।

तावदत्रोष्यतामित्याह - यावदिति ।। १२ ।।

अन्ति अन्तिके ।। १३ ।।

अन्तर्वत्नी गर्भिणी ।। १४ ।।

गर्भक्षेममिच्छाप्रसवञ्चेत्युभयम्। ईश्वरो वरप्रदानसमर्थः। नारदाच्छ्रुतमित्यनेन नारदस्य यद्गुरुत्वमभिप्रेतमेवंविध- मित्याह -धर्मस्येति। धर्मस्य हरेर्भागवतसंज्ञस्य वा तत्त्वं तदुभयविधज्ञानञ्च यद्गर्भस्थं मामुद्दिश्य मात्रे उपदिष्टम्।।१५।।

तदुभयं, तयोः कालस्यातिक्रान्तत्वात् स्त्रीत्वात् शब्दादिविषयलौल्याच्च मातुस्तिरोहितमभूदित्यन्वयः। "अणुरेषधर्मः" (कठ. उ. 1-21) इति श्रुतिः। धर्मो हरिः, ततस्तव किमभूदिति तत्राऽऽह-ऋषिणेति।।१६।।

**भवतामपिभूयान्मे यदि श्रद्दधते वचः।**
**वैशारदी धीः श्रद्धातः स्त्रीबालानाञ्च मे यथा।।१७।।**

**जन्माद्याः षडिमे भावा: दृष्टा देहस्य नाऽऽत्मनः[1]।**
**फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना।।१८।।**

**आत्मा नित्योऽव्ययश्शुद्धः[2]एकः क्षेत्रज्ञ आश्रयः।**
**अविक्रियः स्वदृक्[3] हेतुःव्यापकोऽसङ्ग्यनावृतः।।१९।।**

**एतै र्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः।**
**अहं ममेत्यसद्भावं[4] देहादौ मोहजं त्यजेत्।।२०।।**

**स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात्।**
**क्षेत्रेषु देहेषु तथाऽऽत्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत।।२१।।**

**अष्टौ प्रकृतयः प्रोक्ता स्त्रय एव हि तद्गुणाः।**
**विकाराष्षोडशाऽऽचार्यैः पुमानेकस्समन्वयात्।।२२।।**

**देहस्तु सर्वसङ्घातो जगत्तस्थुरिति द्विधा।**
**अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन्।।२३।।**

**अन्वयव्यतिरेकेण विवेकेन[5]ोशताऽऽत्मना।**
**सर्गस्थानसमाम्नायै र्विमृशद्भिरसत्वरैः।।२४।।**

---

1 H V नि: 2 H.V द्वांद्यक:, 3. M. Ma कश्यांव्या: 4 M,Ma °त° 5 M Ma °नागताऽऽ°

**श्रीध० भवतामिति**। भूयात् भवेत्। वैशारदी स्वार्थे तद्धितः देहाद्यहङ्कारच्छेदनिपुणेत्यर्थः।।१७।।

[1]**काऽसौ** वैशारदी धीरित्यपेक्षायां नारदोक्तमेव देहा[2]त्मविवेकप्रकारमाह-**जन्मेति** दशभिः। जन्माद्याः- जायते, अस्ति, वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवम्भूता इमे षड्भावविकारा वृक्षे सत्येव यथा फलानां दृश्यन्ते तद्वदात्मनि तथैव स्थिते देहस्य दृष्टा इत्यर्थः। ईश्वरो विकारसमर्था मूर्तिर्यस्य तेन।।१८।।

तदेवं देहधर्मैः तद्वैलक्षण्येन आत्मनो देहाद्भेदो दर्शितः। इदानीमात्मधर्मैरेव भेदं स्फुटयंस्तदहङ्कारादिकं त्याजयति-**आत्मेति।** आत्मा नित्यः "अविनाशी वाऽरेऽयमात्मा" (ब्रह्म.उ. 4-5-14) इति श्रुतेः। अव्ययोऽपक्षयशून्यः। "ऋचो अक्षरे परमे व्योमन्" (श्वेता. उ. 4-8) इति श्रुतेः। शुद्धः "निरवद्यं निरञ्जनम्" (श्वेता. उ. 6-19) इति श्रुतेः। एकः "एकमेवाद्वितीयम्" (छोन्दो उ. 6-2-1) इति श्रुतेः। क्षेत्रज्ञः "विज्ञातारमरे केन विजानीयात्" (बृह. उ. 4-5-5) इति श्रुतेः। आश्रयः "यस्मिन् द्यौः पृथिवीचान्तरिक्षम्" (मुण्ड. उ. 2-2-5) इति श्रुतेः। अविक्रियः "निष्कलं निष्क्रियं शान्तम्" (श्वेता. उ. 6-19) इति श्रुतेः। स्वदृक्आत्मज्योतिः "सम्राडिति होवाच" इति श्रुतेः। हेतुः "स इमॉल्लोकानसृजत" (ऐत. उ. 1-2) इति श्रुतेः। व्यापकः "सत्यं ज्ञानमनन्तम्" (तैत्ति 3-2-1) इति श्रुतेः।असङ्गः "असङ्गोह्ययं पुरुषः" (बृह. उ. 3-6-15) इति श्रुतेः।अनावृतः "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" (बृह. उ. 5-1-1) इति श्रुतेः।।१९।।

**एतैरिति**। [3-]एतैर्द्वादशभिरात्मनो लक्षणै[-3]ः परैः श्रेष्ठैः [4-]विवेकसमर्थैः[-4] देहाद्भेदं विद्वानसद्भावं मिथ्याबुद्धि[5] [6]त्यजेत्।।२०।।

नन्वेवं विविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवेन ब्रह्मता प्राप्तिः कथं स्यात् यतोऽहङ्कारादिकं त्यजे दित्यपेक्षायां तत्प्राप्तिप्रकारं सदृष्टान्तमाह - **स्वर्णमिति** [7-]स्वर्णाकरक्षेत्रे[-7]षु स्फुरत्स्वर्णकणेषु ग्रावसु योगै धमनाद्युपायैः [8]तदभिज्ञ [9]उपायाभिज्ञो हेमकारो यथा स्वर्णं प्राप्नुयात्। आत्मयोगै रात्मप्राप्त्युपायैः ब्रह्मगतिं ब्रह्मताम्। अध्यात्मवित् आत्मादिकृतकार्यकारणसङ्घात[10]ज्ञाता।।२१।।

अध्यात्मविवेक[11]पूर्वक मात्मप्राप्त्युपायमाह - **अष्टाविति** त्रिभिः। मूलप्रकृति महदहङ्कारो पञ्च तन्मात्राणि चेत्यष्टौ, त्रयस्सत्त्वादयस्ते च प्रकृतिगुणा एव नतु भिन्नाः। एकादशेन्द्रियाणि पञ्च महाभूतानि चेति षोडश।

1. H,V का सा 2. H,V omit विवेक 3- -3 H,V omit 4- -4 H,V omit 5 H,V दृष्टिं 6 H,V omit त्यजेत् 7- -7 H,V स्वर्णाकरः 8 H,V omit तदभिज्ञः 9. H,V तदुपा 10 V तं 11 A,B,J omit पूर्वक

पुमानात्मा एकः प्रोक्तः, कपिलादिभिराचार्यैः। एकत्वे हेतुः - एषु साक्षित्वेनाऽन्वयात्। तदुक्तम् - "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त।षोडशकस्तु विकारो न प्रकृतिर्नविकृतिः पुरुषः" (साङ्ख्य. 3) इति।।२२।।

**देह** इति। जगज्जङ्गमम्। तस्थुः स्थावरम्। अत्रैव सर्वसङ्घातात्मके एव पुरुषोमृग्योऽन्वेष्टव्यः। सुशकञ्चैतदित्याह नेति नेतीत्यन्यापोहे क्रियमाणे स्वयमेवाऽतत्त्यजन् अनात्मवर्गात्पृथगुपलभ्यमान इत्यर्थः।।२३।।

**अन्वयेति**। मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनाऽन्वयः। अत एव मणिभ्यः सूत्रस्येवैकैकव्यतिरेकश्च तयोर्द्वन्द्वैक्यम्। तेन यो विवेकः पूर्वोक्तो वा तेन उशता शुद्धेनात्मना मनसा सर्गस्थानसमाम्नायैःसृष्टिस्थितिसंहारैः "यतो वा इमानि भूतानि जायन्ते" (तै त्ति. उ. 3-1) इत्यादिश्रुत्युक्तसर्गाद्यनुसन्धानेनेत्यर्थः। विमृशद्भिर्विचारयद्भिरसत्वैरव्यग्रैर्मृग्य इति पूर्वेणान्वयः ।। २४ ।।

**वीर०** तदेवं "प्रह्लाद त्वम्" इत्यादिना यद्दैत्यकुमारैः पृष्टं तस्योत्तरमुक्तम्। अथैतत्सत्सम्प्रदायागत-धर्मस्वरूपज्ञानजिघृक्षा वर्तते चेत् भवतां मदनुग्रहेण तदुभयं सम्पत्स्यत इत्याह - **भवतामिति**। यदि भवन्तो मद्वचः श्रद्दधते मदुक्तार्थग्रहणतद्दृढीकारविषये त्वरा युक्ताश्चेत् भवतामपि तदुभयं भूयात्। श्राद्धामन्तरेणोपदिष्टमपि तत्त्वं न प्रतिष्ठितं भवतीत्याह-**वैशारदीति**। वैशारदी निपुणतरा धीः तत्त्वविषया बुद्धिः स्त्रीणां बालानाञ्च श्रद्धात एव भूयात् नतु तां विनेत्यर्थः। तत्र दृष्टान्तः - मे यथेति। यथा श्रद्धावतो मम वैशारदी बुद्धिरभूत् श्रद्धारहितायामन्मातुर्नाभूत्। एवं सर्वेषां बालानां स्त्रीणाञ्च श्रद्धात एवं ज्ञानं प्रतिष्ठितं भवति अन्यथा मन्मातुरिव अप्रतिष्ठितमित्यर्थः।।१७।।

तदेवं तेषां श्रद्धामुत्पाद्य श्रद्धायुक्तान् शुश्रूषून्दैत्यकुमारानालक्ष्य तेभ्यो भगवद्भक्तियोगमुपदिदिक्षु-स्तावत्तदङ्गभूतप्रकृतिवियुक्तात्मयाथात्म्यज्ञानयोगमुपदिशति **जन्माद्या** इत्यादिना। तावज्जीवात्मस्वरूपं देहाद्विलक्षणं विवक्षुर्देहधर्मानाह-**जन्माद्या** इति। ईश्वरो गुणपरिणामापादनसमर्था मूर्तिराकारो यस्य तेन कालेन निमित्तभूतेन "जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यति" इत्येवंरूपा इमे षड्भावविकाराः दृष्टाः प्रत्यक्षमुपलभ्यमानाः देहस्यैव धर्माः, नाऽत्मनः, यथा वृक्षे सत्येव फलानां जन्मादयो दृश्यन्ते न वृक्षस्य, तद्वत् आत्मन्येकरूपत्वेनैवाऽवस्थिते अस्य देहस्य दृष्टा इत्यर्थः। आत्मव्यतिरिक्तस्य स्थिरस्य एकरूपस्य वस्तुनोऽभावात्, कथञ्चित्प्रदर्शनार्थमस्थिरः षड्भावविकारवानपि वृक्ष आत्मस्थानीयत्वेन दर्शितः।।१८।।

तदेवं देहधर्मैः तद्वैलक्षण्येन आत्मनो देहाद्भेदो दर्शितः। अथ स्वधर्मैरेवाऽत्मनो देहाद्भेदमाह **आत्मेति**। आत्मेति विशेष्यनिर्देश्यः, आत्मा प्रत्यगात्मा नित्यः उत्पत्तिविनाशरहितः, अव्ययः अपक्षयरहितः अविक्रियः अवशिष्टभावत्रयरहितः। यद्यपि **"दृष्टा** देहस्य नाऽऽत्मनः" इत्यनेनैव षड्भावविकारराहित्यमुक्तम्, तथापि फलानामिव वृक्षस्येति दृष्टान्तबलाद्यथाफलगतोत्पत्त्याद्यनाश्रयस्यापि वृक्षस्य स्वगतोत्पत्त्याद्याश्रयत्वं, एवं देहगतोत्पत्त्याद्याश्रयत्वाभावेऽपि स्वगतोत्पत्त्याद्यन्तराश्रयत्वं प्रसक्तं, तदनेन निषिध्यते। एवञ्च स्वतोऽन्यतो वा षड्भावविकाररहित इति फलितम्। शुद्धः प्राकृतरागादिगुणैरकलुषितस्वरूपः, एकः ज्ञानैकाकारतया सर्वेषु देहेषु एकरूपः, "एको व्रीहिः" इतिवज्जात्यभिप्रायक एकत्वव्यपदेशः, नतु व्यक्त्येकत्वाभिप्रायकः, आत्मव्यक्तिबहुत्वस्य बहुप्रमाण प्रतिपन्नत्वात्। क्षेत्रं शरीरं जानातीति तथा। ममेदं शरीरमिति जानातीत्यर्थः। अनेन ज्ञानाश्रयत्वमुक्तम्। स्वदृक् स्वं पश्यतीति स्वदृक् स्वस्मै भासमानः, अनेन ज्ञानस्वरूपत्वमुक्तम्। आश्रयः देहेन्द्रियादीनामाधारो हेतु देहेन्द्रियाणां व्यापारहेतुः व्यापकः, धर्मभूतज्ञानेन व्यापकस्वरूपस्याणुत्वात्। असङ्गी जीवान्तरेण सम्बन्धरहितः। अनावृतः स्वरूपस्वभावतिरोधनरहितः, इदं मुक्त्यवस्थं स्वाभाविकं जीवात्मस्वरूपम्। यद्वा-अनावृतः स्वरूपतिरोधानरहितः बद्धदशायामपि धर्मभूतज्ञानस्यैव कर्मणा तिरोहितत्वात्। देहस्त्वनित्यः, व्ययवानशुद्धः देवमनुष्यादिरूपेण नानाविधः ज्ञानानाश्रयोऽन्येषां यावत्सत्तम्। अनाश्रयः विरागहेतुर्व्याप्यः पितृपुत्रत्वादिसम्बन्धवान् सङ्कोचभाक् चेति भावः।।१९।।

अस्त्वेवं देहात्मनोः परस्परवैधर्म्यं ततः किम्? अत आह-**एतैरिति**। विद्वानित्थं देहात्मनोर्याथात्म्यवित् एतैरुक्तैर्द्वादशभिरात्मनो लक्षणैः परैः देहात्[1] उत्कृष्टत्वापादकैः देहादौ, आदिशब्देन देहानुबन्धिपुत्रादिसङ्ग्रहः। अहं, ममेत्यसदभिमानं मोहजमज्ञानजं त्यजेत्। देहात्माभिमानादिकं त्यक्त्वा उक्तलक्षणलक्षितात्मस्वरूपावलोकनपरो भवेदिति भावः।।२०।।

ततोऽपि किमत आह-**स्वर्णमिति**। यथा हेमकारः तदभिज्ञो हेमप्रकृतीनां ग्राव्णामभिज्ञः प्रथमं क्षेत्रेषु हेमग्राव्णामुत्पत्तिभूमिषु योगैरन्वेषणादिभिरुपायैराप्नुयात। ग्राव्णः इति शेषः। विभक्तिविपरिणामेनानुषङ्गो वा। पश्चाद्दहनादिभिरुपायैः ग्रावसु हेमआप्नुयात्। एवं देहरूपेषु क्षेत्रेषु आत्मयोगैर्देहविलक्षणात्मयाथात्म्यविवेचनसाधनै रुपायै रात्मवित् उक्तविधात्मयाथात्म्यदर्शी पश्चात् ब्रह्मणः स्वरूपेण गुणैश्च निरतिशयबृहतः पुरुषोत्तमस्य गति मवगतिं तद्याथात्म्यज्ञानं लभेत प्राप्नुयात् यथावस्थिततत्साक्षात्कारं लभेतेति यावत्।।२१।।

1 A, B, T Omit देहात्

एवं ज्ञानयोगस्य भगवत्साक्षात्कारावहभक्तियोगाङ्गत्वमुक्तम्। "एतैर्द्वादशभिः" इत्यादिनोक्तासद्भावत्यागप्रकारम् "क्षेत्रेषु देहेषु तथाऽऽत्मयोगैः" इत्युक्तमेव देहविलक्षणात्मस्वरूपविमर्शनञ्च सप्रकारं प्रपञ्चयति - **अष्टा**वित्यादिभिः पञ्चभिः। तावदष्टौ प्रकृतयः -"भूमिरापोऽनलोवायुःखं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" (भ.गी. 7-4) इत्यक्तुरीत्या ऊक्ता अष्टौ प्रकृतयः। अत्र भूम्यादिशब्दैःगन्धादितन्मात्रसहितानि पृथिव्यादीन्युच्यन्ते। बुद्धिशब्देन महत्तत्त्वं, त्रयः सत्त्वादयस्तद्गुणाः प्रकृतिगुणा एव न त्वात्मनो गुणाः। षोडश विकारा विकृतयः तेच कर्म ज्ञानोभयेन्द्रियाणि दश, पञ्च प्राणाः बुद्धिश्चित्त वा एकं सम्भूय षोडश आचार्यैः गीताचार्यादिभिः प्रोक्ताः। पुमानेक एकस्मिन् शरीरे एकः पुमान् जीवः प्रोक्तः। कुतः? समन्वयात्। एवमेव हि प्रतिशरीरं नियमेन सुखदुःखप्रतिसन्धान जीवेश्वर बद्ध मुक्त शिष्याचार्यज्ञत्वादिव्यवस्थायाः समन्वयादुपपत्तिरिति भावः। सर्वशरीरेषु जीवैकत्वे उक्तविधा व्यवस्था दुर्घटा स्यादिति भावः।।२२।।

देहस्तु सर्वसङ्घातः प्रकृतिविकृति सर्वसङ्घातात्मकः। सच जगज्जङ्गमः, तस्थुः स्थावरश्चेति द्विविधः। एवं वस्तुस्थितिरिति भावः। अस्त्वेवं प्रस्तुतस्यात्मविवेचनस्य[1] किमायातम्? तत्राह-**अत्रै**वेति। अत्रैव देह एव पुरुषः प्रत्यगात्मा मृग्यः विवेचनीयः कथं किं कुर्वन्? नेति नेतीति इति शब्दः प्रत्यक्षदृष्टप्रकारद्योतकः, इति नेति एवं विधो न भवति, गन्धवान् न[2] भवति, रसवान् न[3] भवति, रूपवान् न[4] भवति इत्येवं प्रकारेणेत्यर्थः। अतत् आत्मव्यतिरिक्तं यद्यत्पृथिव्या वस्तु तत्त्यजन्, तस्मिन्नात्मबुद्धिमकुर्वन् तद्विलक्षणः आत्माऽन्वेषणीयः इत्यर्थः।अनेन "अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत्" इत्युक्तं विवृतं भवति।।२३।।

"तथाऽऽत्मयोगैः" इत्युक्तानात्मयोगान्विवृण्वन् तै मृग्यते इत्याह-**अन्वयेति**। अन्वयव्यतिरेकेण-अन्वयेन व्यतिरेकेण च अहं जानामीच्छामि द्वेष्मीत्येतं बुद्धीच्छादीनां ज्ञानरूपाणां ज्ञातर्यहमर्थे एवान्वयेन व्यतिरेकेण मम शिरः पाणिः पाद इति सर्वावयवेभ्यो व्यतिरेकप्रतीत्या चेत्येवंरूपेण विवेकेन अनात्मनो विभागेन उशता निर्मलेनाऽत्मना अहम्ममेति प्रतीयमानेनात्मना अहम्प्रतीत्या चेत्यर्थः। सर्गस्थानसमाम्नायैः सर्गस्थित्यादिपरवेदान्तवाक्यार्थानुसन्धा- नैरेतैरुपायैर्देहादिभ्यः परमात्मानं विमृशद्भिरसत्वरैः अव्यग्रचित्तैः पुम्भिरात्मा मृग्य इति पूर्वेणान्वयः। "सन्मूलाः सौम्येमाः सर्वाः प्रजाः" (छान्दो. उ. 6-8-6) इत्यादि सर्गस्थानादि समाम्नायार्थानुसन्धानै रित्युक्तेभ्योऽन्येऽप्यात्म विमर्शनोपायाः परमात्मशेषत्वतच्छरीरत्वादयोऽवगता भवन्तीत्यभिप्रायेण सर्गस्थान समाम्नायै रित्युक्तम्।।२४।।

---

1. A, B, T वस्तु त; 2 A, B, T Omit न; 3 A, B, T Omit न; 4 A, B, T Omit न

**विज०** ततोऽस्माकं किं प्रयोजनमिति तत्राऽह-**भवतामपीति।** यथा मे वैशारदी धीः भगवद्विषयज्ञानमभूत्, तत् तथा तर्हि भवतामपि भूयादित्यन्वयः न केवलं युष्माकमेव स्त्रीणां बालानाञ्च श्रद्धातस्तत्स्यादित्याह - श्रद्धात इति यदि स्त्रीबालानां श्रद्धा स्यात् अतस्तर्हि तेषामिति।।२७।।

प्रह्लादस्तेषां स्ववचसि श्रद्धामुत्पाद्य नारदोक्तं ज्ञानमुपदिशति - **जन्माद्या** इति "जातः कंसवधार्थाय भूभारहरणाय च" "जनितो तद्विष्णोः" इत्यादिषु हरेर्जन्मादिकं प्रतीयते। तत्र जन्मादिमतो हरेरितरवद्दुर्भग शरीरस्थस्य तच्छरीरयोग्यभोगप्राप्त्या व्याकुलचित्तस्य सर्वसमर्पणानुगुणफलदानं कथं घटत इत्यादिशङ्कां दैत्यपुत्रचित्तस्थां परिहरन्नित्यतो वाऽऽह-**जन्माद्या** इति। इमे षड् भावाः जन्मास्तिवृद्धिपरिणामापक्षय विनाशाख्यविकारा देहस्य दृष्टाः प्रत्यक्षेण प्रमिता आत्मनः परमात्मनो न सन्तीत्यन्वयः। "षड् विकाराः शरीरस्य न विष्णो स्तद्गतस्य तु" (ब्रह्मतर्के) इत्यनेन निरस्तत्वात्। दृष्टा इत्युक्तं स्पष्टयति-फलानामिति। वसन्ताद्यवयवविशेषेण कालेन वृक्षस्य चूतादिफलानां जन्मादिकं दृश्यते यथा वृक्षस्य कालाधीनत्वं, तथा देहस्येश्वराधीनत्वमिति ज्ञापनायेश्वरमूर्तिनेत्युक्तं देवदत्तस्य सर्वमिदम्मदधीनमिति मिथ्याज्ञान निरासायोक्तमिदं तात्पर्यम्मिति ज्ञातव्यम्। तदुक्तम् - तदधीनं शरीरञ्च ज्ञात्वा तन्ममतां त्यजेत् इति।।१८।।

"क्षेत्रज्ञः पुरुषो ह्यात्मा संसारीचेतनो मतः" इत्युक्तेः आत्मा जीवः किं न स्यात् इत्यतस्तन्निवर्तकलक्षणमाह-**आत्मेति**। परैरव्याप्त्यादिदोषरहितै रेतैर्द्वादशभिरात्मनो हरेर्लक्षणैः स्वरूपभूतैरुपेत इति विद्वानहं ममेत्यतद्भावमतत्त्वं मोहनमज्ञानजं देहादौ त्यजेदित्यन्वयः। नित्यः स्वरूपतोविनाशरहितः, अवयवादिव्ययो नास्तीत्यव्ययः। प्रकृति निर्मितशरीरत्वे अविद्यारागादिदोष विधुरत्वात् शुद्धः एको मुख्यः मुख्यत्वं हरेरेव स्वरूपज्ञानेन क्षेत्राख्यशरीरज्ञातृत्वात् सक्षेत्रज्ञः आश्रयः उपजीव्यः अविक्रियः स्वतः परतो वा परिणामरहितः। स्वमात्मानं स्वयमेव पश्यतीति स्वदृक् "तद्ब्रह्म तेनाऽहं ब्रह्मोऽस्मि" इति श्रुतिवश्योऽपराधीनः स्वतन्त्र इति यावत्। वशं यापयति सर्वमिति वा व्यापकोऽन्तर्बहिरिति शेषः। "आकाशो नीलिमोद" इति श्रुतेः। भूताकाशस्य परिच्छिन्नत्वात् अव्याकृतस्य चित्प्रकृत्यात्मकत्वेन भगवदनुगृहीतत्वेन तस्या व्यापकत्वमुपचरित मनेनेति भवत्येवव्यापकः। अप्राकृतत्वादसङ्गी "असङ्गो ह्ययं पुरुषः" (बृह. उ. 6-3-15) इति श्रुतेः। अनावृतो ज्ञानाद्यावरणरहितः। एवं विधलक्षणोपेतस्य विष्णोः सर्वहेतुत्वाच्छरीरस्य तदधीनत्वेन तस्मिन् देहे ममतां त्यजेदित्यर्थः।।१९,२०।।

हरेर्देहादिभ्यो विविक्तत्वेन ज्ञानोत्पत्तिप्रकारं वक्ति हेमेति। यथा हेमकारो ग्रावसु क्षेत्रेषु निकषाश्मसु स्थानेषु हेमकारः क्षेत्रेषु हेमवत्सु पाषाणेषु वा योगैर्हेमावाप्त्युपायैः कषणाध्मानादिपरीक्षालक्षणैर्हेमं प्राप्नुया

दित्यन्वयः। न सर्वस्य सुशकमित्यत उक्तं तदभिज्ञ इति। तथा मुमुक्षुः पुरुषः आत्मयोगैरौत्पत्तिकभक्त्याद्युपायैः देहेषु क्षेत्रेषु सम्यगालोच्य विविच्य ब्रह्मगतिं लभेत देहादिभ्यो वैलक्षण्येनब्रह्मविषयज्ञानमाप्नोतीत्यन्वयः। कोऽसावधिकारीत्यत उक्तं अध्यात्मविदिति - "तरति शोकमात्मवित्" (छान्दो. उ. 7-1-3) इति श्रुतेः। आत्मानमधिकृत्य वर्तमानं वेदान्तशास्त्रमध्यात्मं, तद्वेत्ति सम्यग्जानातीति; सात्त्विकादिस्वभावोध्यात्मं तद्वेत्तीति वा। महाभूतादिर्वाऽध्यात्मं तद्वेत्तीति अध्यात्मवित्।।२१।।

कानि महाभूतादीनि इति तत्राऽऽह-अष्टाविति। मूलप्रकृतिर्महदादयः सप्त; एवमष्टौ प्रकृतयः। सत्त्वादिगुणानां प्रकृतावन्तर्भावसम्भवेनाऽष्टत्वं युक्तमिति भावेनाऽऽह- त्रय एवेति। तस्याः प्रकृतेर्गुणाः स्तद्गुणाः प्रकृति जत्वाद्विकाराश्च तद्ग्रहणेन गृहीता इति नाऽष्टत्वासम्भव इत्याशयेनाऽऽह विकारा इति। मनसा सहैकादशेन्द्रियाणि शब्दादिविषयाश्चेति विकाराष्षोडशेति पूर्वाचार्यैः स्संख्याता इति शेषः। शरीरे ष्ववनुगतत्वेन विकारसम्भवादेतैस्सह किं न पठित इति तत्राऽऽहुः[1]-पुमानिति। समन्वयादितिल्यब्लोपे पञ्चमी। समन्वयमनुगतं प्राप्य एकः पुमान् नारायण एव केवलं शुद्ध इत्यतो विकारेषु न पठित्त इत्यर्थः। अत्रेदं तात्पर्यमवगन्तव्यम् तथाहि। अभिमन्यमानजडापेक्षया पुमान् जीवः पञ्चविंशोऽभिमानचेतनविवक्षया विष्णुः षड्विंश इति सम्यगन्वयात् नियन्तृत्वेन अनुमति ज्ञानात् ज्ञेय इति तदुक्तम् - "अभिमान्यपेक्षया विष्णुःपञ्चविंश इति स्मृतः। जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृतः" (ब्रह्मतर्के) इति। यद्वा आकाशादि पञ्चभूतानि सत्त्वादित्रयो गुणाः इत्यष्टौ प्रकृतयः। तत्र मूलप्रकृति महदहङ्काराणामाकाशादिष्वनुगतत्वेन पृथग्ग्रहणं न क्रियते, गुणानां तदात्मकत्वेन गुणग्रहणेन तद्ग्रहणोपपत्तेः। शेषं पूर्ववत्।।२२।।

तत्त्वसंख्याकथनेन प्रकृते किमायातमिति तत्राऽऽह देहास्विति। सर्वेषां प्रकृतितत्कार्याणां सङ्घातः समूहः तन्निर्मित इत्यर्थः। तत्त्वेभ्योऽथ तदभिमानिभ्यो विविच्य परमात्मा ज्ञातव्य इत्यभिप्रायेण तत्त्वसंख्यानं कृतमितीममर्थं दर्शयति, तुशब्देन देहशब्देन प्रपञ्चो विवक्षित इति कृत्वा तं देहं विभजति - **जगदिति**। जगच्छब्दो द्विरावृत्त्या व्याख्येयः। तथाहि - जगत्समस्तं, जगज्जङ्गमं, तस्थु स्थावरमिति द्विधा विभक्तं; किञ्चात इत्यत आह-अत्रेति। ततत्वाद्ब्रह्म, तन्नभवतीत्येतत् प्रकृत्यादिकं त्यजन् हित्वा स्वतः सर्वदा भिन्न इत्यर्थः। पुरुषः पूर्णः षड्गुणोऽत्रैव देहलक्षणे प्रपञ्चे मृग्योऽन्वेषणीयो विचार्यो ज्ञातव्य इति यावत्। शतृप्रत्ययेन सदा

1 M.Ma आह

प्रकृत्यादि त्यागो न कादाचित्क इति च सूचयति। तत्र किं प्रमाणमिति तत्राऽऽह - नेति। "स एष नेति नेतीत्यात्मा" (बृह. उ. 6-5-15) इति श्रुतिः प्रमाणमित्यर्थः। योऽतत्त्यजन् तद्वपुस्त्यजन् तेनेति वा अतत्त्यजतीति अतत्त्यक्, तेन। अतत्त्यजेति वा पाठः।।२३।।

कया युक्त्या मृग्यत इति तत्राऽऽह - **अन्वयेति**। अन्वययुक्तव्यतिरेकेण। यत्र यत्र जगत् तत्र तत्र ब्रह्मे त्यन्वयः। यत्र यत्र ब्रह्म न तत्र तत्र जगत् परिच्छिन्नत्वादि व्यतिरेकलक्षणयुक्त्याऽऽकाशवत् जगदन्वितत्वेन यदेतदसङ्गलक्षणपृथक्त्वेन वेति युक्त्या निश्चितेन विवेकेनागतेन युक्तेनात्मना मनसा। ननु व्याप्तिग्राहक प्रमाणाभावेन आभासत्वान्वयान्निर्णयो न स्यादिति तत्राह - सर्गेति। अत्र सर्गस्थानाभ्यां संहारादिकमुपलक्ष्यते। न सहिता त्वरा यैस्ते असत्वराः तैः। "सर्वेश्वराघोषवन्तो बलवन्तो वक्तव्याः, इन्द्रो बलं ददातीति सर्व ऊष्माणो ग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापते रात्मानं परिददातीति सर्वं स्पर्शालेशेनानभिनिहिता वक्तव्या, मृत्यो रात्मानं परिहरणीया" इति श्रुतेः? विमृशद्भिः विचारं कुर्वद्भिः "को न आत्मा किं ब्रह्म" इत्यादिश्रुतेः सर्ग स्थानादिविषयैः समाम्नायैः निर्दोषगुणोपेतैर्वेदैः "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति" (तैत्ति. उ. 3-1) इत्यादिलक्षणैः"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना. उ. 9-5) इत्यादिकैश्चानुगृहीतया।।२४।।

**बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः।**
**ता येनैवाऽनुभूयन्ते सोध्यक्षः पुरुषः परः।।२५।।**

**एभिस्त्रिवर्णैः पर्यस्तै र्बुद्धिभेदै- क्रियोद्भवैः।**
**स्वरूपमात्मनो[1] बुध्येद्[2]गन्धैर्वायुमि[3]वान्वयात्।।२६।।**

**एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः।**
**अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवाऽ[4]प्यते।।२७।।**

***मनोमयत्वात् सर्वार्था[5]: स्वप्नजागरयो स्समाः।**
**दृष्टा[6]नर्थानपि ध्यातुः शोकमोहभयप्रदाः।।२८।।**

---

1 M, Ma सरूप; 2 M, Ma द्धत्तेग; 3 M, Ma रिवा. 4 A,B,G,J,T इवेष्यते; W इवाप्यते। *The following two verses are not found in A,G,J,T editions and they are commented by Vijayadhwaja The commentary is found in M, Ma edition 5 H,V सर्वे अर्था: 6. H,V नष्टा अपि

परस्य निर्गुणस्याऽपि गुणसङ्गाजनिर्मृतिः[1]।
व्यक्तं जन्माप्ययप्रोक्तं[2] शयानस्येव[3] नस्वतः।।
[4-]हरिसञ्चिन्तया सर्वे प्रयान्ति परमं पदम्[-4]।।२९।।

तस्माद्भवद्भिः कर्तव्यः[5] कर्मणां त्रिगुणात्मनाम्।
बीजनिर्हरणं योगः प्रवाहो परमो धियः।।३०।।

तत्रोपायसहस्राणामयं भगवतोदितः।
यदीश्वरे भगवति [6-]यथा यैरञ्जसा[-6] रतिः।।३१।।

गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन[7] च।
सङ्गेन साधुभक्तानामीश्वराराधनेन च।।३२।।

श्रद्धया तत्कथायाञ्च कीर्तनै र्गुणकर्मणाम्।
तत्पादाम्बुरुहध्यानात्[8] तल्लिङ्गेक्षार्हणादिभिः।।३३।।

हरि स्सर्वेषु भुतेषु भगवानास्त ईश्वरः।
इति भूतानि मनसा कामै स्तै स्साधुमानयेत्।।३४।।

**श्रीध०** विमर्शप्रकारमाह बुद्धेरिति द्वाभ्याम्। अध्यक्षः साक्षी।।२५।।

**एभिरिति**। अत एभिर्बुद्धेर्भेदैः परिणामैः पर्यस्तै परितः क्षिप्तैः अनात्मधर्मत्वेन निरस्तैः। बुद्धिधर्मत्वे हेतुः-त्रिपर्णैः त्रिगुणात्मकैः क्रियोद्भवैः कर्मजन्यैः, बुद्धेरेव त्रिगुणात्मकत्वात्कर्मकर्तृत्वाच्च तस्या एवैता अवस्थाः। आत्मा तु बुद्ध्यन्वयात् तदवस्थावानिव आभाति, न तत्त्वत इत्यात्मनः स्वरूपं बुध्येत् जानीयादित्यर्थः। अत्र दृष्टान्तः कुसुमधर्मैर्गन्धैस्तदाश्रयं वायुमिव।।२६।।

ननु तर्हि यथा कुसुमोपाधिकोऽपि वायोर्गन्धो विवेकज्ञानेन निवर्तते, एवमात्मनः संसारो न निवर्तत इत्याशङ्क्याऽह-**एतदिति**। एतद्द्वारो बुद्धिद्वारकस्तदवस्थाद्वारको वा संसारो[9] न स्वतः। हि यस्मात् बुद्धेर्येगुणाः

1 M, Ma र्दनिर्वृतिः 2. M, Ma त्ययो व्यक्तः 3. H,V ह 4 - -4 This helf verse in not found in H,V editions 5 A,B,G,J, T व्य° 6- -6 H,V र्भक्तिः स्याद्येयथा M, Ma र्भक्तिः स्या न्नान्यथा, 7 A,B G,J T लब्धाः 8. M,Ma तत्प; 9 h,v omit संसार.

कर्माणि च तैर्निबध्यत इति। तथा स चाज्ञानमूलः, अतोऽपार्थो मिथ्याभूतोऽपि स्वप्न इवेष्यते वायोस्तु गन्धद्रव्यसम्बन्धस्य वास्तवत्वाद्विषमो दृष्टान्तः।।२७।।

**तस्मादिति**। यस्मादेवं निवृत्तिर्घटते, तस्माद्बीजमज्ञानं, तस्य निर्हरणं दहनम्। किं तद्योगः? कथम्भूतः? धियः प्रवाहं जाग्रदादिरूपमुपरमयतीति तथा।।२८-३०।।

तदेवं ज्ञानप्रकारमुक्त्वा तत्साधनं धर्मस्य तत्त्वं नारदोक्तमेवाह **तत्रेति** पञ्चभिः यैर्धर्मैः, यथा यथावत् अनुष्ठितैर्वा भगवति श्रीनारायणे रतिरिति यदयमुपायो भगवतोक्तः। तथा च गीतासूक्तम्। "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय। तत्कुरुष्व मदर्पणम्" (भ.गी. 9-27) इति "भक्त्या मामभिजानाति यावान्यश्चाऽस्मि तत्त्वतः" (भ.गी. 18-55) इत्यादि च।।३१।।

तत्रैवान्तरङ्गान् धर्मानाह **गुर्वीति**। गुरोः शुश्रूषया [1]भक्त्या प्रेम्णा सर्वेषां लब्धानामर्पणेन च।।३२।।

**श्रद्धयेति** तस्य लिङ्गानां मूर्तीनामीक्षणमर्हणमादिर्येषां वन्दनादीनां, तैश्च।।३३,३४।।

**वीर॰** अन्यानपि तद्विमर्शनोपायान् वदंस्तैः प्रत्यगात्मस्वरूपंदेहविलक्षणमवगच्छेदित्याह-**बुद्धेरिति**। जागरणं, स्वप्नः सुषुप्तिरिति एतास्तिस्रो बुद्धेर्वृत्तयः व्यापाराः। ताः वृत्तयो येनैवाऽनुभूयन्ते स एव परः देहेन्द्रियबुद्ध्यादिभ्योऽन्यः अध्यक्षो देहादीनां द्रष्टा धारको वा पुरुषः प्रत्यगात्मा। जागरणं नाम बाह्येन्द्रियव्यापारानुविद्धा बुद्धिवृत्तिः। स्वप्नस्तदननुविद्धा, सुषुप्तिर्बुद्धिवृत्त्युपरमः। तदुपरमोऽपि तत्सम्बन्ध्येवेति बुद्धेर्वृत्तय इत्युक्तम्। एतद्वृत्तित्रयजाज्ञानाश्रयत्वेन यः प्रतीयते स प्रत्यगात्मेति भावः।।२५।।

एतदेव सदृष्टान्तं विशदयन्नेवमादिभि रुपायैरात्मस्वरूपं बुध्येदित्याह **एभिरिति**। एभिस्त्रिवर्णैस्त्रिविधाः सत्त्वादिगुणत्रयमूलकैर्वा पर्यस्तैरस्थिरैः क्रियोद्भवैः पुण्यपापात्मककर्मनिमित्तैबुद्धिभेदैः [2]बुद्धिवृत्तिभेदैः[2] जागरादिभिः [3]त्रिभिः उपलक्षितमात्मनः स्वरूपं विद्यात्, यथा ग्रन्धैः कुसुमादिगतैरुपलक्षितं तदाश्रयं वायुं बुध्यति तद्वत्। कुतः? अन्वयात् जागरणाद्यवस्थात्रयेऽन्वयादनुवृत्तेः। यथा पवनात्मककर्मणा तत्तत्पङ्कजादिकुसुमादिगतं गन्धमानीय तदाश्रयतया तदन्वितं प्रवहन्तं वायुं ततः पृथग्भूतमुपलक्षते पार्थिवकुसुमादिगतस्य गन्धस्य न वायुराश्रयः, तदन्वयाच्च वायोस्तदाश्रयत्वं, अत एव तदन्वयापाये केवलस्पर्शगुणस्य वायोरुपलम्भः, ततो

1 A omit ऽभक्त्या।; 2- -2 W Omits; 3. A, B, Omit त्रिभिः

गन्धात् पृथगेव वायुः स्वाभाविकस्पर्शगुण इति तं[1] यथोपलक्षतें[-1]; तथा बुद्धिभेदाः न स्वभावतः आत्मगताः। तेषां स्वाभाविकत्वेऽन्यतमबुद्धिभेदेऽन्यतमस्योपलम्भप्रसङ्गः। किन्तु कर्मायत्तबुद्धिसम्बन्धप्रयुक्ततद्वृत्त्यन्वयात् तदनुभवोपलम्भः। स्वभावत एवात्मा तद्वृत्त्यनन्वित एव ततः पृथग्भूत इत्येवं तं बुद्ध्येदित्यर्थः।।२६।।

तदेवं देहादावसद्भावत्यागप्रकारो देहविलक्षणतत्वेन आत्मविमर्शनप्रकारश्चोक्तः। अथैवम्भूतस्य प्रत्यगात्मनः कुत स्तद्देहादिसम्बन्धरूपस्संसारो यस्मिन्नसद्भाव इत्याशङ्कायां, त्रिवर्णैः क्रियोद्भवैरिति परिहार स्सूचितः। तमेव विशदयितुं स्वपरयाथात्म्यज्ञानमूलकदेहात्मभ्रमादिरूपाऽनादिमोहनिमित्तगुणकर्मसम्बन्धप्रयुक्तः संसारः तत एवात्म[2]स्वरूपप्रयुक्तत्वाभावादपुरुषार्थेप्यौपाधिकत्वाद्यावदुपाधिबुद्धिसम्बन्धद्वाराऽनुवर्तते इत्याह- **एतदिति** एष बुद्धिसम्बन्ध एव द्वारं यस्य स संसारः स्वप्न इवाल्पास्थिरत्वात्स्वप्नतुल्यः, अत एवाऽपार्थः अपुरुषार्थोऽपि पुंसः प्रत्यगात्मनोऽर्प्यते प्राप्यते। कर्तुः पुंसः शेषत्व विवक्षया षष्ठी। पुंसा संसारः प्राप्यत इत्यर्थः। बुद्धिसम्बन्धे हेतुं वदन् संसारं विशिनष्टि - अज्ञानमूल इति। अज्ञानं मूलं कारणं यस्य अज्ञानमूलः स्वपरयाथात्म्याज्ञानमूलक-बुद्धीन्द्रियसम्बन्धनिमित्तो देह स्तदनुबन्धिरूपस्संसार इत्यर्थः। कथमुक्तविधस्यात्मनोऽज्ञानसम्बन्ध इति शङ्कां निराकुर्वन् संसारमेव विशिनष्टि गुणकर्मनिबन्धन इति। गुणकर्माधीनः सत्त्वादिगुण परिणामानुगुणकर्मपरिपाकाधीन इत्यर्थः। अयं भावः स्वभावतः सर्वे प्रत्यगात्मानः "आत्मा नित्योऽव्ययः" इत्याद्युक्तविधा अप्यनादिकर्मणा सत्त्वादिप्राकृतगुणसंसृष्टा स्तत्र तत्तत्कर्मपरिपाकवशात् गुणपरिणामः ततः स्वपरयाथात्म्याज्ञानं, ततो गुणकर्मानुरूपं परमात्मसृष्टबुद्धीन्द्रियसम्बन्धः, ततो देहतदनुबन्धिसम्बन्धरूपस्संसारः, ततो देहात्माभिमानः ततः पुनः कर्म, ततः पुनर्गुणपरिणामादिरित्येवं परिवृत्तिर्यावत्कर्मोपाधि अनुवर्तते इति।।२७-२९।।

यतोऽयमुक्तविधस्याऽप्यात्मनोदेहात्मभ्रमादिरूपाज्ञानमूलककर्मनिमित्तः संसारः तस्माद्भवद्भिः कर्मनिर्हरणोपायोऽनुष्ठेय इत्याह - **तस्मादिति**। तस्मात् संसारस्य अज्ञानमूलगुणकर्मायत्तत्वात् त्रिगुणात्मनां सत्त्वादिगुणत्रयपरिणामहेतूनां कर्मणां यद्बीजं मूलं देहात्मभ्रमादिरूपं तस्य निर्हरणं निर्हरणोपायात्मको यो योगो वक्ष्यमाणः सच धियः प्रवाहः शब्दादिविषयकं ज्ञानं तस्योपरतिरूपो भवद्भिः कर्तव्यः।।३०।।

वक्ष्यमाणभगवद्भक्तियोगस्यैव बीजनिर्हरणोत्तमोपायत्वमाह-**तत्रेति**। तत्रावश्यं बीजनिर्हरणोपाये कर्तव्ये सति उपायसहस्राणां मध्ये अयमेवोत्तम उपायः कथितो भगवता। कोऽसौ? यैस्साधनैर्भगवति ईश्वरे

1--1 A, B यथोपलक्ष्यतें. 2 A, B त्मनः स्वं

रतिरनुरागः प्रीतिरञ्जसा सुखेन यथा स्यादित्येषः स्वसाधनैरनुगृहीता भगवति रतिरित्येष एव उत्तम उपाय इति- " नाऽहं वेदैर्न तपसा न दनेन नचेज्यया।भक्त्यात्वनन्वया शक्य अहमेवं विधोऽर्जुन " (भ. गी. 11-53) इति "नमे भक्तः प्रणश्यति" (भगी. 9-3) इत्यादिना तत्र तत्र भगवता प्रोक्त इत्यर्थः। रतिरित्यनेन निरतिशयप्रीतिरूपापन्ना भक्तिरुच्यते; तस्या एव साक्षाद्भगवत्प्राप्ति हेतुत्वं [1] संसारनिवर्तकत्वञ्च [2] सूच्यते।।३१।।

सा च कैस्साधनैर्निष्पद्यते इत्यपेक्षायां साधनानि वदं स्तैरुपकृतेन ध्यानयोगेन निष्पद्यत इत्याह-[3-] गुरु शुश्रूषयेत्यादिभि [-3] श्चतुर्भिः। गुरुशुश्रूषया गुरूणां परिचर्यया, गुरुभ्यस्तत्त्व श्रवणेच्छया वा, भक्त्या गुरूणां भक्त्या उपासनेन सर्वेषां गुर्वपेक्षितानां मध्ये लाभः लभ्यत इति लाभः, **स्वस्य** सुलभं यत्तस्य समर्पणेन, यथाशक्ति तदपेक्षित समर्पणेनेत्यर्थः। साधु यथा भवति तथा भगवद्भक्तानां सङ्गेन साधवः [4-] क्रोध मात्सर्यलोभाशुभमतिराहित्यरूपं [-4] साधुलक्षणलक्षिताः [5] भक्ताः, तेषां सङ्गेन वा ईश्वराराधनेन अर्चाविग्रहाराधनेन, हृदय कमलस्थस्य मानसोपचारैराराधनेन वा, अर्हणादिभिरित्यर्चाऽऽराधनस्य वक्ष्यमाणत्वात्।।३२।।

तत्कथायाम् [6-] ईश्वरकथायां [-6] श्रद्धया श्रवणासक्त्या ईश्वरस्य गुणानां [7] कर्मणां कीर्तनैः तस्येश्वरस्य [8] पादाम्बुजयो ध्यानात् तल्लिङ्गस्य अर्चाविग्रहस्य ईक्षणार्हणादिभिर्दर्शनपूजादिभिः, आदिशब्देन प्रणामपरिक्रमादि सङ्ग्रहः।।३३।।

किञ्च, भगवानीश्वरः सर्वभूतेष्वन्तरात्मतया वर्तते, अतः सर्वाणि भूतानि भगवदात्मकानीति बुद्ध्या यथाशक्ति यथायोग्यं [9] तत् तद्भूतान्यपेक्षितैः कामैः साधुमानयेत्। सम्मानयेदित्यनेन च।।३४।।

**विज०** विमृश्य निर्णयप्रकारं दर्शयति - **बुद्धेरिति**। "सत्त्वबुद्ध्यादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते" (ब्रह्मतर्के) इति वचनात्, बुद्धेर्जीवस्य जागरणाद्यावृत्तयोऽवस्था येन परमात्मना प्रेरितेन जीवेनाऽनुभूयन्ते। "जाग्रदाद्याः कर्मचैव सुखदुःखे च तस्य हि" (ब्रह्मतर्के) इति वचनात्। स परः पुरुषोऽध्यक्षः -"जाग्रदादेः परो द्रष्टा सुखनित्यो हरिः स्मृतः" (ब्रह्मतर्के) इति वचनात्। सोऽध्यक्षो जाग्रदादिनाऽधिगतेन्द्रियसुखदुःखपरोजीवः परोविश्वादिविग्रहाद्धरेरन्य इत्युत्तरार्धस्याऽर्थभेदो ज्ञातव्यः। एव शब्देन कालादिकं व्यावर्तयति।।२५।।

" कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ प्राज्ञः कारणबद्धस्तु " इति वचनात्, विश्वादिविग्रहान्नारायणादन्यत्वं जीवस्य कथं जीवधर्माक्रान्तत्वात्तस्येति तत्राऽह एभिरिति। बुद्धीनां जीवानां भेदस्तारतम्यलक्षणो यैर्ज्ञाप्यते

---

1 W संसृति, 2. W Omits सूच्यते; 3--3 W गुर्वित्यादिना; 4--4 W Omits, 5 W तेषां भक्तानां; 6--6 W Omits; 7 W Omits कर्मणां; 8 W पदाम्बुरुहयो; 9 A, B Omit तत्

तैर्जीवतारतम्यज्ञापकैः, अत एव पर्यस्तैरेकत्र समस्तैरेभि स्त्रिवर्णैःस्त्रिधावर्णैः वर्णनं येषां ते तथा तैः जाग्रदादिभिस्त्रयोवर्णाः शुक्लकृष्णपीतलक्षणा येषां ते तैः, सत्त्वादिगुणैर्वा स परमात्माऽज्ञजनदृष्ट्याऽऽत्मनो जीवस्य सरूपं रूपेण-समानरूपं[1] कार्यादिबद्धं धत्ते इति दृश्यते, न तु प्राज्ञजनदृष्ट्या। तद्दृष्ट्या ज्ञानानन्दादिसमानं रूपं धृत्वा तत्स्वरूपं धत्त इति "स जीवेन सहस्थानात् तत्स्वरूपः प्रदृश्यते" (ब्रह्मतर्के) इति स्मृतेः। अन्वयात् दक्षिणाक्ष्यादिषु अनुगतत्वात्। कीदृशैः क्रियोद्भवैः क्रियया उद्भवो येषां ते तथा तैः, कर्मजनितैः, यद्वा क्रियाया उद्भवो येभ्योगुणेभ्यस्ते तथा तैः शुक्लसत्त्वजन्यं जागरणं, पीतरजोजन्यं स्वप्नं, कृष्णतमोजन्या सुप्तिः, कर्माण्येवंविधानि "अजा मेकां लोहितशुक्लकृष्णाम्" (मना. उ. 8-4) इति श्रुतेः। कुत्रायं व्यवहारो दृष्ट इति तत्राऽऽह-गन्धैरिति यथा गन्धैरन्वयात् सौरभ्यादि गन्धसम्पर्कात् सुगन्धो दुर्गन्धो मिश्रगन्धो वायुरिति व्यवह्रियते, न तावता तादात्म्यं वायोः। तथात्वे सर्वदा तथा स्यात्, नचैवम्। तस्माद्भिन्न एव वायुः, तथा हरिरपि "यथा गन्धयुतो निलः" (ब्रह्मतर्के) इति च "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्चत्यच्चाऽभवत्" (तैत्ति. उ. 2-6) इति श्रुतेः। देहाख्यप्रपञ्चसम्पर्कोऽस्त्येव हरेरिति भावः।। २६।।

अभेददर्शनं बाधकमाह- **एतद्द्वार** इति। इदमभेददर्शनं द्वारं यस्य संसारस्य स तथा, पुंसः संसारः प्राप्यते, हि यस्मात् "अदृष्टे जीवपरयोःभेदस्याऽप्नोति संसृतिम्" (ब्रह्मतर्के) इति वचनात्। अभेददर्शने कारणमाह - गुणेति अभेददर्शनजनकत्वेन गुणकर्मणोस्संसारनिमित्तत्वमाह - तस्येति। विशेषकर्मणः कारणमज्ञानं, तद्द्वारा संसार इत्याशयेनाऽह - अज्ञानेति। अज्ञाननिमित्तकर्मपरम्परया मुग्धमनसः पुंसोऽभेदनिश्चयादन्तत स्तम एव शरणमित्याशयेनाऽह - अपार्थ इति। अपगतनिवृत्तिः, तमस इति शेषः "अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने। व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु।" (वैज.को. 6-1-3) इत्यभिधानात्, मशकार्थे धूम इति प्रयोगाच्च "अभेदनिश्चयाद्याति तमो नाऽस्त्यत्र संशयः" (ब्रह्मतर्के) इति स्मृतेः। अपिशब्देन नित्यदुःखभूयिष्ठतमः प्राप्तिं सूचयति। "दुखरूपोऽपि संसारो बुद्धिपूर्वमवाप्यते" (ब्रह्मतर्के) इति। संसार स्तमः इन्द्रियार्थसान्नि-कर्षादर्थोपलब्धिः, जाग्रत् जाग्रदनुभवसंस्कारोपस्थापितविषयाभासोपलब्धिः स्वप्नः, उपरत स्व स्त्र वृत्तीन्द्रियविषयाज्ञानं सुप्तिः। अत्र जाग्रद्दृष्टश्रुतपदार्थसंस्कारकृतः स्वप्नः स्वशिरश्छेदनादि लक्षणो दुःखादिहेतुर्यथा, तथा जाग्रदपि राजाहं वदतोऽनर्थ परम्परादृष्टिवज्जीवपरयोरभेदं जानतः पुंसः इहाऽमुत्रदुःखबाहुल्यहेतुरित्यर्थः।

1 M, Ma ०नं

"यथा स्वप्ने शिरश्छेदं स्वयं कृत्वाऽऽत्मनोऽवशः। ततो दुःखमवाप्येत तथा जागरितोऽपितु।। जानन्नप्यात्मनोदुःख मवशस्तु प्रवर्तते"।। (ब्रह्मतर्के) इति स्मृतौ दर्शनात्।।२७।।

अर्थ क्रियाकारित्वात् न स्वप्नादे मिथ्यात्वमित्याह **मनोमयत्वादिति**। मनसा निर्मितकर्मनिमित्तत्वाद-नित्यत्वाभिप्रायेण स्वप्नजाग्रत्साम्यम्। अन्यथा "शोकमोहभयप्रदा" (भाग. 7-7-28) इत्येतदसम्बद्धं स्यात्। न च शुक्तिरजतादिकं वलयकरणादियोग्यम्।।२८,२९।।

विपक्षे बाधकमुक्त्वा विपर्यये पर्यवसानच्छलेन संसारबीजनिर्हरणोपायमाह - **तस्मादिति**। यस्मात्पुंसो गुणकर्मनिमित्ताभेददर्शनद्वारः संसारः तस्मादभेदनिमित्तत्रिगुणमयकर्मबीजभर्जनोपायो भवद्भिः कर्तव्यः इत्यन्वयः[1]। नन्वाग्निष्टोमादिकमन्तरेण कर्मणां बीजभूतस्य लिङ्गशरीरस्य हननोपायः। कोऽसौ? यमनियमादिलक्षणश्चेत्, तस्योभयत्र साधारणत्वेन अनन्तरङ्गत्वात्। अत आपाकनिक्षिप्तामघटदहनयोग इवाऽहत्य तत्साधनं वक्तव्यमिति तत्राऽह- प्रवाह इति। धियः प्रवाहस्य सजातीयविजातीय[2]प्रत्ययानन्तरिततया विषयीकरणनिपुणोपासनालक्षणस्य उं रुद्रं पाति रक्षतीत्युपः "उपोऽधिके" इति सूत्रादुपः सर्वाधिको वा परमेश्वरः। तस्मिन् रमणं निरन्तर श्रीनारायणचरणसरसिजसञ्चिन्तनलक्षणोपासनात् स एवेत्यभिप्रायः।।३०।।

धियः प्रवाहस्य अन्तरङ्गसाधनमाह-**तत्रेति** भगवतेत्यनेन ग्राह्यत्वे आप्तमूलत्वं दर्शयति - अन्यथा बाधकमाह - नेति।।३१।।

**भक्त्या** गुरुशुश्रूषया,"यस्य देवे पराभक्तिर्यथादेवे तथागुरौ" (श्वेता. उ. 6-23) इति श्रुतेः। सर्वलाभार्पणेन, हराविति शेषः। "बह्मार्पणं ब्रह्म हविः" (भ. गी. 4-24) इत्यादेः। साधु भक्तानां "नाऽवैष्णवाय दातव्यं नोदबिन्दुं न तण्डुलम्" इत्यादे नियतभगवद्भक्तानां सेवालक्षणप्रसङ्गेन "महत्सेवां द्वारमाहुर्विमुक्तेः" इत्यादेः ईश्वराराधनेन पञ्चरात्रोक्तेन पञ्चकालीनभगवत्पूजया पञ्चकाल परायणं पञ्च पञ्च कालैकमनसाम् इत्यादेः।।३२।।

तत्कथायां शृद्धया "पानेन ते देवकथासुधायाः" (भाग. 3-5-45) इत्यादेः गुणकर्मणां सङ्कीर्तनैः "कलौ सङ्कीर्त्य केशवम्" इत्यादेः। विभयत्रिखण्डध्यानविधानार्थं तत्पदाम्बुरुहध्यानादिति। "सञ्चिन्तयेद्भगवतश्चरणारविन्दम्" (भाग 3-28-21) इत्यादेः तस्य हरे लिङ्गं प्रतिमा तस्येक्षादर्शनम् अर्हणं पूजनम् आदिशब्देन प्रदक्षिणादि गृह्यत्ते। "बर्हायिते ते नयने नराणाम्" (भाग 2-3-22) इत्यादेः।।३३।।

---

1. A,B Omit इत्यत्वयः. 2 A.B Omit विजातीय

"हरिस्सर्वेषु भूतेषु" (भाग 7-7-34) इत्यादिना हरिरेव पूज्यो न तु भूतानि योग्यतातिरेकेणेति। इदमेव कथ्यते - ईश्वरो जीवकलया प्रविष्ट इत्यादे र्वा।।३४।।

**[1]एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे**
**वासुदेवे भगवति [2]यया संलभते रतिम्।।३५।।**

**निशम्य कर्माणिगुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि।**
**यदाऽतिहर्षोत्पुलकाश्रुगद्गदं [3]प्रोत्कण्ठ उद्गायति रौति नृत्यति।।३६।।**

**यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते[4]ध्यायति वन्दते जनम्।**
**मुहुःश्वसन्वक्तिहरे जगत्पते नारायणेत्यात्म[5]मतिर्गतत्रपः।।३७।।**

**तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुसृताशयाकृतिः।**
**निर्दग्ध बीजानुशयो महीयसा भक्ति[6]प्रयोगेण समेत्यधोक्षजम्।।३८।।**

**श्रीध० एवमिति।** निर्जितः षण्णां काम, क्रोध, लोभ, मोह, मद[7]मत्सराणां [8-]इन्द्रियाणां [-8]वा वर्गो यैः।।३५।।

भगवद्व्रते लिङ्गान्याह - **निशम्येति** त्रिभिः। गुणान् भक्तवात्सल्यादीन्। अति हर्षेणोद्गताः पुलका अश्रूणिच तैर्गद्गदं यथा भवत्येवं प्रात्कण्ठो [9]मुक्तकण्ठ उद्गायति।।३६,३७।।

**तदेति।** तस्य भावश्चेष्टादिस्तस्यभावो भावना तेनानुकृते आशयाकृती मनश्शरीरे यस्य निर्दग्धं बीजमज्ञानमनुशयो वासना च यस्य सः, सम्यगेति प्राप्नोति।।३८।।

**वीर०** इत्येतैस्साधनैः निर्जितैः षण्णां कामक्रोधलोभमोहमदमात्सर्याणां वर्गैः भगवतीश्वरे भक्तिः क्रियते कर्तव्येत्यर्थः। भक्तिरहरहर्ध्यानम्, एवमहरहः क्रियमाणया ध्यानात्मिक[10]या भक्त्या प्रीत्यात्मिका [11-]प्रकृष्टां [-11]भावना लभते इत्याह वासुदेवे इति। यया अहरहः क्रियमाणया गुरुशुश्रूषादिसाधनानुगृहीतया अनुध्यानात्मिकया उत्तरोत्तर साक्षात्कारेच्छात्मकपरभक्त्यपरपर्यायया वासुदेवे भगवति रतिं परमभक्त्यपरपर्यायभूतां निरन्तरानुबुभूषात्मिका[12] प्रीतिरूपां लभत इत्यर्थः।।३५।।

1 H, V एभिर्नि०. W इति नि० 2. W यथाऽनुल० 3 M, Ma ०दः. 4 H.V ०ति. 5. W र०. 6. H, V प्रवाहेण. 7. H,V मात्सर्याणाम् 8--8 H, V Omit. 9. H, V Omit मुक्तकण्ठः। 10. A, B add उत्तरोत्तर साक्षात्कारेच्छात्मिकया भक्तिपरम्परया यथावासुदेवे ध्यानात्मिकया भक्त्या 11--11 A, B भक्तिं. 12 A, B add तत्

एवंविध भक्तियोगनिष्पत्तिलिङ्गानि वदंस्तेन परिनिष्पन्नेन भगवद्भक्तियोगेन परमात्मानं प्राप्नोतीत्याह- **निशम्येति** त्रिभिः। यदा भगवतो गुणानतुल्यान् अनितरसाधारणान् तथा लीलातनुभिः स्वेच्छोपात्ता प्राकृतदिव्यावतारतनुभिः[1] रामकृष्णादिभिः कृतानि कर्माणि चेष्टितानि च निशम्य श्रुत्वा अति हर्षेणोद्गता उदञ्चिताः पुलकाः रोमाणि अश्रूणि आनन्दबाष्पबिन्दुवश्च तैर्गद्गदं यथा भवत्येवं प्रोत्कण्ठः मुक्तकण्ठः उद्गायति अत्युच्चैर्गायति रौति ध्वनति नृत्यति च।।३६।।

सर्वदा च ग्रहग्रस्त इव हसति क्वचिदाक्रन्दते रोदिति क्वचिद्ध्यायति क्वचिञ्जनं भगवदात्मकं वन्दते नमस्करोति क्वचिच्च पुनः पुनः श्वसन् श्वासं मुञ्चन् गतत्रपो निर्लज्जः हे नारायण! जगत्पते! हरे! इतीत्थं वक्ति वदति, तदेत्युत्तरेणान्वयः। इयमेव भक्तियोगस्य निष्पत्त्यवस्थेति भावः।।३७।।

तदा परिनिष्पन्नभक्तियोगावस्थायां पुमान्[2] उक्तविधभक्तियोगनिष्ठः महीयसा सर्वोत्तमेन भक्तियोग-रूपेणोपायेन प्रारब्धावसाने मुक्तं समस्तं बन्धनं भगवत्प्राप्तिविरोधि पूर्वोत्तरपुण्यपापात्मकाघरूपं यस्मात्तादृशो निर्दग्धो नितरां दग्धो बीजानुशयः संसृतिमूलभूत कर्मवासनात्मको यस्य तस्य भगवतो भावः प्रकारः आकृति रित्यर्थः। तस्य भावो भावनाऽनुध्यानं तेनाऽनुकृतः आशयोऽन्तःकरणम् आकृतिर्विग्रहश्च यस्य भगवता समानरूप इत्यर्थः। अधोक्षजं भगवन्तमुपैति प्राप्नोति।।३८।।

**विज०** यया भक्त्या हरौ रतिमुपासनां लभते, तया स्वरूपानन्दानुभवलक्षणां रतिं लभत इति परम्परया योज्यम्।।३५।।

सृष्ट्यादीनि कर्माणि कंसवधादीनि वीर्याणि, उद्गानादिकं न सर्वभक्तसाधारणम् - तदुक्तम् - "केचिद्भक्ताः प्रनृत्यन्ति गायान्ति च यथेप्सितम्।केचित्तूष्णीं भजन्त्येव केचिच्चाभयकारिणः" (ब्रह्मतर्के) इति।।३६, ३७।।

एत देवाऽह-तद्भावेति। तस्य भावे यथास्वरूपे भावोक्तिस्तस्यानुकृतेऽनुकूलत्वेन प्रकटिते आशयाकृती अन्तःकरणाकारौ यस्य स तथा, कश्चिदुद्गानेनान्तराभक्तिं प्रकटयति कश्चिद्रोदनाश्रूपातकरणेन, कश्चिन्नर्तनेन, कश्चित्तूष्णीं भजनेनेति तस्य ब्रह्मणो भावो लीला, तत्र यो भावो भक्तिस्तया रन्धिताभिप्रायाकार इति वा, स्थानाभि प्राय आशय इति वा, निर्दग्धं कर्मबीजं यस्य स तथा, स चाऽनुशयोऽन्तःकरणं यस्य स तथा, अनुशयस्संसारो वा।।३८।।

---

1 A, B विग्रहैः; 2 W Omits उक्तविध

**अधोक्षजालम्भमिहाशुभात्मनः[1] शरीरिणस्संसृतिचक्रशातनम्।**
**तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम्।।३९।।**

**कोऽतिप्रयसोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः।**
**[2] सत्यात्मनस्सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः।।४०।।**

**रायः कलत्रं पशवस्सुतादयो गृहामहीकुञ्जरकोशभूतयः।**
**[3] सर्वेऽर्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः।।४१।।**

**एवं हि लोकाः क्रतुभिः कृता अमीक्षयिष्णवस्सातिशयाननिर्मलाः।**
**तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं[4] भजताऽत्मलब्धये ।।४२।।**

**श्रीध०** ततः किमत आह-**अधोक्षजेति।** अधोक्षजस्याऽऽलम्भं मनसा स्पर्शं पाठान्तरे तस्याऽऽश्रयणम् अशुभात्मनः अशुभो रागादियुक्तः आत्मा मनो यस्य संसृतिचक्र शातनं तन्निवर्तकं बुधाः विद्वांसः[5] विदुः, तदेव ब्रह्मणि निर्वाणं लयो मोक्षः तदात्मकं सुखं विदुः। हृदीश्वरमन्तर्यामिणम्।३९।।

भक्तिरशक्येति च न मन्तव्यमित्याह - **क** इति छिद्रवदाकाशवत् [6-]हृदि तिष्ठतो[-6] विषयाणामुपपादनैरर्जनैः किम्? तत्र हेतुः-सर्वदेहिनां समान्यतः विषयनिष्ठत्वे[7] सूकरादिसाधारण्यापत्तेरित्यर्थः। न चैवमादौ पौनरुक्त्यं[8] दोषः नारदोक्तानुवादरूपत्वादस्य प्रकरणस्य।।४०।।

अनर्थकं विषयवर्जनमित्याह - **राय** इति। रायोऽर्थाः, क्षणभङ्गुरमायुर्यस्य तस्यै ते कियत्प्रियं कुर्वन्ति? तदुक्तमितिहासेषु "धनं हि पुरुषो लोके पुरुषं धनमेव वा। अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया"। इति।।४१।।

"यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।अभिलाषोपनीतञ्च[9] तत्सुखं स्वः पदास्पदम्" इत्येवम्भूताः स्वर्गादिभोगा अपि न सेवार्हा इत्याह - **एवंहीति**। क्षयिष्णुत्वे हेतुः - क्रतुभिः कृता इति। "तद्यथेह कर्माचितो लोकः

---

*1 H,V,W °लम्ब, M.Ma °लम्ब 2. A, B, G, J. T स्वस्या°, M, Ma अस्या° 3 M, Ma सर्वार्थ 4. H, V °कयातंभ°: M, Ma कया सम्भ°*

5 A, B, J Omit विद्वांसः 6- -6 H, V Omit 7 H, V °त्वेन 8 A, B, J क्तय 9 B, H, J, V °षोपपन्नञ्च सुखं स्वर्गपदास्पदम्

क्षीयते एवमेवाऽमुत्र **पुण्यचितोलोकः** क्षीयते" (छान्दो उ. 8-1-6) इति श्रुत्तेः। अत एव पुण्यतारतम्येन सातिशयाः। न च निर्मलाः स्पर्धादिमत्त्वात्। न विद्यते दृष्टं श्रुतञ्च दूषणं यस्मिन्।।४२।।

**वीर०** उपैतु, ततः किमत आह- **अधोक्षजेति**। इह लोके अशुभात्मनस्तापत्रयदुःखितमनसः शरीरिणः संसृतिचक्रं,चक्रवत्परिवर्तमानानिष्टरूपा संसृतिः, तस्याश्शातनं निवर्तक मधोक्षजस्यालम्भः स्पर्शः प्राप्तिरिति यावत्। एवं भगवत्प्राप्तेरनिष्ट निवर्तकत्वमुक्तम्। अथेष्टप्रापकत्वमाह - तदधोक्षजालम्भनमेव ब्रह्मनिर्वाणसुखं ब्रह्मसम्बन्धि यन्निर्वाणं, निर्वाणो मोक्षः तद्दशायामनुभूयमानमित्यर्थः। तत्सुखं यस्मिन् तादृशम्। यद्वा, निर्वाणं निरतिशयानन्दो ब्रह्मरूपं यन्निर्वाणं तस्य सुखमनुभवरूपं यस्मिन् तादृशं बुधाः ब्रह्मविदो विदुः। यतोऽनिष्टनिवर्तनेष्टप्रापणक्षमभगवत्प्राप्तिसाधनभूतः तद्भक्तियोगः, ततो यूयं हृदये हृद्गते, अयगतौ, हृदयस्थानगते जीवे इत्यर्थः। "हृदि ह्ययमात्मा प्रतिष्ठितः" (प्रश्न 3-1-6) इति श्रुतेः। तस्मिन्नीश्वरं नियन्तृतयावस्थितं हृदि[1] हृदयपुण्डरीके भगवन्तं भजध्वम्। अनेन "तमात्मस्थं येऽनुपश्यन्तिधीरास्तेषां सुखं शाश्वतं नेतरेषाम्" (गुह्यका. उ. 44) इति श्रुत्यर्थः प्रत्यभिज्ञायते।।३९।।

तदेवं निरतिशयानन्तस्थिरफलभगवत्प्राप्ति साधनतत्[2]द्धर्मानुष्ठानस्य दुश्शकत्व[3]शङ्कानिरासं "न ह्यच्युतं प्रीणयतो बह्वायासः" (भाग. 7-6-19) इत्युपक्रम्य तद्धर्मतदनुष्ठानप्रकारकथनेन तदाशङ्कां निरस्य अथैवमस्मिन् सुकरे भगवद्धर्मानुष्ठाने न कोपि प्रयास इत्युपसंहरन्, वैराग्यजननाय स्वर्गस्वाराज्याद्यर्वाचीनपुरुषार्थस्य साति शयाल्पास्थिरत्वं वक्तुं तावत् दृष्टान्ततया वैषयिकस्य ऐहिकलौकिकसुखस्य तुच्छतामाह **क** इति द्वाभ्याम्। हे असुरबालकाः स्वे स्वकीये हृत्[4]पुण्डरीके छिद्रवदाकाशवत् सतो वर्तमानस्य सत्यस्य सत्यकामत्वादि नित्याविर्भूत गुणाष्टकाश्रयस्य आत्मनः परमात्मन अशेषदेहिनां सामान्यतः साधारणतया सख्युः "द्वा सुपर्णा" (मुण्ड. उ. 3-1-1) इत्यादिश्रुत्युक्तसख्ययुक्तस्य हरेरुपासनेन कोवाऽतीव प्रयासः? न कोऽपीत्यर्थः। विषयाणां शब्दादीनामुप- पादनैरर्जनैः किम्? न किमपि तेऽतितुच्छा इति भावः। छिद्रवत्सत इत्यनेन "यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" (छान्दो. उ. 8-1-3) इति दहरविद्योदितः भूताकाशदृष्टान्तोऽभिमतः। तत्र हि भूताकाशस्येव अग्निवायुसूर्याचन्द्रमोविद्युन्नक्षत्रादिकृत्स्नजगदाधारत्वं हृत्पुण्डरीकस्थस्य दहराकाशस्य प्रतिपादितम्। "उभा वाग्निश्च वायुश्च सूर्याचन्द्रमसौ विद्युन्नक्षत्राणि यच्चाऽस्येहाऽस्ति यच्च नास्ति सर्वं तदस्मिन् समाहितम्" (छान्दो. उ. 8-1-3)

---

1 A, B. omit हृदि; 2 A, B omit तत्; 3 W °त्वा. 4 A, B हृत्पद्मे

इति। एवं हृत्पुण्डरीके दहराकाशरूपेण वर्तमानस्याऽपहतपाप्मत्वादिगुणाष्टकयुक्तस्य हरे रुपासनं सुशक मित्यभिप्रायः।।४०।।

"किं विषयोपपादनैः" इत्यनेन सूचितं विषयाणामल्पास्थिरत्व [1-]सातिशयत्वरूपं[-1] तुच्छत्वमुपपादयति **राय** इति। रायो धनानि सुतादय इत्यादिशब्देनाऽन्ये पित्रादयो देहानुबन्धिनो विवक्षिताः। मही क्षेत्रम्, आजीविकारूपं विषयो वा, कुञ्जरा गजाः, तेषां कोशः शाला, धनकोशस्य राय इत्यनेनोक्तत्वात्, भूतयः भोग्य भोगोपकरणादि समृद्धयः। सर्वे च एते अर्थकामाः काम्यमाना अर्थाः क्षणेनाल्पकालेन क्षणभङ्गुरमायुरवस्थानं येषां ते अत एव चञ्चला अस्थिराः मर्त्यस्य मरणशीलस्य पुंसः कियत् प्रियं सुखं कुर्वन्ति जनयन्ति न कियदपि सातिशयमस्थिरमल्पमेव सुखं जनयन्ति, नतु निरतिशयमनन्तं स्थितञ्चेत्यर्थः।।४१।।

अथैतद्दृष्टान्तेन स्वर्गादेरपि सातिशयाल्पास्थिरत्वान्याह - **एवं** हीति। यथा रैप्रभृतिजन्यानि सुखानि तुच्छानि एवं क्रतुभिःर्यागादि कर्मभिः कृता सञ्चिता अमी स्वर्गादयो लोका अपि क्षयिष्णवो नश्वराः सातिशया न निर्मलाः अनिर्मला दुःखमिश्राश्चेत्यर्थः। अत्र "तद्यथेह कर्मचितो लोकः क्षीयत्ते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते, प्लवाह्येते अदृढा यज्ञरूपाः, परीक्ष्य लोकान् कर्मचितान्" (छन्दो. उ. 8-1-6) इत्यादि श्रुत्यर्थोऽभिप्रेतः। यत एवं तस्माददृष्टश्रुतदूषणं न विद्यते दृष्टं श्रुतं वा दूषणं यस्य श्रुति स्मृतिभ्यामदूषितम्; किन्तु प्रशस्तमित्यर्थः। तं भक्त्यैवोपायेनलभ्यं परं परमपुरुषमात्मलब्धये [2-]भजत। आत्मलब्धये आत्मलाभार्थे[-2], आत्मनः सत्तायै[3] इत्यर्थः[4]। अन्यथा संसरत आत्मनोऽन्ततः स्थावरत्वादि प्राप्त्या असत्प्रायतैव स्यादिति भावः।।४२।।

**विज॰** भक्त्यनन्तरं भगवत्कथा निर्वाणसुखजननीत्याह- **अधोक्षजेति**। अधोक्षजालापं संसृतिचक्रशातनं नाशनं तद्धरिविषयकथाकथनं ब्रह्मनिर्वाणसुखं ब्रह्मणोऽनुग्रहात्प्राप्यमुक्तिसुखं विदुरिति यत्ततो देहहृदये स्थितं, जीववत् हृदि स्थितमीश्वरं भजध्वमित्यन्वयः। "योऽयं बहिर्वा पुरुषादाकाशो, यो वै यं वोवसयोऽयमन्तः पुरुष आकाशो योवैसोऽन्तः पुरष आकाशो यं वसयो यमन्तर्हृदय आकाशः" (छान्दो. उ. 3-12-7) इति श्रुतेः। हृदीश्वरं मनः प्रेरकत्वेन तत्स्वामिनं "स हि सर्व मनोर्वृत्तिप्रेरकः समुदाहृतः" इति वाक्याद्वा।।३९।।

भगवदुपासनं दवीयस्त्वेन बहुपाथेयसाध्यत्वेन भागीरथीयात्रावत् दुस्साधनं किम्, नेत्याह- **कोऽति प्रयास** इति अस्यात्मनो जीवस्य स्वे स्वाधीने हृदिच्छिद्रवदाकाशवत्सतः स्थितस्य हरेरुपासने कोऽति प्रयासः,

1- -1 W omits. 2- -2 A omit; 3 A. B add भजत; 4. A. B omit इत्यर्थं।

न कोऽपि। सर्वगतत्वेन समीपस्थत्वात् "तद्दूरेतदन्तिके" (ईश. 3-5) इति श्रुतेः। अशेषदेहिनां सामान्यतः साधारणत्वेन हृदिस्थितत्वेन सख्युः तस्मात् विषयोपपादनैः किम्? शास्त्रैरिति शेषः।।४०।।

भक्तेरन्तरङ्गसाधनं वैराग्यमेवेत्याशयेनाह **राय** इति।।४१।।

विहितयज्ञ साध्यत्वेन स्वर्गादे र्नित्यत्वं सम्भाव्यमिति, नेत्याह - **एवमिति** । एवं मर्त्यलोकवन्नानिर्मलाः प्राकृतत्वात्, न दृष्टं श्रुतं दूषणं यस्य स तथा तम् सहचरीभूतवैराग्येण एकया मुख्यया आत्मलब्धये स्वरूपानन्दानुभवलक्षणमुक्तिप्राप्त्यर्थमात्मनो देहादे र्विविच्य स्वरूपज्ञानलक्षणलाभाय वा।।४२।।

**यदर्थ[1] इह कर्माणि विद्वन्मान्य[2]सकृन्नरः।**
**करोत्यतो विपर्यासममोघं विन्दते फलम्।।४३।।**

***सुखाय दुःखमोक्षाय सङ्कल्प इह कर्मणः[3]।**
**सदा[4]ऽऽप्नोतीहया दुःखमनीहायाः[5] सुखावृतः[6]।।४४।।**

**कामान्कामयते काम्यै[7-]र्यदर्थमिह[-7] पूरुषः।**
**स वै देहस्तु पारक्यो भङ्गुरोऽ[8]पैत्युपैति च।।४५।।**

**किमु व्यवहितापत्यदारागारधनादयः।**
**राज्य[9]कोशब[10]लामात्यभृत्याप्ता ममतास्पदाः।।४६।।**

**किमेतैरात्मनस्तुच्छैस्सह देहेन नश्वरैः।**
**अनर्थैरर्थसङ्काशैर्नित्यानन्द[11]रसोदधेः।।४७।।**

**निरूप्यतामिह स्वार्थः कियान्देह[12]भृतोऽसुराः।**
**निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः।।४८।।**

---

1 A, B, G, J, T यदध्यर्थेह; M, Ma यदर्थ मिह। 2 H, V विद्वान्मान्यस्य, M, Ma विध्यज्ञान्यसं *This half vene in not found in W. Edition. 3 A, B, G, J, T कर्मिणः। 4. H, V स आप्नों ; W स चाऽऽन्तो। 5 M, Ma, W यां; 6. M, Ma सुखोन्नतिम्। 7- -7 M Ma काम्यान्यदर्थ इह 8 A, B, G, J, T, M, Ma, T यात्युपैतिच। 9. H, V राष्ट्र। 10 A B, G, J, M, Ma, T गजां। 11 A, B, G J M, Ma, T महा, 12. W हं

**कर्माण्यारभते देही देहेनात्मानुवर्तिना।**

**कर्मभिस्तनुते देहमुभयन्त्वविवेकतः।।४९।।**

**तस्मादर्थाश्च[1] कामाश्च[2] धर्माश्च[3] यदपाश्रयाः[4]।**

**भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम्।।५०।।**

**श्रीध० यदिति।** किञ्च यदध्यर्थ्य यत्सङ्कल्प्य। अतः सङ्कल्पिताद्विपर्यासं विपरीतं फलममोघमवश्यं प्राप्नोति।।४३।।

तदेव दर्शयति - **सुखायेति।** ईहया इच्छया क्रियया वा यः पूर्वमनीहाया हेतोः सुखेनावृतो व्याप्त आसीत्स ईहया दुःखमाप्नोति एति[5]।।४४।।

किञ्च, **कामानिति।** कामान्भोगान् काम्यैर्विषयैः कर्मभिर्वा, पारक्यः श्वादिभोग्यो नत्वात्मीयो भङ्गुरश्च।।४५।।

**किम्विति।** किमुदेहा द्व्यवहिता अपत्यादयो ममता विषयाः पारक्या इति[6] वक्तव्यम्।।४६।।

किञ्च, स्वयं पुरुषार्थरूपस्य किमेतैः अतितुच्छैः[7] इत्याह- **किमेतैरिति।।४७।।**

भोगावसराभावाच्च एतैः क उपयोग इत्याह- **निरुप्यतामिति।** प्राचीनैः कर्मभिः क्लिश्यमानस्य कर्मभिः कियान् स्वार्थ इति वाऽन्वयः।।४८।।

ननु कर्मसु समाप्तेषु भोगावसरः स्यात्, तत्राह **कर्माणीति।** नचेदं कर्म तस्य फलं, देहादिकञ्च परमार्थ इत्याह - उभयं कर्मच देहञ्च अविवेकतः[8] आत्माज्ञानेनैव[9] तनुते।।४९।।

**तस्मादिति।** [10-]अर्थादयो[-10] यदपाश्रया यदधीनाः।।५०।।

**वीर०** किञ्च, वैषयिकसुखलिप्सयाकुर्वन्नपि न तत्प्राप्नोति, तद्विपरीतं दुःखमेव। अत स्तत्परित्यज्य [11-]भगवन्तमेव[-11] भजतेत्याह - **तदर्थ** इति। विद्वन्मानी नरः, विद्वांसमात्मानं मन्यत इति विद्वन्मानी केवल कर्ममीमांसो

---

1 W दर्थः 2 W कामः 3. W धर्मः 4 H, V यदु; 5 B, H, J, V एव; 6 H, V add किमु; 7. H, V Omit; अतितुच्छैः; 8. A Omits देहञ्च; 9 A, B, J अज्ञाने, 10--10. H, V Omit, 11--11. A Omits

पचितबुद्धिरित्यर्थः। [1]नरो यदर्थं यद्वैषयिकसुखार्थमिहलोके असकृद्वारंवारं कर्माणि यागादीनि करोति। स ततोऽभिलषितसुखाद्विपरीतं फलं दुःखात्मकमे[2]वाऽमोघमवश्यं विन्दते प्राप्नोति।।४३।।

तदेव दर्शयति - सचेति। यः पुमाननीहायां निमित्तभूतायां वैषयिकसुखार्थव्यापारारम्भात् प्राक् निर्व्यापाराद्धेतोः सुखावृतः सुखेन व्याप्त आसीत्। स एव ईहया आरब्धेन व्यापारेण हेतुना दुःखमे[3]वाऽऽप्नोति स्वर्गादि सुखार्थ यागादि व्यपारेण दुःखमेवाऽऽप्नोतीत्यर्थः। भगवत्प्राप्त्यर्थ भक्तियोगानुष्ठान दशायामपि निरतिशया नन्द भगवदनुभवरूपं सुखमेव प्राप्नोति। अन्ततस्तु नित्यनिरतिशय ब्रह्मानन्दमग्नो भवति। स्वर्गाद्यर्थयागादिकं कुर्वाणस्तु जीवद्दशायां वित्ताद्यार्जनेन तदनुष्ठानप्रयासरूपं दुःखम् अन्ततस्तु सातिशयाल्पास्थिरफलरूपं स्वर्गादिकं, तन्निमित्तपुण्य क्षयेतु नरकमिति वैषम्यमभिप्रेतम्।।४४।।

किञ्च, इह लोके पुरुषो यदर्थं यस्य देहस्य प्रयोजनाय [4]कामान्, काम्यन्त इति कामाः, कर्मणि घञ्, तान् शब्दादीन् कामैः, करणे घञ्, कामोत्पत्ति साधनैः कामयते इच्छति स एवतु देहः पारक्यः श्व[5]सृगालादिभक्ष्यः भङ्गुरो नश्वरः उपैति कदाचिद्देहिनमालिङ्गति, कदाचिच्चाऽपैति जहातीत्यर्थः।।४५।।

देहस्यैवेयमवस्था, किम्पुन देहानुबन्धिनां दारादीनामित्याह- **किमिति**। देहेनैव साक्षाद्रात्मनः सम्बन्धो दारादिभिस्तु देहद्वारेति व्यवहितेत्युक्तम्। व्यवहिता ये दारादयः अगारं मन्दिरं, आदिशब्देनपशुपुत्रादयः, कोशो वस्त्रादिपेटिकाबलंचतुरङ्गयुक्तं भृत्याः परिचारकाः, एते सर्वे ममतास्मदाः ममेमे इत्यभिमान विषयः उपयन्त्यपयान्तिचेति किमुवक्तव्यमित्यर्थः।।४६।।

ननु न देहा[6]र्थो विषयार्थोव्यापारः, किन्तु आत्मार्थ इति चेत् तर्हि नित्यानन्दसुखरूपस्यात्मनः समुद्रस्य विप्रुडिव किमेतद्वैषयिकं सुखमित्याह - **किमेतैरिति**। नित्यानन्दस्स एव रसः, स एवोदकं तस्याऽऽश्रयस्याऽऽत्मनः एतैर्देहेन साकं नश्वरैः अतएव तुच्छैरल्पैर्वस्तुतोऽनर्थैः पुरुषार्थत्वशून्यैरर्थसङ्काशैः पुरुषार्थाभासैः कामैः किं प्रयोजनम्? तदनुभवजनितं सुखमतितुच्छमित्यर्थः।।४७।।

किञ्चाऽत्यायासेन आर्जितमपि वैषयिक[7]सुखमनुभूयमानदुःखापेक्षयाऽल्पमेव, तदनुभवावसराभावादित्याह -**निरूप्यतामिति**। हे असुराः! इह संसारे कर्मभिः प्राचीनैः क्लिश्यमानस्य दुःख्यतः देहभृतो निषेकादिष्ववस्थासु

1. W Omits नरः 2. W Omits एव 3. W Omits एव 4. A, B Omit कामान् 5. A, B, शृ 6 W र्थव्या 7 W कं

स्त्रीसम्भोगाद्यवस्थासु स्वार्थ उत्पन्न आनन्दः कियान्, तन्निरूप्यताम्, दुःखापेक्षया सुखमल्पमिति भावः। यद्वा निषेकादिष्ववस्थासु पितृरेतोद्वारा मातृयोनिप्रवेश प्रभृतिषु श्मशानान्ताः तासु अवस्थासु प्राचीनैः कर्मभिः क्लिश्यमानस्य, अनेन दुःखप्राचुर्यमुक्तम्।।४८।।

ननु निषेकाद्यवस्थायाः कर्मनिमित्तत्वात्[1] निश्शेषकर्मक्षये प्रभूतं सुखं स्यादित्याशङ्कां निराकर्तुमन्तरेण परमात्मोपासनं न कदाचिदपि कर्म निवर्तते इत्याह - **कर्माणीति**। देही आत्मानुवर्तिना देहेन तावत् कर्माणि देहान्तरारम्भकाणि पुण्यपापात्मकानि कर्माणि कुरुते, तैश्चारब्धैः कर्मभिर्निमित्तभूतैर्देहं तनुते बिभर्ति, तेन पुनः कर्माणि, तैश्च पुनर्देहमित्येवं बीजाङ्कुरतुल्या परिवृत्तिर्ननिवर्तत इति न कदाचिदपि निश्शेष कर्मक्षय इति भावः।[2-] कुतस्त्वियं परिवृत्तिस्तत्राह[-2] उभयन्तु देहेन कर्माणि, कर्मभिः देहः इत्येतदुभयमविवेकतः स्वात्मपरमात्मयाथात्म्याज्ञानादेव हेतोर्भवतीत्यर्थः[3]।।४९।।

एवं वैराग्योदयाय ऐहिकामुष्मिकसुखस्य[4] अल्पास्थिरत्वादि दुःखमिश्रत्वानर्थावहत्वादिकमभिधाय, अथेश्वरं भज तां यद्यपि सर्वेपुरुषार्थास्सुलभाः, तथापि अनन्य प्रयोजनत्वेनैव तद्भजनंश्रेय इत्याह- तस्मादिति। तस्माद्देहकर्मणोः परिवृत्तिरूपसंसारस्य कदाप्यनिर्मोक्षात्, वैषयिकसुखस्याल्पत्वात् अस्थिरत्वात् दुःखमिश्रत्वात् भूयस्त्वाच्च तन्निवृत्तये निश्शङ्कं सदा हरिमाश्रितानां संसृतेर्बन्धहरईश्वरः। अनीहया निष्कामत्वेन भजेत। हरिं विशिनष्टि - धर्माश्चार्थाश्च[5] कामाश्च[6] यदपाश्रयाः, य स्त्रिवर्गस्याऽपि दाता तमित्यर्थः। तथा च श्रुतिः - "इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः"(मना. उ. 1-6) इति "कोह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्" (तैत्ति. आ. 2-7 इति च।) "य आत्मदा बलदा य एको बहूनां विदधाति कामान्" (तैत्ति. सं. 4-1-8) इति च, अर्थादयो यदपाश्रया स्तं हरिमनीहया भजेतेत्यनेन समस्तपुरुषार्थदोऽप्यनीहया भजतामनर्थहेतुं संसृतिबन्धं हरति, ईहयाभजतां त्वहितमात्रमेव ददातीति सूचितं भवति[7]।।५०।।

**विज०** भगवदनर्पणबुध्याऽनुष्ठितयज्ञादि कर्माऽनर्थ[8] हेतुरित्याशयेनाऽऽह-**यदर्थमिति**। यजेतेत्यादि विध्यङ्गानि विपर्यासं दुःखं अमोघं सदातनत्वेन अवध्यम्।।४३।।

एतदेव विवृणोति - **सुखायेति**।**ब्रह्मार्पणलक्षणेन** करणमनीहा। तदुक्तम् - "अप्रत्ययेन करणमनीहाप्रोच्यते बुधैः" इति।।४४।।

---

1. W निषेक 2- -2. Omits 3 W Omits अर्थः 4. A कसुं 5 W र्थ 6 W मं 7. W Omits भवति। 8. M, Ma नर्थानर्थ

शाश्वत सुखानुभवकामं विहाय शरीरे सुखकामं प्रयतमानो विमूढत्वेन अतिहास्यो बुधैरित्याशयं नाऽऽह - **कामानिति**। काम्यान् कामान् विषयान् यदर्थे यस्य शरीरस्यार्थे पारक्यस्तु श्वसृगालादेर्विद्यमानो न स्वकीयः। व्यवहिताः शरीरमपेक्ष्य दूरस्थाः।।४५, ४६।।

ननु विषयभोगार्थं श्रीनारायणोऽपि विग्रहं गृह्णातीति केचित् तत्राऽऽह - **किमेतैरिति**। आत्मनो हरेः तस्मात्स्वतश्चिदानन्दस्वरूपस्य जीवात्मनो भौतिकादिना किम्, न किमपि कृत्यमित्यतोवाऽऽह - किमेतैरिति।।४७।।

विचारासहत्वान्न देहादिना प्रयोजनमित्याह - **निरूप्यतामिति**। निषेकादिषु गर्भाधानादिषु अवस्थासु कर्मभिः क्लिश्यमानस्य देहभृतः कियान् स्वार्थ इति निरूप्यतामित्यन्वयः।।४८।।

संसारस्य प्रवाहरूपेण नित्यत्वा न्न हरेर्ज्ञानमन्तरेण निवृत्तिः स्यादित्याशयेनाऽऽह - **कर्माणीति**। आत्मानुवर्तिना परमात्माधीनेन कर्मदेहश्चेत्युभयमविवेकतोऽज्ञानात्।।४९।।

नन्वीश्वरसेवायां भक्तिरेव प्रयोजिका चेन्नार्थादिना प्रयोजनमित्याशङ्कां परिहरन्नुपसंहरति - **तस्मादिति**। अर्थादे हेरिविषयत्वे साफल्यं भवतीत्यर्थः। ननु, प्रतीतं "चेष्टा राहित्यमनीहशब्दार्थं परित्यज्य अन्यार्थकल्पने किं प्रमाणम्" उक्तं हि प्रमाणमिति चेन्न, तस्य बह्वर्थ वाचित्वेनस्वाभिप्रेतार्थसन्देहात् "करणं कारणे कार्ये साधनेऽनुव्रतादिषु" (वैज. को. 7-3-9) इत्युक्तेरिति तत्राऽऽह- अनीहमिति। श्रमसाध्य क्रियाराहित्यादनीहमित्यस्योक्त एवार्थः, अप्रयत्नेनेति विशेषणाच्च श्रमसाध्यक्रियाराहित्यमेवोच्यते - " स्पष्टाद्युच्चारणाभेदेध्यान पद्मासनादिषु। व्रतबन्धेनाट्यभेदे गीतके कर्मणीन्द्रिये" इत्युत्तरवाक्ये कर्मण्यपि प्रयोगाच्च।।५०।।

**सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः।**
**भूतैर्महद्भिः स्वकृतैः कृतानां बीज[1]संज्ञितः।।५१।।**
**देवोऽसुरो मनुष्योवा य[2]क्षो गन्धर्व एव च[3]।**
**भजन्मुकुन्दचरणं स्वस्तिमान् स्याद्यथा[4] वयम्।।५२।।**
**नाऽलं द्विजत्वं देवत्व मृषित्वं चा[5]ऽसुरात्मजाः।**
**प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता।।५३।।**

---

1. A, B, G, H, J, V जीव 2. H, V रक्षो 3. H, V वा 4 H,V °थोदयम् 5 A, B, G, J, M, Ma, T वा

**न दानं न तपो नेज्या न शौचं न व्रतानिच।**

**प्रीयतेऽमलया भक्त्या हरिरन्य द्विडम्बनम्।।५४।।**

**ततो हरौ भगवति भक्तिं कुरुत दानवाः।**

**आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे।।५५।।**

**[1-]दैतेया यक्षरक्षांसि[-1] स्त्रियश्शूद्रा व्रजौकसः।**

**खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः।।५६।।**

**एतावानेवलोकेऽस्मिन् पुंसः[2] स्वार्थः[3] परः स्मृतः।**

**एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम्।।५७।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां सप्तमस्कन्धे

प्रह्लादानुचरितं दैत्यपुत्रानुशासनं नाम सप्तमोऽध्यायः।।७।।

**श्रीध० सर्वेषामिति।** भूतानां[4] प्राणिनां जीवसंज्ञितोऽन्तर्यामी।।५१।।

असुराणामस्माकं अत्र नाऽधिकार इत्यपि न वाच्यमित्याह - **देव इति पञ्चभिः**।।५२, ५३।।

**नेति।** अमलया निष्कामया, अन्यद्विडम्बनं नटनमात्रम्।।५४, ५५।।

**दैतेया** इति। अच्युततामममृतत्वम्।।५६।।

अध्याय द्वयोक्तमुपसंहरति - **एतावानिति।** तदीक्षणं गोविन्ददृष्ट्या स्म्माननम्।।५७।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां सप्तमोऽध्यायः।।७।।

---

1--1. W रक्षांसियक्षादैतेयाः 2. M, Ma सां 3 W स्वार्थपरः 4. A, B, J अनर्थ

**वीर०** अथ दैत्यकुमाराणा सर्वेषामात्मनां भगवद्भजनेऽनधिकारशङ्कां निराकुर्वन्ननीहया भजतामेवा निष्टनिवृत्तिरिष्टप्राप्तिश्चेति स्वदृष्टान्तेनाऽऽह - सर्वेषामपीतिद्वाभ्याम्। स्वकृतैः स्वसृष्टैः महद्भिर्भूतैः पृथिव्यादिभिः कृतानां सृष्टानां भूतानां देहादीनां[1] सर्वेषां भगवान् बीजसंज्ञितः आदिकारणभूतः आत्मा अतएव निरतिशयप्रिय ईश्वरोऽन्तः प्रविश्य नियन्ता तावद्भगवान् सर्वेषां साधारण इति भावः।।५१।।

अतो देवादिजातिविभागमन्तेरण यः कश्चिन्मुकुन्दचरणं भजन् स्वस्तिमान्निवृत्तानिष्टः प्राप्तेष्टश्च स्यादेव यथा वयमिति। वयमसुरा अपि भगवन्तं भजन्तः स्व स्तिमन्तोऽभूम, तथेऽतरेऽपीत्यर्थः। यथा वयमिति दृष्टान्तस्वारस्यात् भगवतः सर्वभूतसाधारण्यप्रतिपादनस्वारस्याच्च निरुपाधिकोक्तविधात्मत्वादि सम्बन्धज्ञानपूर्वकमनन्य प्रयोजनेन भजन्तः स्वस्तिमन्तो भवेयुः अन्यथा तु समीहित मात्रवन्त इति सूचितम्। तथा च श्रुतिः - "नाऽन्यः पन्था अयनाय विद्यते" (पु. सू. 7) इत्यादिका।।५२।।

तदेतदुपपादयति-**नाऽलमिति** द्वाभ्याम्। हे असुरात्मजाः। द्विजत्वादयो मुकुन्दस्य प्रीणनाय प्रीतिजननाय नाऽलं न प्रभवः, किन्त्वमलया अनन्य प्रयोजनया भक्त्यैव हरिः प्रीयते। अन्यत् उपायान्तरन्तु विडम्बनं नटन मात्रम्। द्विजत्वमिति वर्णाधिक्योपलक्षकम्, देवत्वमिति जात्याधिक्यस्य, ऋषित्वमित्यतीन्द्रियद्रष्टृत्वादिरूपज्ञानाधिक्यस्योपलक्षकम्। बहुज्ञतेति तु शास्त्रजन्यज्ञानाधिक्यस्य, वृत्तं पित्रादि परम्परागता सद्वृत्तिः।।५३।।

दानं पात्रे वित्तत्यागः, तपः कृच्छ्रादि, इज्या यागः, शौचं स्नानादि कृतं शुचित्वं, व्रतानि प्राजापत्यादीनि।।५४।।

यतो भक्त्यैव भगवान्प्रीयते नोपायान्तरेण, अतो हे दानवाः, यूयमाश्रितसंसार बन्धहारिणि सर्वभूतानामन्तरात्मनि भगवति ईश्वरे भक्तिमनन्य प्रयोजनां करुत कथम्भूताः? सर्वत्रात्मौपम्येन स्वात्मतुल्यत्वदृष्ट्या स्वस्मिन्निव ईश्वरशरीरभूतेषु सर्वेषु दययोपलक्षिताः भगवद्भक्तिं कुरुतेत्यर्थः।।५५।।

किमेवं भजन्तः केऽपि मुक्ता बभूवुरित्यपेक्षायां पापजातयोऽपि केनचिद्भगवत्सम्बन्धविशेषेणमुक्ताः, किं पुनरेवं भजन्तो मुच्यन्त इति वक्तव्यमित्याशयेनाऽऽह - **दैतेया** इति। रक्षांसि बककेश्यादयः, स्त्रियः पूतनादयः, व्रजौकसो नन्दादयः, शूद्राश्चाणूरादयः, खगाः जटायुप्रभृतयः, मृगाः मायामृगादयः-एवं विधाः पापजीवा अपि, अच्युततां भगवत्साधर्म्यं गताः प्राप्तास्सन्ति। हीति प्रसिद्धौ। त्रिकालज्ञत्वाद्भगवता प्रह्लादे नैवमुक्तम्।।५६।।

1. A, B वा

अध्याय द्वयोक्तार्थं निष्कृष्योपसंहरति - **एतावानिति**। अस्मिन् लोके पुंसां परः उत्कृष्टः, स्वार्थः पुरुषार्थः, एतावानेव। कियान् यद्गोविन्दे भगवति एकान्त भक्तिरनन्य प्रयोजनाभक्तिः यच्च सर्वेषु भूतेषु तदीक्षणं गोविन्देक्षणं भगवदात्मकत्व[1]दर्शनम् इत्येतावानेव निरतिशयपुरुषार्थसाधनभूत इत्यर्थः।।५७।।

इति श्रीमद्भागवतं सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां सप्तमोऽध्यायः।।७।।

**विज०** हरेरेव भजने कारणमाह-**सर्वेषामिति**। व्यञ्जकत्वात् बीजम्, गत इति शेषः। "व्यञ्जनाज्जगतो विष्णु बीजं न परिणामतः।" (ब्रह्मतर्के) इति वचनान्न बीजशब्दस्य विकारोऽर्थः। अप्रयत्नेनेति "अविक्रियाः स्वदृग्वश्यः" (स्वदृकहेतुः) (भाग. 7-7-19) इति स्वोक्तेः।।५१, ५२।।

भूतानामुत्पत्त्यादिना भक्त्यभावे जातिविशेषो वृत्तादि विशेषोऽप्यकिञ्चित्कर इत्याह-**नाऽलमिति** वृत्तमाचारः "वृत्तं स्वरूपे चरिते" (वैज. के 6-5-76) इति यादवः।।५३,५४।।

आत्मौपम्येन आत्मस्नेहवत्स्नेहेन।।५५।।

वेदान्तादिशास्त्रानधिकारित्वेन पापजीवत्वं, न तु पापकरणात्। अच्युततां च्युतिवर्जनं मोक्षं गताः सन्ति हि यस्मात्तस्मात् मुकुन्दभक्तिरेव सम्पाद्या।।५६।।

तात्पर्यात्पुनरेतदेवहि कारणं श्रेय इत्याह-**एतावानिति**। तस्य हरेः सर्वसत्ताप्रदत्वेन अवस्थितेः ईक्षणं दर्शनं ज्ञानमिति यदीयं भक्तिरिति।।५७।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे सप्तमोऽध्यायः।।७।।

* * * *

1. A, B Omit क

# अष्टमोऽध्यायः

नारद उवाच

अथ दैत्यसुतास्सर्वे श्रुत्वा तदनुवर्णितम्।
जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम्।।१।।

अथाऽऽचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम्।
आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा।।२।।

श्रुत्वा तदप्रियं दैत्यो [1-]गुरुणोक्तं सुताऽनयम्[-1]।
कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे।।३।।

क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम्।
[2]आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा।।४।।

प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम्।
सर्पः [3]पदाहत इव श्वसन्प्रकृतिदारुणः।।५।।

[4-]हिरण्यकशिपुरुवाच[-4]

हे दुर्विनीत! मन्दात्मन्! कुलभेदकराधम!।
[5]स्तब्धं मच्छासनो[6]द्धृतं [7]नेष्ये त्वाऽद्य यमक्षयम्।।६।।

---

1- -1A.B,G,J,M,Ma,T. दुस्सहं तनयानयम् 2 H,V. अवेक्ष° 3 H,V. पा° 4- -4 A,G,J,M,Ma,T Omit 5 H,V. त्वान्तु
6.A.B,G,J.M,Ma,T °द्धृतं° 7.H.V. नेष्याम्यद्य

**क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकास्सहेश्वराः।**
**तस्य मेऽभीतवन्मूढ! शासनं किम्बलोऽऽत्यगाः।।७।।**

**प्रह्लाद उवाच**

**न केवलं मे भवतश्च राजन् स वै बलं बलिनाञ्चापरेषाम्।**
**[1]परेऽवरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमेऽतिरुषा सूनुं निघ्नन्दैत्यो हतः स्वयम्। आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः।।

अन्तः कृपासुधापूर्णो बहिःक्रोधो नृकेसरी। दैत्येन्द्रमरिभावेन भजन्तं सम[2]भावयत्।।

**अथेति।** एकान्तसंस्थितां प्रत्यङ्निष्ठाम्। यथा यथावत्।।१,२।।

**[3]श्रुत्वेति।** दैत्यः स च पुत्रं हन्तुं मनो दधे। कथम्भूतः? कोपस्यावेशेनोद्रेकेण चलत् गात्रं वपुर्यस्य सः।।३।।

**क्षिप्त्वेति।** क्षिप्त्वा तिरस्कृत्य पापेन सरोषेण तिरश्चीनेन वक्रेण।।४,५।।

**हे दुर्विनीतेति।** हे मन्दात्मन्! अल्पबुद्धे! मदाज्ञाति[4]लङ्घिनं त्वामद्य यमालयं नेष्यामि।।६।।

**क्रुद्धस्येति।** अभीतवत् किं बलं यस्य सः किम्बलः।।७,८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

[5]एवं भगवता प्रह्लादेनोपदिष्टतत्त्वत्रययाथात्म्यहेयोपादेयभगवद्धर्मतदनुष्ठानोद्योगान् दैत्यकुमारानालक्ष्य आचार्यसुतो दैत्येन्द्राय न्यवेदय दित्याह देवर्षिः-**अथेति**। [6]अथ भगवद्धर्मोपदेशानन्तरं तेन प्रह्लादेन अनुवर्णित माकर्ण्य निर्दुष्टत्वात् प्रह्लादोक्त[7]मेव जगृहुर्दैत्यकुमाराः,न तु गुर्वनुशिक्षित मसुरोपाध्ययानुशिक्षितं जगृहुः।।१।।

अथ तेषां दैत्यपुत्राणामेकान्तसंस्थितामव्यभिचारेण भगवद्धर्मविषयां बुद्धिमालक्ष्य लिङ्गैर्ज्ञात्वा भीतस्त्वरितः सञ्जातत्वरः यथावद्राज्ञे हिरण्यकशिपवे आवेदय द्विज्ञापितवान्।।२।।

---

1 H,V, परेऽप°; M,Ma पराऽव° 2.H,V स्वमखादयत् 3. A,B,J omit दैत्यः 4 H,V, Omit अति 5. A,T Omit एवं 6. A,B,T Omit अथ
7 W Omits एव।

ततो दैत्यो हिरण्यकशिपुर्गुरुणोक्तं सुतस्याऽनयनमिति स्वमार्गाननुवर्तनम् अत एवाऽप्रियं तच्छ्रुत्वा कोपावेशेन क्रोधव्याप्त्या चलत्कम्पमानं गात्रं शरीरं यस्य तादृशः पुत्रं प्रह्लादं हन्तुं मनो दधे मनोरथं कृतवान्।।३।।

कठोरया गिरा अतदर्हणं तिरस्कारानर्हं प्रह्लादं क्षिप्त्वा तिरस्कृत्य क्रोधेन तिरश्चीनेन वक्रेण चक्षुषेक्षमाणः आह उवाच।।४।।

कथम्भूतम्? विनयेन नितरां नम्रं दान्तं तिरस्कारादिभिरसञ्जातक्रोधं बद्धोऽञ्जलिर्येन तम् सम्यक् उप समीपे स्थितम्। कथम्भूतः? पादेन आहतस्ताडितः सर्प इव श्वसन् श्वासं मुञ्चन्, स्वभावेनैव क्रूरः।।५।।

उक्तिमेवाऽऽह-**हे दुर्विनीत** इति द्वाभ्याम्। हे दुर्विनीत! मन्दात्मन्! अल्पबुद्धे! मदाज्ञातिलङ्घिनं त्वामधुना यमालयं नेष्यामि।।६।।

यस्य मे क्रुद्धस्य सतः सपालास्त्रयो लोकाः परितः कम्पन्ते तस्य मे मम शासनमभीतवद्भयरहितवत्, मत्तो भयरहितः कोऽपि नाऽस्तीत्यभिप्रायेण वतिः प्रयुक्तः, अत्यगाः अतिवर्तसे। एव मतिवर्तने भवान् किम्बलः, को बलं यस्य तादृशः।।७।।

एव मुक्त आह भगवान् प्रह्लादः-**न केवलमिति** चतुर्भिः। तावद्यदुक्तं किं बल इति तत्रोत्तरमाह द्वाभ्याम्। हे राजन्! स न केवलं ममैव बलं किन्तु भवतोऽन्येषाञ्च बलिनां बलम्। कोऽसौ? येन ब्रह्मादयः चतुर्मुखप्रभृतयः उच्चावचाश्चराचरात्मकाः सर्वे लोकाः, वशं स्ववशं प्रणीताः प्रापिताः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

वैराग्याद्यङ्गोपाङ्गरुचिरभक्तिसुन्दरीसुन्दरावयवसन्निवेशलक्षणपरमपुरुषार्थकरणं यदुत्तरचरितमित्येतन्निदर्शयितुं नरसिंहावतारो निरूप्यतेऽस्मिन्नध्याये। तत्र दैत्यसुतैः प्रह्लादवर्णितं श्रुत्वा किं कृतमिति युधिष्ठिरस्य मानसीं शङ्कां परिहरति-**अथेति**। निरवद्यत्वात् निर्दोषत्वात्।।१।।

एकान्ते हरौ सम्यक्स्थितामैक्ये स्थितामभिन्नविषयामिति वा। यथा यथावत् साकल्येन यथा तैः तेनोक्तं गृहीतं तथेति वा।।२।।

तनयस्यानयं स्वसिद्धान्तविरुद्धसिद्धन्तम्।।३।।

पापेन पापसाधनेन।।४,५।।

यमक्षयं यमगृहम्।।६।।

कस्य बलं यस्य स किम्बलः मद्बल मनादृत्य तव बलभूतः क इत्यर्थः।।७।।

किम्बलमित्यस्योत्तरमाह-**न केवलमिति**। वेत्यनेन "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्" इति श्रुतिं सूचयति। पराश्चावराश्च परावरे एतदेव विशदयति-स्थिरजङ्गमा इत्यादिना।।८।।

**स ईश्वरः काल उरुक्रमो[1]ऽसावोजस्सहः सत्त्वबलेन्द्रियात्मा।**
**स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः।।९।।**

**जह्यासुरं भावमिमं त्वमात्मनः स्वयं मनो धत्स्व न सन्ति विद्विषः।**
**ऋतेऽजितादात्मन उत्पथस्थितात् तद्धि ह्यनन्तस्य महत्समर्हणम्।।१०।।**

**दस्यून्पुरा षण्णविजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश।**
**जितात्मनो ज्ञस्य समस्य देहिनां साधो[2]: स्वमोहप्रभवाः कुतः परे।।११।।**

**हिरण्यकशिपुरुवाच।**

**व्यक्तं त्वं मर्तुकामोऽसि योतिमात्रं विकत्थसे।**
**मुमूर्षूणा[3]ञ्च मन्दात्मन् न[4]नु स्युर्विप्[5]लवा गिरः।।१२।।**

**यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः।**
**क्वाऽसौ य[6]दि स सर्वत्र कस्मात् स्तम्भे न दृश्यते।।१३।।**

**सोऽहं विकत्थमानस्य शिरःकायाद्धरामि ते।**
**गोपायेत हरिस्त्वाऽद्य यस्ते शरणमीप्सितः[7]।।१४।।**

**एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः।**
**खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं[8] तताडाऽतिबलः स्वमुष्टिना।।१५।।**

---

1. H,V °मोऽजसा ह्याजः 2 H,V, °धोस्तु 3. A,B,G,J,M,Ma,T °णां हि 4 W न 5 H,V °प्लुता 6.H,V °दिह 7.A,B,G,J,T,W °तम् 8 H,V तताडोरुः; W बभञ्जाति

## श्रीमन्नृसिंहमूर्त्यवतारघट्टः

**तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत्।**
**यं वै स्वधिष्ण्योपगतन्त्वजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे।।१६।।**

**श्रीध॰** वशं प्रणीता इत्यत्र हेतुः- **स ईश्वर** इति । उरवः क्रमाः पादविक्षेपाः यस्य,बहुपराक्रम इति वा। [1-]ओज इन्द्रियपाटवम् सहः मनसः पाटवम्[-1] ओज आदिरूपः सत्त्वं, धैर्यं बुद्धिर्वा।।९।।

[2]ननु मच्छत्रुरसौ कथं ममाऽपि स एव बलं स्यादत आह–**जहीति**। आत्मनः स्वस्य, [3]भावं स्वभावं त्यज यतोऽजितादात्मनो मनस ऋते विनाऽन्ये विद्विषो न भवन्ति। किञ्च तद्धि तदेव हि साम्येन मनसो धारणमेव समर्हणमाराधनम्।।१०।।

ननु मया दिग्विजये सर्वे रिपवो जिताः, अतः साम्प्रतं [4]विद्विषो न सन्तीति चेत् [5]सत्यं, तत्राऽऽह-**दस्यूनिति**। एके भवादृशाः मन्दाः पुरा आदौ लुम्पतः सर्वस्वं हरतः षडिन्द्रियलक्षणान् शत्रून् नाविजित्य अजित्वा दश दिशः स्वयं जिता [6]इति मन्यन्ते। साधोस्तु जितचित्तस्य देहिनां समस्य ज्ञस्य विदुषः स्वाज्ञानकल्पिताः परे शत्रवः कुतः स्युः?।।११।।

**व्यक्तमिति**। व्यक्तं निश्चितम्। [7]विप्लुताः अनन्वि[8]तार्था इत्यर्थः।।१२।।

**य** इति। हे मन्दभाग्य! [9-]मदन्यो जगदीश्वरो[-9] यद्यस्ति तर्ह्यसौ क्वाऽस्ति? प्रह्लाद आह। स सर्वत्राऽस्ति। हिरण्यकशिपुराह-[10]तर्हि कस्मात् स्तम्भे नाऽस्ति। प्रह्लादस्तु तं स्तम्भं निरीक्षमाणः नमस्यन्नाह-दृश्यत इति।।१३।।

हिरण्यकशिपुस्तु तत्र तमपश्यन्नाऽऽह-**सोऽहमिति**। [11-]विकत्थमानस्य विपरीतं ब्रुवाणस्य ते शिरः कायाद्धरामि पृथक्करोमि[-11]।।१४।।

**एवमिति**। प्रह्लादेन मूर्ध्नि बद्धाञ्जलिना निरीक्षमाणं स्तम्भं [12]मुष्टिना ताडितवान्।।१५,१६।।

**वीर॰** कोऽसौ? तस्य नाम कथयेत्यत्राऽऽह-**स** इति। स सर्वेषां बलाधायक ईश्वरः। [13-]कोऽसावीश्वरः[-13]? उरुक्रमः उरवः लोकत्रयसङ्ग्राहकाः क्रमाः पादविक्षेपा यस्य सः त्रिविक्रम इत्यर्थः। "सर्वं पदं हस्तिपदे निमग्नम्"

1--1 A,B,J, Omit 2 H,V Omit ननु 3.H,V,Omit भावं 4.H,V,Omit विद्विषो 5 H,V, Omit सत्यं 6. A,B,J,Omit इति 7 A,B,J विप्लवाः 8 A,B,J °ता इ° 9--9 H,V Omit 10. H,V Omit तर्हि 11--11 H,V. Omit 12. H,V Omit मुष्टिना। 13--13 W omits

इति न्यायेन पादत्रयेणैव लोकत्रयाक्रमणरूपमहामहिमशालिनस्तस्य सन्निधौ त्वद्बलं कियदेतदित्यभिप्रायः। न केवल मुरुक्रमः सर्वेषाञ्च बलाधायक एव, किन्त्वसावोजआदीनामात्मा आश्रयो धारक इति यावत्। ओज इन्द्रिय शक्तिः, सहो मनोबलं, सत्त्वं धैर्यं, बलं देहबलं, इन्द्रियाणि च तेषामप्याश्रय इत्यर्थः किञ्च स एवोरुक्रमः परमः निस्समाभ्यधिकः स्वशक्तिभिः स्वांशभूताभिः प्रकृतिपुरुषकालात्मिकाभिः शक्तिभिः कृत्स्नं विश्वं सृजति, अवति रक्षति, अत्ति संहरति च स्वयं गुणत्रयेशः सत्त्वादीनां त्रयाणां गुणानामीशो नियन्ताऽगुणवश्यो न कर्मवश्यश्चेति भावः।।९।।

ननु शत्रु रसौ कथं बलं स्यात्, अत आह **जहीति**। त्वमिममात्मनः स्वस्य, आसुरं भावं जहि त्यज। समं मित्रामित्रानुसन्धानरहितं यथा भवति तथा मनो धत्स्व धारय तथा मनः शिक्षयेत्यर्थः। एवञ्चेत्केऽपि विद्विषो न सन्ति। किञ्च "आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः" (भ.गी. 6-5) इत्युक्तरीत्या आत्मैव रिपुर्न तदन्यः कोऽपि रिपुरस्तीत्याह-ऋते इति। अजितादविधेयादत एव उत्पथे दुर्विषये स्थिताद्वर्तमानादात्मनोऽन्तःकरणादृते न सन्ति, विद्विष इति पूर्वेणान्वयः। तद्धि मनसस्साम्यमेव ह्यनन्तस्य त्रिविधपरिच्छेदरहितस्य परमात्मनः सं सम्यक् अर्हणं सम्यगाराधनम्।।१०।।

किञ्च, सर्वदिशां जयिनोऽप्यजितेन्द्रियस्य भवादृशस्य केवलं जयशालित्वाभिमानमात्रमेव न वस्तुतो जयित्वमस्तीत्याह-**दस्यूनिति**। पुरातावल्लुम्पत आत्मनोऽपहतपाप्मत्वादि गुणाष्टकरूपमैश्वर्यमपहरतः षडिन्द्रियरूपान् दस्यून् दुष्टजन्तुतुल्यान् शत्रून् नविजित्य अजित्वा एके त्वादृशाः दश दिशः स्वजिताः स्वेनैव[1] जिता इति मन्यन्ते, अभिमानमात्रमेतदित्यर्थः। जितात्मनो जितेन्द्रियस्य तु ज्ञस्य स्वात्मपरमात्मयाथात्म्यवेदिनो देहिनां समस्य सर्वाणि भूतानि परमात्मशरीरत्वेन समं पश्यतः साधोर्महाभागवतस्य स्वमोहप्रभवाः देहात्मभ्रम स्वतन्त्रात्मभ्रमनिमित्ताः परे शत्रवः कुतो भवन्ति, न सन्त्येवेति भावः ।।११।।

एवमुक्तवन्तमाह हिरण्यकशिपुः **व्यक्तमिति**। हे अल्पबुद्धे! त्वं व्यक्तं नूनं मर्तुकामोऽसि मर्तुमिच्छसि। यस्त्वं अत्यन्तं विकत्थसे। अथैवं विकत्थनं तव न स्यादिति भावः। हि तथाहि मुमूर्षतां मर्तुमिच्छतां विप्लवा अनन्विता वाचः न न स्युः भवेयुरेव।।१२।।

हे मन्दभाग्य! यस्त्वया मत्तोऽन्यो जगत ईश्वरः उक्तः। असौ क्वाऽऽस्ते? यदि स भवदभिमतो जगदीश्वरः

1 W omits एव

सर्वत्र अन्तरात्मतया वर्तते तर्हि कस्माद्धेतोः स्तम्भे पुरोवर्तिनि न दृश्यते। [1]मंदन्यो जगदीश्वरः कोऽसावस्तीति दैत्यः प्राह। ईशः सर्वत्राऽस्तीति प्रह्लादः। ईशो यदि सर्वत्राऽस्ते तर्हि स्तम्भे नास्तीति हिरण्यकशिपुः। प्रह्लादः स्तम्भे पश्यन्नाह, न दृश्यते (त्वया) अपि तु (मया) दृश्यत एवेति व्याख्यान्तरम्[-1]।।१३।।

सोऽहं सर्वेषामीश्वरोऽहमेवं विकत्थमानस्य ते तव [2]कायात् [3]देहात् शिरो हरामि छिनद्मि;यो हरि स्तव शरणं रक्षकः ईप्सितः सोऽधुना त्वां गोपायेत। स रक्षिता चेदधुना त्वां रक्षिष्यति[4] अन्यथा तु तदेव मिथ्येति भावः।।१४।।

एवमित्थं रुषा क्रोधेन दुरुक्तैर्मुहुर्मुहुः महाभागवतं सुतं प्रह्लादमर्दयन् महासुरो हिरण्यकशिपुः खड्गं प्रगृह्य वरासनात् सिंहासनादुत्पतित उत्थितोऽत्यन्तं बलं यस्य तेन स्वमुष्टिना स्तम्भं तताड ताडितवान् बभञ्ज[5]।।१५।।

तदैव [6]ताडनानन्तरमेव तस्मिन् स्तम्भेऽतिभीषणो निनदो ध्वनिर्बभूव। निनदं विशिनष्टि। येन निनदेन अण्डकटाहं ब्रह्माण्डकटाहं अस्फुटत् भिन्नमभूत्। अङ्ग! हे युधिष्ठिर! यञ्च निनदं श्रुत्वा स्वस्थानगता अजादयो ब्रह्मादयः स्वधिष्ण्यानां व्ययं नाशं मेनिरे प्रलयकालममन्यन्तेत्यर्थः।।१६।।

**विज॰** ननु "स्थाणुमन्ये प्रपद्यन्ते शरीरत्वाय देहिनाम्" इति श्रुतेः। शिवं बलं वदन्ति केचित्। "कालाद्भवन्ति भूतानि मन्यन्ते कालचिन्तकाः" इत्यतः कालं, अथ कथमयं निर्णयः परमात्मा बलमिति? तत्राऽऽह–**स** इति।।९।।

"कुतो न सन्ति विद्विषः" इति। [7]तत्राऽऽह ऋते इति[-7]। उत्पथस्थिता तत्त्वमार्गविरुद्धमार्गनिरतादजितात् अवशीकृता दात्मनो मनआदीन्द्रियग्रामादृते शुद्धमन आदिना विचार्यमाणे शत्रवो न सन्तीत्यर्थः। ननु, तर्हीदं "युद्धोद्यमं परं चक्रुर्विबुधा दानवान्प्रति" (भाग. 7-7-2) इत्यादि कथं सङ्गच्छत इत्याशङ्क्य यथा योग्यता दर्शनलक्षणं समत्वं कर्तव्यम् , अन्यथा शास्त्रविरोध इति भावेनोक्तसमत्वफलमाह-तद्विद्धीति। तत्तद्योग्यतानुसारेण तन्मनोधारणं हरेस्समर्हणं विद्धीत्यन्वयः। नैतदल्पं, किन्तु महदित्याह-महदिति।।१०।।

एतदेव विशदयति–**दस्यूनिति**। एके भवादृशाः पुरं शरीरं लुम्पतः षड्दस्यून् षडिन्द्रियाख्यचोरान विजित्य दश दिशः स्वेन जिता इति मन्यन्त इत्यन्वयः। आन्तरशुत्रजयं विना कुतो बाह्यशत्रुजय इति भावेनाऽऽह-

1--1 W omits 2.A,B,T omit कायात् 3.W omits देहात् 4.A,B,T add इति 5--5 W बभञ्ज तताड 6. W 'भञ्जना' 7--7 A omits

जितेति। परे बाह्यशत्रवः, यद्वा, एके मादृशाः षडिन्द्रियजयो नास्ति चेत् बाह्यशत्रुविषया दश दिशः सुष्ठुजिता इति मन्यन्ते, शेषं पूर्ववत्।।११।।

असुरावेशोदधिमग्नत्वात्पुत्रोक्तं तत्त्वं न तस्य श्रोत्रविवरगतमभूत्प्रत्युत अर्चिष्मत्याज्यहोमवदभूदिति भावेनोत्तरमवतारयति **व्यक्तमिति**। अतिमात्रं वक्तव्यांशादधिकं विकत्थसेऽबद्धं भाषसे। विप्लुवा मण्डूक-प्लुतिवदसङ्गताः।।१२।।

यदि त्वदुक्तं युक्तं स्यात्तर्हि तथा प्रतीयेत तस्मादसम्बद्धमिति भावेनाऽऽह - **यस्त्वयेति**।।१३।।

अस्येदं फलितमित्याह-**सोऽहमिति**। गोपयेत रक्षेत[1]।।१४।।

यदिन्द्रियं जयस्वेति वचः न हार्दमसम्भावितत्वात्। तत्राऽऽह-**एवमिति**।।१५।।

स्तम्भभङ्गेन आधेयपातेन सभ्यानां शरीरचूर्णनादिव्यथा सम्भावितेत्याशङ्क्य भगवत्सन्निधानबलाद्व-ज्रनिष्ठुरस्तम्भोत्थनिर्ह्रादोऽभूदित्याह-**तदैवेति**। अस्फुटत् अभिनत्। स्वधिष्ण्योपगतं स्वकीयत्वेनाऽभिमतं सत्यलोकं प्राप्तं स्वलोकाऽप्ययं स्वलोकनाशम्।।१६।।

**[2]अभिक्रमन्पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम्।**
**अन्तस्सभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः।।१७।।**

**सत्यं विधातुं निजभृत्यभाषितं व्याप्तिञ्च भूतेष्वखिलेषु चाऽऽत्मनः।**
**अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम्।।१८।।**

**स सत्त्वमेवं[3] परितोऽपि पश्यन् स्तम्भस्य मध्यादनुनिर्जिहानम्।**
**नाऽयंमृगो नाऽपि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम्।।१९।।**

**मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपं[4] तदलं भयानकम्।**
**प्रतप्तचामीकर चण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम्।।२०।।**

**करालदंष्ट्रं करवालचञ्चलक्षुरान्तजिह्वंभ्रुकुटीमुखोल्बणम्।**
**स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम्।।२१।।**

1 A °त् 2 A,B,G,J,T,W, स विक्र° 3.A,B,G,J,T,W °नं 4 A,B,G,J,M,Ma,W °पस्त°

**दिवं[1] स्पृशत्काय मदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम्।**
**चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम्।।२२।।**

**दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम्।**
**प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन[2] किम्।।२३।।**

**एवं ब्रुवंस्त्वभ्यपतद्गदायुधो[3] नदन्नृसिंहं प्रति दैत्यकुञ्जरः।**
**अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तदा[4]।।२४।।**

**श्रीध० अभिक्रमन्निति**। तत्पदं तस्य ध्वनेराश्रयम् [5-]येन नादेन[-5]।।१७।।

**सत्यमिति**। भगवांस्तदा [6-]स्तम्भं विदार्य[-6] अदृश्यत दृश्यो बभूव । किमर्थम् ? निजभृत्येन प्रह्लादेन यद्भाषितं दृश्यते इति तत्सत्यं विधातुं कर्तु , तथाऽखिलेषु भूतेषु स्वात्मनो[7] व्याप्तिञ्च सत्यां कर्तु स्तम्भेऽदृश्यत। तत्किमर्थम् "भौतिकेषु विकारेषु भूतेष्वथमहत्सु च। भगवानास्ते—"(भाग. 7-6-26) इति तेनैव भृत्येन यद्भाषितं तत्सत्यं कर्तुम्। तथाऽत्यद्भुतं दैत्यघातुकमतिघोरं रूपमुद्वहन् दधत्। तत्किमर्थम्। निजभृत्यैस्सनकादिभिः शापानन्तर मनुतप्तैर्भाषितं यत् त्रिभिर्जन्मभिः शापमोक्षो भवत्विति तत्सत्यं कर्तुम्। तथा अथवा[8] अत्यद्भुतं ब्रह्मसृष्टावदृष्टमश्रुतञ्च रूपमुद्वहन् दधत्। तच्च न मृगाकारं न च मनुष्याकारमुद्वहन् सभायां मध्येऽदृश्यत। तत्किमर्थम्? निजभृत्येन हिरण्यकशिपुना ब्रह्माणं प्रति यद्भाषितं "भूतेभ्य स्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो" (भाग. 7-5-35) इति, तथा "नाऽन्तर्न बहिः" (भाग. 7-3-36) इति, "न नरै र्न मृगैरपि" (भाग. 7-3-36) इति च, ब्रह्मणा च निजभृत्येन यद्भाषितं तत्तथास्त्विति[9] [10-]उभयोर्वाक्यं[-10] सत्यं कर्तुम्। न हि तद्ब्रह्मसृष्टं भूतं न च नरो वा मृगो वा, न च सभागृहस्याऽन्तः, न च प्राङ्गणवद्बहिः। एवं ताभ्यां यद्भाषितं तत्सत्यं कर्तुम्। यच्च हिरण्यकशिपुना भाषितं "नूनमेतद्विरोधेन मृत्युर्मे भविता" (भाग.7-5-47) इति, तथा[11] "अकुतश्चिद्भयोऽमरः" (भाग. 7-5-47) इति च। यच्च नारदेन निजभृत्येन् स्वयं[12] भाषितमिन्द्रं प्रति "अयं महांस्त्वया संस्थां न प्राप्स्यति अनन्तानुचरः" इत्यनेन स्वस्य भक्तपक्षपातित्वञ्च यद्भाषितं तच्च सत्यं कर्तुं तथाऽदृश्यत[13]। चकारान्निजभाषितञ्च। किं तत्? "कौन्तेय!

1.A,B,G,J,H,M,Ma,T,V °वि 2. M,Ma तस्य, W °मेन 3 H,V विमृश्याभ्य ; W स्तुवंस्त्वभ्य 4.H,M,Ma,V °था। 5- -5H,V Omit 6- -6 H,V Omit 7 A,B,J आ° 8 A,B,J, Omit अथवा 9 A,B,J, Omit तत् 10- -10 H,V Omit 11. A,B,J, Omit तथा 12 A,B,J, Omit स्वयं 13.H,V,Omit तथा

प्रतिजानीहि न मे भक्तः प्रणश्यति" (भ.गी. 9-31) इति। यथा "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" (भ.गी. 12-7) इत्यादि। तच्च सत्यं कर्तुमदृश्यतेति द्रष्टव्यम्। अलमतिविस्तरेण।।१८।।

**स** इति। स दैत्य एवं अद्भुतं[1] ध्वनिं श्रुत्वा तदाश्रयं सत्त्वं प्राणिविशेषं सर्वतो विलोकयन्[2] स्तम्भस्य[3] मध्यात् निर्गच्छन् नृमृगेन्द्रयोर्मिश्रं रूपमहो किमेतदिति मीमांसितवानिति शेषः।।१९।।

**मीमांसमानस्येति**। तस्यैवमलं भयानकं तन्नृसिंहरूपं मीमांसमानस्याऽग्रतो नृसिंहरूपो हरिः समुत्थितः। भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति [4-]प्रतप्तस्येत्यादिना विद्रावितदैत्यदानवमित्यन्तेन[-4]। प्रतप्तं चामीकरं [5-]सुवर्णं[-5] तद्वत्पिङ्गलानि चण्डानि[6] लोचनानि यस्मिन्। सटाजटाः केसराः कण्ठरोमाणि स्फुरद्भिः सटाकेसरैः जृम्भितं साटोपमाननं यस्मिन्।।२०।।

**करालेति**। करालास्तुङ्गा दंष्ट्रा यस्मिन्। करवालः खड्गः तद्वच्चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिन्। भ्रुकुटीयुक्तेन मुखेनोल्बणम्। स्तब्धावुन्नतौ शङ्कुवदूर्ध्वौ[7] कर्णौ यस्मिन्। गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासा च यस्मिन्। हनूकपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम्। [8-]कर्णान्तमुखविस्तारमित्यर्थः[-8]।।२१।।

**दिवीति**। दिवि स्पृशन् कायो यस्मिन्, अलुक्समासः। अदीर्घा ह्रस्वा पीवरा च स्थूला ग्रीवा यस्मिन्, उरु विशालं वक्षः स्थलं यस्मिंस्तच्चतच्च अल्पं मध्यमुदरं यस्मिन्। चन्द्रांशुवद्गौरैः स्तनूरुहैर्लोमभिश्छुरितं व्याप्तम्। विष्वञ्च सर्वतः प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन्। नखान्येवाऽऽयुधानि यस्मिन्।।२२।।

**दुरासदमिति**। दुरासदं प्राप्तुमशक्यम्। सर्वाणि च निजानि चक्रादीनीतराणि वज्रादीनि त एवाऽऽयुध प्रवेकाः शस्त्रोत्तमाः तैर्विद्राविता दैत्यदानवा येन तद्रूपं मीमांसमानस्य तस्याग्रतः[9] समुत्थित[10] इति पूर्वेणैवाऽन्वयः। तदाविर्भावप्रयोजनविमर्शपूर्वकं तेन सह दैत्यस्य युद्धमाह सप्तभिः। प्रायेण महामायाविना[11] हरिणा मेऽयमेवम्भूतो वधो मृत्युहेतुः स्मृतश्चिन्तितः, तथाऽप्यनेनसमुद्यतेन किम् न[12] किञ्चित्स्यादित्येवं ब्रुवन्नभ्यपतदित्यन्वयः।।२३।।

**एवमिति**। तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितस्सन्नलक्षितोऽदृष्टोऽभूत्।।२४।।

**वीर०** [13-]ततः किं जातम्[-13] ? तदाह–**स विक्रमन्निति**। ओजसा बलेन, पुत्रवधेप्सुः पुत्रवधं कर्तुमिच्छुस्तदर्थं

---

1 H.V. Omit अद्भुतं 2 H.V, अवलो 3 A.B.J °म्भम 4- -4 H.V त्रिभिः प्रतप्तेति। 5- -5 H.V स्वर्णमिव 6. A Omits चण्डानि 7 A.B.J °कु 8- -8 H.V. Omit 9 A.B.J. Omit तस्य 10 H.V समवस्थितः 11 A.B.J °यिना 12.H.V Omit न किञ्चित्। 13- -13 W Omits

विक्रमन् पराक्रमं कुर्वन् सदैत्येन्द्रो यं निर्ह्लादं[1] ध्वनिम् अपूर्वं कदाचिदपि न श्रुतम्, अत एवाद्भुतमाश्चर्यजनकं निशम्य श्रुत्वा[2] तस्य निनादस्य पदमाश्रयमन्तस्सभायां सभामध्ये न ददर्श। येन निनादेन सुरारियूथपाः दानवश्रेष्ठाः वितत्रसुर्विशेषेण[3] तत्रसुः [4-]त्रासं प्रापुरित्यर्थः[-4]।।१७।।

तदा भगवान्निजभृत्यस्य प्रह्लादादेर्भाषितं कृत्स्नजगदन्तरात्मत्वादिभाषणं सर्वेषु चराचरात्मकेषु भूतेषु आत्मनः स्वस्य व्याप्तिश्च सत्यं यथा भवति तथा कर्तुमत्यद्भुतं रूपं उद्वहन् बिभ्रत् सभायां यस्तम्भस्तस्मिन्नदृश्यत तद्दृष्टो बभूव। कथम्भूतं रूपम्? न मृगं नाऽपि मानुषं रूपम्, अपि तु उभयमिश्रमित्यर्थः। निजभृत्यभाषितमित्यत्र बहुवचनान्तेन निजभृत्यशब्देन समासः। तदयमर्थः-यत्तावत्प्रह्लादस्य निजभृत्यस्य भाषितम्। "भौतिकेषु विकारेषु भूतेषु च महत्सु च। भगवानाऽस्ते" (भाग. 7-6-20) इति तत्सत्यं कर्तुम्, तथाऽत्यद्भुतदैत्यघातकर्मातिघोरं रूपमुद्वहन्निति, तथा निजभृत्यैस्सनकादिभिर्यद्भाषितं त्रिभिर्जन्मभिः शापमोक्षो भवत्विति तत्सत्यं कर्तुम्, तथा ब्रह्मसृष्टावदृष्टमश्रुतञ्चाऽद्भुतरूपमुद्वहन् सभायां मध्येऽदृश्यत। तत्किमर्थम्? निजभृत्येन हिरण्यकशिपुना ब्रह्माणं प्रति यद्भाषितम् - "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभून्मम प्रभो!" (भाग. 7-5-35) इति, तथा, नान्तर्बहिर्रात, न नरैरिति न मृगैरिति च, ब्रह्मणा निजभृत्येन यद्भाषितं तथाऽस्त्विति तत्सर्वं सत्यं कर्तुं, न च तद्ब्रह्मसृष्टं रूपं,न च नरो न मृगो वा, न च सभागृहस्याऽन्तः, न च प्राङ्गणवद्बहिः, एवं ताभ्यां भाषितं सत्यं कर्तुम् यच्च हिरण्यकशिपुना भाषितं "नूनमेतद्विरोधेन मृत्यु र्मे भविता" (भाग. 7-5-47) इति। तथा "अकुतश्चिद्भयोऽमरः" (भाग.7-5-47) इति यच्च नारदेन स्वभृत्येनेन्द्रंप्रति भाषितम् "अयं महान् संस्थां न प्राप्स्यते" इति। अनन्तानुचर इत्यनेन स्वभक्तपक्षपातित्वं च यद्भाषितं तच्च सत्यं कर्तुमदृश्यत। चकारान्निजभाषितञ्च यत् "कौन्तेय! प्रतिजनीहि न मे भक्तः प्रणश्यति" (भ.गी.9-31) "तेषामहं समुद्धर्ता" (भ.गी. 12-7) इति। तच्च सत्यं कर्तुमदृश्यतेति।।१८।।

स दैत्येन्द्र एवं ध्वनिं श्रुत्वा तदा सत्त्वं प्राणिविशेषं सर्वतो विलोकयन् स्तम्भस्य मध्यान्निर्गच्छन्तं नाऽयं मृगो नाऽपि नरः, किन्तु नरमृगेन्द्रयोरुभयोरपि रूपम्,अहो किमेतदिति, मीमांसितवान् इति शेषः।।१९।।

तस्यैवमलं भयानकं तन्नृसिंहरूपं मीमांसमानस्य दैत्येन्द्रस्याऽग्रतः स नृसिंहरूपो हरिः समुत्थितः। भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति त्रिभिः–प्रतप्तेति। प्रतप्तं चामीकरं स्वर्णं तद्वत्पिशङ्गे चण्डे उग्रे लोचने यस्मिन्, स्फुरन्त्यः सटाः जटाः केसराः स्कन्धलोमानि च तैर्जृम्भितं साटोपमाननं मुखं यस्मिन्।।२०।।

---

1. W निनदं 2. W Omits श्रुत्वा 3. W Omits वितत्रसुः 4- -4 W Omits

करालाः उग्रा दंष्ट्रा यस्मिन् करवालः खड्गः तद्वच्चञ्चला क्षुरान्तवत्तीक्ष्णा च जिह्वा यस्मिन्, भ्रुकुटीयुक्तेन मुखेनोल्बणं स्तब्धावुदञ्चितावूर्ध्वौ कर्णौ यस्मिन्, गिरिकन्दरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन्। हनू कपोलप्रान्तौ तयोर्भेदेन विदारणेन भीषणम्।।२१।।

दिवं[1] स्पृशन् कायो यस्मिन्। अलुगार्षः[2]। अदीर्घा ह्रस्वा पीवरा स्थूला च ग्रीवा, उरु विशालं वक्षःस्थलञ्च यस्मिन्, अल्पं मध्यमम् उदरं[3] यस्मिन्, चन्द्रांशुवत् गौरैस्तनूरुहैर्लोमभिः छुरितं व्याप्तं, विष्वञ्च सर्वतः प्रसृताः भुजा स्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन्। भुजा एवाऽनीकं सेना तच्छतं यस्मिन्निति वा। स्वेनाऽनीकेन मर्दितमिति प्रयोगात्। नखा एव आयुधानि यस्मिन्।।२२।।

दुरासदं प्राप्तुमशक्यं सर्वाणि निजानि चक्रादीनि इतराणि च वज्रादीनि तान्येव[4] आयुधप्रवेकाः शस्त्रश्रेष्ठानि[5] तैर्विद्राविता दैत्या दानवाश्च येन। तद्रूपं मीमांसमानस्याऽग्रतः, समुत्थितमिति पूर्वेणान्वयः। तथाऽऽविर्भावे प्रयोजनविमर्शपूर्वकं तेन सह दैत्यस्य युद्धमाह सप्तभिः-प्रायेणेति। प्रायेण महामायाविना हरिणा मे मम अय मेवम्भूतो वधः वधोपायः स्मृतश्चिन्तितः, तथाऽप्यनेन समुद्यमेन किं, न किञ्चित्स्यादिति।।२३।।

एवं ब्रुवन्, गदैव आयुधं यस्य सः, दैत्य एव कुञ्जरो गजो नदन् गर्जन्[6] नृसिंहं प्रत्यभ्यपतत् अभिमुख मागतवान्। तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितस्सन् अलक्षितोऽदृष्टोऽभूद्यथ - पतितः पतङ्गमः शलभ स्तद्वत्।।२४।।

**विज॰** तदा हिरण्यकशिपुः किं कृतवानिति तदवस्थामाह **अभिक्रमन्निति**। पुत्रमभिक्रमन् पदविक्षेपं कुर्वन् तस्य निर्ह्रादस्य पदं विषयं कर्तृभूतं, न ददर्शेत्यन्वयः। येन नादेन अनेन हिरण्यकशिपोर्हृदयसारातिशयो दर्शित इति ज्ञायते।।१७।।

आकाशगुणविशेषस्य शब्दस्य चेतनाश्रयत्वेन दर्शनात् किमिदमिति मीमांसमानेषु सत्सु तदाश्रयोऽप्यदर्शि इत्याऽऽह–**सत्यं विधातुमिति**। रूपं विशिनष्टि न मृगमिति "नाभावान्यविरोधिषु" इति वचनात्। न मृगं केवलं मृगस्य विद्यमानं न भवति, न मानुषं मानुषस्य विद्यमानं न किन्तु तयोः समाहारलक्षणम्।।१८।।

---

1. A,B,T दिवि 2. A,B,T अलुक्समासः 3 W Omits उदरं 4. A,B,T ते एव 5. A,B,T स्तोमाः 6. W Omits गर्जन्

एवंविधं सत्त्वं प्राणविशिष्टंरूपमुद्वहं स्तस्याग्रतोऽग्रे समुत्थितः अदृश्यतेत्यन्वयः। किं विशिष्टस्य स्तम्भस्य मध्यान्निर्जिहानमुत्तिष्ठमानमेतन्नृमृगेन्द्ररूपं, किमिति? मीमांसमानस्य विचारं कुर्वतो हिरण्यकशिपोः तद्रूपं विशिनष्टि तदलमित्यादिना। चामीकरं सुवर्णं, सटाकेसरैः कर्णगतरोमविशेषलक्षणान्तर्दलैः जृम्भितं विकसितमाननं यस्य स तथा।।१९,२०।।

करालाः क्रूराः दंष्ट्राः यस्य स तथा करवालवत् चन्द्रहासवत् चञ्चलं क्षुरान्तः क्षुरधारा तद्वत्स्थिता जिह्वा यस्य तत्तथा, भ्रुकुट्या मुखेन पूर्वभागेन उल्बणं क्रूरं स्तब्धौ दृढौ ऊर्ध्वीकृतौ च कर्णौ यस्य स तथा, तद्गिरि कन्दरवत् अद्भुतं व्यात्तास्यं नासापुटञ्च यस्य तत्तथा तत्, हनुभेदेन विदीर्णकपोलेन भीषणं भयजनकम्।।२१।।

ग्रीवाचोरू च वक्षःस्थलञ्च तानि तथा अदीर्घाणि पीवराणि ग्रीवोरुवक्षःस्थलानि यस्य स तथा तत्। "चन्द्रो हेम्नि हिमांशौ ना चन्द्रार्करोचिषेऽपि च" इत्यभिधानात्। चन्द्रांशुवर्णवद्गौरैररुणैस्तनूरुहैः छुरितं व्याप्तम्। "पीतोऽरुणे सिते गौरे" (अम.को. 3-344) इत्यभिधानम्। विष्वक्व्याप्तैः भुजानीतशतैर्युक्तं बहुत्वापेक्षया-ऽनीकेत्युक्तम्।।२२।।

"निजमात्मीयनित्ययोः" (वैज.को. 6-4-9) इत्यमरः। निजान्यात्मीयानि नखापेक्षयेतराणि चक्रादीनि यानि तैरायुधप्रवेकैरायुधमुख्यैर्विद्राविता दैत्यदानवा येन तत्तथोक्तं तत्। यद्वा, निजं सहजं नखलक्षणमायुधम् इतराणि पृथक्स्थितानि चक्रादीनीति मे औरसारिणा निसर्गशत्रुणा हरिणा अनेन रूपेण प्रायेण ममाऽयं वधः स्मृतो निरूपितः किं स्मृतो वधोऽयं किमिति वा। कीदृशस्य मे? पुत्रवधे समुद्यतस्य पुत्रहन्तुर्यो वधः शास्त्रेषु स्मृतो विहितः सोऽयमद्य प्राप्तः किञ्चेति।।२३।।

एवं विमृश्य वधान्निवृत्तः किम्, नेत्याह-**एवमिति**। कमभ्यपत दित्यत उक्तं नृसिंहं प्रतीति। दैत्यकुञ्जरो दैत्येन्द्रः। निदर्शनमाह-अलक्षित इति। साहसिकः पतङ्गमः शलभः।।२४।।

**न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा यो नु पुराऽपिबत्तमः।**
**ततोऽभिपत्या[1]भ्यह[2]नन्महासुरो रु[3]षा नृसिंहं गदयोरुवेगया।।२५।।**

---

1 A,B,G,J,M,Ma,T. °द्या° 2. H,V पतन्म° 3 H,V. मृषा

**तं विक्रमन्तं सगदं गधाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत्।**
**स तस्य हस्तोत्[1]कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः।।२६।।**

**असाध्वमन्यन्त हतौकसो[2]ऽमरा घनच्छदा भारतसर्वधिष्ण्यपाः।**
***तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृह[3]रिं महासु[-3]रः।**
**पुनस्तमासज्जतखड्गचर्मणी प्रगृह्यवेगेन [4]जितश्रमो मृधे।।२७।।**

**तं श्येनवेगं शतचन्द्रवर्त्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः।**
**कृत्वाऽट्टहासं खर[5]मुत्स्वनोल्ब[6]णं निमीलिताक्षं जगृहे महाजवः।।२८।।**

**विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम्।**
**द्वार्यू[7]र आपत्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम्।।२९।।**

**संरम्भदुष्प्रे[8]क्ष्य करालोचनो व्यात्ताननान्तं विलिहन्स्वजिह्वया।**
**असृग्लवाक्तारुणकेसराननो यथान्त्रमाली द्विपहत्यया हरिः।।३०।।**

**नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानु[9]चरानुदायुधान्।**
**अहन् समन्तान्नखशस्त्रपा[10]णिभिर्दोर्दण्डयू[11]थोऽनुपथान् सहस्रशः।।३१।।**

**सटावधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिवि[12]मुष्टरोचिषः।**
**अम्भोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा [13]विचुक्रुशुः।।३२।।**

**श्रीध० नेति।** सत्त्वधामनि सत्त्वप्रकाशे हरौ पतितस्य तमोमयस्याऽदर्शनं तद्विचित्रं न भवति। तत्र हेतुः यो हरिः पुरासृष्ट्यादौ प्रलयकालीनं तमो नु अहो अपिबत्, तस्मिन्।।२५।।

**तमिति।** विक्रमन्तं ततस्ततः प्रहरन्तम्। हस्तादुत्कलितो निस्सृतः।।२६।।

**असाध्विति।** तदा अमरा देवाः [14]सर्वे धिष्ण्यपा [15]लोकपालाश्च[-15] असाध्वमन्यन्त। हृतान्योकांसि स्थानानि

---

1 W द्र 2 H,V °मुना *This half verse is not found in B edition 3- -3 H,V, °रेर्महामनाः 4.H,M,Ma,V ग° 5 W निस्स्वनो°
6 W °णो 7 H,V, °रुमापा°; M,Ma रवापा° 8 A,B,G,H,J,M,Ma T,V, °क्ष्य 9 W °न्वरा° 10.A,B,G,J,T, °ष्णि 11 H,M,Ma,थाऽ°
12 H,V °मृ°, M,Ma °न° 13 H,V, जहुर्मुदम्; M,Ma जहुर्दिशः 14 H,V Omit सर्वे 15- -15 A,B,J Omit

येषां ते, तद्भिया घनच्छदा मेघान्तरितास्सन्तः यस्य हस्तात् स्वयं मुक्तस्तं नृहरिं स्ववीर्याच्छङ्कितं मन्यमानः खड्गचर्मणी प्रगृह्य पुनस्तमासज्जत अभ्यपद्यतेत्यन्वयः।।२७।।

**तमिति।** श्येनस्येव वेगो यस्य तम्। शतचन्द्रवर्त्मभिः खड्गचर्ममार्गैराच्छिद्रं यथा भर्वात। एव मुपर्यधश्चरन्तम्। अट्टहासमेवाऽऽह-खरं तीव्रमुत्स्वनेन महाशब्देन उल्बणं भयङ्करम्। तद्भयेन हरेस्तेजसा च निमीलिते अक्षिणी यस्य।।२८।।

**विष्वगिति।** ग्रहणे दृष्टान्तः व्यालो यथा आखुं मूषकं, विदारणे[1] दृष्टान्तः-अहिं गरुड इर्वात। विष्वक् सर्वतः स्फुरन्तं निस्सरन्तम्। ग्रहणेनाऽऽतुरं विवशम्। इन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन न[2] क्षता त्वगपि यस्य। द्वारि सभायां नाऽन्तर्न बहिः ऊरं[3] ऊरौ निपात्य, नभूमौ न चाऽम्बरे, नखैर्न तु व्यसुभिरसुमद्भिर्वा। एवं दिवानक्तपरिहाराय सन्ध्यायामिति द्रष्टव्यम्।।२९।।

दैत्यवधमुक्त्वा तद्भृत्यवधमाहद्वाभ्यां **संरम्भेति।** संरम्भेण दुष्प्रेक्ष्याणि करालानि लोचनानि यस्य। असृजो रक्तस्य लवैर्बिन्दुभिः अक्तास्सिक्ताः अत एवाऽरुणाः केसरा आननञ्च यस्य सः। क इव? द्विपहत्यया गजवधेन हरिः सिंहो यथा एवम्भूतस्यानुचरान्, अहन्नित्युत्तरेणाऽन्वयः। [4-]आन्त्राणां माला कण्ठे विद्यते यस्य[-4]।।३०।।

**नखेति।** नखाङ्कुरैरुत्पाटितं हृत्सरोरुहं यस्य तम्। दोर्दण्डानां यूथानि समूहा[5] यस्य सः। तं दैत्येन्द्रम्[6]। अनु पन्था येषां तान्। अन्यानपि तत्पक्षपातिन इत्यर्थः।।३१।।

दैत्यवधव्यग्रस्य नृहरेराटोपमाह द्वाभ्यां **सटेति।** सटाभिरवधूताः [7-]प्रकम्पिता जलदा मेघाः[-7] परापतन् व्यशीर्यन्त। [8-]अनेन ये मेघान्तरिता देवास्ते स्पष्टं पश्यन्त्वित्याज्ञां दत्तवानित्यर्थः[-8]। यस्य[9] दृष्ट्या विमुष्टं रोचिर्येषां ग्रहाणां[10] ते तिरस्कृतप्रभाः, अभवन्निति शेषः। दिग्गिभा दिग्गजाः।।३२।।

**वीर॰** सत्त्वधामनि शुद्धसत्त्वाश्रये हरौ पतितस्य तमोमयस्य दैत्यस्याऽदर्शनं यत् तद्विचित्रं न भर्वात। तत्र हेतुः-यो हरिः पुरा सृष्ट्यादौ प्रलयकालिकं तमः स्वतेजसा अपिबत्। ततो महासुरोऽभिपत्य अभिमुखमागत्य रुषा क्रोधेन उरुवेगया भ्राम्यमाणया गदया नृसिंहमभ्यहनत्, ताडितुमुद्युक्त इत्यर्थः, सगदमग्रहीदित्युत्तरस्वारस्यात्[11]।।२५।।

---

1. H,V,Omit विदारणे 2.H,Vअक्षता 3.A,B,J ऊरं 4- -4 H,V, Omit 5 H,V, Omit समूहाः 6. H,V, Omit दैत्येन्द्रम् 7- -7 H.V. Omit 8- -8 H,V, Omit 9. H,V, तस्य 10. H,V,Omit ग्रहाणां 11. A,B,T add इति भावः

विक्रमन्तं कथञ्चित्प्रहर्तुमुद्यतवन्तं तं दैत्येन्द्रं गदाधरो नृसिंहः सगदमग्रहीत्। यथा तार्क्ष्यसुतो गरुत्मान् महासर्पं तद्वदित्यर्थः[1]। स गृहीतोऽसुरस्तदा विक्रीडतस्तस्य नृसिंहस्य हस्तादुत्कलितो विसृष्टो यद्वद्यथा विक्रीडतो गरुत्मतोऽहिर्गलितो भवति तद्वत्। भगवतस्तत्क्रीडनं तद्विसर्जनरूपमजानन्तो लोकपालाः सर्वे इन्द्रादयः सुराः हृतं दैत्येन्द्रापहृतं ओकः स्थानं येषां ते, अत एव तद्भयेन घनच्छदा मेघेषु छन्ना वसन्तः असाध्वमन्यन्त। अहो भगवतोऽप्ययं बलीयान् अनेनैव तस्य किं स्यात् इत्येवममन्यन्तेत्यर्थः। यस्य हस्तात् स्वयं मुक्तस्सन् नृहरिं स्ववीर्याच्छङ्कितं मन्यमानः अत एव महामना अहमेव बलीयानित्यभिमानयुक्तोऽसुरो मृधे युद्धे जितश्रमः[2] श्रमरहितः खड्गचर्मणी खड्गखेटे प्रगृह्य पुनस्तं नृसिंहं आसज्जत अभ्यपतत्।।२६,२७।।

श्येनस्येव वेगो यस्य शतचन्द्रवर्त्मभिः शतचन्द्रश्चर्म तस्य वर्त्मभिः खड्गचर्ममार्गैरच्छिद्रं यथा भवति, एवमुपर्यधश्चरन्तं दैत्यं हरि रट्टहासं कृत्वा खरेण कठिनेन निस्वनेन ध्वनिना, उल्बणो भीषणो महाजवः[3] महावेगो[4] निमीलिते अट्टहासखरनिस्वनाभ्यां निमीलिते अक्षिणी यस्य तं जग्राह। खरनिस्वनोल्बणमिति द्वितीयान्तपाठे तु खरेण निस्वनेन महाशब्देनोल्बणं भयङ्करमट्टहासं कृत्वा तद्भयेन हरेस्तेजसा च निमीलिताक्षमग्रहीदित्यर्थः।।२८।।

ततः विष्वक् सर्वतः स्फुरन्तं सर्वावयवान् प्रचालयन्तमित्यर्थः[5]। ग्रहणेन हेतुना आतुरं विवशमिन्द्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन अक्षता त्वगपि यस्य तं दैत्यं द्वारि सभायाः नाऽन्तर्बहिः ऊरावङ्के निपात्य न भूमौ न चाम्बरे नखै नं तु व्यसुभिः असुमद्भिर्वा, एवं दिवानक्तं विहाय सन्ध्यायामिति द्रष्टव्यं , लीलया क्रीडया ददार विदारितवान्। तत्र ग्रहणे दृष्टान्तः यथा व्यालस्सर्पः आखुं मूषकमिति। विदारणे दृष्टान्तः महाविषमहिं सर्पं गरुड इवेति।।२९।।

एवं दैत्येन्द्रवधमुक्त्वा तद्दशावस्थितं नृसिंह मनुवर्णयन् दैत्येन्द्रभृत्यवधमाह-**संरम्भेणेति** द्वाभ्याम्।[6] संरम्भेण क्रोधेन दुष्प्रेक्ष्ये दुर्निरीक्ष्ये[7] कराले लोचने यस्य,व्यात्तं विकसितं यदाननं मुखं[8] तत्पर्यन्तं स्वजिह्वया विलिहन् सन् असृजो रक्तस्य लवैर्बिन्दुभिः अक्तास्सिक्ताः, अत एवाऽरुणाः केसरा आननञ्च यस्य सः, आन्त्रमालाधरः, क इव? द्विपहत्यया गजवधेन हरिः सिंहो यथा तद्वत्[9]।।३०।।

एवम्भूतो नखाङ्कुरैः उत्पादितं हृदयसरोजं यस्य तद्दैत्यशरीरं विसृज्य तस्य दैत्येन्द्रस्य अनुचरान् ,

---

1. w omits इत्यर्थः 2 w क्रमः 3 A,B,T omit महाजवः 4 w omits महावेगः 5. w र 6. A,B,T add अहिते 7. w omits दुर्निरीक्ष्ये 8 w वक्त्रं 9 w omits तद्वत्

कथम्भूतान्? वराण्यायुधानि येषां तमनुपन्थाः अनुर्वृत्तिर्येषां तान् दोर्दण्डानां यूथानि यस्य सः, नखा एव शस्त्रपाणयस्तैः समन्तात् सहस्रशो न्यहनत् हतवान्।।३१।।

दैत्येवधे[1] व्यग्रस्य नृहरेराटोपमाह- **सटेति** द्वाभ्याम्। सटाभिरवधूताः प्रकम्पिताः जलदा मेघाः परापतन् व्यशीर्यन्त। तस्य नृहरेर्दृष्ट्या विमुष्टमपहृतं रोचिर्येषां तादृशाः ग्रहाः सूर्यादयोऽभूवन्। श्वासेन हताः पीडिता अम्भोधयः समुद्राः चुक्षुभुः सञ्चेलुः। निर्ह्रादेन भीता दिग्गिभा दिग्गजा मुदं हर्षं जहुः तत्यजुः।।३२।।

**विज॰** द्विसप्तलोकैककारेः केवलं तुच्छीकरणं भगवद्भक्तवैशद्यान्न तत्त्वत इति नेत्याह -**न तदिति**। सत्त्वधार्मनि बलज्ञानसमाहारमूर्तौ पराक्रममूर्तौ[2] वा जगदादौ तमःपानं पुरुषरूपेणाऽनेन जगदावरकं तमःपानरतो हरे रसुर-भस्मीकरणं किमिति दर्शितम्। अथो लोकं विडम्बयतो हरे रसुरेण सह समरप्रकारं वर्णयति तत इति।।२५।।

तस्य गदाशिक्षणलाघवं वक्ति स तस्येति। हस्तोत्कलितः हस्ताद्गलित उत्प्लुतो वा।।२६।।

तस्य हरेर्विडम्बनम् अजानताममराणां निरूपणप्रकारं वक्ति-**असाध्विति**। हतौजसः भ्रष्टावष्टम्भा इव घनेन छदा छादनं येषां ते तथा मेघच्छायायां विलीना इव, लुप्तोपमेयं सर्वधिष्ण्यपाः सर्वनक्षत्रपतयः चन्द्रादयोऽमराः तदसाध्वमन्यन्तेत्यन्वयः। तत्र हेतुः तं मन्यमान इति, नृहरेः हस्तमुक्तोऽसुरः तं नृहरिं निजवीर्ये आत्मपराक्रमे शङ्कितं मन्यमानोऽभूदिति यत्तदिति हरेर्हस्तमुक्तोऽसुरः पराद्रवत् उताऽभ्यपतत्? इति संशयो माभूदित्याह - पुनस्तमिति। असज्जत सक्तोऽभूत् , युद्धाय सन्नद्धोऽभूदित्यर्थः। शतचन्द्रवर्मभिः शतचन्द्रवर्मभ्यां खड्गचर्मणीति प्रकृतत्वात् "भद्रं कर्णेभिः शृणुयाम देवाः" (ऋग्वे.1-89-8) इत्यादिश्रुतेः छान्दसाभिप्रायेणाऽयं प्रयोगः। सम्भाव्यते च परिभ्रमणे शिक्षाप्रकर्षद्रष्टॄणां द्वे एव बहूनीव दृश्यन्त इत्यतो वा बहुवचनं युज्यते, अच्छिद्रं निरवकाशमिति क्रियाविशेषणेनैतदेव सूचयति। असुरवीर्यमाशङ्कमानो हरिः किमकरोदिति तत्राऽऽह हरिरिति।।२७,२८।।

विष्वक् परितः स्फुरन्तं भ्रमन्तमित्यनेनाऽपि शिक्षोत्कर्षं ध्वनयति। हरिः पुनर्ग्रहणेनाऽऽतुरमकरोदिति शेषः। अनेनाऽऽतुरस्वरं लक्ष्यति। तत्र दृष्टान्तमाह–व्याल इति। व्यालः सर्पः, खननशीलत्वादाखुः। ब्रह्मवररक्षणार्थमाह–द्वारीति। द्वारि अधस्तिरश्चीनदारुणि स्थित्वा उरावङ्के उत्तानतयाऽऽपात्य, अत्राऽपि ह्रस्वत्वं छान्दसम्। संरम्भेण द्वेषादात्यन्तिककोपेन दुष्प्रेक्ष्ये कराले लोचने यस्य, व्यात्ताननान्तं विवृतवदनस्याधरोष्ठम् असृग्वसया रुधिरबिन्दुनाक्ते रूषिते अत एवारुणकेसराननं यस्य स तथोक्तः स हरिस्सिंहः।।२९,३०।।

---

1 A,B,T धव्य॰ 2. A ॰मौ वा

न केवलमेनमेव हतवान्, किन्तु तदनुचरानसुरा नित्याह-**नखाङ्कुरेति**। अहन् हतवान् **नखशस्त्रपाणिभिः** नखैः शस्त्रैः पाणिभिश्च। हरेर्दण्डानां यूथानुपथान् निकराकृष्टान्।।३१।।

तदवसरविक्रमं वक्ति-**सटाविधूता इति**। दिगिभा दिग्गजा मदं जहुस्त्यक्तवन्तः।।३२।।

**[1]द्यौस्तत्सटोत्क्षिप्त विमानसङ्कुला प्रोत्सर्पतक्ष्मा च पदातिपीडिता।**
**शैलास्समुत्पेतुरमुष्यरंहसा तत्तेजसा खं ककुभो न रेजिरे।।३३।।**

**ततस्सभायामुपविष्टमुत्तमे नृपासने संभृततेजसं विभुम्।**
**अलक्षित[2]द्वैरथमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन।।३४।।**

**नि[3]शाम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे।**
**प्रहर्षवेगोत्कलितानना [4]मुहुः प्रसूनवर्षैर्ववृषुस्सुरस्त्रियः।।३५।।**

**तदा विमानावलिभिर्नभ[5]स्स्थलं दिदृक्षतां सङ्कुलमास नाकिनाम्।**
**सुरान[6]का दुन्दुभ[7]योऽथ जघ्निरे गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः।।३६।।**

**[8]तत्रोपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः।**
**ऋषयः पितरस्सिद्धा विद्याधरमहोरगाः।।३७।।**

**[9]मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः।**
**यक्षाः किम्पुरुषास्[10]तात वेतालाः [11]सहकिन्नराः।।३८।।**

**[12-]विष्णुपारिषदा[-12]स्सर्वे सुनन्दकुमुदादयः।**
**मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम्।**
**ईडिरे नरशार्दूलं नातिदूरचराः पृथक्।।३९।।**

**ब्रह्मोवाच**

**नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे।**
**विश्वस्य सर्गस्थितिसंयमान्गुणैस्स्वलीलया सन्दधतेऽव्ययात्मने।।४०।।**

---

1. W °च्छिन्न 2.M,Ma तं भैरव 3. A,B,G,J,M,Ma T °श° 4. H,V हरिं 5. A,B,G,J,T °स्त° 6. H,V °कैर्दु 7.M,Ma यो हि 8. H.V तमुप ; M,Ma तदुप 9.w मनुः 10. H.V भूत 11. A,B,G,J,T सिद्ध 12--12 A,B,G,J,M,Ma,T ते विष्णुपार्षदाः।

**श्रीध० द्यौरिति।** तस्य सटाभिरुत्क्षिप्तानि विमानानि तैस्सङ्कुला[1] व्याप्ता सती प्रोत्सर्पत स्वस्थानात्प्रकर्षेणोदसर्पत्[2] चलिता।।३३।।

**तत** इति। स्वभृत्यैश्वर्यमाश्चर्य[3]मिव मत्वा कौतूहलेन[4] तस्याऽऽसने उपविष्टं भयात्कोऽपि न बभाज नाऽसेवत। न लक्षितो द्वैरथः प्रतियोद्धा येन।।३४।।

**निशाम्येति।** लोकत्रयस्य मस्तकज्वरं शिरोव्यथा[5]मिव दुस्सहम्। प्रहर्षस्य वेगेनोत्कलितानि विकसितानि आननानि यसां ताः [6-]सुरस्त्रियः पुष्पवर्षैः[-6] नृहरिं ववृषुः।।३५।।

**तदेति।** नाकिनां विमानावलिभिः [7-]नभस्तलं सङ्कीर्णमासं[-7]। सुराणामानकाः पटहा स्तैर्जाघ्नेरे वादिताः। स्त्रियः अप्सरसो [8-]ननृतुः, गन्धर्वा[-8] जगुः।।३६,३७ ।

**मनव** इति। गन्धर्वाप्सरसश्चारणाश्चेत्यर्थः।।३८।।

**विष्णिवति।** नरशार्दूलं पुरुषोत्तमम्।।३९।।

**नत इति।** *"ब्रह्मादयो नृसिंहस्य शङ्कयाऽऽकुलचेतसः। आरादेवाऽस्तुवन् सप्तदशश्लोकैः पृथक्पृथक्"। अनन्तायाऽनन्तं त्वां[9] प्रसादयितुं नतोऽस्मि। अनन्तत्वे हेतुः दुरन्ता अनन्ताः[10] शक्तयो यस्य। तत्कृतः? विचित्राणि वीर्याणि प्रभावा यस्य तत्किमर्थम्? पवित्राणि [11-]श्रवणमात्रेण[-11] शोधकानि कर्माणि यस्य विचित्रवीर्यत्वमेवाह-
-विश्वस्येति। सन्दधते सम्यक्कुर्वते। एवमप्यव्ययात्मनेऽप्रच्युतस्वरूपाय।।४०।।

**वीर०** [12-]तस्य नृहरेः[-12], सटाभिरुत्क्षिप्तानि विमानानि तैस्सङ्कुला व्याप्ता द्यौः प्रोत्सर्पत इतस्ततश्चलिते वाऽभूत्। नृहरेः पद्भ्यामतीव पीडिता क्ष्मा भूमिरभूत्। अत एव तस्यासह्येन रंहसा वेगेन बलेन वा शैलाः समुत्पेतुः उत्प्लुत्य पतितवन्तः तस्य नृहरेस्तेजसा खं माकाशं ककुभो दिशश्च न रेजिरे।।३३।।

ततोऽहमेव सर्वेश्वर इति लोकस्य प्रदर्शयितुं सभायामुत्तमे सिंहासने उपविष्टं, सम्भृतं सम्पूर्णं तेजो यस्य अलक्षितः न लक्षितो द्वैरथः प्रतियोद्धा येन, प्रचण्डमुग्रं वक्त्रं यस्य तं विभुं नृसिंहं कश्चन कोऽपि न बभाज नाऽसेवत। कोऽपि समीपं गन्तुं नाशक्नोदित्यर्थः।।३४।।

---

1. H,V add व्याकुला 2. H,V Omit चलिता 3. B Omits आश्चर्य 4 H. V. add इव 5. A,B,J °थेव 6- -6 H V Omit 7- -7 H,V Omit 8- -8 H V Omit * श्रीधरीयोऽयं श्लोकः 9 H,V, Omit त्वां 10 H V Omit अनन्ताः 11- -11. H.V.Omit 12- -12 W Omits

लोकत्रयस्य मस्तकज्वरं शिरोव्यथावद्दुस्सहं तमादिदैत्यं हिरण्यकशिपुं हरिणा नृसिंहेन युद्धे हतं निशाम्य[1] दृष्ट्वा प्रहर्षवेगेन उत्कलितानि विकसितान्याननानि यासां ताः सुराणां स्त्रियः पुष्पवर्षैः पुनः पुनः नृहरिं ववृषुः ।।३५।।

तदा दिदृक्षितां द्रष्टुमिच्छतां दर्शनार्थमागतानामित्यर्थः। नाकिनां देवानां विमानपङ्क्तिभिः नभस्स्थलं[2] सङ्कुलं[3] सम्बाधं[4] बभूव। सुराणामानकाः पटहास्तैर्दुन्दुभयो जघ्निरे तडिताः, *गन्धर्वश्रेष्ठाः ननृतुः स्त्रियः अप्सरसो जगुः ।।३६।।

तत्रोपव्रज्य किञ्चित्समीपमागत्य ब्रह्मरुद्रप्रभृतयो देवादयः हे तात! मूर्ध्नि[5] बद्धाञ्जलिपुटानि यैस्ते, आसीन मुपविष्टं तीव्रं दुस्सहं तेजो यस्य तं श्रीनृसिंहं नातिदूरवर्तिनः पृथक् एकैकशः ईडिरे तुष्टुवुः ।।३७-३९।।

तावदपारविविधविचित्रशक्तिवीर्यमकर्मायत्तजगद्व्यापारं जगत्कारणं स्तुवन् नमस्करोति ब्रह्मा- **नतोस्म्यहमिति**। अनन्ताय स्वरूपतस्त्रिविधपरिच्छेदरहिताय दुरन्तशक्तये अपारशक्तये [6-]अचिन्त्यशक्तये[-6] वा शक्तिः स्वेतरसर्वसामर्थ्यनिर्वाहिका "जगत्प्रकृतिभावो मे यस्सा शक्ति[7]रितीरिता" इत्यादिषूक्ता। यद्वा, यदन्यैरशक्तत्वादघटितमिव विभाति, तद्धटनसामर्थ्यरूपा, यतस्त्वमुक्तविधदुरन्तशक्तिः [8-]अनन्तशक्तिः[-8] अत एव मद्वरेण सर्वथा[9]ऽघटितमरणं दैत्यं हतवानसीति भावः। यतस्त्वमनन्तोऽत एवाऽचेतने स्तम्भेऽप्याविर्भूतोऽसी- त्यभिप्रायः। अनन्तपदेन हि सर्वव्यापित्वाद्देशपरिच्छेदराहित्यम्, सर्वकालवर्तित्वात्कालपरिच्छेदराहित्यम्, साक्षात्परम्परया सर्वप्रकारत्वेन सर्ववस्तुसामानाधिकरण्यार्हत्वाद्वस्तुपरिच्छेदराहित्यं विवक्षितम्, येन केनाऽपि प्राशस्त्येन स्वस्मादुत्कृष्टैः कैश्चिद्वस्तुभिरधरीकृतत्वाभावरूपं वा वस्तुपरिच्छेदराहित्यम्-इति त्रिविधपरिच्छेद- राहित्यं विवक्षितम्। नन्वस्त्वेवं स्वरूपं कृत्स्नजगदुदयविभवलयलीलस्य कियदेतद्दैत्यहननमित्यभिप्रयन् तावज्जगत्कारणत्वप्रयुक्तं विकारं निराह-विचित्रवीर्यमिति। वीर्यं नाम सर्वोपादानत्वे सर्वसाधारणे सर्वनियमने विकाररहितत्वम् ; यथोक्तम् -" विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा" इत्यादि। विचित्रशब्देनैवंविधस्य वीर्यस्य अनितरसाधारण्यमुच्यते। पवित्रकर्मणे अकर्मायत्तजगद्व्यापाराय त्वद्व्यापारं शृण्वतां दुरितनिवर्तनक्षमव्या- पारायेति वा। गुणैः सर्वसत्वसर्वशक्तित्वादिभिः जगन्निमित्ततदुपादानत्वोपयुक्तैः स्वनियाम्यसत्त्वादिप्राकृतगुणैर्वा

---

1 A °श° 2. A,B,T °भस्त° 3. W Omits सङ्कुलं 4 A,B,T सम्मर्द *अत्रेवं भवितव्यम् - "गन्धर्वमुख्या जगुः, स्त्रियोऽप्सरसो ननृतुः"। -पाठक्रमादर्थक्रमो बलीयान्। 5. W मूर्धसु 6- -6 W Omits 7 A,B,T °रुदी° 8- -8 W Omits 9. A,B,T °तो

**कृत्स्नस्य विश्वस्य सर्गादीन् स्वलीलयैव, न तु कर्मणा सन्दधते विदधते अव्ययात्मने एवमप्यव्ययः विकाररहितः आत्मा स्वभावो यस्य, स्वभावतोऽपि विश्वस्य[1] विकाररहितायेत्यर्थः। स्वरूपतोऽपि विकारराहित्यस्योक्तत्वात्।।४०।।**

**विज॰** प्रोत्सर्पत प्रोदसर्पत उद्गतेत्यर्थः।।३३।।

स्वभावस्थानं तस्य वक्ति-**तत** इति। सम्भृततेजसं राशीकृततेजसं, अलक्षितं न केनाऽपि दृष्टम्।।३४।।

नन्वयं जयः केनाऽपि न लक्षितः तदङ्कुरव्यक्त्यदर्शनादित्याशङ्क्यपुरुषकोपोपशमनं स्त्रीणामेव सुशकमिति भावेन, सुरस्त्रीपुष्पवर्षप्रकारमाह-निशम्येति। लोकत्रयस्य मस्तकज्वरं शिरोरोगायमाणं प्रहर्षातिरेकेणोत्कलितं विकसितमाननं यासां तास्तथा ताः।।३५।।

सुरस्त्रीवृष्टपुष्पसौरभ्याघ्राणेन किञ्चिच्छान्तकोपत्वादस्माकमप्ययमवसर इति मत्वा नानादेवानां नभसि विमानावलिसाङ्कुल्यप्रकारं वक्ति-**तदेति**। सुराणामानका दुन्दुभयः।।३६।।

चण्डक्षुब्धानां चित्ताह्लादकरी स्तुतिरेवेति भावेन ब्रह्मादीनामुपक्रममाह-**तदुपव्रज्येति**। ये पूर्वमुपगन्तुं तत्रसुः[2] ते ब्रह्मादयस्तं पृथगीडिर इत्यन्वयः।।३७।।

नातिदूरचराः किञ्चित्समीपवर्तिनः।।३८,३९।।

तत्र पृथक् पृथक् मतिलक्षणं स्तुतिप्रकारं ब्रूते, **नतोऽस्मीति** । गुणैस्सत्त्वादिभिः स्वलीलया स्वरूपभूतलीलया अव्ययात्मने नित्यदेहाय।।४०।।

**श्रीरुद्र उवाच**

**कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः।**
**तत्सुतं पाह्युपसृतं[3] भक्तं ते भक्तवत्सल।।४१।।**

**इन्द्र उवाच**

**प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रान्तं[4] हृदयकमलं[5] त्वद्गृहं प्रत्यबोधि।**
**कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां नहि बहुमता नारसिंहाऽपरैः किम् ।।४२।।**

---

1. A Omits विश्वस्य 2. B,M,Ma तत्रास 3. M,Ma °ह्यनु 4. W °न्ता 5. W °म°

**ऋषय ऊचुः**

**त्वं न स्तपः परममात्थ यदात्मतेजो येनेदमादिपुरु[1]षात्मगतं ससर्ज।**

**तद्विप्रलुप्तममुनाऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः।।४३।।**

**पितर ऊचुः**

**श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽ[2]प्यपिबन्तिलाम्बु[-2]।**

**तस्योदरान्नखविदीर्णवपाद्य आर्छत् तस्मै नमो [3]नृहरयेऽखिल[4]धर्मगोप्त्रे।।४४।।**

**सिद्धा ऊचुः**

**यो नो गतिं योगसिद्धामसाधुरहार्षीद्योगतपो बलेन।**

**नानादर्पं तं नखै[5]र्निर्ददार तस्मै तुभ्यं प्रण[6]मामो नृसिंह।।४५।।**

**विद्याधरा ऊचुः**

**विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः।**

**स [7]येन संख्ये पशुवद्धतस्तं[8] [9]मायानृसिंहं प्रणताः स्म नित्यम्।।४६।।**

**नागा ऊचुः**

**येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः।**

**तद्वक्षःपाटनेनाऽऽसां दत्तानन्द नमोऽस्तु ते।।४७।।**

**मनव ऊचुः**

**मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः।**

**भवता खलस्स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान्।।४८।।**

---

1 W °षांत्म 2- -2 M,Ma °र्पितिल्लान् सहाद्भिः 3 M,Ma भगवते 4.M,Ma कर्म 5 H,V °र्विद 6.A,B,G,J,M,Ma,T ताः स्मो 7 H,V एव

8 H,V °स्त्वया 9 M,Maमहा°

**श्रीध॰** रुद्रस्तु तत्कोपकालाभिज्ञो नाऽयं कोपावसर इति तं प्रार्थयते-**कोपेति।** सहस्रयुगान्त स्तव कोपस्य कालः कोपाऽयोग्यश्चाऽयमित्याह। अल्पकोऽत्यल्पः। अतः कोपानिवृत्त्या प्रह्लादं मा हिंसीरित्याह-तत्सुतमिति। यद्वाऽकालेऽप्ययं कापोऽस्य भक्तस्य रक्षणार्थमिति चेत् तर्हीदानीं कोपं त्यक्त्वा इमं पाहीत्यर्थः।।४१।।

**प्रत्यानीता** इति। इन्द्रस्तु नोऽस्माकं हविर्भागादिलाभः पुरुषार्थः, किन्तु तत्परिचर्यैव। भवता पुनरनेन संरम्भेण[1] [2]स्वकार्यमेव साधितं, तस्य च सिद्धत्वादुपसंहर एनं क्रोधमित्याशयेनाऽऽह-हे परम! नोऽस्मान् त्रायता रक्षता भवता स्वीया एव भागा दैत्यात्प्रत्याहृताः; अन्तर्यामिणस्तवैव यज्ञेषु भोक्तृत्वात्। अस्मदीयं हृदयकमलं त्वद्गृहमेवैतावत्पर्यन्तं भयहेतुत्वेन अस्मत्स्मृतिपथे [3]नित्यं स्थितेन दैत्येनाऽऽक्रान्तं व्याप्तं सत् प्रत्यबोधि [4]भयापाकरणेन विकासं नीतम्। ननु तव त्रैलोक्यैश्वर्यसाधनार्थमयमुद्यम इति चेत्तत्राऽऽह-कालग्रस्तमिति। ते त्वाम् हे नारसिंह। नरस्य सिंहस्य चाऽऽकाराभ्यामाविर्भूत! [5-]अपरैः स्वर्गादिभिः किम्[-5]।।४२।।

ऋषयस्तु तपः प्रवर्तनेन अस्माकं महाननुग्रहः कृत इत्याहुः-**त्वमिति।** त्वं नो यदात्थ परमं ध्यानलक्षणं तपः। परमत्वे हेतुः - आत्मनस्तव तेजः प्रभावरूपं तदेवाऽऽहुः येन तपसाऽऽत्मनिलीनमिदं विश्वं ससर्ज सृष्टवा [6]नसि, तदमुना दैत्येन विप्रलुप्तं कुण्ठितं सत्, हे शरण्यपाल! अद्य रक्षार्थं गृहीतेनाऽनेन वपुषा पुनरपि तपः कुरुतेत्य[7]नुज्ञातवानसि तस्मै ते नम इत्युत्तरश्लोकचतुर्थपादस्याऽनुषङ्गः।।४३।।

**श्राद्धानीति।** पितरस्तु श्राद्धोद्धरणेन परमोपकारिणं श्रीनृसिंहं प्रणमन्ति। श्राद्धानि श्रद्धायुक्तानि पिण्डादीनि नोऽस्मभ्यं पुत्रैर्दत्तानि प्रसभं बलाद्यः स्वयमधिकृत्य बुभुजे। किञ्च तीर्थस्नानसमये दत्तं तिलोदकमप्यपिबत्। तानि च तस्योदराद्य आर्छत् आहृतवान्। कथम्भूतात्? नखैर्विदीर्णा वपा यस्य तस्मात्। वपाविदारणस्य तद्गतपिण्डोद्धरणमेव फलमिति भावः।।४४।।

**य** इति। योगसिद्धां गतिमणिमादिसिद्धिम्। नानाऽनेके दर्पा यस्य तम्। तस्मै तुभ्यं तं त्वामुद्दिश्य।।४५।।

**विद्यामिति।** विद्यामन्तर्धानादिलक्षणाम्। अनुराद्धां सम्प्राप्तां संख्ये युद्धे।।४६।।

**येनेति।** रत्नानि फणासु स्थितानि तथा स्त्रीरत्नानि चोत्तमाः स्त्रियः आसां स्त्रीणां दत्त आनन्दो येन तत्सम्बोधनम् [8-]अस्मद्दत्तानन्देति[-8]। पाठान्तरे अस्माकं दत्त आनन्दो येनेति।।४७।।

---

1 H,V add एव 2.H,V तत्का 3.H,V Omit नित्यं 4 H,V तद्भया° 5- -5 H,V Omit 6. H,V °न् भावान् इति शेषः 7 H,V °त्यभ्यनु°

8- -8 H,V Omit

नृंसिहेनावलोकितास्सन्तो मूर्ध्नि बद्धाञ्जलयो मनवः प्रोचुः - **मनव** इति। मनवो वयं धर्मपालकाः परिभूतास्सेतवो वर्णाश्रमधर्ममर्यादा येषां ते। अनुशाधि अनुशिक्षय।।४८।।

**वीर०** यद्ब्रह्मणोऽभिप्रेतं कृत्स्नजगत्सर्गादिकर्तुस्तव कियदेतदिति तदेव विशदयन् वात्सल्ययुक्तं स्तौति रुद्रः - **कोपकाल** इति। तव कोपकालो युगान्तः द्विपरार्धावसानम्, ते[1] कोपकाल इत्यनेन मदन्तर्यामितया मन्मुखेन संहर्ता त्वमेवेत्युक्तं भवति। अयन्तु कोपाविषय इत्याह-अय मल्पकोऽल्पबलो हतोऽतः कोपनिवृत्त्या हे भक्तवत्सल! तव भक्तं तत्सुतं तस्य[2] दैत्येन्द्रस्य सुतं उपसृतं त्वत्समीपमागमिष्यन्तं[3] पाहि संरक्ष[4]।।४१।।

इन्द्रस्तु स्वदुःखमावेदयन् संरक्षकं सर्वान्तरात्मानं समस्तपुरुषार्थदं स्तौति-**प्रत्यानीता** इति। हे परम! सर्वोत्कृष्ट! नोऽस्मान् त्रायता त्रात्रा भवता दैत्येनाऽऽक्रान्ताः प्रसह्य गृहीताः स्वभागाः स्वकीया यज्ञीयभागा अस्मदादिमुखेन त्वमेव[5] भोक्तेत्यभिप्रायेण स्वशब्दः प्रयुक्तः, प्रत्याहताः। दैत्याक्रान्तमिति द्वितीयान्तपाठे तु दैत्यभयाकुलमिति हृदयविशेषणम्। एवं दैत्यवधेन स्वभागप्रत्यानयनेन च त्वद्गृहं त्वदावासभूतमत एवाऽमलमस्माकं हृदयं प्रत्यबोधि, भयेन पूर्वं मुकुलितमिदानीं तदपाकरणेन विकासितं भवतेत्यनुषङ्गः[6]। त्वां सेवमानानामस्माकं त्वत्तो लौकिकपुरुषार्थ प्राप्तिरित्येतत्कियदित्याह-हे नाथ! स्वामिन्! ते शुश्रूषतां परिचर्यापराणामिदं लौकिकं पुरुषार्थ जातं कालेन नङ्क्ष्यमाणं कियत्, यत्किञ्चिदेतदित्यर्थः। तदेवाऽऽह तेषां त्वां परिचरतां मुक्तिरपि न बहुमता त्वत्सेवासुखासक्तानां मुक्तिरपि न परमं प्रयोजनम्। अतः हे नारसिंह! अपरैरर्वाचीनैः पुरुषार्थैः किम्? न किमपि, तेषामतितुच्छमर्वाचीनपुरुषार्थजातमिति भावः।।४२।।

ऋषयस्तु सर्वगुरुं साधुपरित्रातारं दुष्कृद्विनाशकञ्च तुष्टुवुः **त्वमिति**। परममुत्कृष्टं तपस्त्वद्ध्यानरूपं नोऽस्माकं त्वमात्थ उपदिष्टवानसि। तपो विशिंषन्ति, यत्तप आत्मन स्तव तेजः प्रकाशकम् अस्माकं त्वत्स्वरूपावेदकमित्यर्थः। येन च तपसा आदिपुरुषश्चतुर्मुखः इदं जगदात्मगतं परमात्मना त्वया गतमन्तरात्मतया व्याप्तं ससर्ज। आदिपुरुषात्मगत मित्यत्र "गूढोत्मा न प्रकाशते" इतिवत् सन्धिरार्षः। आदिपुरुषात्मेति पाठे आदिपुरुषेति लुप्त-प्रथमान्तं पृथुक्पदम्। यद्वा, हे आदिपुरुष! इति सम्बोधनं, ससर्ज, ब्रह्मेति शेषः। तत् तपोऽमुना दैत्यन्द्रेण विप्रलुप्तं विशेषेण प्रलोपित मासित्। तदेवाधुना हे शरण्य! शरणमर्हतीति शरण्यः तथाभूत! हे पालक!

1 A,B,T Omit ते 2 W omits तस्य 3 A,B,T तत्सं" 2 W omits संरक्ष 5 A B T add यज्ञ 6 A,B,T "तीं"

रक्षागृहीतवपुषा साधुपरित्राणार्थं गृहीतेन [1]नरसिंहशरीरेण पुनरन्वमंस्थाः अनुज्ञापितवान्। [2-]वः शत्रुर्मया विनाशितोऽत[-2]ः [3]पुनर्निर्भयं तपः कुरुतेति नोऽनुज्ञापित[4]वानसीत्यर्थः।।४३।।

पितरस्तु स्वदुःखमावेदयन्तोऽखिलधर्मगोप्तारं हितकारिणं स्तुवन्तो नमस्कुर्वन्ति-**श्राद्धानीति**। अस्माकं तनूजैः पुत्रादिभिः अस्मदुद्देशेन दत्तानि श्राद्धानि श्राद्धसम्बन्धानि पिण्डानि यो दैत्यः प्रसभं बलात्स्वयमधिबुभुजेऽनुभूतवान्। तथा तीर्थसमये पुण्यतीर्थस्नानसमये अस्मत्तनूजैर्यद्दत्तं तिलोदकं तदप्यपिबत् तस्य दैत्यस्य उदरात् श्राद्धादीनि तिलाम्बु च यः पुनराच्छेत् आहृत्यास्माकं दत्तवान्। कथम्भूता[5]दुदरात्? नखैर्विदारिता वपा यस्य तस्य। तस्मात् वपाविदारणस्य तद्गतपिण्डोद्धरणमेव फलमिति भावः। तस्मै समस्तधर्माणां गोप्त्रे रक्षित्रे नृहरये [6]ते नमः। [7-]तिलाम्ब्वसभ्य इत्यपि पाठः। तदाऽसभ्य इति दैत्येन्द्रविशेषणम्। तिलाम्बु तिलोदकमसभ्यः सभानर्हो यो दैत्येन्द्रोऽधिबुभुजे पीतवानित्यर्थः[-7]।।४४।।

सिद्धा अपि [8]स्वकीययोगगत्यपहारकदैत्येन्द्रवधद्वारा स्वयोगगत्याधायकं परमसुहृदं वर्णयन्तो नेमुः -**य** इति। योऽसाधुर्दुरात्मा दैत्यो नोऽस्माकं योगसिद्धां गतिं [9-]भक्तियोगप्राप्तां ग[-9]तिमणिमादिरूपां स्वयो[10]गं तपोबलेन अहार्षीदपहृतवान्, तं नानादर्पं नाना अनेकाः दर्पा यस्य तं नखैर्यो [11]वि ददार विदारितवान्, तस्मै तुभ्यं हे नृसिंह! वयं [12]प्रणमामः।।४५।।

विद्याधरा अपि तेनाऽपहृतविद्याप्रत्यादानेन हितकारिणं स्तुवन्तो नमन्ति-**विद्यामिति**। धारण्या मनोधारणयाऽनुराद्धां संसिद्धां विद्यामस्मत्सम्बन्धिनीमन्तर्धानादि लक्षणां योऽज्ञो मूर्खो बलवीर्याभ्यां गर्वितो [13]दैत्येन्द्रो [14]न्यषेधन्निषेधितवान्। बलं देहबलं , वीर्यं पराभिभवसामर्थ्यं स दैत्यो येन संख्ये युद्धे पशुवद्धतस्तं त्वां मायानृसिंहमात्मीयसङ्कल्पोपात्तनृसिंहतनुं नित्यं प्रणताः स्मः। कर्तरि क्तः। नमस्कृतवन्तः स्मेत्यर्थः।।४६।।

नागास्त्वेवं तदपहृतरत्नप्रदानेनानन्दकरं स्तुवन्तो नेमुः—**येनेति**। येन पापात्मना नोऽस्माकं रत्नानि स्त्रीरत्नानि नागकन्यकारूपाणि, रत्नानि चापहृतानि , तस्य वक्षोविदारणेनाऽऽसां स्त्रीणां दत्त आनन्दो येन तस्य सम्बोधनं, ते तुभ्यं नमोऽस्तु।।४७।।

---

1. W नृसिंहवपुषा 2- -2 W omits 3. W omits निर्भयं 4. W °वानित्यर्थः 5. W omits उदरात् 6. W omits ते 7- -7 W omits 8. A,B,T स्वयो 9- -9 W omits 10. A,B,T गेन त 11. W omits विददार 12. A,B,T प्रणताः स्मो नमस्कुर्मः 13. W omits दैत्येन्द्रः 14. W omits निषेधितवान्

तवाज्ञापरिपालनरूपकैङ्कर्यविरोधिनिरसनेन कैङ्कर्याधापनरूपहितकारिणं स्तुवन्त स्तदेव प्रार्थयन्ते मनवः – **मनव** इति । वयं तव निदेशकारिणः कैङ्कर्यकारिणा मनव इति प्रसिद्धाः ते वयमेतावन्तं कालं येन दितिजेन दैत्येन[1] परिभूताः परिहापिताः सेतवः त्वत्कृताः वर्णाश्रममर्यादा येषां तादृशा बभूविम। अधुना स खलो दितिजस्त्वया उपसंहृतो हतः। हे प्रभो! निवृत्तकैङ्कर्यविरोधिनो वयं किं कैङ्कर्यं ते तुभ्यं करवाम, तथा किङ्करान्नोऽस्मान् अनुशाधि विविच्याज्ञापयेत्यर्थः[2]।।४८।।

**विज॰** येनाऽयमसुरो हतः स कोपकालो युगान्तो युगावसानोचितो नेदानीमत्यल्पासुरहनने। तस्मात्कोपं संहृत्याऽनुसृतं शरणं प्राप्तं तस्य सुतं प्रह्लादं रक्षेत्यन्वयः।।४१।।

हे परम! नस्त्रायता रक्षता भवता दैत्यहता यज्ञेषु स्वभागा अस्मद्योग्यहविर्भागाः प्रत्यानीता इत्यन्वयः। तपोबलेन दैत्येनाक्रान्तं निमीलितञ्च तव गृहं तव वासयोग्य हृदयकमलं प्रत्यबोधि विकसितंमस्माकम्, भवतेति शेषः। विरक्तिभक्तिभ्यामेव वशीकर्तुं यग्यो नान्येनेत्याशयेनाऽऽह–कालेति। नाथ! यदिदं स्वर्गादिस्थानं कालग्रस्तं कियत्सुखजनकम्? न किमपीति मत्वा भजन्ति[3] ते शुश्रूषतां त्वां सेवमानानां तेषां करगतामुक्तिरपि बहुमता न। हि यस्मात् तस्मात् हे नारसिंह! तेषां भक्तानां अपरैर्धर्मादिभिः प्राप्तैः किम्? इत्यन्वयः।।४२।।

हे आदिपुरुष! त्वं यदात्मतेज आत्मनो हरेर्ज्ञानलक्षणं तेजस्तपो नोऽस्माकं परमश्रेयसे आत्थ, येन तपसा आलोचनारूपेण महिम्नेदं समस्तमात्मगतं व्याप्तं हे शरण्यपाल! अमुना दैत्येन विप्रलुप्तं नष्टं तत्तपो जगद्रक्षार्थं गृहीतवपुषा नरसिंहात्मना पुनरप्यस्मान्प्रति कटाक्षमन्वमंस्थाः, उद्धरिष्यामीति शेषः। तप आलोचने इति धातोः "यस्य ज्ञानमयं तपः" (मुण्ड.उ. 1-1-9) इति श्रुतेश्च भगवज्ज्ञानसादृश्यादस्यात्मतेज इत्यभेदवचनं युज्यते। विप्रलोपस्तिरोधानं न स्वरूपनाशः।।४३।।

यो भवान् नखविदीर्यमाणवपान्नखविदारितान्त्रात् तस्य दैत्यस्योदरादार्छत्। ऋच्छ गतौ इति धातोः। श्राद्धान्यस्माकमगमयदित्यन्वयः।।४४।।

योगिसिद्धां अणिमाद्यष्टैश्वर्यलक्षणां गतिं योगः पवनविजयः तपः कायक्लेशलक्षणं, तयोर्बलेन नानाविधो दर्पो यस्य स तथा।।४५।।

पृथक् जगद्विलक्षणस्य हेरेर्धारणयाऽखण्डोपासनयाऽनुरुद्धां लब्धां विद्या मन्तर्धानलक्षणाम्।।४६।।

---

1 W Omits दैत्येन 2 W °यस्वेत्यर्थः। 3 B.M.Ma °ति

आसां स्त्रीणामर्थे दत्तानन्द।।४७।।

निदेशकरिणः आज्ञाकारिणः।।४८।।

**प्रजापतय ऊचुः**

**प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः।**
**स एष त्वया भिन्नवक्षा[1]नुशेते जगन्मङ्गलं सत्त्वमूर्तेऽवतारः।।४९।।**

**गन्धर्वा ऊचुः**

**वयं विभो ते नटनाट्यगायका येनाऽऽत्मसाद्वीर्य बलौजसा कृताः।**
**स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते।।५०।।**

**चारणा ऊचुः**

**हरे! तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः।**
**[2-]यदेष साधु हृच्छय स्त्वयाऽसुरः समापितः[-2]।।५१।।**

**यक्षा ऊचुः**

**वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम्।**
**स[3] तु जनपरिताप[4]ं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंश[5]।।५२।।**

**किम्पुरुषा ऊचुः**

**वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः।**
**अयं का[6]पुरुषो नष्टो धिक्कृतस्साधुभिर्य[7]दा।।५३।।**

**वैतालिका[8] ऊचुः**

**सभासु सत्रेषु तवाऽमलं यशो गीत्वा सपर्यां महतीं लभामहे।**
**यस्तां[9] व्यनैषी[10]द्भशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽऽमयः।।५४।।**

---

1. M,Ma स्तु 2- -2 W वयं समापित स्त्वया स एष साधु हृच्छयः 3 M,Ma अनुजः W नतज॰ 4. H,V ॰पी 5. W ॰शः 6 A,B,G,J,M,Ma कु 7. H,V स्सदा M,Ma यंतः 8. M,Ma वेताला 9. H,V स्ताननै 10 A,B,G,J,M,Ma,T ॰द्ध॰

## किन्नरा ऊचुः

**वयमीशकिन्नरगणास्तवाऽनुगा दितिजेन विष्टिममुनाऽनुकारिताः ।**
**भवता हरे सवृजिनोऽवसादितो नरसिंहनाथ विभवाय नो भव।।५५।।**

## विष्णुपार्षदा[1] ऊचुः

**अद्यैतन्नरहरि[2]रूपमद्भुतं ते[3] दृष्टं नश्शरणद सर्वलोकशर्म।**
**सोऽयं ते विधिकर ईश विप्रशापा[4]त्तस्येदं निधनमनुग्रहाय विद्मः।।५६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां सप्तमस्कन्धे
प्रह्लादानुचरिते दैत्यराजवधेश्रीनृसिंहस्तवो नाम अष्टमोऽध्यायः।।८।।

**श्रीध०** प्रजापतयोऽपि तदवलोकिताः प्रोचुः **प्रजेशा** इति। हे परेश! ते-त्वया अभिसृष्टा वयं प्रजेशा येन निषिद्धास्सन्तः प्रजा न सृजामः। स एष भिन्नं वक्षो यस्य, नु निश्चितं शेते मृतः। अतः परं प्रजाः सृजाम[5] इति हृष्यन्तः प्राहुः - हे सत्त्वमूर्ते! तवाऽयमवतारो जगतो मङ्गलम्।।४९।।

[6-]गन्धर्वा अपि तदवलोकिताः प्रोचुः **वयमिति**।[-6] हे विभो![7] वयं ते त्वदीया नटा नर्तका नाट्ये नृत्ये गायकाश्च। येन आत्मसात्[8] स्वाधीनाः कृताः। कथम्भूतेन? वीर्यं शौर्यं बलं शक्तिः ताभ्यामोजः प्रभावो यस्य तेन, [9-]स एष भवता[-9] इमां दशां मृतिं नीतः। उचितश्चैतदित्याहुः-किमिति।।५०।।

**हरे** इति। भवापवर्गं संसारनिवर्तकम्। आश्रयणे हेतुः यद्यस्मात् साधूनां हृदि भयजनकत्वेन शेते तिष्ठतीति तथा। स एषोऽसुरस्त्वया समापितोऽन्तं नीतः।।५१।।

**वयमिति**। मनोज्ञैः कर्मभिः तव[10]ानुचरेषु मुख्यः [11-]ते वयं दितिसुतेन शिबिकावाहकत्वं प्रापिताः।[-11] पञ्चतां मृत्युम्। हे पञ्चविंश! चतुर्विंशतितत्त्वनियामक!।।५२।।

---

1 H,V पारिषदा 2 A,B,G,J,M,Ma,T द्धरिनररू॰ 3 H,V वै 4. A,B,G,J,T,W ॰शापस्त॰ 5. H,V स्रक्ष्यामः 6- -6. H,V Omit 7. B प्रभो
8. A,B,J, omit आत्मसात् 9- -9. H,V Omit 10 H,V Omit तव 11- -11 H,V Omit

किम्पुरुषा **स्तुत्वां** स्तोतुं के वयं वराका इत्याहुः–**वयमिति**। वयं किम्पुरुषास्तुच्छप्राणिनः, त्वन्तु महानद्भुतप्रभावः पुरुषः। नन्वयं महान्दैत्यो हत इति किं न वर्ण्यते इत्याशङ्क्य कियदेत दित्याहुः–अयमिति। [1-]यदा साधुभिः भगवद्भक्तैः तिरस्कृत स्तदैव [-1]नष्टः।।५३।।

**सभास्विति**। सत्रेषु यज्ञेषु ते त्वया हतः, एतद्दिष्ट्या भद्रं कृतम्।।५४।।

**वयमिति**। अमुना दितिजेन विष्टिं निर्मूल्यं कर्म अनु निरन्तरं कारिताः। अतः परं नो विभवाय समृद्धये भव।।५५।।

**अद्येति**। नोऽस्माकं, भक्तानां हे शरणद! आश्रयप्रद! सर्वेषां लोकानां शर्म मङ्गलमेतदद्भुतं रूपमद्यैव दृष्टं, न तु पूर्वम्। विधिकरः किङ्करः।।५६।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां अष्टमोऽध्यायः।। ८।।

**वीर०** सद्वारकतद्व्यापाररूपजगत्सर्गात्मकास्मद्व्यापार [2]विरोधिनिरसनेन तदधिकाराधायकां सर्वेषां शुभाधायकमूर्तिं तुष्टुवुः प्रजापतयः **प्रजेशा** इति। हे परेश! परेषां ब्रह्मादीनामपीश! ते त्वया अभिसृष्टा व्यष्टिसर्गार्थं त्वया सृष्टाः प्रजेशाः प्रजापतय [3]इति प्रसिद्धास्ते वयमेतत्पर्यन्तं येन दैत्येन्द्रेण निषिद्धास्सन्तः प्रजा न वै सृजामः न सृष्टवन्तः स एव दैत्यः त्वया भिन्नं विदीर्णं वक्षो यस्य तादृशोऽनुशेते। अतः परं प्रजाः स्रक्ष्यामः इति हृष्यन्त आहुः -हे सत्त्वमूर्ते! अप्राकृतशुद्धसत्त्वविग्रह! ते तवावतारो जगन्मङ्गलं जगतो मङ्गलावहः ।।४९।।

तन्मुखोल्लासार्थं नाट्यादि कैङ्कर्यविरोधिनिरसनेन तदाधायकं सुहृदं तुष्टुवुर्गन्धर्वाः–**वयमिति**। हे [4]विभो! ते तव नटनाट्यगायकाः नटा नर्तकाः नाट्ये कर्मणि गायकाश्च वयं येन एतावत्पर्यन्तं आत्मसात्कृताः स्वाधीनाः कृताः। कथम्भूतेन? वीर्यं शौर्यं बलं शक्तिः ताभ्यामोजः प्रभावो यस्य, तादृशेन स एष दैत्यो भवता [5-]निरतिशयकृपायुक्तेन[-5] इमां दशां मरणमित्यर्थः, नीतः प्रापितः। तथा हि उत्पथस्थः [6-]उत्पथे कुमार्गे पापकर्माणि तिष्ठतीति [-6]तथा कुशलाय क्षेमाय कल्पते किम्? क्षेमयुक्तो भवति किम्? न कल्पत एवेत्यर्थः।।५०।।

तत्पादपङ्कजपरिचर्याविरोधिनिरसनेन पुनस्तदाधायकं हितकरं तुष्टुवुश्चारणाः–**हरे** इति। हे हरे! आश्रितार्तिहर! भवापवर्गमैहिकामुष्मिकहेतुं तवाङ्घ्रिपङ्कजमाश्रिताः परिचरन्तो वयमनेन, निषिद्धा इति शेषः, स एषोऽसुरः साधूनां [7]प्रपन्नानां हृच्छयः हृदयरोगरूपस्त्वया समापितः उपसंहृत इत्यर्थः।।५१।।

1- -1. H,V Omit 2. W adds रूप 3. W Omits इति 4. W प्रभो 5- -5 W Omits 6- -6. W Omits 7. W Omits प्रपन्नानां

स्वदु:ख मावेदयन्तस्तन्निवर्तकं सुखाधायकं वर्णयन्ति-**यक्षा वयमिति**। मनोज्ञैः कर्मभिर्वयं तवाऽनुचरश्रेष्ठा ते वयमिह तावद्दितिजेन वाहकत्वं यानादिवाहकत्वं भारवाहकत्वं वा प्रापिताः। हे नरहरे! तेन दितिजेन कृतं तव नतजनानां भक्तजनानां परितापं जानता ते[1] त्वया पञ्चविंशो दैत्येन्द्राख्यो जीवः पञ्चतां मृत्युमुपनीतः प्रापितः। "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवाऽनुविनश्यति" (बृह.उ. 4-4-12) इतिवत् पञ्चविंशस्य शरीर द्वारिका पञ्चताप्राप्तिरत्र विवक्षिता। पञ्चविंशेति पाठे हे जीवशरीरक! इति सम्बोधनम्। " स तु जनपरिताप" मिति पाठे येन दितिसुतेन वाहकत्वं नीताः स तु पञ्चविंश इत्यन्वयः।।५२।।

स्वनैच्यानुसन्धानपूर्वकमनितरसाधारणप्रभावं तुष्टुवुः किम्पुरुषाः**वयमिति**। वयं किम्पुरुषाः कुत्सिताः पुरुषाः, त्वन्तु महापुरुषः अनितरसाधारण गुणपूर्णः ईश्वरः सर्वान्तरात्मा च। अयं महान् दैत्यो हत स्त्वयेति किं न वर्ण्यते? इत्याशङ्क्य, कियदेत दित्याहुः – अयमिति। का पुरुषः ईषत्पुरुषः अस्मदपेक्षयाबलीयान्, त्वत्तोऽधम इति भावः। इषदर्थं " विभाषा पुरुषे" इति सूत्रेण कुशब्दस्य का देशः। यदा साधुभिर्धिक्कृतस्तिरस्कृतस्तदैव नष्टो नष्टप्रायः, अतः कियदेतत्तवेति भावः।।५३।।

अस्मत्सम्मानावहत्वद्गुणगानविरोधिनिरसनेन त्वयैव वयं बहुमता इत्याहुर्वैतालिकाः–**सभास्विति**। तवाऽऽमलं यशः सभासु सत्तेषु च गीत्वा वयं महतीं सपर्यां पूजां लभामहे तानस्मान् यो दुर्जनो दैत्यः स्ववशं यथा भवति तथाऽनैषीत् , स एष दुर्जनः। हे भगवन्! ते त्वया हतः एतद्दिष्ट्या भद्रं जातम्, दिष्ट्या दैवेन त्वयेति वाऽन्वयः। यथा आमयः यथा शिरोव्यथारूपो रोगः पीडाकारकः तद्वदयमासीत्किलेति शेषः।।५४।।

स्वदु:ख मावेदयन्तः सर्वसुखाधायकं लोकार्तिहरं तुष्टुवुः किन्नराः - **वयमिति**। हे ईश! वयं किन्नरगणा इति प्रसिद्धास्तवाऽनुगाः अनुचरास्ते वयमेतावदमुना दितिजेन विष्टिमनुकारिताः मूल्यरहितं कर्मविष्टिः, तामनु निरन्तरं कारिताः। हे हरे! अनुचरार्तिहर! स वृजिनः पापात्मा दैत्यो भवता उपसादित उपसंहृतः। हे नरसिंह! हे नाथ! नोऽस्माकं विभवाय सुखसमृद्धये त्वं भव।।५५।।

स्वामिन्! अदृष्टपूर्वं रूपं द्विषतामप्यनुग्राहकं धृतवानसीत्याहुर्विष्णुपार्षदाः – **अद्येति**। नोऽस्माकं भक्तानां हे शरणद! आश्रयप्रद! निरतिशयपुरुषार्थसाधनभूतोपायप्रद! इति वा। सर्वेषां लोकानां शर्म सुखावहमेतदद्भुतं रूपं अद्यैव दृष्टं, न तु पूर्वम्। हे ईश! स्वामिन्! सोऽयं दैत्यस्तव विधिकरः निदेशकारी किङ्करः, स च विप्रैः

1 W Omits ते

सनकादिभिः शप्तः, मध्ये कैङ्कर्यविरोधो जात इति भावः। तस्य दैत्यस्येदं निधनं त्वत्कृत मनुग्रहाय पुनः कैङ्कर्यलाभरूपतदनुग्रहार्थमेवेति वयं जानीमः।।५६।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां अष्टमोऽध्यायः।।८।।

**विज०** हे परेश! त्वयाऽभिसृष्टाः येन दैत्येन निषिद्धा वयं प्रजा न सृजामो वै, स दैत्यस्त्वयैव तु इदानीं भिन्नवक्षाः शेते। तथाऽयमवतारो जगन्मङ्गलं जगति शुभसारभूतः जगतो मङ्गलमुद्दिश्य गृहीतो वा।।४९।।

नटो नटनं कथाबन्धवचनं, नाट्यं शृङ्गारादिभावदर्शनम्, एतयोर्गायकाः। एतदुक्तम्-"नटनन्तु कथाबन्धं नाट्यकं भावदर्शनम्" (गान्धर्वे) इति। वीर्यबलौजसा येन आत्मसात् आत्माधीनाः कृताः। कल्पते समर्थो भवति।।५०।।

साधून् हरन्तीति साधुहृतः सज्जनारयः तेषां श्रय आश्रयः साधूनां हृदयं श्रयति तापदत्वेनेति वा, समापितो विनाशं गमितः, भवस्यापवर्गस्य, त्यागो यस्मात्तत्तथा, तद्भवात्संसारान्मोक्षो यस्मात्तत्तथेति वा।।५१।।

पञ्चतां विनाशं, हे पञ्चविंश! चतुर्विंशानां मध्ये इति शेषः।।५२।।

किम्पुरुषाः पुरुषाभासाः।।५३।।

सत्रेषु सभासु सत्रकारिणः दिष्ट्या सुखं कर्तुम्।।५४।।

वेतनहीनतया क्रियमाणं कर्म विष्टिं, वृजिनं दुःखं करोतीति वृजिनः कर्त्रर्थः प्रत्ययः। सः अपसादितोऽपहत्य नाशितः, विभवाय संसारान्मुक्तये।।५५।।

हरिनरयोः सिंहनरयो रूपं, विधिकरो भृत्यः किं, विप्रशापात् असुरयोनिमाप्तस्य।।५६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे अष्टमोऽध्यायः।।८।।

* * * *

# नवमोऽध्यायः

## [1-]श्रीनारद उवाच[-1]

एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः।
नोपैतु मशकन्मन्यु[2] संरम्भं सुदुरासदम्।।१।।

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम्।
अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता।।२।।

प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके।
तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम्।।३।।

तथेति शनकै राजन् महाभागवतोऽर्भकः।
उपेत्य भुवि कायेन ननाम विधृताञ्जलिः।।४।।

स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः।
उत्थाप्य तच्छीर्ष्ण्यदधात् कराम्बुजं कालाहि [3]वित्रस्तधियां कृताभयम्।।५।।

स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः।
तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः।।६।।

अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः।।७।।

## प्रह्लाद उवाच

ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः।
[4]नाराधितुं [5-]पुरुगुणै रधुनाऽपि[-5] [6]पिप्रुःकिं तोष्टुमर्हति स मे हरिरुग्रजातेः।।८।।

---

1--1 A,G Omit 2. M,Ma सङ्ग्रहं 3. M,Ma निर्दष्ट 4 H,V नाराधनं. M,Ma नान्तं परस्य 5--5 M,Ma परतोऽप्यधुनाऽपि 6. H,V पपु.. M,Ma यान्ति; W पूर्ण.

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः। कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम्।।

"उग्रोऽप्यनुग्र एवाऽयं स्वभक्तानां नृकेसरी। केसरीव स्वपोतानामन्येषामुग्रविग्रहः" इत्याद्यागमोक्तां भक्तानुकम्पिता माह-**एवमिति** सप्तभिः। एवं दूरत एव स्थित्वा स्तुवन्तः मन्युना संरंभ आवेशो यस्य तम् उप [1]समीपे गन्तुं नाऽशक्नुवन्।।१।।

**साक्षादिति।** [2-]श्रीः लक्ष्मीः देवैः प्रेषिताऽपि[-2] महदद्भुतं [3]तद्रूपं दृष्ट्वा शङ्किता सती तं [4]नोपयाय [5]नोपजगाम। अद्भुतत्वे हेतुः-अदृष्टेति।।२।।

**प्रह्लादमिति।** उपेहि उपगच्छ।।३,४।।

**स्वेति।** काल एवाहिः तस्माद्वित्रस्ता धीर्येषां तेषां कृतमभयं येन [6-]तत्कराम्बुजम्[-6]।।५।।

**स** इति। तस्य [7-]श्रीनृसिंहस्य[-7] करस्पर्शेन धुतं निरस्तमखिलमशुभं यस्य। सपदि तत्क्षणमेवाभिव्यक्त-मपरो[8]क्षीभूतं परात्मदर्शनं ब्रह्म[9]ज्ञानं यस्य। निर्वृतस्सन् हृदि दधौ। हृष्यन्ती रोमाञ्चिता तनुर्यस्य क्लिन्नं [10]प्रेम्णा आर्द्रं हृद्यस्य। अश्रूणि लोचनयोः यस्य। परमपुरुषार्थतया दधौ न साधनत्वेनेत्यर्थः।।६।।

स समाधिमेवाऽह-**अस्तौषीदिति**। तस्मिन्नेव न्यस्तं हृदयमी[11]क्षणे च येनेति।।७।।

*"स्वस्मिन्निव समस्तेषु तत्कृपामृतवृ[12]ष्टये। प्रह्लादः स्तौति सत्पद्यै द्विचत्वारिंशता हरिम्" तत्र तावदात्मनो भगवत्स्तुतौ अनधिकारमिवाशङ्क्याधिकारं [13]भावयन्नाह-**ब्रह्मादय** इति पञ्चभिः। मुनयो मननशीलाः सिद्धा ज्ञानिनोऽपि। कथम्भूताः? सत्त्व एवैकस्मिंस्तानो विस्तारो यस्याः सा मतिः येषां तथाविधा अपि वचसां प्रवाहैरपि तथा बहुभिः वक्ष्यमाणैर्गुणैरपि यमाराधयितुं न [14]पिप्रुः न पूर्णा न शक्ता इत्यर्थः। स हरिः [15]मे मया किं कथं [16]तोष्टुं तोषं प्राप्तुमर्हति। तत्र हेतुः। [17]उग्रजातेः उग्रा घोरा आसुरी जातिर्यस्य।।८।।

---

1. H,V omit समीपे 2- -2 H,V omit 3. H,V omit तत् 4 A,B,J omit नोपयाय 5 H,V omit नोपजगाम 6- -6 H,V omit 7- 7 H V omit 8. H,V °क्ष° 9. A दर्शनं 10. A,B,J प्रेमार्द्र 11. A,B,J °क्षणं *श्रीधरीयोऽयंश्लोकः 12. A,B,J °ट्ट° 13 A,B,J add म 14 H V पेपुः 15. A,B,J मम 16 A,B,J omit तोष्टुं 17 H,V omit उग्रजातेः

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं प्रत्येकं ब्रह्मादिभिः संस्तुतमप्यशान्तसंरम्भम् इतरैः [1] दुरासदं श्रीनृसिंहं चतुर्मुखप्रेषितः प्रह्लादः प्रसादयामासेत्याह देवर्षिः। एवं प्रत्येकम् इत्थं स्तुवन्तोऽपि ब्रह्मादयः सर्वे देवाः मन्युना संरम्भ आवेशो यस्य अतएव [-1] दुरासदं दुष्प्रापं भगवन्तमुपैतुं समीपं गन्तुं नाऽशक्नुवन् समर्था न बभूवुः।।१।।

किं पुनः, निरतिशयप्रिया साक्षात्प्रसिद्धा श्रीर्लक्ष्मीरपि देवैः ब्रह्मादिभिः प्रेषिता पतिसमीपमेहीति प्रार्थिताऽप्यद्भुतं महानृसिंहरूपं दृष्ट्वा पूर्वमदृष्टमश्रुतञ्च यत्तददृष्टाश्रुतपूर्वं तस्य भावः तत्त्वं तस्माद्भीतः शङ्किता सती नोपेयाय न समीपमगात्।।२।।

एवं स्थिते ब्रह्मा चतुर्मुखोऽन्तिके समीपेऽवस्थितं प्रह्लादं प्रेषयामास प्रेषणप्रकारमेवाऽऽह तातेत्यर्धेन [2]। हे तात! हे वत्स! स्वपित्रे कुपितं क्रुद्धं प्रभुं श्रीभगवन्तं प्रशमय प्रसन्नं कुरु। उपेहि समीपं गच्छेति।।३।।

हे राजन्! युधिष्ठिर! तथेत्यभ्युपगम्य भागवतश्रेष्ठोऽर्भकः प्रह्लादः शनकैः समीपमेत्य प्राप्य [3] विधृतो [4] बद्धोऽञ्जलिर्येन तादृशो भुवि देहेन [-4] दण्डवन्ननाम नमस्कृतवान्।।४।।

ततः स्वस्य पादयोः मूले पतितं तमर्भकं प्रह्लादं विलोक्य देवः श्रीनृसिंहः कृपया परिप्लुतः [5] परितः प्लुता [-5] व्याप्तः तमुत्थाप्य तस्य प्रह्लादस्य शिरसि स्वकराम्बुजं अदधात् निहितवान्। कथम्भूतं काल एवाऽहिः सर्पः तस्माद्वित्रस्ता भीता धीर्येषां तेषां कृतमभयं अभयप्रदानं येन तादृशं संसृतिभीरूणां कृताभयप्रदानमित्यर्थः।।५।।

स प्रह्लादः तस्य भगवतः करस्य स्पर्शेन धुतं निरस्तं [6] अखिलमशुभं यस्य तादृशः सद्य एव अभिव्यक्तौ प्रत्यक्षितौ परात्मानौ [7] स्वात्मपरमात्मानौ [-7] तयोर्दर्शनं याथात्म्यसाक्षात्कारात्मकं यस्य पूर्वं प्रत्यक्षतापन्नरूप भगवद्विषयज्ञानयुक्तः तत्करस्पर्शेन तु "ज्ञातुं द्रष्टुं च तत्त्वेन" (भ.गी. 11-54) इत्युक्तविधपरमात्मदर्शनयुक्त इत्यर्थः। अत एव निर्वृतः सुखितोऽत एव हृष्यत्तनुरुदञ्चितरोमयुक्ततनुः क्लिन्नं प्रेमार्द्रं हृत् [8] हृदयं यस्य अश्रुण्या नन्द [9] जानि लोचनयो र्यस्य तादृशस्तस्य भगवतः पादाब्जं हृदि दधौ धृतवान्निरतिशयपुरुषार्थत्वेनानुसंहितवा- [10] नित्यर्थः।।६।।

---

1--1 W omits 2. W omits अर्धेन 3. W omits विधृतो 4--4 W बद्धाञ्जलिः कायेन बुवि 5--5 W omits 6 W नि० 7--7 W omits 8 W omits हृदयं 9. A.T जलानि 10. W omits इत्यर्थः

ततः प्रेमगद्गदया वाचा एकाग्रमनसा श्रीभगवदेकविषयेण मनसा हरिमस्तौच्च[1]। कथम्भूतः? सुसमाहितः सुसमाधिमेवाह, तस्मिन्नेव न्यस्तं हृदयम् ईक्षणञ्च येनेति "हृदा मनीषा मनसाभिक्लृप्तः" (कठ.उ. 2-6-9) इतिवच्चित्तबुद्धिवृत्तीनाम् एकविषयत्वाभिप्रायेणैकाग्रमनसा तन्न्यस्तहृदयेक्षण इति चोक्तम्।।७।।

स्तुतिमेवाह-ब्रह्मादय इत्यादि द्विचत्वारिंशच्छ्लोकैः। तावद्भगवत्स्तुतौ आत्मनोऽनधिकारमाशङ्कते- **ब्रह्मादय** इति। चतुर्मुख प्रभृतयो देवगणाः सत्त्वैकतानमतयः सत्त्वस्यैकताना मुख्याश्रयभूता मतिर्येषां ते केवल सत्त्वप्रधानमतय इत्यर्थः। अनेनाऽत्र "तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम्" (भ.गी. 14-16) इत्युक्तरीत्या अतीन्द्रियार्थदर्शनयोग्यत्वं सूचितम्। एवं विधा अपि मुनयः सिद्धाश्च स्ववचसां प्रवाहैः स्तोमैः तथा वक्ष्यमाणैः बहुभिः गुणैरपि यमाराधयितुं स्तुत्यादिरूपाराधनद्वारा यस्य तोषमुत्पादयितुं अधुनाऽपि न पिप्रुः[2] आराधयितुं[3] न पर्याप्ता न समर्था इत्यर्थः। स हरिः उग्रा आसुरी जाति र्यस्य तस्य मे अनेन च वक्ष्यमाणगुणराहित्यमुक्तम्। ईदृशस्य मे मम[4] किं कथं तोष्टुं तोषं प्राप्तुमर्हति, वाङ्मनसाऽपरिच्छेद्य स्वरूपरूपगुण[5]स्वभावविभूत्यादिको[6,7] भगवान्[-7] विपुलबुद्धिभिः ब्रह्मादिभिरपि स्तोतुमशक्यः कथमल्पबुद्धेः आसुरस्वभावस्य मम स्तुत्या कथं तुष्यादित्यर्थः।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्रापि भक्तमाहात्म्यमेव प्रकटयति, ब्रह्मादि देवतास्तुत्यनन्तरं कथं कथाप्रसङ्ग इति श्रोतुरान्तरीं शङ्कां परिहर्तुमाह-एवमिति। एवं स्तुवन्तोऽपि उपेतुं समीपं गन्तुं मन्युसङ्ग्रहं कोपसारभूतं 'मन अवबोधने' इति धातुः"ज्ञानसारं प्रत्ययसारं" इति श्रुतेः। ज्ञानि विवक्षयेत्तत्। ननु, तर्हि कथं समीपं गन्तुं नाऽशक्नुवन्नित्युच्यते? इति चेदज्ञेयत्वज्ञापनार्थेति तात्पर्यम्। "न तत्र चक्षुर्गच्छति न वाग्गच्छति, तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत" (केन.उ. 1-3) इत्यादि श्रुतेरेतदेव दर्शयति-सुदुरासदमिति। सुखेन विषयीकर्तुमशक्यम्।।१।।

एतदेव विवृणोति-**साक्षादिति**। सरस्वत्यादि व्यावृत्त्यर्थं साक्षादिति। अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैः जनैरिति शेषः। द्वावेतौ नित्यमुक्तौ इत्यादेः। तर्हि नोपेयाय शङ्कितेत्येतत्कथं घटतीति चेत् मयाऽपीश्वरः परिच्छेद्यो न भवति, किन्त्वन्यैरिति ज्ञापनाय असुरजनमोहनार्थेति वा "अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः। नृसिंहं शङ्कितेव श्रीर्लोकमोहाय नो ययौ" (ब्रह्माण्डे) इति वाक्यसिद्धम्।।२।।

1. A,B,T °स्तौषीच्च 2 W पूर्णाः 3 W omits आराधयितुं 4 W omits मम 5 W omits गुण 6. W °वो 7- -7 W omits

ममेदानीं प्रह्लादे वात्सल्यातिशयोऽस्ति, भक्तानां मत्सेवातिशयफलाधिकार्यमिति भगवन्मनो ज्ञापनाय ब्रह्मणा प्रह्लादः प्रेषित इत्याशयेनाऽऽह-**प्रह्लादमिति**। अयमपि लक्ष्मीकान्तसमीपागमनहेतुरन्यथा प्रह्लादे वात्सल्यातिशयो न प्रकटितः स्यात्तदुक्तम् "प्रह्लादे चैव वात्सल्यं दर्शनाय हरेरपि। ज्ञात्वा मनस्तदा ब्रह्मा प्रह्लादं प्रेषयत्तदा" (ब्रह्माण्डे) इति प्रकृष्टो ह्लादो निर्वृतिर्यस्य स तथा इत्यनेन प्रह्लादशब्दनिरुक्तिः सूचिता। लक्ष्म्यादि वत्सलतां हित्वा प्रह्लादे तत्करणाद्धरे वैषम्यबुद्धिर्नाशङ्कनीया असुरजनमोहनार्थोपपत्तेः, उक्तञ्च "एकत्रैकस्य वात्सल्यं विशेषाद्दर्शयेद्धरिः। अवरस्याऽपि मोहाय" (ब्रह्माण्डे) इति भक्त्यादि दानं नैव करोति, किन्तु वात्सल्यानुसारेणेत्यभिप्रायेण दर्शितं क्रमेणैवाऽपि वत्सल इत्युक्तं उपेहि उपेत्य।।३,४।।

नृहरेः प्रह्लादे वात्सल्यातिशयं दर्शयति-**स्वपादमूले** इति। ब्रह्मादिकराम्बुजेभ्यो हरेः कराम्बुजं विशिनष्टि-कालाहीति। कालाख्याहिना निर्दष्टा ग्रस्ता धीर्येषां ते तथा तेषाम्।।५।।

इतरकरस्पर्शवैशिष्ट्य दर्शनायेशकरस्पर्शफलाभिव्यक्तिं वक्ति। स **तत्कर** इति। स भगवत्करस्पर्श विधूतसमस्तपापत्वात् तत्क्षण एव सम्यगङ्कुरितपरमात्मज्ञानः अभिव्यक्तं परस्य हरेरात्मनः संसारिणश्च दर्शनं स्वरूपविषयज्ञानं यस्य स तथेति वा क्लिन्न हृद्भक्तिलक्षणामृतजलेनार्द्रीकृतान्तःकरणोऽश्रुणा युक्ते लोचने यस्य स तथा।।६।।

तत्त्वज्ञानमस्योत्पन्नमित्यस्य किं चिह्नमित्यतः तत्स्तुत्या व्यज्यत इति भावेन दर्शयति-**अस्तौषीदिति**।।७।।

सत्त्वे नित्याविर्भूत बलज्ञानसमाहार एक एव नाऽन्य इति वितानमतिः विस्तृतबुद्धिः येषां ते सत्त्वैकतानमतयः। यद्वा, सत्त्वे हरावेव नियतबुद्धयः अधुना परतः परस्य यस्यान्तं नाऽपि नैव यान्ति स हरिः उग्रजातेः असुरजातेः मे तोष्टुं स्तोतुमर्हति किमित्यन्वयः। "न ते विष्णो" इति श्रुतेः।।८।।

**[1]मन्ये धनाभिजनरूपतपश्श्रुतौजःतेजःप्रभावबलपौरुषबुद्धियोगाः।**
**नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भग[2]वान्गजयूथपाय।।९।।**

**विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम्।**
**मन्ये तदर्पितमनोवच[3]नेहितार्थप्राण[3]ं पुनाति स कुलं न तु भूरिमानः।।१०।।**

1. H,V मन्येऽधु ° 2. M,Ma वाग्रानु ° 3- -3 M,Ma नात्मगेह प्राणः; W नेहितार्थप्राणः

**नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते।**
**यद्यज्जनो भगवते विदधीतमानं तच्चात्मने[1] प्रतिमुखस्य यथा मुखश्रीः।।११।।**

**तस्मादहं विगतविक्लब ईश्वरस्य सर्वात्मना महि[2] गृणामि यथा मनीषम्।**
**नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन।।१२।।**

**सर्वेह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न[3] चोद्विजन्तः।**
**क्षेमाय भूतय उताऽऽत्मसुखाय चास्य[4] विक्रीडितं भगवतो रुचिरावतारैः।।१३।।**

**तद्यच्छ मन्यु मसुरश्च हतस्त्वयाऽद्य मोदेत साधुरपि वृश्चिकसर्पहत्या।**
**लोकाश्च निर्वृतिमिताः प्रतियान्तु[5] सर्वे रूपं नृसिंह! विभवाय[6] जनाः स्मरन्ति।।१४।।**

**नाऽहं बिभेम्यजित तेऽतिभयानकास्य[7] जिह्वार्कनेत्र[8] भ्रुकुटीरभसोग्रदंष्ट्रात्।**
**आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णान् निर्हादभीत दिगिभादरिभिन्नखाग्रात्।।१५।।**

**त्रस्तोऽस्म्यहं कृपणवत्सल दुस्सहोग्र संसारचक्रकदनाद्ग्रसतां[9] प्रणीतः।**
**बद्धः स्वकर्मभिरुशत्तम तेंऽघ्रिमूलं [10-]प्रीतोऽपवर्गशरणं[-10] ह्वयसे कदा नु।।१६।।**

**श्रीध०** एवं हरितोषणे स्वस्यायोग्यता माशऽङ्क्य योग्यतां सम्भावयति-**मन्य** इति द्राभ्याम्। अभिजनः सत्कुले जन्मरूपं सौन्दर्यं, श्रुतं पाण्डित्यं, ओज इन्द्रियनैपुणं,[11] तेजः कान्तिः, प्रभावः प्रतापः, पौरुषं उद्यमो, बुद्धिः प्रज्ञा, योगोऽष्टाङ्गः। एते धनादयो द्वादशाऽपि गुणाः परस्य पुंस आराधनाय न भवन्ति। हि यतः केवलया भक्त्यैव गजेन्द्राय तुष्टोऽभवत्।।९।।

एवं भक्त्यैव केवलया हरेस्तोषः सम्भवतीत्युक्तमिदानीं भक्तिं विना नाऽन्यत्किञ्चित्तत्तोषहेतुरित्याह-**विप्रादिति**। पूर्वोक्ता धनादयो ये द्विषट्द्वादशगुणास्तै र्युक्ताद्विप्रादिति श्वपचं वरिष्ठं मन्ये। यद्वा, सनत्सुजातोक्ता द्वादशधर्मादयो[12] गुणा द्रष्टव्याः। तदुक्तम् "धर्मश्च[13] सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया। यज्ञश्च दानं च धृतिः शमश्च[14] व्रतानि वै द्वादश ब्राह्मणस्य" (भारते) इति। [15-]यद्वा "शमो दमस्तपः शौचं क्षान्त्यार्जवं विरक्तताः। ज्ञानविज्ञानसन्तोषाः सत्यास्तिक्ये द्विषड्गुणाः" (भ.गी. 18-42) इति।[-15] कथम्भूताद्विप्रात् अरविन्दनाभस्य

1. H,V तत्त्वात्मने 2. M,Ma नहि 3. W तवोद्वि° 4 M,Ma वास्य 5. A,B,G,H,J,T,V यन्ति 6 A,B,G,H,J,T,V °याय 7 M,Ma क° 8 M Ma [illegible] 9 M,Ma त्कृशतां 10- -10 M,Ma भीतापवर्गमरणं समियां 11 H,V गुण्यं 12 H,V ज्ञानादयो 13 H,V ज्ञानश्च 14. A,B,J श्रुतश्च 15- -15 H,V omit

पादारविन्दाद्विमुखात्। कथम्भूतं श्वपचम्? तस्मिन्नरविन्दनाभेऽर्पिता मनआदयो येन तम्। ईहितं कर्म। वरिष्ठत्वे हेतुः, स एवम्भूतः श्वपचः सर्वं कुलं पूनाति। भूरिः मानो गर्वो यस्य स तु विप्र आत्मानमपि न पुनाति। कुतः कुलं? यतो भक्ति हीनस्यैते गुणा गर्वायैव भवन्ति न तु शुद्धयेऽतो हीन इति भावः।।१०।।

तर्हि किं धनाद्यर्पणेन सम्मानं[1] प्राकृत इव भगवानपेक्षते, नेत्याह-**नैवेति**। अयं प्रभुरीश्वरोऽविदुषोऽल्पकाङ्क्षनान्मानं पूजां आत्मनो अर्थे न वृणीते नेच्छति यतो निजलाभेनैव पूर्णः। तर्हि पूजां नेच्छत्येव तत्राऽऽह-करुणः कृपालुः अतो वृणीते च तत्र हेतुः-यद्यदिति। यत्[2] यत् यं यं मानं यद्वा यत् यस्मात् यत् येन धनादिना भगवते मानं विदधीत तदेवात्मने भवति नान्यत्[3]। यथा मुखे कृतैव तिलकादिश्रीः शोभा प्रतिबिम्बस्य भवति, न तु सक्षात्तस्यैव कर्तुं शक्यते तद्वत्।।११।।

यस्मादेवं भगवान् भक्त्यैव तुष्यति **तस्मादिति**। तस्मादहं नीचोऽपि विगतविक्लबो गताशङ्कस्सन्[4] ईश्वरस्य महि महिमानं सर्वप्रयत्नेन स्वमनीषानुसारेण अनुवर्णयामि। अजानतोऽपि स्तुतिकरणे हेतुमाह-नीच इति। येनैव महिम्नाऽनुवर्णितेन अजया[5] विद्यया गुणविसर्गं[6] संसार मनुप्रविष्टः पुमान्पूयेत शुद्ध्येत तन्महि। अन्यस्य तथा शोधकत्वाभावादित्यर्थः।।१२।।

तदेवमात्मनः स्तुतावनधिकारं परिहृत्य इदानीं तं स्तुवन् कोपोपसंहारं प्रार्थयते-**सर्वेहीति** द्वाभ्याम्। भो ईश! अमी उद्विजन्तो बिभ्यतः सर्वे ब्रह्मादयः सत्त्वमूर्तेस्तव विधिकरास्त्वन्नियोगकर्तारो भक्ता एव नाऽन्ये। न च वयमसुरा इव वैरभावेनैते भक्ताः, किन्तु श्रद्धयैव तव रुचिरैः अवतारैः[7] विक्रीडितं[8] विविधं क्रीडनमस्य विश्वस्य क्षेमादि प्रयोजनाय न तु भयोत्पादनाय।।१३।।

**तदिति**। तत्तस्मादेषां भयपरिहाराय मन्युं यच्छ उपसंहर। यदर्थे[9] अयं मन्युः स चासुरः साधूनां सन्तोषार्थमद्य हतः। अतःपरं क्रोधेन कार्याभावात्तं नियच्छ। नन्वन्येषां वधेन साधुः किं मोदेत तत्राह-वृश्चिकादेः परोपद्रवकारिणोऽन्यत[10] एव जातया हत्या वधेन तस्यैव तद्भद्रं जातमिति साधुरपि मोदेतैव। तर्हि बहूनां सुखावहत्वादमुं क्रोधं नत्यजामीति[11] चेत्तत्राह-लोकाश्च निर्वृतिं इताः प्राप्ताःसन्तः प्रतियन्ति क्रोधोपसंहारं प्रतीक्षन्ते तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत्तत्राह-रूपमिति। विभयाय भयनिवृत्त्यै एतद्रूपस्मरणादेव भयनिवृत्तिर्न मन्युधारणेन कृत्यमस्तीत्यर्थः।।१४।।

---

1 H,V सन्मानं 2. A,B,J omit यत् यत् 3 H,V °स्य 4 A,B,J गत° 5 A,B,J omit अजया° 6. A,B,J omit गुणविसर्गं 7. H,V omit अवतारैः 8 A,B,J omit विक्रीडितं 9. A,B,J यदर्थं 10 A,B,J omit एव 11 H,V त्यक्ष्या°

**त्वं चेद्बिभेषि तर्हि त्यजामीति चेत्तत्राह-नाहमिति**। भो अजित! तेऽस्माद्रूपादहं न बिभेमि, कथम्भूतात्? आस्यं च जिह्वा च अर्कसदृशनेत्राणि च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्चैतान्यातिभयानकानि यस्मिंस्तस्मात्। आन्त्रमय्यः स्रजः यस्मिंस्तदान्त्रस्रक् तस्मात्। क्षतजाक्ताः केसरा यस्मिन्। शङ्कुवदुन्नतौ स्तब्धौ कर्णौ यस्मिन्, तच्च तच्च तस्मात्! निर्ह्रादेन भीता दिगिभा यस्मात्। अरीन् शत्रून्[1] भिन्दन्तीत्यरिभिन्दि तानि नखाग्राणि यस्मिन्। एवम्भूतादपि ते रूपादहं न बिभेमि।।१५।।

महद्भयं त्वन्यदस्तीत्याह[2]-**त्रस्तोऽस्मीति**। दुस्सहं यदुग्रं संसारचक्रे कदनं दुःखं तस्मादहं त्रस्तोऽस्मि। तत्र च ग्रसतां हिंस्राणां मध्ये स्वकर्मभिर्बद्धस्सन् प्रणीतो निक्षिप्तोऽस्मि, हे कृपणवत्सल! हे उशत्तम! कदानु त्वं प्रीतस्सन् अपवर्गरूपं[3] शरणं तवाङ्घ्रिकमलं प्रति ह्वयसे मामाह्वयसि।।१६।।

**वीर॰** एवमनधिकारं आत्मन[4] आशङ्क्य पुनरधिकारं सम्भावयितुं तावद्भगवतो जातिगुणवृत्त्यादि तारतम्यानादरेण भक्त्यैकतोष्यत्वमाह-**मन्य** इति द्वाभ्याम्। धनादयः परमपुरुषस्याराधनाय सन्तोषनिमित्ताराधनाय न भवन्ति इति मन्ये। किन्तु भक्तिरेव [5-]परमपुरुषसन्तोषाराधनाय[-5] भवतीति मन्य इत्यर्थः। कुतः हि यस्माद्भगवान् गजयूथपाय धनादिविरहिताय गजेन्द्राय भक्त्यैव तुतोष। तत्र धनं वित्तम्, अभिजनः सत्कुले जन्म, रूपं सौन्दर्यं तपः स्वधर्मः कृच्छ्रादिरूपं [6-]वाऽनशनरूपं वा[-6], श्रुतं पाण्डित्यं, ओज इन्द्रियबलं, तेजः कायकान्तिः, प्रभावः प्रतापः, बलं शरीरं, पौरुषमुद्यमः, बुद्धिः प्रज्ञा, योगः प्राणजयः।।९।।

एवं धनाद्यभावेऽपि केवलभक्तेरेव श्रीभगवत्तोषहेतुत्वं निदर्शितम्। यतो भक्तेरेव श्रीभगवत्तोषहेतुत्वं अत एव इतरगुणसम्पत्त्यपेक्षया श्रीभगवद्भक्तिसम्पत्तिरेव श्रेयसीत्याह-**विप्रादिति**। द्विषड्गुणाः द्वादशगुणास्ते च- "धर्मश्च सत्यं च दमःश्रुतञ्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया। दानं च यज्ञश्च धृतिः शमश्च व्रतानि वै द्वादश ब्राह्मणस्य"।। (भारते) इति सनत्सुजातेनोक्ताः[7] श्रीमहाभारते। एतैर्युक्तादरविन्दनाभस्य पादारविन्दविमुखात् ब्राह्मणात् श्वपचं श्वपाकं वरिष्ठं श्रेष्टं मन्ये। श्वपचं विशिनष्टि, तदर्पितेति तस्मिन्नरविन्दनाभे अर्पितास्समर्पिता मन आदयो येन तं तत्रेहितं कर्म तस्य श्रेष्ठत्वे[8] ततो विप्रस्यावमत्वे च हेतू आह, स एवम्भूतः श्वपचः कुलं स्वकुलमपि पुनाति। भूरिः मानो गर्वो द्विषड्गुणप्रयुक्तो यस्य स तु विप्रः न तु आत्मानमपि पुनातीत्यर्थः। यद्यप्युक्ता एव गुणाः भगवद्भक्त्यनुग्राहका भक्तिश्च वेदान्तविहितब्रह्मोपासनात्मिका, तत्र चाधिकारस्त्रैवर्णि

---

1. A,B,J omit शत्रून् 2 H,V त्वदन्य॰ 3. A,B,J ॰भूतं 4 W omits आत्मनः 5- -5 W omits 6- -6 W omits 7. A,B,T ॰तोक्ताः 8 W श्रेष्ठ्य

कस्यैव न तु शूद्रस्य, एतञ्च शारीरकापशूद्राधिकरणन्यायसिद्धम्। एवञ्च तत्र सुतरां श्वपाकस्याधिकारो न सम्भवतीति उक्तगुणयुक्तात् द्विजाद्भक्तियुक्तस्य[1] श्वपाकस्य परत्ववर्णनमनुचितम्, तथाप्यत्र प्रकरणे भक्ति शब्देन भक्तिः प्रपत्तिश्चोत्यते। प्रपत्तौ च सर्वेषां अधिकारो बहुप्रमाणप्रतिपन्नः, अत एव हि- "दैतेया यक्षरक्षांसि स्त्रियःशूद्रा व्रजौकसः। खगा मृगाः पापजीवाः सन्ति ह्यच्युतताङ्गताः" (भाग.7-7-54) इति स्त्रीशूद्रादीनामपि[2] भगवति भक्त्या तत्साधर्म्यापत्तिः उक्तोपपन्नाभवति। "वनङ्गतो यद्धरिमाश्रयेत, उपेत नारायण मादिदेवम्, मन्ये तदेतदखिलं परमस्य पुंसः, स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः" (भाग. 7-5-5) इति प्रपत्तिरपि कर्तव्यत्वेन पूर्वमुक्ता चेत्यतो न विरोधः। उपपादितश्चैतत्पुरस्तान्मन आदीनां भगवति समर्पणं नाम तच्छेषत्वेन तदायत्तसत्तादिमत्वेन चानुसन्धानरूपाध्यवसायात्मकज्ञानं, प्राणशब्दः प्राणाश्रयप्रत्यगात्मस्वरूपस्यापि उपलक्षकः। एवञ्चात्मात्मीयादि समर्पणेन भगवति न्यस्त रक्षाभरः श्वपाकोऽपि श्रीभगवत्तोषकत्वादुक्तविधात् विप्राच्छ्रेयानिति भावः।। तदुक्तं श्रीभगवता-"अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव समन्तव्यः सम्यग्व्यवसितो हि सः।।" (भ.गी. 9-30) "प्रियो हि ज्ञानिनोऽत्यर्थ अहं स च मम प्रियः" (भ.गी. 7-17) इत्यादि। "अपि पापेष्वभिरता मद्भक्ता पाण्डुनन्दन! मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसा" इति।।१०।।

ननु परिपूर्णस्य भगवतो जातिगुणवृत्तादिविहीन[3] श्वपाकसमर्पितमन आदिभिः किं प्रयोजनम्? कथं ततस्तस्य तोषः? कथञ्च एतदेवंविधोऽपि मामनन्यभावेन भजन्नितरां मत्प्रियतम[4] इति श्रीभगवतोक्तम्? इत्यत्राह-**नैवेति**। प्रभुरीश्वरो निजलाभपूर्णः निजेन स्वाभाविकेन लाभेन समस्तकामावाप्त्या पूर्णः, अत एव मानं स्वाराधनरूपं कर्म नैव जगाद। आत्मने इत्यपकृष्यते आत्मने आत्मार्थं स्वप्रयोजनाय न जगादेत्यर्थः। किन्तु करुणो वृणीते करुणः करुणावान् "गुणवचनेभ्यो मतुपो लुग्वक्तव्यः" (वार्तिक. under अष्टा. 1-4-19) इति लुप्तमतुबन्तं पदं "लुक्तद्धित लुक्" (अष्टा 1-2-49) इति टापो लुक्। हेतुगर्भमिदं दयालुत्वात् विदुषो वृणीते प्रबुद्धजनान् स्वाराधनविधानेनाङ्गीकरोतीत्यर्थः। करुणयाऽराधकोज्जीवनार्थमेवाऽऽराधनं स्वीकरोतीति भावः[5]। तदेव विशदयति, यद्यदाराधनं भगवते जनो विदधीत करोति तञ्चात्मने स्वार्थमेव भवति "यस्तुवन्स्तव्यतामेति वन्दमानश्च वन्द्यताम्" इति न्यायाद्भगवत्पूजनेन स्वयमपि पूज्या भवन्तीत्यर्थः। कथमन्यस्य पूजया[6] अन्यस्य पूज्यतेत्यपेक्षायां, तदधीनसत्तादिमतो वस्तुनः तत्सत्कारेण तत्साम्यावाप्तौ दृष्टान्तमाह यथा मुखश्रीः प्रतिमुखस्येति।

1 W °क्तश्व° 2. W °द्राणामपि 3. A,B,T वि 4 A,B,T °य द्र° 5 W अर्थः 6. A,B,T पूजनेन

यथा साक्षादलङ्कारादिजन्या मुखस्य शोभा तदधीनच्छाया मुखस्य भवत्येवं भगवतः पूज्यता तदाराधकानां तथैव[1] भवतीत्यर्थः।" तद्यथा माता तरुणवत्सं वत्सो वा मातरम्, छायासत्त्वमनुगच्छेत् तथाप्रकारः" इति श्रुतिर्हि जीवस्य च्छायावदीश्वर पारतन्त्र्य मवगमयति। जनादविदुष इति पाठे। अविदुषः किञ्चिज्ज्ञादपि जनान्मानमात्मार्थं[2] न वृणीत इत्यर्थः।।११।।

एवं भगवतो भक्त्यैकतोष्यत्वं तत्तोषस्य च भक्तोज्जीवनार्थत्वंचोक्तं तदेवं स्वस्योग्रजातेरपि तद्भक्तस्य तत्तोषकस्तुतौ अधिकारः सम्भावितः, यत एवम्भूतोऽहमतो यथामति तोष्यामीत्याह-**तस्मादिति**। यस्माद्भगवान् भक्त्यैकतोष्यस्तस्मान्नीचोऽप्यहं तद्भक्तियुक्तोऽहं अत एव विगतविक्लबः गतशङ्कस्सन् सर्वात्मना करणत्रयैक्येन ईश्वरस्य भगवतो महि महिमानं यथामति गृणामि स्तौमि। किमीश्वरस्तुत्या[3] प्रयोजनमिति शङ्कां निराकुर्वन् तन्महयनुवर्णनं[4] विशिनष्टि येन ईश्वरानुवर्णनेन[5], अनुवर्णितेनेति भावे क्तः, अजया प्रकृत्या गुणविसर्गं गुणकार्यं शरीरमनुप्रविष्टः पुमान्पूयेत शुद्ध्येत् स्तुत्या न तस्य कोऽप्यतिशयः, किन्तु, स्तुवत एवात्मविशुद्धिरूपोऽतिशय इति भावः।।१२।।

एवमात्मनः स्तुतौ अनधिकारं परिहृत्य तत्स्तुतिं प्रतिज्ञाय तं तुष्टुषुःतावत्कोपोपशमं प्रार्थयते-**सर्वे हीति** द्वाभ्याम्। हे ईश! वयमिव यथा वयं तव किङ्कराः तथा अमी सर्वे ब्रह्मादयोऽपि सत्त्वधाम्नस्तव विधिकराः किङ्करा एव। अस्त्वेवं ततः किमत आह उद्विजन्तः त्वत्कोपाद्बिभ्यतो वर्तन्ते। अतो[6] मन्युं यच्छेन्युत्तरेणान्वयः। सत्त्वधाम्न इत्यनेन शुद्धसत्त्वैकतानस्य तव कोपः स्वाभाविको न भवति, किन्तु लोकरक्षणेऽधिकृतस्य तव तद्रक्षणरूपक्रीडार्थमाहित इत्यभिप्रेतं, तदेव व्यनक्ति क्षेमायेति। अस्य जगतः क्षेमाय लब्धपरिरक्षणाय भूतये भोगायाऽलब्धलाभायात्मसुखाय ब्रह्मात्मकस्वात्मानन्दानुभवजसुखाय च भगवतः तवरुचिरैः सुन्दरैः अवतारैः नृसिंहाद्यवतारैः[7] विक्रीडितं, भावे क्तः, विविधा क्रीडा इत्यर्थः। इयं दुष्कृद्विषयक्रोधादिरूपा तव क्रीडा लोकक्षेमाद्यर्थमिति भावः। एवंविधक्रीडया हि दुष्कृद्विनाशद्वारा स्थितपरिपालनमपूर्वश्रेयःप्राप्तिः श्रवणादिना क्रीडामनु भवतो लोकस्य निश्शेषबन्धककर्मक्षयरूपमोक्षद्वारात्मसुखानुभूतिश्च भवेदित्येतदर्थं तव विक्रीडितमिति भावः।।१३।।

यतस्तव विक्रीडितं लोकस्य क्षेमाद्यर्थं तत्तस्माद्धेतोः हे नृसिंह! मन्युं यच्छ उपसंहर। इतःपरं न

1. W omits तथैव 2. A,B,T °र्थे 3. A,B,T °रस्य 4. A,B,T °र्दभिः 5. A,B,T °रगुणानु° 6. A,B,T ततो 7. A,B,T °र्दभिः

मन्युना प्रयोजनमस्तीत्याह-अधुनाऽसुरो मत्पिता त्वया हतः लोकाः निर्वृतिं सुखं इताः प्राप्ताश्च। ननु लोका[1] निर्वृतिं यान्तु नाम लोकान्तर्गतः साधुजनस्तु मत्कृतां इमां भूतहिंसां नाऽनुमोदेत। अत आह साधुरपिलोकः लोकोपद्रवकारि वृश्चिकसर्पादिहत्या मोदेत वृश्चिकसर्पादितुल्यस्य[2] मत्पितुर्हत्या साधुजनोऽपि मोदेतैवेत्यर्थः। हति शब्दः क्तिन्नन्तः। सर्वे ब्रह्मादयो निर्भयाः प्रतियान्तु, स्वस्थानानि प्रतिगच्छन्तु। इतःपरं इदं त्वद्रूपमभयाय जनाः स्मरन्ति।।१४।।

ननु ब्रह्मादय उद्विजन्त इति विशेषेण ब्रह्मादीनामेव क्रोधयुक्तान्मदुग्ररूपाद्भयं ब्रूषे त्वं तु न बिभेषि किमत आह-**नेति**। हेऽजित! तवास्माद्रूपादिति विशेष्याध्याहारः अहं न बिभेमि कथम्भूतात्? आस्यं च जिह्वा च अर्कसदृशे नेत्रे च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्च एतान्यतिभयानकानि यस्मिन्, आन्त्रमय्यः स्रजो यस्मिन्, क्षतजाः रुधिराक्ताः केसरा यस्मिन् तत् क्षतजकेसरं, शङ्कुवदुन्नतौ स्तब्धौ कर्णौ यस्मिंस्तच्छङ्कुकर्णं द्वयोर्बहुव्रीह्योः कर्मधारयः। क्षतजकेसरशङ्कुकर्णनिर्ह्रादेन भीता दिगिभा दिग्गजा यस्मात् तत्, पूर्वेण पुनः कर्मधारयः क्षतजकेसरशङ्कुकर्णनिर्ह्रादभीतदिगिभं तस्मादरीन् भिन्दन्तीति अरिभिन्दि तानि नखाग्राणि यस्मिन्नेवं भूताद्रूपादहं न बिभेमीत्यर्थः।।१५।।

तर्हि कुतो बिभेषि इत्यपेक्षायां इतो बिभेमीत्याह-**त्रस्तोऽस्मीति**। हे कृपणवत्सल! दुस्सहं यदुग्रं संसारचक्रे कदनं तस्मादहं त्रस्तः भीतोऽस्मि। कथम्भूतोऽहं ग्रसतां प्रणीतः ग्रसतामिति कर्तरि षष्ठी ग्रसद्भिः त्वच्छेषभूतं मत्स्वरूपं तिरोधापयद्भिः, देहात्माभिमान-स्वतन्त्रात्माभिमान-ममकारादिभिः तत्र संसारे प्रणीतः प्रापितः[3] तन्मूलभूतैः कर्मभिश्च बद्धः निगलितः हे उशत्तम कमनीयतम! उक्तविधं मां प्रीतः मद्विषयकातिशयप्रीतियुक्तस्त्वं ते तवाङ्घ्रिमूलं प्रति, कथम्भूतम् अङ्घ्रिमूलम्[4]? अपवर्गशरणमपवर्गोपायभूतं कदा नु ह्वयसे, आह्वयसे[5], कदा मां त्वदङ्घ्रिमूलं प्रापयिष्यसि तावन्मामनुवर्तते[6] भयमितिभावः।।१६।।

**विज०** भक्त्या ननु भक्त्यैव यूथपाय गजेन्द्राय। "सेनानेतरि नागेन्द्रे यूथनाथः प्रकीर्तितः" इत्यभिधानम्। अनेन धनादिकमपि भक्त्युपबृंहितं सफलमित्युक्तं भवति।।९।।

इतोऽपि भक्तिरेव हरेः प्रसादे प्रधानसाधनमित्याह-**विप्रादिति**। द्विषड्गुणा द्वादशगुणा एतैर्युक्तात्। "ज्ञानं च सत्यं च दमः शमश्च अमात्सर्यं ह्रीस्तितिक्षानसूया। दानं च यज्ञश्च तपः श्रुतं च महाव्रतं द्वादश ब्राह्मणस्य"

---

1. A,B,T omit लोकः 2. W °कादि 3. W omits प्रापितः 4. W omits अङ्घ्रिमूलं 5. W omits आह्वयसे 6. W °न्ममान्

(भारते) एतेभ्यः प्रवरो द्वादशेभ्यः सर्वामपीमां पृथिवीं प्रशिष्यात् त्रिभिर्द्वाभ्यां एकतो वा विशिष्टो नाऽस्य समोऽस्तीति वेदितव्य इत्येते भक्तिमतएव सम्भवन्ति नाऽन्यस्य, क्वचित्सम्भवेऽप्यन्ततो न तेभ्योऽर्थः स्यात्। "अनेवं विन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव" (बृह.उ.1-4-15) इति श्रुतेः। तस्माद्भक्तिरेव प्रयोजिकेति तात्पर्यम्, सकलं मन आदिकं पुनाति विषयोपरक्तं मलं निरस्य दर्पणवत्स्वच्छं करोति, जगत्पुनातीति वा। "यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः" (कठ.उ. 3-6) इति श्रुतेः। अन्यत्र बाधकमाह नत्विति। भूरिमानोऽहं कर्तेत्यभिमन्ता नैव पुनातीत्यन्वयः। "समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम्। तन्मिथ्या हि न मे कृत्स्नं प्रभावं वेत्थ भारत।। मत्समो हि गदायुद्धे पृथिव्यां नास्ति भारत। नाऽऽसीत्कश्चिदतिक्रान्तो भविता वा न कश्चन" (भारत. 5-54-30, 31) इत्यादि भारते दुर्योधनोक्ताहङ्कारप्रतीतेरेवंविधो भूरिमान इत्यर्थः। "नाऽविरतो दुश्चरितान्नाऽशान्तो नाऽसमाहितः। नाऽशान्तमानसो वाऽपि प्रज्ञानं नैवमाप्नुयात्" (कठ.उ.2-24) इति श्रुतेः। "शमोदमस्तपः शौचं क्षान्त्यार्जवविरक्तताः। ज्ञानविज्ञानसन्तोषाः सन्त्याज्येऽपि द्विषड्गुणाः" (भारते) इति केचित्।"सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम्। ज्ञानं शमो दया ध्यानं विप्रस्यैते द्विषड्गुणाः"-(भारते.) इति केचित्। असम्प्रदायज्ञैः उक्तत्वात् अत्र न ग्राह्यमेतन्मतद्वयमिति।।१०।।

ननु श्वपचं वरिष्ठं इतीदमसम्भावितं, वर्णहीनत्वेन तत्कृतसपर्यास्वीकारानुपपत्तेः। "नाऽहं तथाऽद्मि यजमान हविर्वितानैः" (भाग. 3-16-8) इत्यादौ। अन्यथा कथनाच्चेति। तत्राह-**नैवेति**। अयं प्रभुरविदुषो ज्ञानोपदेशानधिकारिणः पूर्वचीर्णपुण्यनिचयास्तज्ज्ञानेन यथार्थतत्त्वज्ञानिनो वर्णहीनात् जनान्मानं पूजां वृणीते स्वीकरोति इति यत्तदात्मनोऽर्थे अप्राप्तप्राप्तये नैवेत्यन्वयः। कुतः इत्यत उक्तं निजेति। निजलाभेन नित्यानन्देन पूर्ण इति हेतुगर्भविशेषणम्। "कोह्येवान्यात्" (तैम.आ. 2-7) "यो वै भूमा तत्सुखम्" (छान्दो.उ. 7-23-1) इत्यादि श्रुतेः। ननु, स्वार्थाभावे सपर्यास्वीकारे किङ्कारणमिति तत्राह-करुण इति। करुणयतीति करुणः। "देवस्यैष स्वभावोऽयम्" "यमेवैष वृणुते" (कठ.उ. 2-22) इत्यादि श्रुतेः। कर्मणः क्षणभङ्गुरत्वात् कृपया तत्फलप्रदानाय तत्स्वीकारोपचार इति तात्पर्यम्। विद्वद्भिः क्रियमाणं मानं स्वार्थमपि किं न स्यादित्याशङ्क्य विशेषमाह-यद्यदिति। विद्वदविद्वद्भेदमन्तरेण समानो जनः भगवते यद्यन्मानं विदधीत तत्तदात्मने च स्वप्रयोजनायैवेत्युपगन्तव्यम्। अत्र दृष्टान्तमाह-प्रतिमुखस्येति। तथाऽलङ्कृतमुखश्रीः दर्पणादौ प्रतिफलितस्य प्रतिबिम्बलक्षणमुखस्य स्वालङ्कारमन्तरेण श्रीर्लभ्यते तथा स्वबिम्बभूतपरमात्मनो निर्दोषगुणराशिध्यान लक्षणमानेन तत्प्रतिबिम्बत्वात्स्वस्याऽपि निर्दोषसुखलक्षण श्रीर्लभ्यत इत्यर्थः। अनेन ब्रह्मादिजीवराशि

रत्यन्ततुच्छीभूत इति सूचितम्।"श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः" इत्यादेः। अयं तु नरसिंह आत्मन एव न प्रभुः, किन्तु सर्वस्याप्यतोऽखण्डैश्वर्यत्वात् चक्रवर्तीकरमिवाविदुषो जनान्मानं वृणीते। अनेन विद्वज्जनमानाङ्गीकारो व्याख्यातः, स्वतस्सिद्धत्वात्, ननु जनपदात् अर्थादानादिना राज्ञः स्वप्रयोजनोपलब्धिवदीश्वरस्याऽपि तथा स्यात्किम् न इत्याह-निजेति। ननून्मत्तः किमीश्वर इति तत्राह-करुण इति। कस्यार्थे मानकारणमिति तत्राह यद्यदिति। कथमिव यथा मुखस्य मुख्यस्य स्वामिनो राज्ञो मानलक्षणा श्रीः प्रतिमुखस्य राजमुखमनुवर्तमानस्य जनपदस्य परोपद्रवराहित्येन धनधान्यादि समृद्धिलक्षणा श्रीर्भवति तथा हरिविषया क्रियमाणा मानश्रीरनुरक्तजनस्य संसारशृङ्खलान्मोक्षलक्षणा श्रीर्भवतीत्यर्थः। "बलमानन्द ओजश्च" इत्यादेः। ननु, हरेः जन्मादिमत्त्वेन विशेषमाहात्म्यायोगात् देवदत्तवत्, अतो युक्तं विप्रादीतरजनपरिगृहीतत्वमिति तत्राह-नैवेति। अयं नृसिंह आत्मनो देहात्प्रभुः प्रभूत उत्पन्नो नैव, किन्तु स्तम्भात्, दृष्टत्वादिति शेषः। अदेहस्य जननायोगात् जननवतएव विषयसुखानुभवोपपत्तेः अतः कथं हरेः विषयानुभूतिरिति तत्राह-निजेति। सत्यं परतश्चेत्प्राप्तिः नाऽयं तथा निजो लाभो यस्य स तथा स्वतस्सिद्धानुभवश्च पूर्णो व्याप्तश्च। नहि व्याप्तस्य परिच्छिन्नगर्भवासादिकं युज्यते। "प्रादेशमात्रं पुरुषम्" इत्यादौ परिच्छेदप्रतीतेरितिचेत् "तस्यान्ते सुषिरं सूक्ष्मम्" (तैत्ति.ना. 13 अनु) इति श्रुतेराकाशवदुपपत्तेः उपाधिकल्पनायां अनवस्थादिदोषापत्तेः अतः स्वभृत्यभाषितं सत्यं कर्तुं स्वस्य सर्वत्र व्याप्तिं दर्शयितुं इतरत्र जातवद्दर्शनमसुरजनमोहार्थमित्यादि ज्ञातव्यम्। स्वभृत्यभाषितस्य सत्यकरणायेत्येतत्कथमवगतमिति तत्राह-मानमिति। अविदुषः स्वरूपाज्ञानिनोऽस्माज्जनान्मानं वृणीते न केवलमस्माज्जनात्, किन्तु सर्वस्मादपि योग्यादित्याशयेनाह यद्यदिति। शेषं पूर्ववत्। श्वपचोऽपि भक्त एव वरीयान्नाभाक्तस्तस्य द्वेषित्वेन दम्भार्थत्वेन विहितपूजाया अस्वीकारादित्यतो वाह-नेति। अयं हरिरविदुषो नित्यज्ञानिनोऽसुरजनादात्मनः स्वस्य मानं लोके दम्भाभिप्रायेण कृतपूजां नैव वृणीते, प्रत्युत अनर्थं च करोतीत्याह-करुण इति। 'कॄ विक्षेपे' इति धातोः असुरजननिरसनशीलत्वादन्धं तम एव प्रापयतीत्यर्थः। "परा पूर्वेषाम्" इति श्रुतेः। तस्मादसुरजनकृतसपर्याऽनर्थजननीत्याशयेनाह यद्यदिति। आत्मने अनर्थायेति शेषः। यथा मुखश्रीः प्रधानभटयोग्यश्रीः प्रतिमुखस्याल्पस्य प्रतिभटस्य अनर्थाय मरणलक्षणाय, स्यादिति शेषः।।११।।

तस्माद्भक्तिरेव प्रयोजिकेत्याह-**तस्मादिति**। यस्मादचिन्त्यमहिमत्वात् सर्वात्मनेश्वरस्य स्वरूपं स्तोतुं न शक्नोमि तस्माद्विगतविक्लबो निर्धूतचापल्योऽहं यथामनीषं भक्त्या गृणामीत्यन्वयः। स्तुतेः फलमाह-नीचइति। अजया प्रकृत्या नीचगुणविसर्गं संसारमनुप्रविष्टं पुमान्येनानुवर्णितेन गुणसङ्कीर्तनेन पूयेत शुद्धो भवति, हि यस्मात्तेन संसारमोक्षो भवतीत्यर्थः।।१२।।

यथामनीषं गृणामीत्युक्तं विवृणोति-**सर्व** इति। अमी वयं ब्रह्मादयश्च सर्वे सत्त्वधाम्नस्तत्र विधिकरा हि "विष्णोस्तिष्ठन्ति प्रदिशाविधर्मणि" इति श्रुतेः तत्र विशेषोऽस्ति यथा वयं उद्विजन्तस्तथा ब्रह्मादयो नैवोद्विजन्तः प्रधानभक्तत्वात्, कुत एतद्द्वयं विज्ञापयत इति तत्राह क्षेमायेति, अस्य हरे रुचिरावतारैः विक्रीडितम् अस्य जगतः क्षेमाद्य नेकप्रयोजनाय स्यादिति यदनेनास्मन्निधनेन अस्माकमुद्वेगो ब्रह्मादिरक्षणेन तेषामनुद्वेगश्च जायत इत्यर्थः।।१३।।

अथैवं कर्तव्यमित्याह-**तद्यच्छेति**। अद्य त्वया असुरो हतश्च यस्मात्तस्मान्मथ्नाति कलुषीकरोति-ज्ञानमिति। मन्युः कोपः इतरेषां एवं विधो, हरेस्तु स्वेदाधरस्फुरणादि विडम्बनलक्षणादिः तं यच्छ संहर, प्रसन्नभावं दर्शयेत्यर्थः। मन्युं च त्वद्विषयं ज्ञानं च यच्छ अनुगृहाणेत्यर्थः। "मन अवबोधने" इति धातोरिति वा त्वद्विषयं पूजालक्षणं यज्ञमिति वा। "मन्युः कोपे क्रतौ युद्धे" इत्यभिधानम्। सज्जनानन्दाकाङ्क्षाऽपि भगवत्प्रसादकरीत्या-शयेनाह-मोदेनेति। वृश्चिकसर्पलक्षणासुरहननेन साधुः सज्जनोऽपि मोदेत साधुरपि मोदेतेति वा योगविभागः, वृश्चिकसर्पलक्षणासुरहत्या निर्वृतिमानन्दमिताःप्राप्ताः सर्वे लोकाः प्रतियान्तु, स्वगृहमिति शेषः। गत्वा किङ्कुर्वन्तीति तत्राह-रूपमिति। नृसिंह! जनाः तव नृसिंहाकारं रूपं दुरितनिवृत्तिलक्षणाय विभवाय स्मरन्तीत्यन्वयः। साधुरहिंसापरोऽपि वृश्चिकादिहत्या मोदेत। किम्पुनः सर्वलोकोपद्रवकृदसुरहत्या अतोवाह-मोदेतेति। हत्यामिति पाठे साधुः शास्त्रतत्त्वज्ञो दुष्टवृश्चिकादिहत्यां यथा मोदेत तथाऽऽहमपि भगवद्द्वेषित्वेन दुष्टत्वात्पितृहत्यां मोद इत्यभिप्रेत्यातोवाह-मोदेतेति। नृसिंहेति सम्बोधनं नामकरणाभिप्रायेणेति ज्ञातव्यम्।।१४।।

पूर्वं अज्ञातनामत्वादिति तव कोपाकुलरूपदर्शनाद्भीत्या लोकस्य स्मरणं न सम्भाव्यत इतिचेत तच्छमनं कर्तव्यमित्युक्तं तन्मम ज्ञाततत्त्वस्य विषयो न भवति मम भयं संसारचक्रादित्याह-**नाऽहमिति**। भयानकस्य ते तव रूपान्नबिभेमीत्यन्वयः। कीदृशात्? जिह्मे वक्रे अग्नियुक्ते नेत्रे यस्य तत्तथा, जिह्मया भ्रुकुट्या रभसो यस्य तत्तथा, उग्रे दंष्ट्रे यस्य तत्तथा, जिह्माग्निनेत्रं च जिह्मा भ्रुकुटी रभसं च उग्रदंष्ट्रञ्च तत्तथा, तस्मादान्त्रमेव स्रक्माला यस्य तत्तथा, तस्मात्क्षतजेन रुधिरेण सिक्ताः केसराः यस्य तत्तथा, शङ्कुवत्स्थूणवत्स्तब्धौ कर्णौ यस्य तत्तथा, क्षतजकेसरं च शङ्कुकर्णं च तत्तथा, तस्मात् निर्ह्रादेन भीता दिगिभा दिग्गजा यस्य तत्तथा, तस्मात् अरिभिन्दिनखाग्राणि यस्य तत्तथा, तस्मात् अरीन् भिन्दन्तीत्यरिभिन्दि, नखानामग्राणि, दुःसहं चोग्रं च संसारचक्रं च यत्तेन सह कदनात् हिंसालक्षणाद्युद्धात् उशत्तम, सत्यकाम! भीतानामपवर्गं भीतिजनक संसारनाशनम् अरणं शरणं समियां यामि।।१५,१६।।

**यस्मात् प्रियाप्रियवियोगसयोगजन्म शोकाग्निना सकलयोनिषु दह्यमानः।**
**दुःखौषधं तदपि दुःखमतद्धिया[1]ऽहं भूमन्भ्रमामि वद[2] मे तव दास्ययोगम्।।१७।।**

**सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिञ्चगीताः[3]।**
**अञ्जस्तितर्म्य[4]नुगृणन्गुणविप्रमुक्तो[5] दुर्गाणि ते पदयुगालय हंस सङ्गः।।१८।।**

**बालस्य नेह[6] शरणं पितरौ नृसिंह! नाऽऽर्तस्य[7] चागदमुदन्वति मज्जतो नौः।**
**तप्तस्य तत्प्रतिविधिर्य[8] इहाञ्जसेष्टः[9] [10-]तावद्विभो[-10] तनुभृतां त्वदुपेक्षितानाम्[11]।।१९।।**

**यस्मिन्यतो यर्हि येन च यस्य यस्मात्[12] यस्मै यथा यमुत[13] यस्त्वपरः परो वा।**
**भावः[14] करोति विकरोति पृथक्स्वभावः सञ्चोदितस्तदखिलं भवतः स्वरूपम्।।२०।।**

**श्रीध०** दास्ये सति मत्प्रतीतिरिति चेत्तर्हि नानायोनिषु क्लिश्यमानस्य मम दास्यज्ञानाभावात्त्वमेव तदुपायदर्शात प्रार्थयते-**यस्मादिति।** यस्मात्प्रियैरप्रियैश्च यथासंख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोऽस्मि। दुःखस्य प्रतीकारः कार्य इति चेत्तत्राह-दुःखस्यौषधं प्रतीकारस्तदपि दुःखमेव। एवमप्यतद्धिया देहाद्यभिमानेन मुह्यामि। अतो हे भूमन्! विभो! मे तव दास्यरूपं योगं निस्तारोपायं वद।।१७।।

ननु दास्ययोगे[15] प्रवृत्तस्याऽपि तदन्तरायभूतानां पूर्वोक्तनानादुःखानां कुतः परिहारः? तत्राऽऽह-**स** इति। सोऽहं त्वद्दासस्सन् भो नृसिंह! तव लीलाकथाः अनुगृणन् दुर्गाणि महादुःखान्यञ्जसा तितर्मि तरामि न गणयिष्यामीत्यर्थः। तत्र हेतुः-गुणैः रागादिभिः विशेषेण प्रमुक्तस्सन्। तत्कुतस्ते पदयुगमेवालयो येषां भक्तानामतः[16] त एव हंसा ज्ञानिनः तैः सङ्गो यस्य मम सोऽहम्। कथम्भूतस्य कथाः? तत्राह-प्रियस्येत्यादि। कुतो ज्ञाताः? विरिञ्चेन गीताः तत्सम्प्रदायप्रवृत्ताः। तथा चाथर्वणी श्रुतिः "देवा ह वै प्रजापतिमब्रुवन्" इत्यादि। दास्ये प्रवृत्तस्य भगवदनुग्रहेण[17] सत्सङ्गस्ततो वीतरागतया भगवद्गुणानुवर्णनं ततश्च न दुःखाभिभवः स्यादिति वाक्यार्थः।।१८।।

ननु दुःखैः तप्तस्य तत्प्रतीकारो[18] लोके प्रसिद्ध एव किं मद्दास्यादिना? तत्राह-**बालस्येति**। भो नृसिंह! तप्तस्य तत्प्रतिविधिः दुःखप्रतीकार इहलोके योऽञ्जसेष्टः सत्त्वयोपेक्षितानां तावदेव क्षणमात्रमेव न तु आत्यन्तिकः,

1 W °ताऽथ 2 W दिश 3 W °ञ्चि 4 M,Ma °स्तराम्य 5 W युक्तो 6 M,Ma वे° 7 M,Ma आ° 8. M,Ma तर्पणांत्र° 9. M,Ma °र्द° 10- -10 M,Ma तद्वत्प्रभो; W तावद्विभो 11 M,Ma त्वत्कृपासकानाम् 12. M,Ma omit यस्मात् 13. A,B,G,J,T °दु° 14 M,Ma भावं 15 A,B,J योगेन 16 A,B,J omit अतः 17 B,J भव° 18. B,J एतत्प्र°

तदेवाऽऽह-बालस्य पितरौ शरणं रक्षकाविह न भवतस्ताभ्यां पाल्यमानस्याऽपि तस्य दुःखदर्शनात्। क्वचिदजीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च। न चार्तस्य रोगिणोऽगदमौषधं शरणं कृतेऽप्यौषधे मृत्युदर्शनात्। न चोदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात्। अतस्त्वमेव शरणमित्यर्थः. अथवैवं[1] काक्वा व्याख्येयम्-तप्तस्य तत्प्रतिविधिः य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किमञ्जसेष्टः? अपि तु नेष्ट एव। यद्वा, यस्तावदिह प्रतिविधिरिष्टः स किमञ्जसा नैवाञ्जसेत्यादि योज्यम्। बालस्येत्यादि पूर्ववदेव।।१९।।

ननु क्वचित्कुतश्चित् केनचित् कदाचित् कश्चित् रक्षकोऽपि दृश्यत एवेत्याशङ्क्य तत्राऽपि तत्तद्रूपेण[2] त्वमेव रक्षक इत्युररीकृत्य तस्यैव सर्वात्मनामाह-**यस्मिन्निति**। अपरोऽर्वाचीनः पित्रादिः परो ब्रह्मादिर्वा भावः कर्ता तत्तत्कारकैः यद्यत्करोति तत्सर्वं भवत एव स्वरूपं न तु पृथक् यस्मिन्नधिकरणे यतो निमित्तात् यर्हि यस्मिन्काले येन करणेन येन हेतुकर्त्रा सञ्चोदितश्च यस्य सम्बन्धि यस्मादपादानाद्यस्मै सम्प्रदानाय यदीप्सिततमं यः कर्तेत्येवं सप्तविभक्त्यर्थाः। यथा येनप्रकारेणेति क्रियाविशेषणभूतानामव्ययानामर्थः। पृथक्स्वभावः सत्त्वादि प्रकृतिं[3] करोत्युत्पादयति विकरोति रूपान्तरं नयतीति।।२०।।

**वीर०** ननु भयं चेत्तद्दुःखदर्शनजं किं तत्संसारचक्रे दुःखमित्यपेक्षायां तद्दर्शयन्नात्मानं विशिनष्टि-तस्मादित्यर्धेन। येन कर्मणाऽहं बद्धः तस्मात् कर्मणो निमित्तात् प्रियैरप्रियैश्च विषयैः यथासंख्यं वियोगसंयोगौ ताभ्यां जन्म उत्पत्तिर्यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोऽहं,[4] अतीव दुःखितोहमित्यर्थः। भ्रमामीत्यन्वयः। तर्हि दुःखनिमित्तकर्मनिवृत्त्युपायमनुतिष्ठेत्यपेक्षायामन्तरेण भवद्दास्यमन्यन्निश्शेषदुःखनिवृत्त्युपायभूतं नास्त्येव। कथञ्चित्सदपि दुःखात्मकमेवेत्याह-दुःखौषधमिति। यद्दुःखस्यौषधं प्रतीकारात्मकं तदपि दुःखं दुःखात्मकमित्यर्थः। दुःखस्य प्रतीकारोहि दुःखनिमित्तदुरितनिरसनेन भवति निश्शेषदुरितनिवर्तकं च किञ्चिदन्यदस्ति। प्रतिपदोक्तप्रायश्चित्तादिकं न निश्शेषदुरित[5]निवर्तकं प्रत्युत दुःखात्मकं चेत्यर्थः। अतो हे भूमन्! अतद्धिताय तज्जनहिताय न भवति, अतद्धियाऽहमिति पाठे अहं देहात्माभिमानेन भ्रमामि, अतः तव दास्ययोगं दिश तव नित्यदास्यसम्बन्धं देहि। वदेतिपाठे उपदिशनित्यप्रबुद्धत्वद्दास्य सम्बन्धवान् यथा भवेयं तथा मां अनुगृहाणेत्यर्थः।।१७।।

एवं कोपोपशमः प्रार्थितः भगवद्दास्यमेव दुःखौषधमिति चोक्तम्[6] -"पूयेत येन हि पुमाननुवर्णितेन" (भाग. 7-9-12) इति भगवद्वर्णनमात्मविशुद्धि[7]लक्षकमित्युक्तम्। अथ त्वदनुग्रहेण प्रबुद्धनित्यभवद्दास्य सम्बन्धोऽहं

---

1. H,V ᳵचैवं 2. H,V omit तत् 3. A,B,J ᳵतिः 4. A,B,T omit अहं 5 W omits दुरित 6. W ᳵक्तः 7. A,B,T फलक

यथामति त्वां स्तुवन् दुःखनिमित्तकर्मभिः विमुक्तः सर्वाणि दुःखानि यथा तरेयं तथा अनुगृहाणेत्याह- सोऽहमिति। सोऽहं त्वदनुग्रहेण प्रबुद्धनित्यभवद्दास्यसम्बन्धोऽहं सुहृदो हितैषिणः प्रियस्य मम निरतिशयप्रीतिविषयस्य परदेवतायाः तवब्रह्मादिभिःगीताः लीलारूपव्यापारविषयाः कथाःअनुगृणन् गुणविप्रयुक्तः सत्त्वादिगुणमूलक कर्मबन्धैः रागदिभिर्वा विमुक्तः ते तव पदयुगलमेवालयमाश्रयो येषां ते भक्ताः त एव हंसाः [1]परिशुद्धा जनाः[1] तैः सङ्गो यस्य तादृशः अञ्जः तिर्तमि सुखेन अतितरामि तथाऽनुगृहाणेत्यभिप्रायः। अत्राऽयं क्रमः-तावत् त्वदनुग्रहेण सत्सङ्गः ततो भगवद्गुणवर्णनं ततो विरागः ततः त्वद्भक्त्या दुःखनिमित्तकर्मक्षयद्वारा संसृतेः तरणमिति।।१८।।

एतत्सर्वं त्वदनुग्रहेणैव भाव्यम्, न तु उपायान्तरेणेति कैमुत्यन्यायेन वक्तुं तावत् त्वदुपेक्षितानां न दुःखप्रतिक्रियाऽस्तीत्याह-**बालस्येति**। हे नृसिंह! इह लोके बालस्य त्वदुपेक्षितस्य पितरौ मातापितरौ न शरणं न रक्षकौ, एवमार्तस्य रोगपीडितस्य त्वदुपेक्षितस्य अगदमौषधं न शरणं, तथोदन्वति समुद्रे मज्जतस्त्वदुपेक्षितस्य नौः न शरणं, पित्रादिषु सत्स्वपि बालादीनां विनाशदर्शनादिति भावः। अतो हे विभो! इह लोके तमस्य दुःखितस्य तत्प्रतिविधिः तापप्रतीकारो यः तावत्प्रसिद्धः, स त्वदुपेक्षितानां[2] तनुभृतां[3] किमञ्जसेष्टः? अपि तु नष्ट एव। बालादिदुःखोपशमने एव पित्रादयो न प्रभवः, किम्पुनः निश्शेष दुःखोपशमने न प्रभव इत्यतस्त्वदनुग्रहेणैव निश्शेषं दुःखात्मकसंसृति निवृत्तिरिति। संसृतिचक्रादुत्तारकः त्वमेवेतिभावः।।१९।।

यतः त्वमेवम्भूतोऽतः संसृतिचक्रपतितं त्वत्प्रपन्नं मामुत्तारयेति विज्ञापयिष्यन् त्वत्प्रपत्तिमन्तरेण न कोऽपि आत्मानं तारयितुं प्रभुरिति वक्तुं तावदाचार्यादिमुखेन कारितमपि त्वच्छरणवरणं त्वत्कारितमेव यतः तत्तत्क्रियाश्रयकर्त्रादिकारकषट्कसम्बन्धिशरीरकत्वेन च [4]कालशरीरकत्वेन च[4] त्वमेवाऽवस्थित इत्याह- **यस्मिन्निति**। यस्मिन्नित्यधिकरणकारकनिर्देशः, यत इति हेतुत्वशक्त्याश्रयं निर्दिश्यते, यर्हीत्यनेन कालः, येनेति करणत्वशक्त्याश्रयं, यस्येति सम्बन्धी, यस्मादित्यपादानत्वशक्त्याश्रयं यस्मै इति सम्प्रदानत्वशक्त्याश्रयं, यथेत्यनेनोक्ताधिकरणादिगतः प्रकारः, यदिति कर्मत्वशक्त्याश्रयं उतापि च इत्यनेन प्रयोजककर्तासञ्चोदित इत्यनेन, प्रयोज्यकर्ता तावेवापरः परश्च। यद्वा, पर उत्कृष्टः अपरोऽवमः भावः, पदार्थः सप्रकारकारकषट्करूप सम्बन्धिरूपः कालरूपश्च यो यः पदार्थः पृथक्स्वभावः, प्रविभक्तः स्वभावो यस्य सः पृथक्स्वभावः कर्तृकर्मद्वारा तन्निष्ठक्रियाश्रयत्वमधिकरणत्वं द्रव्यगुणक्रिया[5]न्यतमनिरूपितत्वे तत्कारणत्वे च सति सव्यापारनिर्व्यापारनिष्ठत्वं हेतुत्वं धातूपात्तव्यापारजन्यफलाव्यवहितपूर्वव्यापाराश्रयत्वं करणत्वं, सम्बन्धसामान्याश्रयत्वं सम्बन्धित्वं,

1- -1 W omits 2. A,B,T add त्वामनाश्रितानां 3 A,B,T add शरीररमेव पोषणपराणां 4- -4 W omits 5. B °यान्विना °

प्रकृतधातूपात्तव्यापारानाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्वं, दानस्य कर्मणा क्रियया वा सम्बद्ध्यमानत्वं सम्प्रदानत्वं, धातूपात्तव्यापारव्यधिकरण तज्जन्यफलाश्रयत्वं कर्मत्वं, प्रकृतधातूपात्तव्यापारानुकूल व्यापाराश्रयत्वं प्रयोजकत्वं, धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमित्येवं सप्तविभक्त्यर्थानां प्रविभक्तस्वभावः, कालस्य त्वात्मव्यतिरिक्त परिच्छेदकत्वं स्वभावः। एवं पृथक्स्वभावः उच्चावचरूपः करोति उत्पादयति, विकरोति विनाशयति उत्पादनाश्रयो विनाशनाश्रयो वा भवति।तदखिलं कारकषट्कादिरूपं वस्तु भवतः स्वाभाविकं रूपं शरीरमित्यर्थः। एवं च सर्वभावान्तरात्मतया तच्छरीरकतयाऽवस्थितस्य तवैव सर्वे निग्रहानुग्रहादयः सद्वारकव्यापारा इति भावः।।२०।।

**विज॰** देवादियोनौ सुखसम्भवात्तस्मात् संसारचक्रात् कथं बिभेषीति तत्राह-**यस्मादिति**। देवादि सकलयोनिषु प्रियस्य वियोगोऽप्रियस्य संयोगः तयोर्जन्म यस्य स तथा स च शोकाग्निः तेन प्रियादिवियोगादिना जन्मना च यश्शोकाग्निस्तेन वा दह्यमानोऽहं यत्, दुःखपरिहारलक्षणं कर्म तदपि दुःखरूपमिति मत्वा अतद्धिया न तद्धीः अतद्धीः तया, दुःखपरिहारौषधज्ञानेन भ्रमामि। कुत्रगतेन केनौषधेन वा मे सुखं स्यादित्यनवस्थितिं प्राप्तोऽस्मीति यस्मात्तस्मादिदमेव संसारनाशनमिति मत्वा भवन्तं प्रार्थये। किं तदाह-वदेति। तव दास्यलक्षणं योगमौषधं वद अनुगृहाणेत्यन्वयः।।१७।।

मदुपासनाद्युपायमन्तरेण दास्यमात्रेण तव किं स्यादित्याशङ्क्य बहुप्रयत्नसाध्यामुपासनां अन्तरेणोपायोऽस्तीत्याह-**सोऽहमिति**। गुणमयसंसाराद्विप्रमुक्तः पादयुगलमेवाऽऽलयमाश्रयो येषां ते तथा ते च हंसाः निस्सङ्गाः परमहंसाः तेषां सङ्गः सेवालक्षणो यस्य स तथा, दुर्गाणि कलत्रादीनि नरकाणि।।१८।।

नृसिंह! आर्तस्येत्यनेन सन्ध्यकरणेन दृष्टान्तदार्ष्टान्तिकयोः महद्वैलक्षण्यमस्तीति ज्ञापनाय अज्ञानजनबुद्ध्यवताराय चेति ज्ञातव्यम्। निदाघतप्तस्य जलादिना तर्पणविधिः आप्यायनलक्षणपरिहारः ज्वराद्यभिभूतस्य ज्वरादिपरिहारप्रकारो यत् इष्टः इष्टसाधनञ्च।।१९।।

ब्रह्माद्यन्यतम इष्टः किं न स्यादित्याशङ्क्य कर्तृत्वाद्यभिमतस्य ब्रह्मादेः सत्ताया अपि यदा यदधीनत्वं प्रामाणिकं तदा सर्वस्माद्धरेरिष्टत्वं किं वक्तव्यमिति भावेनाह-**यस्मिन्निति**। अपरः कालादिः यः परो ब्रह्मादिर्वा यस्मिन्नधिष्ठाने स्थित्वा यतो मृदादेः यर्हि यस्मिन्काले येन चक्रसलिलादिना यस्यादृष्टादेः सहायेन यस्मै जलाहरणाद्यर्थं यथाविधिना, यं भावं घटादिपदार्थं करोति, विकरोति सामान्यतो विशेषतो वा। कीदृशः पृथक्स्वभावः? कार्याद्विलक्षणस्वरूपः सञ्चोदितः त्वादृशेन पुरुषेण प्रेरितः तदखिलं कार्यकारणलक्षणं सर्वं भवतः स्वरूपञ्च

त्वदधीनसत्तात्मकमित्यन्वयः। "कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैव च। विष्ण्वधीनं यतः सर्वं सर्वरूपस्तदुच्यते" (ब्रह्मतर्के) इति वचनात् न भेदोऽत्रेति बोद्धव्यम्।।२०।।

माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणानुमतेन पुंसः।
छन्दोमयं यदजयार्पितषोडशारं संसारचक्रमज कोऽति[1]तरेत् त्वदन्यः।।२१।।

सत्वं हि नित्यविजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः।
चक्रे विसृष्टमजयेश्वर षोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम्।।२२।।

दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानां आयुः[2]श्रियं विभव इच्छति यान्जनोऽयम्।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रूविस्फूर्जितेन लुलिताः स तु ते निरस्तः।।२३।।
तस्मादमूस्तनुभृतामहमाशिषो ज्ञ आयुःश्रियं विभवमैन्द्रियमाविरिञ्च्यात्।
नेच्छामि ते वि[3]लुलितानुरु विक्रमेण कालात्मनोपनय मां निजभृत्यपार्श्वम्।।२४।।

श्रीध॰ अतोऽन्यस्य रक्षकस्याभावात् असंसारित्वाच्च नित्यमुक्तस्त्वमेव मां शरणागतं रक्षेति प्रार्थयते- मायेति द्वाभ्याम्। त्वदंशस्य पुंसोऽनुमतेनेक्षणरूपेणानुग्रहेण [4]मनो मनःप्रधानं लिङ्गं मया सृजति। कथम्भूता? कालेन [5]क्षोभिताः नोदिता गुणा यस्याः। कथम्भूतं मनः? कर्ममयं कुर्वद्रूपं बलीयो दुर्जयं छन्दोमयं वेदोक्त कर्मप्रधानं च। अजया जीवस्याविद्यया तद्भोगार्थमर्पिताः षोडशाराः [6]षोडशविकारा यस्मिन् यदेवम्भूतं संसार चक्रात्मकं मनः तत्कोऽतितरेत्। भो अज! त्वदन्यः त्वत्तःपृथक्स्थितः त्वामभजन्नित्यर्थः।।२१।।

ननु ममाऽपि मायासम्बन्धात् कर्तृत्वाद्यविशेषाच्च त्वत्तः को विशेष इत्याह-स इति। स्वधाम्ना चिच्छक्त्या नित्यं विजिता आत्मनो बुद्धेः गुणा येन स हि त्वम्। यतः कालो मायाप्रेरकः अत एव वशीकृता विसृज्यानां कार्याणां विसर्गाणां साधनानां च [7]शक्तिः येन। अत इक्षुदण्डवत् निष्पीड्यमानं मामुपकर्ष स्वसमीपं नय।।२२।।

ननु लोकपालानां भोगान् भुङ्क्ष्व पित्र्यं वा राज्यमिदं दास्यामि, किमिति संसारादुद्विजसे तत्राह-दृष्टा इति त्रिभिः। श्रियः सम्पदः। विभव उद्भवः आयुरादयो दृष्टा इति काक्वा [8]तेषां तुच्छत्वं उक्तम्, तदेवाह- येऽस्मत्पितुः कोपहास[9]विजृम्भितभ्रूभङ्गमात्रेण विध्वस्ताः स च त्वया निरस्तः।।२३।।

1. H,V च ° 2. H,V श्रियो 3. M,Ma °ता उरु 4. H,V omit मनो 5. H,V चोदिताः 6. A,B,J omit षोडश ° 7. A,B,J शक्तयः 8. A,B,J omit तेषां 9. A,B,J विकृत

यस्मादेवं, **तस्मादिति**। तस्मादाशिषो भोगान् ज्ञः तत्परिपाकवित्[1] अहमैन्द्रियमिन्द्रियैः भोग्यं ब्रह्मणां भोगमभिव्याप्य किमपि नेच्छामि ते कालात्मना ऊरुविक्रमेण विलुलितान् विध्वस्तानणिमादीन् अपि।।२४।।

**वीर०** अथ त्वत्प्रपदनमन्तरेण कः पुमानतितरेत् संसारचक्रमित्याह-**मायामन** इति। त्वदन्यः त्वत्समाश्रयणविमुखःकः पुमान् संसारचक्रमतितरेत्, नकोपीत्यर्थः। संसारचक्रं चक्रवत्परिवर्तमानं संसारं चक्रशब्देन तत्र पतितस्य दृढतरावलम्बनमन्तरेण न यथा ततो निष्क्रमणं सम्भवति तथा संसारे पतितस्य आलम्बनभूतं श्रीभगवन्तं भवन्तमन्तरेण न तस्मादतितरणं सम्भवतीत्यभिप्रेतम् संसारं चक्रत्वेन रूपयन् तं विशिनष्टि, यद्यस्मिन्मनसि नाभिरूपे पुंसः परमपुरुषस्य अजया भगवन्मायया हेतुभूतया अर्पिताः षोडशज्ञान कर्मोभयेन्द्रियव्यापाराः दशप्राणापानादिरूपाः पञ्च प्राणवृत्तयः मनोवृत्तिश्चेति षोडश, एत एव अराणि यस्य तत्र तत्तज्ज्ञानकर्मोभयेन्द्रियव्यापाराणां मनोव्यापारानुविद्धत्वस्वाभाव्यात् तद्व्यापारपूर्वकत्वाच्च तदायत्तत्वेन तदर्पितत्वं मनोवृत्तेस्तु साक्षान्मनस एवाश्रयत्वात्तदर्पितत्वं, यद्यपि मनःपर्यन्तानां इन्द्रियाणां प्राणायत्तस्थितित्वेन प्राणव्यापारपूर्वकत्वेन च प्राणवृत्तीनां साक्षात्परम्परया वा न मन आश्रयः तथाऽपि मनोव्यापाराभावदशायां विद्यमानाऽपि प्राणवृत्तिरज्ञाता, अत एवाऽसत्प्रायेति, तद्वृत्तिसत्ताज्ञानस्य मनोव्यापारपूर्वकत्वात्तस्याः तदर्पितत्वमवगन्तव्यम्, यद्वा, अजया हेतुभूतयाऽर्पिताः षोडशैकादशेन्द्रियाणि पञ्चभूतानीति षोडशविकारा एवाराणि यस्य यदेतत्संसृतिचक्रमित्यन्वयः। संसारस्य सर्वेन्द्रियव्यापारपूर्वकत्वात् तद्वृत्तमवगन्तव्यम्। अस्मिन् पक्षे नाभित्वेन न किञ्चिदपि रूपितम्। यद्वा अजया नाभिरूपया हेतुभूतया चार्पिताः षोडशैकादशेन्द्रिय पञ्चभूतात्मकानि अराणि यस्येत्यर्थः। संसारचक्रस्यार्पितषोडशारत्वेऽजाया हेतुत्वमुक्तम्, सा किं साक्षादेव हेतुः? नेत्याह-मायेति। मनस्सृष्टिद्वारा हेतुरिति भावः। किं तर्हि तस्याः सहकारिकारणमत आह-कालेनेति। कालेन सह माया मनस्सृजति कालसह कृता प्रकृतिर्मनः सृजतीत्यर्थः। कालोऽपि न स्वरूपेण प्रकृतेर्मनस्सर्गे सहकारी अपि तु गुणक्षोभद्वारेति वदन्, कालं विशिनष्टि-चोदितगुणानुमतेनेति। चोदिताः कालेन क्षोभिताः सत्त्वादयः गुणाः तैरनुमतेन सहकृतेन स्वचोदितगुणत्रयसचिवेन कालेन सहकृता भगवतो मायामनस्सृजति। संसारचक्रस्य दुस्तरत्वं भगवदाभिमुख्ये तु सुतरत्वं चाविष्कर्तुं मनो विशिनष्टि-कर्ममयमिति त्रिगुणात्मक प्रकृति परिणामरूपत्वेन स्वयमपि त्रिगुणात्मकत्वाद्रजोमयतया पुण्यपापरूपकर्मविषयप्रवृत्तिप्रचुरं बलीयः, अनतिवर्त्यदोषं

1. A,B,J °पाकं विद्वान्

छन्दोमयं सत्त्वानुयानाच्छास्त्रावगति साधनप्रचुरम्। इच्छामयमित्यर्थस्तु अनुपपन्नः, छन्दशब्दः इच्छावापी, न तु छन्दश्शब्दः अनेन सत्त्वप्राचुर्येसति श्रीभगवदाभिमुख्येन संसृतिचक्रं सुतार्यमित्यभिप्रेतम् एवम्भूतं मनः सृजतीत्यन्वयः। तदेवं मनोदोषात् संसारानतिवृत्तिः त्वत्समाश्रयणविमुखस्येत्युक्तं भवति। त्वदन्यः कः संसारचक्रमतितरेत् इत्यनेन त्वदनन्यस्त्वतितरेदेवेति सूचितम्।।२१।।

तदेवाविष्कुर्वन् त्वदनन्यं मां संसारचक्रान्निर्गमयेति प्रार्थयते-**सत्वं हीति**। यः स्वमाया मनस्सर्गद्वारा संसृतिचक्रे जीवलोकं पातयति, स त्वमजया स्वकीयया मायया षोडशारे चक्रे संसारात्मके विसृष्टमत एव नितरां पीड्यमानं अधुना त्वां प्रपन्नं मां हे विभो! अपकर्ष संसृतिचक्रात् बहिर्[1]निर्गमय "य एव बन्धकः स एव मोचकः" इति न्यायेन त्वमेव ततो निर्गमयितुं समर्थ इति भावः। सामर्थ्यमेव दर्शयंस्तं विशिनष्टि-नित्येत्यादिना। आत्मगुणाः स्वशरीरभूतप्रकृतिगुणा नित्यं विजिता आत्मगुणा येन नित्यास्पृष्टदेहधर्मेण स्वधाम्ना स्वस्वरूपेणैव। यद्वा, विजितात्मगुणो यः स्व आत्मा तस्य धाम्ना प्रकाशेनैव वशीकृतविसृज्यविसर्गशक्तिः विविधं सृज्या विसृज्याः जीवास्तेषां विसर्गे शक्तिः यस्याः सा प्रकृतिः शक्तिर्वशीकृता येन स तथोक्तः। कालशरीरकश्च वशीकृतसंसृतिर्निमित्त प्रकृतित्वान्मोचयितुं त्वमेव प्रभुरिति भावः। नित्यविजितात्मेत्यादिना विसृज्य जीववर्गात् ब्रह्मादिस्तम्बपर्यन्तात् वैलक्षण्यमुक्तम्। अतः संसारिजीववर्गे न कोऽपि तन्मोचने दक्षः। न हि स्वयं कारागृहबद्धोऽन्यं तादृशं मोचयितुं प्रभुरित्युक्तं भवति।।२२।।

ननु, त्वं बालस्सन्नेव किं संसारात् निर्विद्यसे भुङ्क्ष्व भोगानित्यत्राह-**दृष्टा** इति त्रिभिः। हे विभो! अयं संसारिजनो यानिच्छति कामयते ते अखिलधिष्ण्यपानां इन्द्रादीनामायुरादयो मया विविच्य दृष्टाः श्रियः भोग्यभोगोपकरणादि समृद्धयः विभवः त्रिलोकाधिपत्यरूपमैश्वर्यम्। आयुरादयो दृष्टा इति काक्वा तुच्छत्वमुक्तं, तदेवाह- ये इति। येऽस्मत्पितुः कोपहासविकृतभ्रूभङ्गमात्रेण विलुलिताः ध्वस्ताः, स तु मत्पिता त्वया हतो निरस्तः।।२३।।

यस्मादायुरादयो मत्पितृदृष्टान्तेन तुच्छत्वेन दृष्टाः तस्मात्तनुभृतां देहिनाममूः आयुरादिरूपाः आशिषः ज्ञः तत्परिपाकं विद्वान्। अज्ञ इति च्छेदे, अज्ञस्सन्नहमैन्द्रियमिन्द्रियैरनुभाव्यमन्यदपि सुखमाविरिञ्चादब्रह्म-

1. W र्बहिर्गं°

णोऽनुभाव्यं अभिव्याप्याऽपि तथा कालात्मना कालरूपेण उरुविक्रमेण विपुलपराक्रमेण विपुलपादविक्षेपेण वा विलुलितान् विध्वस्तानणिमादीनपि न इच्छामि। अतो निजभृत्यानां स्व[2]पार्षदानां पार्श्वं समीपमेव मां प्रापय।।२४।।

**विज०** संसारचक्रं भक्त्या जनितं श्रीहरिप्रसादं विना दुस्तरं, प्रसादश्च निगृहीतमनसां दुस्साध्यो मनोमयत्वात् संसारचक्रस्य, अतः स एव सम्पाद्य इत्याशयेन संसारस्वरूपं निरूपयति-**मायेति**। चित्प्रकृत्याभिमत मायाप्रकृतिः उदितगुणानुमतेनोद्भूतरज आदि गुणानुसारिणा कालेन प्रेरितेनादृष्टेन च सहकारिणा पुंसो जीवस्य कर्ममयं नानाविकारकोशमत एव बलीयो निग्रहीतुमशक्यं छन्दोमयं सङ्कल्पविकल्पलक्षणेच्छात्मकं यन्मनः सृजति। हे अज! तन्मनोमूलं संसारचक्रं त्वदन्यः त्वदनुग्रहरहितः पुरुषः कोऽतितरेत्? न कोऽपीत्यन्वयः। केवलात्परिकरोपेतस्य बलाधिक्यं स्यादित्यभिप्रायेणाह अजयेति, अजया प्रकृत्याऽर्पिताः कल्पिता भिन्नवर्तिना मनसा सह षोडशेन्द्रियाणि पञ्चप्राणा एवारा दलस्थानीया यस्य तत्तथा तत्।।२१।।

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" (विष्णु.पु. 6-7-28) इति श्रुतेः सम्यक् नियुक्तं मुक्तिर्निमित्तं च त्वदनुग्रहेण स्यादित्याशयेनाह-**सत्वमिति**। यस्त्वं स्वधाम्ना नित्यं विजिता आत्मनो देहस्य गुणा जननादिलक्षणा धर्मा जीवस्य वा दुःखादिलक्षणा येन स तथा यश्च कलयति जानाति सर्वमिति कालो, वशीकृता स्वसमवेता विसृज्यस्य सुरनरादिनानाविधस्य जगतो विसर्गशक्तिः विविधसृष्टिः यस्मिन्स तथा। हे ईश्वर! स त्वं षोडशारे संसारचक्रे लिङ्गशरीरे वा अजया विसृष्टमुत्पन्नं, अत एव दुःखेन निष्पीड्यमानं तत्परिहाराय शरणं प्रपन्नं मां ततोऽपकर्ष उत्तर विभो। समुद्धरणसमर्थ!।।२२।।

त्वया कस्मात् स्वर्गाद्यैश्वर्यं नेष्यते, इत्याशङ्क्य तस्य नश्वरत्वादित्याशयेनाह-**दृष्टा** इति। अखिलानां धिष्ण्यपानां इन्द्रादीनां विभवो हिरण्यलक्षणोऽर्थः अस्मत्पितुः हिरण्यकशिपोः कुपितहासो दुर्हासस्तेन विजृम्भितयोः स्फुरितलक्षणयोः भ्रुवोः विस्फूर्जितेन विकासविशेषेण लुलिता विनाशिताः, स तु हिरण्यकशिपुरपि ते त्वया।।२३।।

यस्मात्क्षणभङ्गुराः तस्मात् ज्ञ। अनित्या इति जानन्नैन्द्रियं-श्रोत्रादीन्द्रियभोगयोग्यमिन्द्रियस्य विद्यमानं वा अविरिञ्चात् विरिञ्चपर्यन्तं निजभृत्यानां मुक्तानां पार्श्वम्।।२४।।

---

1 W omits स्व०

**कुत्राशिषः श्रुतिसुखा मृगतृष्ण[1]रूपाः क्वेदं कलेबरमशेषरुजां विरोहम्[2]।**
**निर्विद्यते न तु जनो यदपीति[3] विद्वान् कामानलं मधुलवैः शमयन्दुरापैः।।२५।।**
**क्वाऽहं रजःप्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानुकम्पा।**
**न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः।।२६।।**
**नैषा परावरमतिर्भवतो ननु स्यात् जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथाऽपि।**
**संसेवया सुरतरोरिव ते प्रसादः सेवानुरूप[4]मुदयो न परावरत्वम्।।२७।।**
**एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रपतन्प्रसङ्गात्।**
**कृत्वाऽऽत्मसात् सुरर्षिणा[5] भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम्।।२८।।**

**श्रीध॰** किञ्च। वर्तमानकालेऽपि न भोगार्हा इत्याह-कुत्रेति। श्रुतिः श्रवणं तदेव सुखं यासु ताः मृगतृष्णिकावन्मिथ्या भूताश्चाशिषः क्व? अशेषाणां रुजां रोगाणां विरोहम्[6] उद्भवस्थानं क्वचेदं कलेबरम्? एवं चेत्सर्वेऽपि जनः किं न विरज्यते तत्राह-यदपि यद्यपि इत्येवं विद्वानयं जनः तथाऽपि न निर्विद्यते विरक्तो न भवति। कुतः? काम एवाऽनलः तं मधुतुल्यैः सुखलवैः दुस्साधैरपि[7] शमयन् कामाग्निशमनव्यग्रस्य निर्वेदेऽप्यवकाशो नास्तीत्यर्थः। यद्वाऽचिन्त्यमिदं त्वन्मायाचेष्टितमिति भावः।।२५।।

तर्हि त्वं कथं निर्विण्णोऽसि अनर्हेऽपि[8] मयि प्रवृत्तया त्वत्कृपयैवेत्याशयेनाऽऽह-क्वेति। रजसैव प्रभवो जन्म यस्य सः। सप्तम्यन्तं वा कुलविशेषणम्। तमोऽधिकं यस्मिंस्तस्मिन् [9-]सुरेतराणां[-9] असुराणां कुले जातोऽहं क्व? क्व च तवानुकम्पा। तामेवाह-ब्रह्मादीनां शिरसि यो नैवाऽर्पितः स पद्मवत्सकलसन्तापहरः करः प्रसादः पुरुषार्थरूपो मे शिरस्यर्पित इति यत्। यत्[10] ययानुकम्पयेति वा।।२६।।

[11]इदानीं न च त्वयीदमतिचित्रमित्याह-**नैषेति**। एते ब्रह्मादय उत्तमा अयमसुरो नीच इत्येषा परावरमतिः जन्तोः प्राकृतस्य यथातथा भवतो नैव स्यात्। अत्र हेतुः जगतः आत्मनः सुहृदश्च। तर्हि सर्वत्र सत्प्रसाद एवं रूपश्च किं न स्यात्तत्राह-संसेवया तव प्रसादो भवति, तत्र च सेवानुरूपं तत्तदिच्छानुसारेण धर्मादीनामुदयो

---

1. A,B,G,J,T ॰ष्णि 2. A,B,G,J,T ॰हः 3. M,Ma ॰ह 4 M,Ma उ॰ 5. H,V ॰र ऋषिणा 6. A,B,J ॰हः 7. A,B,J ॰ध्यै 8 H,V omit अनर्हेऽपि 9--9 A,B,J omit 10. H,V omit यत् 11 H,V omit इदानीं

भवति। एवं [1-]प्रसादवैचित्र्ये[-1] सत्यपि वैषम्याभावे दृष्टान्तःसुरतरुः यथा सेवकस्यैव सङ्कल्पानुसारेण फलं ददाति, न च विषमः तद्वत्। न परावरत्वमत्रकारणमिति शेषः।।२७।।

एतच्च त्वद्भृत्यकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मां नयेत्याशयेनाऽऽह-एवमिति। यथा त्वयाऽऽनुकम्पितोऽस्म्येवं नारदेनात्मसात्कृत्वा पूर्वमनुगृहीतः सोहं कथं नु त्वद्भृत्यसेवां विसृजामि। कथम्भूतोऽनुगृहीतोऽस्मि? प्रभवः एवाहिः तेन युक्तः कूपः तस्मिन् कामानभितः कामयमानं जनं [2]निपतन्तमनुतप्तसङ्गात्प्रपतन्त्योऽहम्। तदेवं त्वद्भृत्यस्य नारदस्यानुग्रहेण त्वयाऽत्यन्तमनुकम्पितोऽस्मि। अयमेव च मम परमोऽनुग्रहो न पुनः इदमतितुच्छं मत्प्राणरक्षणादि।।२८।।

**वीर॰** किञ्च। श्रुतिः श्रवणं, तदेव सुखं यासु ताः, अत एव मृगतृष्णिरूपाः मरीचिकावदवस्थिताः आशिषः कुत्र? पुरुषार्थाभासा आशिषः क्वेत्यर्थः? अशेषाणां रुजां रोगाणां विरोहः उद्भवस्थानं क्वचेदं कलेवरं, दुर्घटमेतदिति भावः। एवंचेत्सर्वोऽपि जनः किमिति संसारात् न निर्विद्यते तत्राह-निर्विद्यत इति। यद्वैषयिकं सुखं इतीत्थं मृगतृष्टिका तुल्यं विद्वान् जानन्नपि न निर्विद्यते विद्वानपीत्यपि शब्देन अविदुषो नितरां निर्वेदाभावः सूचितः। विदुषोऽप्यनिर्वेदे हेतुं वदन् विद्वांसं विशिनष्टि-दुरापैः दुःखेनाऽपि लब्धुमशक्यैः मधुलवैः वैषयिक सुखलेशैः काम एव अतलः तमुपशमयन् विषयासक्तस्सन् विद्वानपि न निर्विद्यत इत्यर्थः। विषयासक्तस्य निर्वेदेऽप्यवकाशो नास्तीति भावः।।२५।।

एवं तत्प्राप्तये तदनुग्रहं सम्प्रार्थ्य स्वशिरसि दुर्लभेन तत्करपल्लव निधानेनात्मनः कृतार्थतामाविष्करोति क्वेति। ईश! तमोऽधिके तमःप्रचुरे रजःप्रभावे रजसः उत्पत्तिस्थाने रजस्तमःकार्यकामक्रोधलोभादि मोहप्रचुरे सुरेतरकुले असुरकुले जातोऽहं क्व? क्व च तवानुकम्पा, दुर्घटमेतदित्यर्थः। किं तदित्यत्राह-ब्रह्मादीनां शिरसि यो नैवाऽर्पितः तेषामपि दुर्लभ इति भावः सः प्रसादः प्रसादसूचकः [3]पद्मवत् तापहरः करः मम शिरस्यर्पित इति यदेतत् दुर्घटमिति भावः। अतोऽहमलभ्यलाभेन कृतार्थोऽस्मि इति तात्पर्यम्।।२६।।

नैतावता तव वैषम्यादि दोषप्रसङ्ग इत्याह-नैषेति। यथा या जन्तोः प्राकृतस्य परावरमतिः उत्कृष्टापकृष्टबुद्धिः विषमाबुद्धिरिति यावत् सैषा बुद्धिर्भवतो नैव स्यात्। तदभावे हेतुं वदन् तं विशिनष्टि, जगत आत्मसुहृदः आत्मनोऽन्तरात्मनः सुहृदो हितैषिणश्च। आत्मन इत्यनेन जगतःशरीरत्वमवगम्यते। नहि कस्मिंश्चिच्छरीरे

---

1--1 A,B,J omit 2. H,V omit नि 3. A,B,T ॰मिव

आत्मनः प्रीतिरन्यस्मिन्न प्रीतिरिति भावः। **सर्वस्याऽपि जगतः स्वाभाविकसुहृद इति वाऽर्थः**। तर्हि सर्वेष्वेकरूपो मत्प्रसादः किन्नस्यात्तत्राह-यद्यप्येवम्भूतः त्वं तथाऽपि वैषम्यरहितस्याऽपि ते[1] तव संसेवया प्रसादो भवति तत्र सेवानुरूपं तत्तदपेक्षानुसारेण धर्मादिपुरुषार्थानामुदयो भवत्यपेक्षानुरूपफलदत्वे दृष्टान्तः सुरतरोरिवेति। यथा सुरतरोः कल्पद्रुमस्य तत्तत्सेवकापेक्षानुसारेण फलप्रदत्वं, न च तावता तस्य वैषम्यं तद्वत् न परावरत्वं सर्वेष्वेकरूपप्रसादाभावे परावरत्वं वैषम्यं न कारणमित्यर्थः।।२७।।

एवमात्मनः तत्प्रसादेन कृतार्थतामाविष्कृत्याऽथ न केवलमधुनैव त्वत्प्रसादविषयोऽहं जातः, किन्तु यदा मातृगर्भस्थं मामनुजिघृक्षता त्वया सञ्चोदितेन सुरर्षिणाऽनुगृहीतस्तदैव त्वदनुग्रहविषयोऽभवम्। अतो जन्मन आरभ्य त्वयाऽनुगृहीतोऽहं त्वद्भृत्यपार्श्वं न विसृजामि[2] इत्याह-**एवमिति**। हे भगवन्! यः सुरर्षिणा नारदेन आत्मसात्कृत्वा आत्माधीनं कृत्वा " तदधीन वचने च " (अष्टा. 5-4-54) इति सातिप्रत्ययः। पूर्वं विषयपरवशत्वेन त्वदधीनं मां स्वाधीनं कृत्वेत्यर्थः। यद्वा,"अभिविधौ सम्पदा च" (अष्टा. 5-4-53) इति सातिः। अभिविधिश्च किञ्चिदन्यथात्वं पूर्वं भगवत्प्रातिकूल्येन स्थितं मां किञ्चित्त्वदनुकूलं कृत्वेत्यर्थः। गृहीतः तत्त्वत्रयोपदेशेनाऽनुगृहीतः सोऽहं इदानीं तव भृत्यसेवां दासानुदास्यं कथं नु विसृजे न कथञ्चिदपि त्यक्ष्यामीत्यर्थः। कथम्भूतोऽनुगृहीतोऽस्मि प्रभवः संसार एवाऽहिकूपः सर्पजुष्टकूपस्तस्मिन् कामाभिकामं काम्यन्त इति कामाः विषयाः शब्दादयस्तान् कामयमानं जनं[3] निपतितमनु अनुसृत्य तत्प्रसङ्गात्तस्य तत्र निपतितजनस्य यः प्रकृष्टः सङ्गस्तस्माद्धेतोः प्रपतन्नहं विषयासक्तचित्तजनसङ्गात् प्रभवाहिकूपे पतन्नहमित्यर्थः।।२८।।

**विज०** इतोऽपि संसारसुखं हेयमित्याह-**कुत्रेति**। श्रुतिं कर्णं सुखयन्तीति श्रुतिसुखा मृगतृष्णारूपा उष्णोदकसदृशाः अशेषाणां रुजां रोगाणां विशेषेण रोहे। यस्मात्तत्तथा। दुरापैः मधुलवैः उदबिन्दुकल्पैः सुखलंशैः कामाग्निं शमयन् शान्तिं कर्तुमिच्छन्, यदपि पर्यायेण कलेवरं विषयसुखं चेत्युभयं नश्वरं विद्वानयं जनः इहोभयस्मिन्नपि न तु निर्विद्यते निर्वेदं नैव प्राप्नोतीत्यन्वयः।।२५।।

हरेः भक्तवात्सल्यं प्रकटयन् प्रह्लादः तत्त्वज्ञानविधुरः इव अयोग्यजनमोहायाह-**क्वाऽहमिति** हे ईश्वर! तमोगुणप्रचुरे रजोगुणोत्पत्तिहेतौ अस्मिन् सुरेतरकुले असुरकुले जातोऽहं क्व? भक्तानुग्रहलक्षणा तवानुकम्पा क्व? मिथो विरुद्धस्वभावत्वात्। किञ्चोद्यमत्रेति तत्राह-न ब्रह्मण इति। निरन्तरसेवा मे दूरत्वेन इतरस्माद-

1 A,B,T omit ते 2 A,B,T ०जे इ० 3 W omits जनं

धिकोदयोऽपीदानीं रमादीनां शिरसि नार्पितो मम शरसि तव पद्मकरः पद्मोदरप्रभावत्पाणिनिधानलक्षणः प्रसादोऽर्पित इति यत्तस्माच्चित्रं तव चरितमित्यर्थः। "श्रीर्ब्रह्म ब्राह्मीवीन्द्राहित्रिकं तत्स्त्रीपुरुष्टुताः तदन्ये च क्रमात्सर्वे सदा मुक्तौ सृतावपि। हरिभक्तौ च तज्ज्ञाने सुखेन नियमेन तु। परतः स्वतः कर्मतो वा न कथञ्चित्तदन्यथा" (ब्रह्मतर्के) इति वचनादुक्त एवाऽर्थ इति।।२६।।

सेवाधिक्यमेव फलाधिक्ये कारणं न त्वाभिजात्यादिकमित्यभिप्रेत्याह-**नैषेति**। यथा जन्तोर्या परावरमतिः **तथैषा भवतो न स्यात्** न तु कुत आत्मसुहृदः "तदेतत्प्रेत्य" (बृह.उ. 1-4-8) इति श्रुतेः। लोके यद्यप्याभिजात्यादिकं परावरत्वे निमित्तं तथाऽपि, लोकविलक्षणमहिमत्वात् भवतः प्रसादः जगतः संसेवया सेवानुगुणः फलाधिक्योदयःस्यात् "यावत्सेवापरे तत्त्वे तावत्सुखविशेषता" इति स्मृतेः। परावरत्वं च सेवानिमित्तं "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" (भ.गी. 6-41) इति वचनात्।।२७।।

नन्वेवं सेवानुरूपफलोदये शास्त्रीये सिद्धे त्वं किङ्करोषि इति तत्राह-**एवमिति**। फलोदयस्य सेवानुविधायित्वात् सोऽहं तव भृत्यसेवां कथं नु विसृजे, मम हितरूपत्वादित्यतः, त्वदत्यागे कारणमाह-जनमिति। प्रभवाहिकूपे जन्माख्यसर्पविषकलिलसंसारगर्ते पतितं कामाः विषयाः तानभिकामयत इति कामाभिकामः तं जनं अनु तस्य जनस्य प्रकर्षेण सङ्गः जन्मलक्षणः तस्मात्प्रपतन् आत्मसात्कृत्वा आत्मीयेष्वेक इति बुद्धिं कृत्वा सुरऋषिणा गृहीतोऽनुगृहीतो यः सोऽहमिति यस्मात्तस्मादिति शेषः।।२८।।

**मत्प्राणरक्षण मनन्त! पितुर्वधश्च[1] मन्ये स्वभृत्यऋषिवाक्य मृतं विधातुम्।**
**खड्गं प्रगृह्य यदवोचदसद्विधित्सु स्त्वामीश्वरो मदपरोऽवतु कं हरामि।।२९।।**

**एकस्त्वमेव जगदेतदमुष्य यत् त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च।**
**सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तै रवसित स्तदनुप्रविष्टः।।३०।।**

**त्वं वा इदं सदसदीश भवां स्ततोऽन्यो माया यदात्मपरबुद्धि रियं ह्यपार्था।**
**यद्यस्य जन्म निधनं स्थिति रीक्षणं च तद्वै तदेव वसुकाल[2] वदुष्टितर्वोः[3]।।३१।।**

1. A,B,G,J,T,W °श्च 2. M,Ma खलु 3. A,B,G,H,J,T,V °द°

**न्यस्येद मात्मनि जगद्विलयाम्बुमध्ये [1]शेषे[1] स्वतो निजसुखानुभवो निरीहः।**
**योगेन मीलितदृगात्मनि [2]वीतनिद्र [3]स्तुर्ये स्थितो [4]न तु तमो न गुणाश्च [5]युङ्क्षे।।३२।।**

**श्रीध०** न चेदं त्वया मदनुग्रहार्थं कृतं किन्त्वन्यार्थमित्याह-**मदिति** भो अनन्त! यदेतन्मत्प्राणरक्षणं मां हन्तुमुद्यतस्य मत्पितुर्वधश्च तदुभयं स्वभृत्यऋषिवाक्य मृतं सत्यं विधातुमित्यहं मन्ये। कुतः ? यद्यस्मा दसदयुक्तं विधित्सुः खड्गं प्रगृह्याऽवोचत्। किं मदपरो मद्व्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु, तव कं शिरोऽहं हरामि इति। पाठान्तरेऽप्ययमेवार्थः, यद्यदाऽवोचत्तदा मत्प्राणरक्षणमिति वाऽन्वयः। एतच्च सत्यं विधातुं निजभृत्यभाषितमित्यत्रैव बहुधा व्याख्यातम्।।२९।।

न चेदं पक्षपातेन रक्षणं दैत्यहननं च त्वयि स्वाभाविकं, किन्तु मायागुणोपाधिकं सर्वात्मके त्वयि स्वत स्तदयोगादित्याह-**एक** इति। एतच्च जगत् त्वमेवैकः यद्यतोऽमुष्य आदावन्ते च पृथगवस्यासि विरामं [6]करोषि सन्मात्रतया कारणत्वेनावधित्वेन च वर्तस इत्यर्थः। अतो मध्यतश्च त्वमेव॥ कुत स्तर्हि भेदप्रतीति स्तत्राह-निजमायया गुणपरिणामात्मकमिदं जगत् सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्गुणैर्हेतुभूतैर्नानेव [7]स्रष्टेव रक्षक इव हन्तेव चावसितः प्रतीतः। तदुक्तं स्कन्धोपक्रमे- "निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः स्वमायागुणमाविश्य बाध्यबाधकतां [8]गतः" (भाग. 7-1-6) इत्यादिना।।३०।।

ननु, यद्येतत् जगदहमेव तर्हि जगतो वैषम्येण मम वैषम्यमपि किं न स्यादित्यत आह-**त्वमिति**! त्वं वा त्वमेवेदं सदसत्कार्यकारणात्मकं जगन्नतुत्वत्तः पृथक्। भवांस्तु ततोऽन्य आद्यन्तयोः पृथगवस्थानात् यद्यस्मादेव मतोऽयमात्मीयोऽयं पर इति या बुद्धिः साऽपार्था मायैव। [9]कार्यकारणयोः परमं[9] कारणाभेदं दृष्टान्तेन साधयति। यद्यतो यस्य जन्म ईक्षणं प्रकाशश्च यस्मिन्निधनं च स्थितिश्च तद्वै तदेव। वसुकाल [10]वसुकालवदष्टितर्वोः[10] अष्टि बीजं कारणं, तरुः कार्यं, तयोर्यथा वसुकालमात्रत्वम्। अयमर्थः कालशब्देन नीलत्वाद्यसाधारण गुणयोगात् पृथ्वी। वसुशब्देन वस्तुमात्रं भूतसूक्ष्मम् [11]रसादि जलं वा[11] तत्र तरोर्यथा पृथ्वीमय-बीजमात्रत्वं तस्य च यथा भूतसूक्ष्ममात्रत्वमेवं सर्वमपि कार्यकारणात्मक जगत्परमकारणात्मकमेवेति। तथा च

---

1--1 .A,B,G,J,T °शेषेऽऽत्मना; H,V शेषेतमां; M,Ma शेषासनो 2 A,B,G,H,J,T,V °पी° 3. M,Ma स्तुर्य 4. M,Ma ननु 5. M,Ma युङ्क्ष

6. H,V करिष्यसि 7. A,B,J omit स्रष्टेव 8. H,V °द। 9--9 A,B,J omit 10--10 A,B,T omit 11--11 A,B,J omit

पारमर्षं सूत्रम् "तदनन्यत्वमारम्भण शब्दादिभ्यः" (ब्र.सू. 2-1-14) इति। श्रुतिश्च "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दो.उ. 6-4-1) इति।।३१।।

तत्र तावदन्ते पृथगवस्थानं दर्शयति **न्यस्येदमिति**। इदं जगत् [1]आत्मन्येव[1] निक्षिप्य स्वसुखमेव [2]अनुभवो यस्य[2] निष्क्रियस्सन् प्रलयोदकमध्ये शयनं करोषि। तर्हि किं जीवस्येव ममापि तमोवृत्तिरूपा निद्राऽस्ति। नहि, योग एव तु बहिर्वृत्त्यभावसाम्यान्निद्रोच्यत इत्याह-योगेन मीलिते दृशौ येन। आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन। यतस्तुर्येऽवस्था[3]त्रयातिरिक्ते स्वरूपे स्थितस्त्वं न तु सुप्त इवात्म[4]नि तमो युङ्क्षे योजयसि न पश्यसि न जाग्रत्स्वप्नयोरिव गुणान्विषयांश्चेत्यर्थः।।३२।।

**वीर॰** यो नारदमुखेन मयि कृतः स एव परमोऽनुग्रहः, न चेदमिति तुच्छम् ; मत्प्राणरक्षादिरूपं, न चेदं त्वया मदनुग्रहार्थं कृतं किन्त्वन्यार्थमित्याह-**मत्प्राणरक्षणमिति**। हे अनन्त! यदेतन्मत्प्राणरक्षणं मत्पितृवधश्चेति तदुभयं स्वभृत्यऋषिवाक्यम् ऋतं सत्यं [5]यथा भवति तथा[5] विधातुं कर्तुं कृतमित्यहं मन्ये। स्वभृत्यऋषिवाक्य मित्यत्र निजभृत्यभाषित मित्यत्रेवाऽर्थो द्रष्टव्यः। किञ्च, यदस्मत्पिता विधित्सुः, मद्वधमिति शेषः। मां जिघांसुरित्यर्थः खड्गं प्रगृह्य मत्तोऽन्यश्चेदीश्वरस्त्वद्रक्षकोऽस्ति तर्हि स त्वामिदानीमवतु रक्षतु, तव कं शिरो हरामीति यदवोच दुक्तवान्, तदीश्वरान्तरराहित्यवचः असदसत्यं च विधातुं मत्प्राणरक्षादिकं त्वया कृतमित्यहं मन्ये इत्यर्थः।।२९।।

एवं कोपोपशमन प्रार्थनानुकूलोक्तं स्वाभिप्रेतं तद्दास्ययोगं सम्प्रार्थ्य इदानीं कृत्स्नचिदचिदात्मक जगदन्तरात्मानं तच्छरीरकं तदुत्पत्तिस्थितिलयकारणं तदनन्यं स्तौति-**एक** इति। एतत्परिदृश्यमानं जगत् चिदचिदात्मकं कृत्स्नं जगदेकस्त्वमेव। एतदित्यनेन विभक्तनामरूपं चिदाचिदात्मकं जगन्निर्दिश्य तस्य त्वं शब्दवाच्यब्रह्मणोऽनन्यत्वं साध्यते। "तदनन्यत्वमारम्भणशब्दादिभ्यः" (ब्र.सू. 2-1-14) इत्यत्र। यथैक इत्यनेन अविभक्तनामरूप चिदचिच्छरीरकत्वं कारणावस्थावस्थितमुच्यते, यथा "एकमेवाद्वितीयम्" (छान्दो.उ. 6-2-1) इत्यत्रैकशब्देन। तत्र हि वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्वं प्रतिसम्बन्धैक्यं एकचिदचिच्छरीरकत्वं कारणावस्थावस्थित मुच्यते, यथा "एकमेवाऽद्वितीयम्" (छान्दो.उ. 6-2-1) इत्यत्रैकशब्देन। तत्रहि वक्ष्यमाणनामरूपविभाग निबन्धन बहुत्वप्रतिसम्बन्धैक्यं ह्येकशब्दार्थः। अत्राऽप्येतच्छब्देन प्रसिद्ध परामर्शिना यदभिप्रेतं नामरूपविभागप्रयुक्तं बहुत्वं, तत्प्रतिसम्बन्ध्येकत्वं तद्विभागाभावनिबन्धनमुच्यते तदयमर्थः-यथा कारणावस्थायां घटशरावादि

1--1 A,B,J आत्मनेव आत्मनि 2--2 A,B,J अनुभवन् 3 A,B,J त्रयातीते 4. A,B,J ॰ना 5--5 W omits

नामरूपविभागरहित एकत्वेनावस्थितो मृत्पिण्डः पश्चात् घटादिरूपेण परिणमन्, नामरूपविभागविभक्तस्तेभ्योऽनन्य एव, एवं त्वमपि कारणावस्थायां नामरूपविभागानर्हचिदचिच्छरीरकतयैकत्वेनावस्थितो देवादिनामरूपविभागार्हस्थूल चिदचिच्छरीरकत्वेन परिणमंस्ततोऽभिन्न इति कार्यकारणयोरनन्यद्रव्यत्वात्त्वत्कार्यभूतजगदनन्यस्त्वं कार्यत्वकारणत्वयोस्सतो द्रव्यस्यावस्था विशेषरूपत्वेन सर्वावस्थास्वनुस्यूतं द्रव्यमेकमेवेतिभावः। तदेव सहेतुकमुपपादयति, यत् यस्मात्त्वममुष्य जगत आद्यन्तयोरवस्थयोः पृथगवस्थस्य आत्मानमिति शेषः। पृथक् मध्यावस्थारहितमात्मानमवस्यसि पर्यवसितं करोषि जगत आदौ सृष्टेः पूर्वं तस्यान्ते प्रलये चाऽऽत्मानं पर्यवशेषयसि, ततो मध्यतः मध्यावस्थायाञ्च त्वमेव। तथाहि कटकमुकुटादिकारणतया कटकाद्यवस्थातः पूर्व मवस्थितः स्वर्णपिण्डः कटकाद्यवस्थायाः पर्यवशेषितो मध्यतः कटकाद्यवस्थाया स्तदवस्थावतो द्रव्यान्न भिद्यते तद्वदिति भावः। एवं जगतोऽभिन्नत्वोपपादनेन जगदुपादानत्व मुक्तम्। अथ तन्निमित्तकारणत्वं वदन् उपादानत्व प्रयुक्तविकारित्वादि दोषपरिहारं सूचयन् कार्यावस्थायां नानात्वेनावस्थानञ्चाह सृष्ट्वेति। गुणव्यतिकरं सत्त्वादिप्राकृतगुणपरिणामात्मकमिदं जगत् निजमायया आत्मीय सङ्कल्परूपज्ञानेन सृष्ट्वा तत्सृष्टं जगदनुप्रविष्टो-ऽन्तरात्मतयाऽनुप्रविष्टः "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" (तैत्ति.उ.2-6) इति श्रुत्युक्तरीत्या तावत्स्वानुप्रवेशेनैव सृष्टं जगच्चिदचिदात्मकं पुनः संरक्षणोपयुक्तसङ्कल्परूपज्ञानद्वारान्तरात्मतयाऽनुप्रविष्टः तैः स्वशरीरभूतैः चिदचिदात्मकैः देवादिकैः शरीरैर्नानेव भिन्न इवावसितः प्रतीतः। अतो देव मनुष्यादिभेदभिन्नं जगत्त्वमेवेति भावः। सृष्ट्वानुप्रविष्ट इति सृष्ट्यनुप्रवेशयोः एककर्तृकत्व कथनेन जगन्निमित्तकारणत्वं तच्च निष्कृष्टविशेषांश-भूतस्वरूपस्यैवेति च फलितं, येनाकारेणानुप्रवेश स्तेनैवाकारेण स्रष्टृत्वमपि। एवञ्च विशिष्टाकारेणानुप्रवेशः तेनैवाकारेण स्रष्टृत्वं हि त्वाप्रत्ययस्वारस्या दवगम्यते। अनुप्रवेशश्च विशेष्याकारेणेति तेनैवाकारेण स्रष्टृत्वमपि। एवञ्च विशिष्टाकारेणोपादानत्वं विशेष्याकारेण तु निमित्तकारणत्वमित्युक्तं भवति। अत एव चेदं सृष्ट्वेतीदंशब्दनिर्दिष्टं सृष्टिं प्रति कर्मभूतं जगत् चिदचिदुभयात्मकमेव साक्षादुत्पत्त्याद्यवस्थाश्रयमित्यवगम्यते, अनुप्रविष्ट इत्यनेन तत्तदवस्थानिर्वोढुतयाऽन्तरात्मतयाऽनुप्रवेश कथनेन, स्वविशेषणीभूतचिदचिद्द्वारा तद्गतोत्पत्त्याद्यवस्थाश्रयत्व मवगम्यते, अनुप्रविष्ट इत्यनेन आत्मत्वकथनेन साक्षाद्देहगत विकाराऽस्पर्शश्चोक्तः। अत एवोपादानत्व प्रयुक्तविकारित्वादिदोषश्च परिहृतः। जगतः शरीरत्वकथनेन शरीरशब्दबुद्धीनामाकृत्यधिकरण न्यायेन आत्मपर्यन्तत्वलाभोऽपि तस्य जगदनन्यत्वे हेतुरित्यक्तं भवति।।३०।।

ननु, त्वत्पित्रादयश्चतुर्मुखादिकमेवेश्वरं मन्यमानाः कृत्स्नं जगत्तत्कारणकं तदनन्य मभ्यदधत। त्वन्तु मदेककारणकं मदभिन्नं च जगन्मन्यसे तदेतद्विरुद्धमित्याशङ्कायां देहात्मबुद्धिवज्जीवेश्वरबुद्धेः भ्रान्तिरूपतां वदन्नुक्तमेव कार्यकारणयोरनन्यत्वं दृष्टान्तमुखेन दर्शयति-**त्वमिति**। हे ईश! सदसदात्मकं चिदचिदात्मकम्[1]इदं जगत्त्वमेव चिदचिदात्मकजगत्कारणभूत स्तदनन्यश्चेश्वरस्त्वमेव, [2]नाऽन्य ईश्वर इत्यर्थः। ईशेति सम्बोधन स्वारस्यादिदं जगत्कारणभूत स्तदनन्य श्चेत्त्वमेवेत्यर्थः[2]। आत्मनि जीवात्मनि परबुद्धिर्या ईश्वरबुद्धिः सा अपार्था अर्थशून्या मायाऽविद्याकार्यभूता अज्ञानमूला भ्रान्तिरूपेति यावत्। देहात्मवादवज्जीवेश्वरवादो[3]ऽपि भ्रममूल एवेत्यर्थः। यद्यत एवं तत स्तस्माज्जीवादन्य एव भवानीश्वरः। कर्मवश्यस्य जीवस्य एवंविधजगन्निमित्तोपादान-कारणत्वासंभवान्मुक्तस्य जगद्व्यापारवर्जनाच्चेति भावः। अतः चिदचिदात्मकं जगत्वमेव। ननु, मत्कारणकत्वमात्रेण कथं मदनन्यं जगत् तत्राह-यदिति। जन्म उत्पत्तिः, निधनं नाशः, स्थितिः पालनम्, ईक्षणं प्रकाशः, जन्मादिशब्दै स्तद्धेतुर्लक्ष्यते, यस्योत्पत्तिस्थितिविनाशप्रकाशानां युद्धेतुभूतं तद्वै तदेव तत्कार्यं स्वोपादानकारणादव्यतिरिक्तम् यद्वा, यद्यतः यस्य जन्मादयः तत्तदेव, तत्र दृष्टान्तद्वयमाह-वसुकालवदुष्टितर्वोरिति। वसुशब्दो वसुमतीं पृथ्वीं लक्षयति, यथा भानुशब्दो भानुमन्तं [4]लक्षयति प्रतिपादयति तद्वत्। उष्टिः प्रभातकालः तरुर्वृक्षः तयोर्जन्मादि हेतुभूतकालवद्वसुमतीवदिति व्युत्क्रमेणाऽऽन्वयः यथा प्रभातादिकालावयवाः स्वोपादानभूतमहाकालादनतिरिक्ताः यथा च वृक्षः पृथिव्या अनतिरिक्तः तद्वदित्यर्थः। "खलु कालवदुष्टितर्वो"रिति पाठे सत्येवं योजना-ईश्वरो जगदुपादानं निमित्तं चातस्तद्[5]द्वन्दे दृष्टान्तः। कालः प्रभातादिकालावयवानां कालतत्त्वमुपादानं, वृक्षादीनां तु निमित्तं यथा प्रभातादिः कालाव्यतिरिक्तः यथा वृक्षश्चाऽभूदस्ति भविष्यतीति कालाविनाभूतः प्रतीयते तद्वत् निमित्तोपादानभूतादीश्वराज्जगदव्यतिरिक्तमित्यर्थः। अष्टि तर्वोरित्यपि पाठः। तत्रैवं व्याचक्षते अष्टिर्बीजं कारणं, तरुः कार्यं, तयोर्यथा वसुकालात्मकत्वम्, अयमर्थः कालशब्देन नीलत्वादि साधारणगुणयेगात् पृथ्वी लक्षयते वसुशब्देन वस्तुमात्रं भूतसूक्ष्मम्। तत्र तरोर्यथा पृथ्वीमयबीजपरिणामात्मकत्वेन ततोऽभेदः तस्य च यथा भूत सूक्ष्मात्मकत्वं, एवं सर्वस्य जगतः परमकारणभूतपरमात्मात्मकत्वमेवेति।।३१।।

एवं जगतस्तदनन्यत्वं तदेकेश्वरत्वं तदेककारणत्वं चोक्तम्। अथ चतुर्मुखस्य तत्कार्यत्वं तदाहितसृष्ट्युपयुक्त-ज्ञानशक्त्यादिमत्त्वञ्च विवक्षु स्तावद्यदुक्तं विश्वस्याद्यन्तयोः पृथगवस्थानं तत्रान्ते पृथगवस्थितिप्रकारमाह-**न्यस्येति**।

---

1. W omits इदं 2- -2 W omits 3. W omits अपि 4. W omits लक्षयति 5. A,T °द्वदेव

इदं परिदृश्यमानं चिदचिदात्मकं जगत् आत्मनि न्यस्योपसंहृत्य शेषे शयानोऽसि शेषात्मनेति पाठे, शेषस्य कारणात्मनाऽवशिष्टस्य चिदचिद्द्रव्यस्य अन्तरात्मना स्वरूपेण आत्मनि स्वस्मिन्नेवावस्थित इत्यन्वयः। कथम्भूतः स्वतो निरुपाधिकं निजसुखस्यानुभवो यस्यात एव निरीहः निष्क्रियः योगेन निजसुखानुभवरूपयोगेन मीलितदृक् निवृत्तसङ्कल्परूपज्ञानः। मीलित दृशेति पाठे मीलितदृशा योगेन निवृत्तसङ्कल्परूपज्ञानावस्थानयोगेन विशिष्टइति शेषः। मीलितदृगित्यनेन प्रसक्तं निद्राप्रसङ्गं निराह-वीतनिद्रइति। आधारान्तरनैरपेक्ष्यमाह आत्मनि स्थित इति। कथम्भूते तुर्ये जाग्रदाद्यवस्थात्रयातीते। प्रथमान्तपाठोऽपि दृश्यते तत्राप्युक्त एवार्थः। तमः सूक्ष्मावस्था प्रकृतिः "अक्षर तमसि लीयते" (सु.बा.उ. 2-2) "आसीदिदं तमोभूतं " (मनु. 1-5) इति श्रौतस्मार्तप्रयोगात्। तम स्तद्गुणान्सत्त्वादींश्च न युङ्क्षे न सम्बध्नासि प्रकृतितद्गुणास्पृष्टो भवसीत्यर्थः।।३२।।

**विज॰** स्वभृत्यभाषितमृतं कर्तुं स्तम्भादभूदिति यत्सूचितं पूर्वत्र, तदिदानीं स्पष्टमाह-मत्प्राणेति। मत्प्राणरक्षणं मम पितुर्वधं च स्वभृत्यनारदऋषिवाक्यं च असद्विधित्सुः खड्गं प्रगृह्य हिरण्यकशिपुर्यदि मदपर ईश्वरोऽस्ति स त्वा मवतु, तस्य तव कं शिरो हरामीतियदवोचत् तच्च ऋतं विधातुं अयमवतार इति मन्ये इत्यन्वयः।।२९।।

भ्रूविजृम्भणविभ्रंशितेन्द्राद्यैश्वर्यस्य मत्पितुर्हननमस्माकं चित्रं चेदपि न तव चित्रं, तस्य जगत्येकत्वात् जगच्च त्वत्सृष्टं त्वत्प्रविष्टं त्वदधीनसत्ताक मतः स्तम्भादाविर्भावोऽपि युक्तइत्याह-**एक** इति। अयमर्थः-एतज्जगत्त्वमेव नाऽन्यः। कुतः ? एकः प्रधानः, प्राधान्यं च कुतोऽवगम्यत इति तत्राह-अमुष्य इति। अमुष्य जगत आद्यन्तयो रुत्पत्तेः पूर्वं विनाशादूर्ध्वं च मध्यतः स्थितिकाले च त्वमेवावस्यसि सन्निति निर्णीतोऽसि शास्त्रत इति यस्मात्। ननु जगत स्त्वद्विकारत्वेन वा त्वदवसानं युक्त मत्राह-पृथगिति, भिन्नत्वेनेत्यर्थः। पुनः सृष्टिकाले निजमायया स्वसामर्थ्येन स्वाधीनया चिदचित्प्रकृत्या चेदं गुणव्यतिकरं जगत्सृष्ट्वा तदनुप्रविष्ट स्त्वं तै र्भिन्नैः पदार्थैः निर्मितैः नानेव भिन्न इव, नतु भिन्न इत्यवसितोऽसीति यत्तस्माच्च। प्रतिदृशमिव नैकधाऽर्कमेकमिति स्वोक्तेः "इन्द्रोमायाभिः पूरुरूप ईयते" (बृह.उ. 2-5-15) इति श्रुतेश्च "नेह नानास्ति किञ्चन" (बृह.उ. 6-4-19) इत्यादि श्रुत्या नानात्वस्य निषिद्धत्वात् नानेवानुविधावतीत्यादिनाऽनर्थ हेतुत्वाच्च भेददृष्टेः।।३०।।

हरेर्जगदन्यत्वस्य स्पष्ट मप्रतीतेः तदर्थं पूर्वपद्योक्तं विशदयति **त्वं** वा इति। हे ईश ! इदं सदसच्चराचरलक्षणं *जगत्रयं सत्ताया अपि त्वदधीनत्वा दयं व्यपदेशो न तादात्म्यात्। तत्त्वत स्तदात्मत्वं किं न स्यादिति तत्राह-* भवानिति। ततो जगतो भवानन्योऽपि स्वतो भिन्नोऽपीत्यर्थः। मत्स्वातन्त्र्यवज्जगत्स्वातन्त्र्यमपि किं न स्यादुभयो

भेदोऽपि दृढतरः स्यादितितत्राह-मायेति। आत्मेत्युपलक्षणम्, आत्मानात्मलक्षणस्य प्रपञ्चस्य परत्वबुद्धिः स्वातन्त्र्यज्ञानं यत्सेयं मायाऽविद्यमाना कुत इति तत्राह-अपार्थेति। श्रीनारायणस्य तव स्वातन्त्र्यज्ञानं यथा पुरुषार्थसाधनं तथाऽन्यस्य स्वातन्त्र्यज्ञानमनर्थहेतुरिति उभयं हिशब्देन सिद्धमिति दर्शयति। स्वतन्त्र जीवात्मकत्वा त्स्वतन्त्रं जगदित्यतोवाह-मायेति। आत्मनो जीवस्य परत्वबुद्धिः जीवस्य परमैक्ये परमात्मना यज्जन्मादिकं क्रियते तदनेनाऽपि कर्तव्यम्। तदनुभवविरुद्ध मतो यद्यदधीनं जन्मादिकं तद्वस्तु तदेवेति प्राधान्यविवक्षया अभेदव्यपदेशोपपत्तेरिति प्रकारान्तरेण तद्गतिमाह यद्यस्येति। अयमर्थः-यस्य जगतो जन्मादिकं यद्यदधीनं तज्जगत्तदेवेत्युच्यते इति यत्तस्मात् जगत्त्वमेवेत्यर्थः। अस्मिन्नर्थे दृष्टान्तमाह-खल्विति। उष्टितर्वोः वृक्षदाहवृक्षयोः कालवत् कालाधीनत्ववत्। एतदेवाचार्यैः सम्यग्विवृतं यथा वृक्षश्च वृक्षदाहकश्च दैवकालाधीनत्वाद्दैवं कालश्चेत्युच्यते। एवञ्च त्वदधीनत्वात्सर्वस्य सर्वमित्युच्यते स्वतस्तद्भिन्नोऽपीति। "उष दाहे" इति धातुः। अत्र खलुशब्दः साक्षादैक्यनिषेधे वर्तते "अलं खल्वोः प्रतिषेधयोः प्राचां क्त्वा" (अष्टा 3-4-18) इति सूत्रात् अलमैक्यकथानिष्ठत्व मित्यर्थः। "य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि। स एवाऽह मस्मि। य एष चन्द्रमसि पुरुषो दृश्यते सोऽह मस्मि" (छान्दो.उ. 4-11-1) इत्यादि श्रुतौ स्वस्याऽन्यस्य परमात्मत्त्वोपदेशः प्रतीयते, अतः कथं भेदः कथ्यते इत्यतो वाह-मायेति। आत्माऽहं च परोऽन्यश्च परश्च परमेश्वर एवेति, या बुद्धिरियमपार्था माया भ्रान्ति स्तस्मा त्तदधीनत्वात्तदन्तर्यामित्वेन स्थितत्वाच्च सोऽहमस्मीत्युच्यते, न तु तद्रूपत्वात्, एतदप्याचार्यै रुक्तम्।अहं चाऽन्यश्च परमेश्वर एवेत्यपार्था भ्रान्ति स्तदधीनत्वात्स इत्युच्यते न स्वरूपत्वादित्यर्थः। इति ईक्षणं ज्ञानम्।।३१।।

सत्त्वमाद्यन्तयोरित्यत्रान्ते श्रीहरिरवशिष्यते इत्युक्तं तं प्रकारं दर्शयति-**न्यस्येति**। विलयाम्बुमध्ये इदं जगदात्मनि स्वोदरे न्यस्य शेषासनो भूत्वा तुर्यस्थितो जाग्रदाद्यवस्थाप्रवृत्तिशून्यमूर्तौ स्थितस्त्वं तमः प्रकृतिं गुणान् सत्त्वादींश्चात्मनि युङ्क्षे[1]। ननु "प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः। क्षोभयामास" इत्यादौ [2-]प्रतीतेः प्रास्ताऽज्ञानः[-2]।।३२।।

**तस्यैव ते वपुरिदं निजकालशक्त्या सञ्चोदित[3] प्रकृति धर्मिण[4] आत्मगूढम्।**
**अम्भस्यनन्तशयना द्विरमत्समाधे र्नाभे रभूत् स्वकणिकावटवन्महाब्जम्[5]।।३३।।**

1. A,B युंक्षे 2- -2 A प्रतीतेरस्ताऽज्ञानः; Ma प्रतीत प्रवृत्तिशून्यमूर्तौ अभूदित्यन्वयः निजसुखेत्यादिना तुरीयस्वभावं दर्शयति वीर्तनिद्रा निरस्तज्ञानः। 3. M,Ma °तं 4. A,B,G,H,J,T,V °र्म° 5 H,V °द्र°

तत्सम्भवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स[1]बहिर्वि[2]चिन्वन्।
नाऽविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथ मु[3]होपलभेत बीजम्।।३४।।

सत्त्वात्मयोनिरति विस्मित आ[4]श्रितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये[5] विततं ददर्श।।३५।।

एवं सहस्रवदनाङ्घ्रि शिरःकरोरु नासास्यकर्णनयनाभरणायु[6]धाढ्यम्।
मायामयं सदुपल[7]क्षणसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः।।३६।।

तस्मै भवान् हयशिरस्तनु[8]वं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ।
[9]हत्वाऽऽनय च्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनन्ति।।३७।।

इत्थं नृतिर्यगृषिदेव झषावतारै र्लोकान् विभावयसि हंसि जगत्प्रतीपान्।
धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगो[10]ऽथ सत्त्वम्।।३८।।

नैतन्मनस्तव कथासु विकुण्ठनाथ स[11]म्प्रीयते दुरितदुष्टमसाधु तीव्रम्।
कामातुरं हर्षशोक [12]भयेषणार्तं तस्मिन् कथं तव गतिं [13]विमृशामि दीनः।।३९।।

जिह्वैकतोऽच्युत विकर्षति मा वितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित्।
घ्राणोऽन्यत श्चपलदृक् क्व च कर्मशक्तिः बह्व्यः सपन्त्य इव गेहपतिं लुनन्ति।।४०।।

**श्रीध॰** इदानीं कारणत्वेनादावपि पृथगवस्थानं दर्शयन् मध्यतश्च त्वमेवेत्येतत्प्रपञ्चयति-**तस्यैवेति** चतुर्भिः। यस्त्वमम्भसि शेषे तस्यैव ते इदं जगद्वपुः स्वरूपं नाऽन्यस्य, यतस्त्वं मध्यतोऽपि [14]स्याः तस्य कथम्भूतस्य? निजया कालशक्त्या सञ्चोदिताः प्रकृतेर्धर्माः सत्त्वादयो येन। स्वरूपत्वे हेतुः-अनन्तशयनाच्छेषपर्यङ्काद्विरमन् समाधिर्यस्य तस्य तव नाभेः सकाशात्। एकार्णवोदके महाब्जं लोकपद्ममभूत्, कथम्भूतम्? आत्मनि त्वय्येव गूढं सत् स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ।।३३।।

1. A,B,G,J,W स्व 2. A,B,G,J,T,W ॰चिन्त्य 3. M,Ma ॰मि॰ 4. A,B,G,H,J,T,V आस्थि॰ 5. W ॰मयं 6. H,V ॰यता॰ 7. A,B,G,H,J,T,V लक्षित 8. H,V नुमत्र; नुमतां 9. H,V हत्वादिश॰ 10. H,V ॰ऽसि सत्वम्; W ॰ऽस्यथत्वम् 11. W ॰तये 12. A,B,G,H,J,T,V भयै॰ 13. H,V प्र॰ 14. A,B,J omit स्याः

तदेवं कारणत्वेनानुगतस्सन् मध्यतश्च त्वमेव वर्तस इत्युक्त मेतदेव शुद्धसत्त्वस्य ब्रह्मणोऽनुभवेन स्फुटयितुं तस्य प्राक्तनीमवस्थामाह-**तदिति**। तस्मिन्नब्जे सम्भवो यस्य सः कविर्ब्रह्मा। अतः पद्मादन्यदप-[1-]श्यमानस्सन्[-1] **बीजमुपादानकारणभूतं** त्वां [2]ततं स्वस्मिन् व्याप्तं सन्तमपि नाविन्दत्। युक्तञ्चैतत्, उह-अहो अङ्कुरे जाते सति बीजं तदनुगतं कारणं पृथक्कथंनाम [3-]बहिरुपलभेत[-3] पुमान् पश्येत्।।३४।।

भवदुपासनया तु स्वस्मिन्नेव दृष्टवानित्याह-**सत्विति**। परावृत्त्याब्ज मास्थितस्सन्। तीव्रेण तपसा ध्यानेन। अनेन सन्मात्ररूपेणोपादानतया दर्शनमुक्तम्।।३५।।

ईश्वरत्वेन च दृष्ट्वा कृतार्थोऽभवदित्याह-**एवमिति**। एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं समृद्धम्। मायामयं मायाप्रधानम्। सता प्रपञ्चेनोपलक्षितः सन्निवेशः पादादि रचना यस्य।।३६।।

तदा च भवांस्तस्यानुग्रहं कृतवानित्याह - **तस्माइति**। हयग्रीवमूर्तिं बिभ्रत्सन्। रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणान् समर्पितवान्। तत्र हेतुः-सत्त्वमिति।।३७।।

एकस्त्वमेवेत्यादिभिः अष्टभिः श्लोकैर्यदुक्तं पक्षपातेन रक्षणं तद्विपक्षवधश्च सत्त्वोपाधिको न तु स्वत इति तदुपसंहरति **इत्थमिति**। विभावयसि पालयसि हंसि घातयसि, कलौ तु तत्तु[4] न करोषि यतस्तदा त्वं छन्नोऽभवः। अतस्त्रिष्वपि युगेषु आविर्भावात्स एवम्भूतस्त्वं त्रियुग इति प्रसिद्धः।।३८।।

तदेवं भगवतस्तत्त्वं निरूप्य स्वस्य च तद्विचारयोग्यतां निवेदयन् प्रार्थयते **नैतदिति** त्रिभिः। असाधु बहिर्मुखम्। तीव्रं दु[5]र्भरम्। हर्षशोकभयैः [6]ईषणात्रयेणचार्तं दुःखितमपि त्वत्कथासु न संप्रीयते। तस्मिन्नेवम्भूते मनसि सति कथं तव तत्त्वं विचारयामि।।३९।।

किञ्च **जिह्वेति**। जिह्वा अवितृप्तासती, भो अच्युत! मा मां यतो मधुरादिरसस्तत आकर्षति, उदरं तु क्षुधासन्तप्तं सत् सद्य एव यत्किञ्चिदाहारमात्रं प्रति। चपला दृक् चक्षुः कर्मशक्तिः कर्मेन्द्रियाणि। लुनन्ति त्रोटयन्ति।।४०।।

**वीर०** एव मुपसंहृत जगतः कारणतयाऽवस्थिताज्जगतः उत्पत्तिप्रकारं मध्यतस्तदन्यत्वप्रदर्शनायाह-**तस्यैवेति**। तस्योक्तविधमवस्थितस्य तव नाभेर्वपुस्त्वच्छरीरभूतं जगदाकारं महाब्जमभूदुद्बभूव। कथम्भूतस्य

---

1--1 A,B,J °श्यन् 2 A,B,J omit ततं 3--3 A,B,J omit 4 A,B,J omit तु 5 A,B,J °र्धं° 6. A,B,J ए°

तव ? निजकालशक्त्या स्वांशभूतया कालाख्यया शक्त्या सञ्चोदिता क्षुभितगुणा प्रकृतिरेव **धर्मः** अपृथक्सिद्धविशेषणं यस्य तस्य अम्भसि अनन्तशयनादिति ल्यब्लोपे पञ्चमी शेषपर्यङ्कादुत्थाय विरमन् समाधिः जगद्व्यापार वैमुख्येन अवस्थानुरूपो यस्य, सिसृक्षोरिति फलितोऽर्थः, एवम्भूतस्य तव नाभेः त्वच्छरीरभूतं जगदात्मक मात्मनि त्वयि निगूढं सूक्ष्मावस्थापन्नं महाब्जं स्वकर्णिकात् स्वबीजाद्वटवदभूदित्यर्थः।।३३।।

तत्सम्भवस्तन्महाब्जसम्भवः कविर्ब्रह्मा अतः पद्मादन्यदपश्यमानः स्वात्मन्यन्तरात्मतया ततं व्याप्तं बीजं पद्मस्य कारणभूतं त्वां स्वस्माद्बहिस्तथा अब्दशतं वर्षशतमप्सु निमज्जमानो विचिन्वन्नन्वेषयन्नाविन्दत नोपलब्धवान्। अहो! तथाहि, अङ्कुरे जाते बीजं कथमुपलभेत नोपलभेतैवेत्यर्थः। यथाऽङ्कुरे जाते सति ततः पृथक् स्थितं बीजं नोपलभते लोकस्तथा मत्कार्यभूतं जगदात्मकं पद्मं मदभिन्नमिति दर्शयितुं भवान् बहुधा विचिन्वताऽपि ब्रह्मणा नोपलब्ध इति भावः।।३४।।

ततो भगवदुपासनया स्वस्मिन्नेव दृष्टवानित्याह **सत्विति**। स तु विचिन्वन्नात्मयोनिर्ब्रह्मा अतिविस्मितः अब्दशतपर्यन्तान्वेषणेनाऽपि अनुपलम्भप्रयुक्त विस्मययुक्तः परावृत्त्यांब्जमाश्रितस्सन् तीव्रेण तपसा ध्यानेन परिशुद्धभावः परिशुद्धमनाः निरस्त त्वद्दर्शनविरोधिकर्मा हे ईश! त्वामात्मन्येव विततं व्याप्तं ददर्श। कथम्भूतं? भुवि गन्धमिवातिसूक्ष्मं स्वात्मनः पृथग्विभागानर्हम्। अतिसूक्ष्मभूतेति समस्तपाठे भुवि गन्धमिवात्मनि विततं ददर्श, भुवि गन्धमिवेत्यवस्थानमात्रे दृष्टान्तः। अतिसूक्ष्माणि विभागानर्हाणि कारणात्मतामापन्नानि भूतान्याकाशादीनि इन्द्रियाण्याशयोऽन्तःकरणञ्च तन्मयं तत्प्रचुरमेवम्भूतं तावद्ददर्श।।३५।।

ततः सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं समृद्धमत एव मायामयमाश्चर्यरूपं सत् उपलक्षण सन्निवेशं सता सत्त्वेन नित्यत्वेन उपलक्षणीयः सन्निवेशः वदनाद्यवयवसं[1]स्थानं यस्य तं सता सूक्ष्मरूपेण सता प्रपञ्चेनोपलक्षितः सन्निवेशो वदनादिविन्यासो यस्य तमिति वा, एवम्भूतं महापुरुषं दृष्ट्वा विरिञ्चो ब्रह्मा मुदं हर्ष माप प्राप्तवान्।।३६।।

तदा च तं भवाननुगृहीतवान् इत्याह-तस्मा इति। तस्मै तीव्रतपसा परिशुद्धभावनया उक्तविधं त्वां दृष्टवते विरिञ्चाय भवान् हयशिरस्तनुतां हयग्रीवरूपं बिभ्रत् श्रुतिगणान् सृष्ट्युपायावेदकान् वेदगणान् आनीय

1 W omits सं

समर्पितान्। किं कृत्वा आनयत्[1]? रजस्तमश्च रजस्तमोरूपौ वेदद्रुहौ वेदापहारिणौ अतिबलौ मधुकैटभाख्यौ असुरौ हत्वा समर्पितवान् यतस्समर्पितवान् अत एव तव प्रियतमां तनुं हयशिरस्तनुं सत्त्वं शुद्धसत्त्वात्मिकाम् आमनन्ति धर्मस्थापनायोपात्तां तनुं शुद्धसत्त्वमयीमामनन्ति जानन्ति अवतारयाथात्म्यविद इति शेषः।।३७।।

एवं जगत उत्पत्तिप्रकार उक्तः, अथ रक्षाप्रकारमाह, इत्थमुचितकालेषु तैस्तैः स्वेच्छोपात्तैः शुद्धसत्त्वमयैः नृतिर्यगृषि देव झषावतारैः रामकृष्णवराहपरशुरामोपेन्द्रमत्स्यावतारैः अवतारान्तराणामपीदमुपलक्षाणं, लोकान् विभावयसि पालयसि जगद्विरोधिनो रावणादीन् हंसि च। हे महापुरुष! युगानुवृत्तं कृतादियुगेष्वनुवृत्तं धर्मं वर्णाश्रममर्यादादिरूपं जगत्प्रतीपनिरसनेन पासि पालयसि, यतस्त्वं कलौयुगे छन्नोऽभवः आसीः। अथ ततः त्रियुगशब्दप्रवृत्तिनिमित्ताश्रयोऽसि कृतत्रेताद्वापरेष्वेव[2]वतारमुखेनाविर्भावात् त्रियुग इत्यभिधीयसे इत्यर्थः।।३८।।

एवं निखिल[3] जगदुदयविभवलयैककारणं तदन्तरात्मानं तच्छरीरकं संस्तुत्य यथावत्स्वरूपरूपादि विमर्शने मन्मनो न समर्थमिति वदन् किञ्चित्प्रार्थयते नैतदिति त्रिभिः। हे विकुण्ठनाथ! दुरितं दुष्टं मत एवासाधुवृत्तिं कामातुरं विषयप्रवणं हर्षेणाभिमतविषयलाभे हर्षेण, तद्विपरीतविषयलाभे तु शोकेन[4] ईषणया[5] पुत्रदारधनेषणया[6]चार्तं मदीयं मनस्तव कथास्वेव न सम्यक् प्रीयते नासक्तं भवतीत्यर्थः। तस्मिन् मनस्येवं स्थिते सति दीनः विषयपारवश्येन दुःखितोऽहं तव गतिं याथात्म्यं कथं विमृशामि।।३९।।

न केवलं मन एव ममैवं जातं, किन्तु इन्द्रियान्तराण्यपीत्याह जिह्वेति। हे अच्युत! जिह्वा मा अवितृप्ता अतृप्ता सती एकतो मधुरादिरसान् प्रति मां विकर्षति तथा शिश्नोऽप्यतृप्तः त्वगादयश्च कुतश्चिद्विकर्षन्ति तत्तद्विषयभोगाय कर्षन्ति चपलदृक् चञ्चला दृष्टिः क्व चाभिमतरूपदर्शनाय विकर्षति। उदरशब्दः प्राणोपलक्षकः तथा कर्मशक्तिः क्रियाशक्तिः पाणिपादादिरपि विकर्षति, क्वचिद्गेहपतिं गृहस्थं बह्व्यः सपत्न्य इव देहपतिम् इन्द्रियाणि लुनन्ति विकर्षन्ति इत्यर्थः।।४०।।

**विज०** सृष्टेः प्रागित्युक्तं दर्शयति-**तस्येति**। तस्य तुरीयस्यास्य जगत्कारणस्य च कश्चिद्विशेषो नास्तीति द्योतनायैवकारः। आत्मनि देहे जठरे गूढं निलीनमिदं जगज्जगदात्मकं महाब्जं यस्य तव नाभे रभूत्तदब्जं तस्यैव ते वपुः सन्निधानविषयत्वात् प्रतिमास्थानीयम्। कीदृशं स्वरूपम्? भूतसृष्टिकालशक्त्या सञ्चोदितं सृष्टये प्रेरितं

1 W omits आनयत् 2 W omits एव 3 A,B,T अ० 4 W omits शोकेन 5. A,B,T एष० 6. A,B,T ०नै०

कटाक्षीकृतं कीदृशस्यास्य प्रकृतिधर्मिणः प्रकृतिप्रेरकधर्मवतः प्रलयोदकेऽनन्ताख्यशयनादुत्थाय विरमन् समाधिं कुर्वन् समाधिः योगिनिद्रालक्षणो यस्य स तथा तस्य। कथमिव? वटवत् वटलक्षणोऽकुरो यथा स्वकर्णिकात् उत्पत्स्यमानकर्णिकात् कर्णिकाख्यवटबीजादित्यर्थः। नन्वयं विषमो दृष्टान्तः तथाहि-कर्णिका नाम वट बीजविकारो हि वटाख्याङ्कुरः, न चाऽयं प्रकृते सम्भवति। "निर्विकारोऽक्षरः शुद्धः" इति वचनात्, उच्यते स्वकर्णिकादिति लिङ्ग व्यत्ययेन कश्चिद्विशेषो विज्ञायते। कोऽयमिति चेदुच्यते। कर्णिका नामाऽदृश्या देवता सर्वस्थावरबीजानामभिमानिन्यपि वटाश्वत्थबीजयोर्विशेषतः सन्निहिता। अत स्तत्तद्बीजेभ्यः तदङ्कुरव्यञ्जनात्तत्प्रागपि तत्र स्थित्वा जातेत्युच्यते यथा, तथा श्रीहरेरपि प्रकृत्यादिस्वामित्वेन च तत्सन्निहितत्वेन च स्थित स्तत्कार्येष्वनुविष्टत्वेन जात इत्युच्यते। "आत्मन आकाशस्सम्भूतः" (तैत्ति.उ. 2-1-1) इत्यादौ श्रुतत्वात्। तत्राऽपि वटबीजा द्वटाङ्कुरस्य साक्षादुत्पत्तिर्वटवृक्षिणश्चेतनस्य चेतनाभिमाना दुत्पत्तिः उभयाभिमानिन्या देवताया अभिव्यञ्ज-कत्वेनाऽभिव्यक्ति स्तथा। यथा योग्यं सत्त्वतमो मिश्ररजोगुणान् जगदात्मनः पद्मस्य साक्षादुद्भवः पद्मिनो हिरण्यगर्भस्याऽभिमानजननं हरेः पुरुषान्तरेणाऽऽविर्भाव इत्यादिकमिति। "स्थावराणान्तु सर्वेषां देवता याऽभिमानिनी, विशेषाद्वटबीजे च अश्वत्थे च व्यवास्थिता। अदृश्या कर्णिका नाम सा वृक्षात्[1] व्यञ्जयत्यपि। अतो बीजमानिप्रोक्ता सा जातेत्यङ्कुरे स्थिता। एवं हरिःकारणेषु स्थितः कार्यजनेरनु। कार्याण्यनुप्रविष्टस्सन् प्रथमं तत्र दृश्यते" (ब्रह्मतर्के) इत्यनेनोक्तविशेषो विज्ञायत इति न काऽपि शङ्काकार्येति, तस्मात् दृष्टान्तदार्ष्टान्तिकयोरुप-पत्तिरस्तीति युक्तएव दृष्टान्तः।।३३।।

तत्र विरिञ्चस्य लोकपद्मलक्षणदेहाभिमानोत्पत्तिपूर्वकं हरेर्वटबीजाभिमानिदेवतावददृश्यत्वं प्रकटयं स्तस्य मीमांसामाह-तत्सम्भव इति। पद्मस्य प्रकृत्यात्मकत्वेन तस्मात्पद्मात्सम्भवो जननं यस्य स तथा, लोकात्मकत्वेन तस्मिन् देहस्थानीयेऽभिमानसम्भवो यस्य स तथा उभयोरप्यत्र विवक्षितत्वात्। अतः अब्जादन्यद्वस्तु न पश्यन्नप्सु निमज्जमानो निमज्ज्य मूलं विचिन्वन् लोके बीजादङ्कुरे जाते नष्टं बीजमिव पृथिव्यां कथमुपलभेत पुरुष इति तच्चिन्तां दर्शयन्नेवं विधः कवि ब्रह्माऽऽत्मनि स्वस्मिन्नेव अब्जान्तस्तस्माद्बहिश्च विततं व्यञ्जकत्वा द्बीजदेवतावत् बीजसंज्ञत्वान्नाऽविदत् नोपलब्धवानित्यन्वयः।।३४।।

आत्मा परमात्मा योनिःकारणं यस्य स तथा। तु शब्देनैकस्य हरेर्बहुधा जन्माऽस्तीति विशेषं दर्शयति। स एव ब्रह्मा अब्दशतसंज्ञितेन कालेन विचिन्त्य विविधपृथिव्याद्याधाराणा मनुत्पन्नत्वादस्य केनचिदाधारेण

---

1 A ०न्

भवितव्यम्। लौकिके बीजनाशवत् नाशायोगात् सन्नपि न दृश्यते, कुतूहलमेतदिति अतिविस्मितोऽब्जमाश्रितः तपेति द्व्यक्षरं श्रुतवान्। तपसाऽहं द्रष्टुं शक्त इत्यनेनोक्तमभिजानन् तीव्रेण तपसा परिशुद्धान्तःकरणो भूतेन्द्रियाशये जगति विततं **त्वामात्मनि स्वस्मिन् स्थितं ददर्श**त्यन्वयः। कथमिव? भुविव्याप्तमतिसूक्ष्मंगन्धाख्यदेवता-स्वरूपं यथा पश्यति योगी तथेत्यर्थः। गन्धाख्या देवता यद्वत्पृथिव्यां **व्याप्य** तिष्ठति एवं व्याप्तं जगत् विष्णुं ब्रह्मात्मस्थं ददर्श। हेति वाक्यं गन्धशब्देन देवताकथनं युक्तमिति **भावः**।।३५।।

यथा सूक्ष्मरूपं दृष्ट्वा मुमुदे तथा विराड्रूपमपि, तयो रीषदपि विशेषाभावादित्याह-**एवमिति**। अनेन ब्रह्माण्डशरीरी ब्रह्मा "पातालमेतस्य हि पादमूलम्" (भाग.2-1-26) इत्याद्युक्तं यद्रूपमपश्यत्तदेव पद्मजोऽपीति ज्ञातव्यम्। आत्मयोनिरिति विशेषणात् मायामयं ज्ञानरूपम् अनिर्वाच्याऽविद्यामायानामेति किं न स्यादित्यत्राऽऽह - सदिति। आनन्दादिलक्षणसमुदायरूपम्। अथ कस्मादुच्यते सदिति-"**सन्तो ह्यस्मिन्नानन्द ओजो बलम्**" इति स्पष्टश्रुतेः। "सन्निवेशश्च यः स्तोमः समुदायो गणः स्मृतः" इत्यभिधानम्। आनन्दादिलक्षणानां सन्निवेशो यस्मिन् स तथा। तं गुण गुणिनोरभेदात्स्वरूपत्वं सिध्यति। "विज्ञानमानन्दं ब्रह्म" (बृह. उ. 3-9-28) इति श्रुतेः लक्षणत्वज्ञापनायाऽदिशब्देन ज्ञानग्रहणम्।।३६।।

रजस्तमस्स्वभावावतिबलौ वेदद्रुहौ मधुकैटभाख्यौ हत्वा श्रुतिगणाननयत्, आनीयाऽस्मै विरिञ्चाया-ऽवोचदिति शेषेणान्वयः। अनेनैतत्सिद्धमभूदित्याह-सत्त्वमिति।।३७।।

चतुष्पदधर्मं पासि यस्त्वं कलौ छन्नोऽभव इति यस्मात्तस्मात्सत्वं त्रियुग इति ख्यातः।।३८।।

एवं हरेर्भक्तवात्सल्यं विज्ञाप्य स्वशक्तिं विज्ञापयति-नैतदिति। येदेतन्मनस्तव कथासु न सम्प्रीयते तस्मिन्मनसि तव गतिं कथं विमृशामीत्यन्वयः। ईषणं, वित्तादीनामिति शेषः।।३९।।

मनस्समाधानाभावादन्येन्द्रियाण्यपि मत्पुरुषार्थविरुद्धानीत्याह-**जिह्वेति**। स्पर्धाभाषणशीलत्वाज्जिह्वा। दुस्सङ्गेन पुण्यश्लथनशीलत्वात् शिश्नः। "त्व च सम्पर्के" इति धातोः दुस्सम्पर्कशीलत्वात् त्वक्, उदात्ककुदं न मयतीति उदरम्। कर्मशक्तिरित्यनेन कर्मेन्द्रियाणि वागादीनि लक्षयति। गेहपतिं देहस्वामिनं, अन्यत्र गृहपतिम्।।४०।।

**एवं स्वकर्मपतितं भववैतरण्या मन्योन्यजन्ममरणा[1]शनभीतभीतम्।**
**पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हन्तेति पार[2]च[3]र पिपृहि मूढ[4]मद्य।।४१।।**

**कोऽन्वत्र तेऽखिलगुरो! भगवान्प्रयास उत्तारणेऽस्य भवसम्भवलोपहेतोः।**
**मूढेषु वै महदनुग्रह आर्तबन्धो। किं तेन ते प्रियजनाननुसेव[5]तां नः।।४२।।**

**नैवोद्विजे [6-]भव दुर[-6]त्यय[7]वैतरण्या स्त्वद्वीर्यगायनमहाऽमृत[8]मग्नचित्तः।**
**शोचे [9]ततो विमुखचेतस इन्द्रियार्थमायासुखायभरमुद्वहतो विमूढान्।।४३।।**

**प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजने [10-]न परार्थनिष्ठाः[-10]।**
**[11]नैतान्विहाय कृपणान् विमुमुक्ष एको [12-]नाऽन्यं त्वदस्य[-12] शरणं भ्रमतोऽनुपश्ये।।४४।।**

**श्रीध०** न केवलमहमेक [13]एवैवं कष्टां दशामापन्नः, किन्तु महाजनोप्येवमेव क्लिश्यति अतस्सर्वं जनं पालयेति प्रार्थयते-**एवमिति**। भवः संसार एव वैतरणी यमद्वारनदी, तस्याम्। अन्योन्यतो यानि जन्मादीनि तेभ्योऽतिभीतं स्वेषां परेषाञ्च विग्रहेषु [14]देहेषु यथायथं वैरं मैत्रञ्च यस्य, एवं मूढं जनं पश्यंस्त्वम्। हे पारचर! तस्याः पारे स्थित नित्यमुक्त! हन्तेति अहो कष्टमित्येव मनुकम्प्याऽद्य [15]पिपृहि वैतरण्या[16] उत्तार्य पालय।।४१।।

एकेन मया कथं सर्वो जनस्तारणीय इति चेत् तत्राऽऽह–**कोन्विति**। को नु ते अत्र सर्वजनोत्तारणप्रयासो, नकोऽपि। कुतः अस्य विश्वस्य भवसम्भवलोपानामुत्पत्तिस्थितिसंहाराणां हेतोः ततोऽपि किमेतद्दुष्करमिति भावः। उचितश्चैतदित्याह-मूढेष्विति। त्वाञ्च त्वदीयांश्च तारयिष्यामि, इमं दुराग्रहं मा कृथा इति चेत्तत्राऽऽह–तव ये प्रियजनाः [17-]प्रियतमाः[-17] भक्ताःताननुसेवमानानां नोऽस्माकं तेनोत्तारणेन किम्! [18-]"कोऽति प्रयासोऽसुर बालका हरेः, कोऽन्वत्र तेऽखिलगुरो! भगवन्प्रयासः? प्रह्लादइत्थमुपमन्त्र्य मिथो नराणामीशेन सख्यमकरोदपनीयमायाम्[-18]" (भाग. 7-7-38) [19-]तद्भक्तजनसेवनयैव संसारवैतरणीनद्युत्तरणं भविष्यतीति भावः[-19]।।४२।।

[20-]ननु प्रियजनसेवामात्रेण कथं तव संसारतरणम् इत्याशङ्क्य तदेव विवृण्वन् परिहरति-**नैवेति**[-20]। हे [21]पर! सर्वोत्तम! त्वद्वीर्यगायनमेव महामृतं, तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्या नैवोद्विजे, किन्तु विमूढान्

---

1. H,V °मय 2. M,Ma °मति 3. A,B,G,J,M,Ma,T पी° 4. H,V मस्य; M,Ma सत्त्वम् 5. M,Ma °वमानः 6--6. A,B,G,J,T परदुरत्यय; W परम हे भव 7. M,Ma तीर्थ 8. M,Ma °मत्त 9. M,Ma नु तं 10--10 H,V परमार्थनिष्ठाः 11.W °ना° 12--12 H,V नाऽस्य त्वदन्य; W नाऽन्यं त्वदन्य 13. H,V Omit एव 14. A,B,J Omit देहेषु 15. A,B,J पी° 16. A,B,J णीम् 17--17 A,B,J Omit 18--18 H,V श्लोक कोऽतिप्रयासः 19--19 A,B,J Omit 20--20 A,B,J वत्सप्रह्लाद! त्वां तावत्तारयिष्यामितावतैव कृतार्थः। स्याः, किमनेन निर्बन्धेन? इत्यत आह 21. H,V परम!

शोचामि, तानेवाऽऽह। ततो महामृता द्विमुखं चेतो येषां। प्रत्युत इन्द्रियार्थनिमित्तं यन्मायासुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः।।४३।।

त्वं तावन्मुक्तिं गृहाण, तांस्तु[1] तत्त्वज्ञा मुनय उपदेक्ष्यन्तीति चेत् तत्राऽऽह - **प्रायेणेति** न विमुमुक्षे विमुक्तिं नेच्छामि तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निर्बध्नासीति चेदत आह-त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि।।४४।।

**वीर० न** केवलमहमेवेदृशीं दशां प्राप्तः किन्तु मदीयो जनोऽप्येवमेव क्लिश्यति। अतः सर्वं मदीयं जनं संसारान्मोचयेति प्रार्थयते - **एवमिति**। भव एव वैतरणी दुःखप्रदा यमलोकनदी तस्यां स्वकर्मभिः पुण्यपापात्मकैः पतितमन्योन्यं यानि मरणादीनि शत्रूणां पुत्रादिजन्मना स्वस्य भयं स्वस्य पुत्रादिजन्मना परेषां शत्रुभ्यः स्वस्य भयं स्वस्माच्छत्रूणामेवं परैः स्वद्रव्यभक्षणेन स्वस्य भयं, स्वेन परद्रव्यभक्षणे स्वस्मात्तेषामिति[2] यथासम्भवमूह्यम्। तेभ्यो जन्मजरामरणाशनेभ्योभीतभीतं[3] भीतादपिभीतं स्वेषां परेषाञ्च विग्रहे देहेषु यथायथं वैरं मैत्रञ्च यस्य तमेवमद्याऽपि। **मूढमज्ञं** जनं पश्यन् त्वं[4] हे पारचर। भववैतरणीपारे चरतीति तथा तस्य सम्बोधनम्, अतिपीपृहि, "पॄ पालनपूरणयोः" इति धातुः , अतीव पालयेत्यर्थः। यद्वा, अतिपिपृहि, हन्तेति अहो कष्टमित्यनुकम्प्य-भववैतरिण्या अतिपारय पारं नय, संसारान्मोचयेत्यर्थः।।४१।।

**ननु त्वदीयसर्वजनोत्तरणे** मम महान् प्रयासो भवेत्, नेत्याह-**कोन्विति**। हे अखिलानां गुरो हितोपदेष्टः! हे भगवन्! ज्ञानशक्त्यादिषाड्गुण्यपूर्ण! अत्र[5] अस्मिन् मदीयजनस्योत्तारणे तव कोनुप्रयासः। न कोऽपीत्यर्थः। प्रयासाभावे हेतुं वदन् भगवन्तं विशिनष्टि-अस्य कृत्स्नस्य चिदचिदात्मकप्रपञ्चस्य भवसम्भवलोपहेतो रुत्पत्तिस्थितिलयकारणस्य कृत्स्नजगदुदयविभवलयलीलस्य मदीयजनोत्तारणे न कोऽपि प्रयास इति भावः। युक्तश्चैतत्तवेत्याह-मूढध्वजेषु विशेषेण महता मनुग्रहो भवतीति। ननु मत्सेवा[6] मन्तरेणाऽहं नाऽतिपारयामि, अन्यथा सर्वमुक्तिप्रसङ्गः, तत्राऽऽह- हे आर्तबन्धो! किन्तेन आर्तबन्धुस्त्वमिति यत् तेन, नो[7]ऽऽस्माकं किं त्वत्सेवया स्यात् तवार्तबन्धुत्वनिर्वाहार्थं त्वत्सेवायामप्यशक्तावयमार्त्तानुकम्प्या इति भावः। सर्वमुक्तिप्रसङ्गं निराकुर्वन् आत्मनो विशिनष्टि। ते तव ये प्रियाः भक्तजनास्ताननुसेवतां त्वद्दासानुदास्यं कुर्वतामस्माक मित्यर्थः। तावन्मात्रमपेक्ष्य मज्जनोत्तारणोपपत्तेर्न सर्वमुक्तिप्रसङ्गश्चेति भावः। मामनुगृहीतवता त्वया मदीयजनस्य भवद्दासानुदास्यमपि सम्पाद्यमिति तात्पर्यम्।।४२।।

---

1. H,V, तेषां तु 2. A,B,T, ष्परेषां 3.W omits जरा 4.W omit त्वं 5 A,B.T Omit अत्र 6. A,B,T मम 7 W omits न.

इदमेव मयाप्रार्थनीयमित्यभिप्रयन्, नाऽहं भववैतरण्या बिभेमि, किन्तु तस्यां पतिष्यतो[1] मज्जना नवलोक्य दुःख्यामीत्याह–**नैवेति**। हे परम! दुरतिक्रमणीयो भवः संसारः स एव वैतरणी ततो नैवाऽह मुद्विजे, बिभेमि। उद्वेगाभावे हेतुं वदन्नात्मानं विशिनष्टि-त्वद्वीर्येति। त्वद्वीर्यगायनं त्वद्वीर्यसूचकगुणनामगायनमेव महदमृतं तस्मिन् मग्नं चित्तं यस्य सोऽहम् , अतो न मदर्थं, शोचे, किन्तु विशेषेण मूढान् मदीयान् प्रति शोचे, तदर्थं शोचे इत्यर्थः। तत्र हेतुं वदन् तान्विशिनष्टि-ततस्त्वदीयगा[2]नाद्विमुखं चेतो येषाम्, इन्द्रियार्थाः शब्दादयो विषयास्तेषां मायासुखाय तदनुभव[3]जन्यप्राकृतसुखाय तदर्थं भरं कुटुम्बादिभारं उद्वहन्तीति तथा तान्।।४३।।

ननु, यथा श्रीनारदा[4]नुग्रहात्त्वं मुमुक्षुस्तथा त्वदीया अपि महतामनुग्रहात् मुमुक्षवश्चेत्तान् मोक्षयिष्यामि, अतस्त्वमेव मुक्तिमिच्छेत्यत्राऽऽह-**प्रायेणेति**। हे देव! प्रायशो मुनय आत्मनामेव मुक्तिं कामयमाना विजने निर्जने अरण्यादिदेशे मौनं शुभाश्रयसंशीलनं कुर्वन्ति न तु [5]परार्थनिष्ठाः अन्येषां प्रयोजने निष्ठा येषान्ते भवन्ति, अत सतदनुग्रहो मदीयजनस्य दुर्लभ इति भावः। तत [6]एतान्कृपणान् विहाय अहमेको न मुमुक्षे न संसृतिबन्धं मोक्तुमिच्छामि। तर्हि अन्यं कमपि प्रार्थय मामेव किमिति। निर्बध्नासीति चेत्तत्राऽऽह भ्रमतः संसृतौ भ्राम्यतोऽस्य जनस्य त्वत् त्वत्तः अन्यं शरणं [7]रक्षकं रक्षणोपायभूतञ्च नाऽनुपश्यामि।।४४।।

**विज॰** स्वैः परैश्च सह विग्रहलक्षणं वैरं विरुद्धाचरणं मैत्रञ्च यस्य तथा तं जनं पश्यन् अतः [8]तमसो भवस्य पारमिति पिपृहि अतिपारं गमय, मूढसत्त्वं मूढप्राणिनमसुरजातित्वात्, तिर्यग्जातित्वात्तामसमिव स्थितं गजेन्द्रं पारं नीत्वा यथा अपालयः तथा पारञ्च प्रापय्य मां पालयेति वा।।४१।।

मम संसारपारनेतृत्वं तव दुश्शकं नेत्याह–**क** इति। हे अत्र! अन्यपातृरहित! भगवन्! मम संसारोत्तारणे ते तव कोनु प्रयासो, न कोऽपि। अत्र जीवराशौ वा कुतो न प्रयास इति तत्राऽऽह–अस्येति। अस्य जगतो भवो जन्मसम्भवः स्थापनेन सम्भावनं लोपः संहारो येषां हेतोः कारणस्याऽस्य जगत उत्तारणे तव प्रयासो नास्ति, ममोत्तारणे कोन्विति वा। कुत इति तत्राऽऽह-भवेति। भवस्य संसारस्य सम्भवः उत्पत्तिः तस्य नाशहेतो स्तव किं प्रकृत इत्याशङ्क्य अस्मद्वात्सल्यमन्तरेण न किमपि प्रयोजनं तवेत्याह–मूढेष्विति। गजेन्द्रकल्पार्तजनबन्धो! मूढेष्वस्मासु यो महदनुग्रहस्तेन तव किं प्रयोजनं, न किमपीत्यर्थः। ननु, प्रयोजनाभावे किमर्थं तथा करणमित्याशङ्क्य स्वभाव इत्याशयेनाह–प्रियेति। प्रियजना ननु सेवमान स्त्वर्मिति यत्। स तव स्वभाव इति शेषः।।४२।।

---

1. A,B,T माणान् 2 A,B,T गायना॰ 3 W ॰जप्रा॰ 4 W दस्यानु 5 A,B,T परार्थम् 6. ना॰ 7. A,B,T, Omit रक्षकं 8. A तमो

संसारभीरूणां संसारवैतरण्युत्तरणोपायः क इत्याऽऽशङ्क्य निरन्तरवेदान्तशास्त्रश्रवणमननादि येषामस्ति तेषां तद्भयं नास्ति। अन्यथा न कदाऽपि तत उत्तरण मित्याशयेनाऽऽह—**नैवेति**। त्वत्तीर्थं त्वद्विषयं वेदान्तशास्त्रं तस्य गायनं श्रुत्वा मत्वा व्याख्यापनञ्च तदेव महामृतं यत्तेन मत्तं हृष्टं विवशं वा चित्तं यस्य स तथा। एवं विधोऽहं संसारवैतरण्या नैवोद्विजे न बिभेमि। एवशब्देन त्वत्तीर्थसेवाभावे संसारकदनाद्द्विर्भोमि तत्सम्भवेनेत्ययोगव्यवच्छेदः क्रियते। अनेनाऽसङ्गतं प्रह्लादस्तवन मित्येतदपि परिहृतम्। "सत्स्वन्यत्र ततो दया" इति वचनात् इदञ्च भक्तिलक्षणमिति प्रकटयन्नाह-शोच इति। ते त्वत्तः इन्द्रियार्थेभ्यो विषयेभ्यो मायासुखं प्राकृत(तमस्स्व) स्वरूपं सुखं यत्तदर्थं भारं कुटुम्बभारम्।।४३।।

स्वेतरेषु क्रियमाणा कृपा स्वाश्रितेष्वेव कर्तव्यादेवादिभिः क्रियमाणत्वादित्यभिप्रेत्याह-**प्रायेणेति** देवा मुनयश्च विजनेन एकान्तस्थलेन साधनेन सहिताः काष्ठमौनदिव्रतं चरन्ति। कीदृशाः? स्वकीयानां जनानां विमुक्तिः स्यादिति स्वविमुक्तिकामाः। स महतां स्वभाव इत्याह—परेति। परप्रयोजनतात्पर्योपेता देवेषु तात्त्विकैर्विशेषतो मुनिषु कैश्चिदेवेति। विशेष प्रकाशनायप्रायेणेति; तदुक्तम्-"आश्रितेषु कृपाकार्या विशेषात्तात्त्विकैस्सुरैः। मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याऽखिलेष्वपि। तथाऽपि तात्त्विकसुराः कृपा विषयतां गताः। एत एव विमुच्यन्ते तदन्ये न कथञ्चन" (ब्रह्मतर्के) इति। यतो देवादयः स्वाश्रितेषु कृपां कुर्वन्ति अतोऽहमप्याश्रितानेतान् कृपणान् कृपाविषयान् विहाय एको न विमुमुक्षे, त्वमेको मत्प्रसादेन मुक्तो भव, अन्येऽन्येनवर्त्मनाऽमुक्तास्सन्त्विति, तत्राऽऽह-नाऽन्यमिति। स्वकर्मणा नानायोनिषु भ्रमतो ममाश्रितजनस्याऽनुकूलं त्वदन्यं शरणं नाऽनुपश्ये इत्यन्वयः।।४४।।

**यन्मैथुनादि गृहमेधिसुखं हि तुच्छं कण्डूयनेन करयोरिव दुःखदुःखम्।**
**तृप्यन्ति[1] नेह कृपणा बहुदुःखभाजः कण्डूतिवन्मनसिजं विषहेत धीरः।।४५।।**

**मौनव्रतश्रुततपोऽध्ययनस्वधर्म व्याख्या रहो जपसमाधय आपवर्ग्याः।**
**प्रायः परं पुरुष! ते त्वजितेन्द्रियाणां वार्ता[2]भवन्त्युत न वाऽत्र तु दाम्भिकानाम्।।४६।।**

**रूपे इमे सदसती तव वेद[3]दृष्टे बीजाङ्कुराविव नचाऽन्यदरूपकस्य।**
**युक्तास्समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु ना[4]ऽन्यतः स्यात्।।४७ ।।**

---

1. M,Ma देह 2. M,Ma °र्त्यापि 3. A,B,G,J,T °सृ° 4 H, V वाऽन्यतः

**त्वं वायुरग्निरवनिर्वियदम्बुमात्राः प्राणेन्द्रियाणि हृदयं चिदनुग्रहाश्च[1]।**
**सर्वं त्वमेव सगुणोविगुणश्च भूमन् नाऽन्यत्त्वदस्त्यपि मनो वचसा निरुक्तम्।।४८।।**

**श्रीध॰** नन्वेते स्त्रीसम्भोगादिना सुखिन एव, न कृपणास्तत्राऽऽह - **यदिति**। करयोः कण्डूयनेन सङ्घर्षणेनेव दुःखमनुदुःखं यस्मिन्। तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरन्, तत्राऽऽह–कृपणाः कामुकाः बहुदुःखभाजोपीह गृहमेधिसुखे न तृप्यन्ति अलमिति न मन्यन्ते कण्डूतिवत् कामस्य दुस्सहत्वात्। ननु, केचित्कण्डूतिमपि सहन्ते, कामश्चेत्यत्राह, त्वत्प्रसादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत, न तु सर्वे; अत्राऽपि कण्डूतिवर्दिति दृष्टान्तः।।४५।।

ननु मौनादिभिर्मोक्षसाधनैस्सुलभैव तेषामपि मुक्तिः, तत्राऽऽह - **मौनेति**। हे पुरुष! अन्तर्यामिन्! ये मौनादयो दश आपवर्ग्या अपवर्गहेतवः प्रसिद्धाः। रहो विविक्तवासः, ते तु प्रायसोऽजितेन्द्रियाणां इन्द्रियभोगाय अर्थार्थं विक्रीणतां वार्ताः जीवनोपाया भवन्ति। दाम्भिकानां वार्ता अपि भवन्ति वा, न वा, दम्भस्याऽनियत-फलत्वात्।।४६।।

तत्त्वज्ञानं[2] भक्तिं विना सकामै मौनादिभिर्न भवत्येवेत्याह–**रूपे** इति त्रिभिः बीजाङ्कुराविव प्रवाहापन्ने इमे सदसती कार्यकारणे एव ते रूपे उपलक्षणभूते वेदेन दृष्टे[3] प्रकाशिते। न चाऽन्यत् स्वसमवेतं गौरत्वादिकमिव देवदत्तादेः। कुतः ?अरूपकस्य प्राकृतरूपादिशून्यस्य। अतो युक्ता स्संयता एव भक्तियोगेन प्रत्यक्षं त्वामुभयत्र कार्ये कारणे च अनुगतं पश्यन्ति, मथनेन दारुषुवह्निमिव। नाऽन्यतः स्यात्त्वज्ज्ञानमिति[4] शेषः। यद्वा ज्ञानप्रकारमेवाऽह। एतदुभयमन्यतः प्रधानपरमाण्वादेर्नस्यात्। "स ऐक्षत" इत्यादिश्रुतेः। अत स्त्वमेव कारणत्वात् सर्वत्राऽनुस्यूत[5] इति।।४७।।

तदेवाऽऽह-**त्वं वायुरिति**। हृदयं मनः, चिच्चित्तम्, अनुग्रहोऽहङ्कारो देवता[6] वर्गो वा। सगुणः स्थूलः, विगुणः सूक्ष्मः मनश्च वचश्च मनोवचः तेन निरुक्तं प्रकाशितम्। किमपि त्वत्तोन्यन्नास्ति।।४८।।

**वीर॰** ननु, त्वदीया जना न दैन्यं प्राप्ताः, किन्तु विषयानुभवेन दृप्ता एव। अतस्तेषां दैन्यापादनेन त्वं किमिति इत्थं प्रार्थयसे ? तत्राऽऽह-**यदिति**। यन्मैथुनादिकं गृहमेधिनो गृहस्थस्य सुखं, तत्करयोः पाम्ना दूषित-

---

1 W °हश्च 2 A,B,J त्वज्ज्ञानं 3.A,B,J स्र° 4 H,V °स्याज्ज्ञा° 5 H,V °सृत 6.H,V तद्दे°

**योर्हस्तयोः कण्डूयनेन सङ्घर्षणेनेव तज्जन्यदुःखवत्** दुःखदुःखं अतीवदुःखात्मकं दुःखादुपरिदुःखं दुःखोदर्कमिति वाऽर्थः। **अत एव तुच्छम्।** तर्हि तस्य दुःखत्वादेव ततो निर्विद्य मुमुक्षेयुः, तत्राऽऽह-कृपणाः कामिनः **बहुदुःखभाजोपीह** गृहमेधिसुखेन तृप्यन्ति अलमिति न मन्यन्ते; कण्डूतिवत् कामस्य दुस्सहत्वात्। अतस्ते **स्वानर्थमेव** न जानन्तीति भावः। ननु, केचित्कण्डूतिमपि सहन्ते, कामश्चेत्यत्राऽऽह-सत्यं, धीरश्चेत्त्वदनुग्रहाज्जितेन्द्रिय-**श्चेन्मनसिजं कामं** सहेत,न त्वजितेन्द्रिय इति भावः।।४५।।

तर्हि कश्चिन्मौनादिभिरुपायैरिन्द्रियाणि जयद्भिरपवर्गः साध्यः, तत्राऽऽह-**मौनेति** हे पुरुष! परम पुरुष। मौनादय आपवर्ग्याः जितेन्द्रियाणामपवर्गोपाया एवेति सत्यमेव। अजितेन्द्रियाणान्तु वार्ता जीवनोपाया भवन्ति [1-]"अयं मौनादिसम्पन्नस्ततोऽस्मैदेयम्" इति मन्यमानेभ्यः परेभ्यः लब्धवित्तो भवतीति जीवनोपाया भवन्ति[-1] [2-]न तु अपवर्गोपाया भवन्ति[-2]। सतीन्द्रियजये मौनादय आपवर्ग्याः न तु तस्मिन्नसति, भवदनुग्रहाच्च विषयवैतृष्ण्येन भवतिव्यमिति भावः। अपवर्गार्थतया अनुष्ठिता अपि मौनादयोऽजितेन्द्रियाणां वार्ता एव, न तु[3] आपवर्ग्याः, किम्पुनर्दम्भार्थं कृता आपवर्ग्या न भवन्तीत्याह उतेति। दाम्भिकानां मौनादयो वार्ता अपि भवन्तीत्युत न वा, किम्पुनरापवर्ग्या न भवन्तीति दाम्भिकानां दाम्भिकत्वे प्रकटे सति जीवनहेतवोऽपि न भवन्तीति उत न वा शब्दार्थः। तत्र मौनं वाङ्नियमः, व्रत मनशनादिरूपं, श्रुत मध्ययनम् तपःकृच्छ्रादि, अध्ययन मध्ययनजं पाण्डित्यं, स्वधर्मः स्ववर्णाश्रमोचितो धर्मः, व्याख्या अध्यापनं, रहो निर्जनदेशवसतिः, जपो मन्त्रजपः, समाधि र्ध्यानम्। मनसिजं विषहेत धीर इतीन्द्रियजयमूलकः कामजय इत्युक्तम्। तथा अजितेन्द्रियाणां वार्ता भवन्तीत्यनेन जितेन्द्रियाणान्तु आपवर्ग्या भवन्तीति सूचितम्।।४६।।

तर्हीन्द्रियजयः कथं स्यादित्यपेक्षायां सर्वात्मकनिरतिशयानन्दरूप ब्रह्मोपासननिष्ठस्य अर्थादेवेन्द्रियजयः स्यादिति वक्तुं तावत्तदुपासनाप्रकारंविवक्षुश्चेतनाचेतनयोः परमात्मशरीरत्वमाह-**रूपे** इति। इमे सदसती चिदचिद्द्रव्यरूपे बीजाङ्कुरा विवस्थिते अरूपकस्य कर्माधीनदेहरहितस्य तव वेददृष्टे वेदबोधिते रूपे शरीरं "य आत्मनि तिष्ठन्" "आत्मनोऽन्तरोयमात्मा न वेद" "यस्याऽऽत्मा शरीरं, यः पृथिव्यां तिष्ठन् पृथिवी मन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरम्" (बृ.ह.उ. 3-7-3) "यस्याऽक्षरं शरीरं" (सुबा.उ. 7-1) "यस्याव्यक्तं शरीरम्" (सुबा.उ. 2-7) इत्यादि वेदबोधिते[4] तव शरीर इत्यर्थः। बीडाङ्कुरौ इत्यनेन कदाचित्कारणावस्थया कदाचित्कार्यावस्थया चोभयधाऽवस्थिते उभे अपि चिदचिद्द्रव्ये तव शरीरभूते इत्युक्तं भवति। अरूपकस्य

---

1- -1 W Omits 2- -2 A,B,T Omit 3. A,B,T Omit इति 4 A,B,T °तश °

रूपे इत्यनेन तच्छरीरकत्वं न तव कर्माद्युपाधिप्रयुक्तमपि तु निरुपाधिकमित्युक्तं, यत उभयावस्थास्थितयोश्चिदचितो स्त्वच्छरीरत्वमत एव न चाऽन्यत्। अन्यदत्त्वदात्मकं किञ्चिदपि वस्तुनास्ति। एव मुभयत्र त्वच्छरीरभूत-योश्चिदचित्तोस्त्वां योगेनोपासनात्मकेन युक्तास्सन्तो मुनयो विचक्षते पश्यन्ति। [1]तत्र दृष्टान्तः[1] - वह्निमिव दारुषु, यथा दारुषु मथनाद्युपायेन वह्निं विचक्षते तद्वत्, अन्यतो योगादन्यत उपायान्तरान्नस्यात्, साक्षात्कार इति शेषः। उपायान्तरेण साक्षात्कारो न स्यादित्यर्थः।।४७।।

नचाऽन्यदित्यनेन अन्यत् त्वदात्मकं नास्तीत्युक्तं, नाऽन्यतः स्यादित्यनेनोपायान्तराद्दृश्यत्वञ्च। तदेतदुभयं प्रपञ्चयन् सर्वात्मकब्रह्मसाक्षात्कारादेव निश्शेष इन्द्रियजय इत्याह–त्वमिति द्वाभ्याम्। तावत्सर्वात्मकत्वं प्रपञ्चयति-त्वमिति। त्वमेव वाय्वादिरूपेणाऽवस्थितः, तच्छरीरकत्वेनाऽवस्थित इत्यर्थः। पूर्वं तवरूपे "तवरूपे" इति व्यतिरेकनिर्देशादत्राऽभेदनिर्देशाच्चेदं तादात्म्यं शरीरात्मभावनिबन्धनमित्यवगम्यते। तत्र मात्राः शब्दादयस्तन्मात्राः, प्राणाश्चेन्द्रियाणि, हृदयं मनः चिदनुग्रहं ज्ञानोत्पत्त्यनुग्राहकं हृदयविशेषणं चिदनुग्रहश्चेति पाठे ज्ञानोत्पत्त्यनुग्राहको महान् बुद्धितत्त्वात्मक उच्यते। किं बहुना, सगुणः सत्त्वादिगुण[2]प्रयुक्तः प्रकृतिपरिणामात्मकः सर्वः पदार्थः विगुणः सत्त्वादिगुणरहितः तदपरिणात्मको जीववर्गश्च मनश्च वचश्च तयोस्समाहारो मनोवचः तेन निरुक्तं विषयीकृतं तदेतत्सर्वं त्वमेव त्वच्छरीरभूतमेव।।४८।।

**विज॰** सुखानुभवार्थं हि मोक्षाकांक्षा, तच्छब्दादि विषयेभ्योऽपि स्यात् अतोऽजागलस्तनायितमोक्ष-सुखायको वा प्रेक्षावान् महाप्रयत्नं कुर्यादुन्मत्तमन्तरेण? इति तत्राऽऽह-**यन्मैथुनादिति**। मैथुनादिगृहस्थसुखं यत् तल्लब्ध्वा देहकृपणा देहमात्रपोषणपरायणा स्तृप्यन्ति, नाऽन्ये प्रेक्षावन्त इति शेषः। तदपि न सुलभमित्याह-बहुदुःखेति। तत्र बुद्धिमतैवं कार्यमित्याह-कण्डूतिवदिति। मनसिजंकामम्।।४५।।

मुमुक्षुभिः प्रथमत इन्द्रियजय एव समर्थनीयोऽन्यथा मुक्तिसाधनानामपि मौनादीनां लोके जीवनोपायमात्रत्वं भवतीत्याह-**मौनेति**। आपवर्ग्या मुक्तिहेतवः प्रायः सम्यग्भक्त्यनुष्ठिता इति शेषः। हे पुरुष। परं न चेत् त एव अजितेन्द्रियाणां पुंसां वार्तास्तत्कालजीवनमात्रोपाया भवन्त्युत अपि सम्भावनामात्रं न तु मुख्यत इत्यर्थः। लोकमोहनार्थं मौनादिकमनुतिष्ठतां दाम्भिकानां तदपि न सेत्स्यतीत्याह अत्र जीवलोके वा यथा अजितेन्द्रियाणां

1- -1 W Omits 2 A.B.T Omits प्र

जीवनमात्रोपाया, न तथा दाम्भिकानां भवन्तीति। "वा विकल्पोपमानयोः" (उपमायां विकल्पे वा) (अम.को. 3-404) इत्यभिधानम्। न वा भवन्तीत्येकं वाक्यमिति वा।।४६।।

मौनादीनां क्लेशसाध्यत्वेनाऽसर्वाधिकारित्वात् सर्वाधिकारिकोपासनाविषयं निरूपयति-**रूपे** इति। इमे सदसती कार्यकारणे तवरूपे त्वद्वशत्वात्वत्सन्निधानयोग्ये। अत्र प्रमाणमाह–वेदेति।"द्वे वा व ब्रह्मणोरूपे" (बृह.उ. 2-3-1) इत्यादौ कार्यकारणत्वं किं विकारभावेन निमित्तनैमित्तिकभावे न चेत्याशङ्क्य यथायोग्यमित्यूह-नीयमित्यत्र दृष्टान्तमाह-बीजेति। व्याख्यातमेतत्-"विज्ञानमानन्दं ब्रह्म" (बृह.उ. 5-6-18) इतिवत्। वेददृष्टेचेत्, किं साक्षाद्रूपे इति? नेत्याह-न चेति। अन्यद्विलक्षणं ज्ञानानन्दादिलक्षणं नैव कुतोऽत्राह-अरूपकस्येति। प्राकृतरूपाभावादित्यर्थ। महतां प्रत्यक्षञ्चाऽत्र प्रमाणमित्याह-युक्ता इति। भक्तियोगेनोभयत्ररूपद्वये युक्ता, उपासनालक्षणध्यानेनेति शेषः। युक्ता योगिनः उभयत्र सन्निहितं त्वां पश्यन्तीति वा। दर्शनप्रकारमाह-वह्निमिति। योगेन मथनाद्युपायेन। अन्ययोगं निवारयति नाऽन्यत इति। भक्तियोगादन्यतोऽन्येनेति। साक्षात्स्वरूपादन्यत् प्राकृतं रूपं नैव। "अरूपमक्षरं ब्रह्म" इति श्रुतेः। अतो न साक्षाद्रूपे इति वा योजना। "साक्षात्स्वरूपापेक्षया स्वरूपादन्यरूपं न" इत्याचार्यविवरणमत्र प्रमाणम्।।४७।।

के ते कार्यकारणे इत्यत स्तन्नामनिर्देशः। तत्सत्ताप्रदत्वेन तद्वशत्वे तद्रूपत्वाभिप्राय इत्याशयेनाऽऽह--त्वमिति। चिदनुग्रहश्चेतन स्तन्मनसा वचसा निरुक्तं नत्वदन्यत्, त्वां विना प्रवृत्तिमन्नास्ति स गुणस्संसारी शौक्ल्यादिगुणयुक्तो वा। विगुणो मुक्त उत्पन्नानन्तरक्षणविशिष्ट पदार्थो वा।।४८।।

**नैते गुणा[1] न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सहदेवमर्त्याः।**
**आद्यन्तवन्त उरुगाय विदन्ति हि त्वा[2]मेवं विमृश्य सु[3]धियो विरमन्ति शब्दात्।।४९।।**
**[4]तत्तेऽर्हत्तम! नमः स्तुतिकर्मपूजाः कर्म स्मृतिश्चरणयोः[-4] श्रवणं कथायाम्।**
**संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेत।।५०।।**

---

1.H,V, ॰णानुगु॰ 2.M,Ma हित्वा एवं; W हित्वादेवं 3. H,V मुनयो 4--4 H,V तत्तेऽर्हसत्तम! नमः स्तुतिकर्मपूजाः कर्मस्मृतिश्चरणयोः; M,Ma तत्त्वे मनोदर्शने दृगपि स्तुतौ च वाक्कर्मणि ह्यपि करौ; W तत्ते महत्तमनमः स्तुति कर्म पूजाः कर्मस्मृतिश्चरणयो.

नारद उवाच

एतावद्वर्णित गुणो भक्त्या भक्तेन निर्गुणः।
प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत[1] ।।५१।।

श्रीभगवानुवाच

प्रह्लाद ! भद्र[2] ! भद्रं ते प्रीतोऽहं तेऽसुरोत्तम !
वरंवृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम्।।५२।।

**श्रीध०** अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानन्तीत्याह-**नैत** इति। एते गुणाद्यभिमानिनो देवाः आद्यन्तवन्तो जडोपाधित्वा दनाद्यन्तं निरुपाधिकं[3] त्वां न विदन्ति। हि यस्मात् सुधियो विद्वांसः एवं विचार्य शब्दा दध्ययनादिव्यापारात् विरमन्ति[4], त्वामेव समाधिनोपासत इत्यर्थः। तथा च श्रुतिः "किमर्था वय मध्येष्यामहे किमर्थावयं यक्ष्यामहे" इति। "नाऽनुध्यायेद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्" इति। स्मृतिश्च "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च" इत्यादिः।।४९।।

उपसंहरति-**तदिति**। हे अर्हसत्तम![5] नमस्स्तुतिकर्मपूजाः प्रणिपात स्तुतिकर्मार्पणानि[6] कर्म च परिचर्या-चरणयोः स्मृतिश्च कथायां श्रवणञ्च इत्येवं षडङ्गया सम्यक्सेवया विना परमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत? यस्मादेवं भक्तिं विना न मोक्षः न च भक्तिः संसेवया विना, अतः प्राक्प्रार्थितं त्वद्दास्ययोगमेव देहीति प्रकरणार्थः।।५०।।

**एतावदिति**।[7] एतावन्तो वर्णिताः गुणाः यस्य। यतमन्यु रुपसंहृत कोपः।।५१।।

**प्रह्लादेति**। कामान् पूरयतीति तथा; यद्वा पुरुषार्थप्रवाहोऽस्मीत्यर्थः।।५२।।

**वीर० नैत** इति। गुणाः सत्त्वादयः गुणिनः प्राकृतगुणपरिणामात्मकाः महदादयः आदिशब्देनाऽहङ्कार तन्मात्राऽऽकाशादिभूतानि विवक्षितानि। सहदेवमर्त्याः देवमर्त्यादिभिः सहिताः मनः प्रभृतयश्च करणानि करणिनश्च ये इत्यर्थः। त एते सर्वे त्वां न। विदन्ति। गुणाः न विदन्ति[8], गुणिनोऽपि न विदन्ति इति प्रत्येकान्वयाभिप्रायेण नञ्द्वयोपादानम् सकरणास्सर्वे देवमनुष्यादयः स्वान्तरात्मतया वसन्तमपि नत्वामुपायान्तरेण विदन्तीत्यर्थः।

1.M,Ma गत 2- -2 W वत्स! प्रह्लाद! 3 A,B,J. ०धि 4 A,B,J उपर० 5. A,B,J. ०त्तम 6.A,B,J add सर्व 7. H,V एतावता 8- -8 W Omits

तत्र हेतुं वदं स्तान् विशिनष्टि आद्यन्तवन्त इति, कर्मायत्तोत्पत्तिविनाशिनः कर्मणासङ्कुचितज्ञानत्वान्नविदन्तीति भावः। मुनयः सर्वान्तरात्मभूतत्वत्स्वरूपमननशीलास्तु हे उरुगाय! त्वामेव सर्वात्मकब्रह्मानुसन्धानरूपयोगेन त्वत्साक्षात्कारविरोधि कर्मनिरसनेन विमृश्य विमर्शनपूर्वकं साक्षात्कृत्य शब्दात् शब्दादिविषयात् विरमन्ति । एव मेव हि निश्शेषमिन्द्रिय जय इति भावः।।४९।।

एवमुपासनात्मकभक्त्येकवेद्यत्वं निरतिशयानन्दरूपत्वत्स्वरूपविषयकभक्तियोगगतस्य अर्थादेव शब्दादिविषयेभ्यो विरामश्चोक्तः। सा च भक्तिः वक्ष्यमाणषडङ्गसेवया विना दुर्लभेतिवदन्नुपसंहरति-**तदिति**। हे[1] महत्तम! तव नमस्स्तुतिकर्म नमस्क्रिया नमस्कारः, स्तुतिक्रिया च पूजा अर्घ्यपाद्यादि निवेदनात्मिका, कर्म परिचर्यात्मकम् ; यद्वा-प्रथमकर्मशब्देन पादसेवनादिपरिचर्यात्मकं कर्म उच्यते, पूजाकर्म पूजात्मकं कर्म, चरणयोः स्मृतिः स्मरणं, कथायां विषयभूतायां श्रवणं कथाविषयकश्रवणञ्चेति इत्थं षडङ्गयासेवया विना परमहंसानां प्राप्ये त्वयि भक्तिं जनो लभेत किम्? तयैव लभेत।।५०।।

तदेवं प्रह्लादेन संस्तुतो नृसिंह स्तमुवाचेत्याह देवर्षिः **एतावदिति**। भक्तेन प्रह्लादेन भक्त्या एतावदेतावन्मात्रं वर्णितागुणा यस्य। एतावच्छब्देन गुणानामानन्त्यं सूचयति-निर्गुणो हेयगुणरहितः श्रीनृसंहः यतमन्युरूपसंहतक्रोधः प्रीतः स्तुत्या हृष्टः "स महात्मा सुदुर्लभः" (भ.गी. 7-19) इत्युक्तरीत्या दुर्लभस्वभक्तलाभेन वा प्रीतः प्रणतं तं प्रह्लादमभाषतोवाच।।५१।।

तदेवाऽऽह-**प्रह्लादेति** त्रिभिः। हे प्रह्लाद! वत्स! ते भद्रमनिष्टनिवृत्तिरिष्टप्राप्तिश्च भवेत् कुतः ? हे असुरोत्तम! यतोऽहं ते त्वया प्रीतः प्रीतिं प्रापितः, अत एवाऽभिलषितं वरं वृणीष्ववरय। अहं नृणा मर्थिनां कामपूरः, काम्यन्त इति कामाः धर्मादयः तान् पूरयति ददातीति तथाऽहमस्मि।।५२।।

**विज०** पृथिव्यादिमहत्तत्वान्तं पदार्थजातं कार्यकारणात्मना द्वित्वेन क्रोडीकृतं भगवद्रूपं ततो भिन्न मित्युक्तम्। इदानीं तदवस्थित परमात्मानं तदभिमानिनो देवा अपि साकल्येन न जानन्तीत्येवं विधानन्तमाहात्म्याम्बुराशिरिति निश्चित्य तमुपासते सन्त इत्याह-**नेति**। गुणाः सत्त्वादिगुणाभिमानिनः, गुणिनो गुणविकाराः। सहदेवमर्त्या इत्यत्र देवशब्देन पृथग्विग्रहवन्त इन्द्रादयो गृह्यन्ते, सुधियो निश्चितशास्त्रार्थाः, शब्दाद्वेदादि शब्दराशिप्रमाणादेते आद्यन्तवन्त स्त्वां न विदन्तीत्येवं विमृश्य विचार्योपास्य तत्प्रसादेन सन्दृश्य विरमन्ति, संसारादिति शेषः।

1 W हरे !

"यद्वाचाऽनभ्युदितम्" (केन. 3-1-4) इत्यादि श्रुतेः। शब्दाद्विरमन्तीत्यत्र शब्दत्यागोनाऽर्थः। किन्तु वेदेन निर्णीततत्त्वस्य तत्त्वे निरन्तरस्यन्दमानबुद्धिजलराशेः पुंसो हरिगुणानुस्मरणाऽऽयासो नास्तीति वा।।४९।।

श्रीनारायणप्रसाद एव पुरुषार्थसाधनमित्युक्तं, तस्य भक्तिज्ञाने तयोश्च षडङ्गोपासना साध्यं ध्यानं विना नाऽन्यदन्यथा न स्यादित्याशयेनाऽऽह-**तत्त्वे** इति। हि शब्देन अन्यथा जीवच्छव इत्याह। अपिशब्दात् पादौ तव क्षेत्रानुगमने नियोज्याविति ग्राह्यम्। एवं षडङ्ग्या सेवया विना मुमुक्षुः परमहंसानां गतौ आश्रयभूते त्वयि भक्तिं ज्ञानञ्च लभेत किम्? साधनान्तराभावात् नाऽऽप्रोतीत्यन्वयः। भक्तिज्ञानयोः हेतुहेतुमद्भावादेकग्रहणेन द्वयोर्ग्रहणं युज्यत इति भावः। "परा पूर्वेषां सङ्ख्या वृणक्ति" इति श्रुतेः।।५०।।

हरेरसुरेषु प्रद्वेषाशयात् प्रह्लादस्याऽपि तज्जातित्वेन तत्स्तुत्या कोपोपशमः स्यात्किम्? प्रत्युत आक्षेप करत्त्वेनाऽऽग्नौ शुष्केन्धनप्रक्षेपणवत् ज्वलनाय स्यादिति तत्राऽऽह - **एतावदिति**। योग्यतानुकूल्येन भक्त्या।भक्तेनेति विशेषणद्वयेन शङ्कानिरस्तेति ज्ञातव्यम्। जातित्वमप्रयोजकं भक्तिरेवेति सूचनेन देवदत्तवदुन्मत्तो न भवति भगवानिति सिद्धम्।।५१।।

मन्युशान्तेः किं गमकमिति तत्राऽऽह-**प्रह्लादेति**। वरदानसामर्थ्ये हेतुमाह-कामपूर इति। नृणां, भक्तानामिति शेषः।।५२।।

**मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे।**
**दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति।।५३।।**
**प्रीणन्ति ह्यथ मां धीराः सर्वभावेन साधवः[1]।**
**श्रेयस्कामा महाभागा सर्वासामाशिषां[2] पतिम्।।५४।।**

**[3-]नारद उवाच[-3]**

**एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः।**
**एकान्तित्वाद्भगवति नैच्छत्तानसुरोत्तमः।।५५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे प्रह्लादचरिते भगवत्स्तवो नाम नवमोऽध्यायः।।९।।

---

1.M,Ma माधवम् 2 M,Ma सर्वेषा 3--3 A,B,G,J,T,W Omit

**श्रीध० मामिति**। अप्रीणतः अप्रीणयतः। तप्तुमपूर्णकामत्वेन शोचितुम्।।५३।।

**प्रीणन्तीति**। प्रीणन्ति तोषयन्ति।।५४।।

**एवमिति**। एकान्तित्वात् निरुपाधिकभक्तत्वात्[1] ।।५५।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां नवमोऽध्यायः।।९।।

**वीर०** हे आयुष्मन्! मामप्रीणतः प्रीतमकुर्वतः पुंसो दुर्लभं हि ममदर्शनं, मां दृष्ट्वा जन्तुर्देही पुनरात्मानं तप्तुमपूर्णकामत्वेन शोचितुं नाऽर्हति।।५३।।

अथाऽतो धीरा जितेन्द्रियाः श्रेयस्कामयमानाः महाभागा विवेकिनः साधवः सर्वासामाशिषां पुरुषार्थानां पतिं दातारं मां सर्वभावेन करणत्रयैक्येन प्रीणन्ति तोषयन्ति [2-]हि खलु[-2]।।५४।।

एवं वराय चोदितोऽपि नैच्छदसुरोत्तम इत्याह नारदः - **एवमिति**। लोकानां विषयातुराणां प्रलोभनं विमोहकैः[3] वरैरेवमित्थं प्रलोभ्यमानोऽप्यसुरोत्तमः प्रह्लाद एकान्तभक्तत्वादनन्यप्रयोजनभगवद्भक्तियुक्तत्वात् तान् धर्मादीन् वरान्नैच्छत् नेयेष।।५५।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां नवमोऽध्यायः।।९।।

**विज०** मत्प्रसाद एव दर्शनकारणमित्याह-**मामिति**। मामप्रीणतोऽप्रीणयतः मद्दर्शनफलञ्च पान्थदर्शन वन्नेत्याह-दृष्ट्वेति।।५३।।

यतो न तप्ता स्त्रैय्या तस्माद्धीरा माधवं मां प्रीणन्ति प्रीणयन्ति, केन सर्वभावेन पूर्णभक्त्या। माधव इत्यस्याऽर्थो मङ्गलं देवतापतिरित्यभिप्रायेणाह-सर्वेषामिति सर्वेषामविशेषेण या या अभिलषिता आशिषस्तासां तासा माशिषां पतिं पातृत्वेन दातारमित्यर्थः।।५४।।

---

1. A,J °धिकत्वात्; B °धिभक्तत्वात्। 2- -2 W Omits 3. W °नैः

प्रह्लादोऽपि सामान्यभक्तो न भवति, किन्तु भक्तोत्तम इति प्रकटनाय भगवता विप्रलुब्धोऽपि तान्वरान् नैच्छदित्याह-**एवमिति**। एकान्तित्वान्नैसर्गिकभक्तत्वात्।।५५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे नवमोऽध्यायः।।९।।

* * * *

# दशमोऽध्यायः

नारद उवाच

भक्तियोगस्य तत्सर्वमन्तरायतयाऽर्भकः।
मन्यमानो हृषीकेशं स्मयमान उवाच ह* ।।१।।

प्रह्लाद उवाच

[1]मा मां प्रलोभयोत्पत्त्याऽऽसक्तं कामेषु तैर्वरैः।
तत्सङ्गभीतो निर्विण्णो [2-]मुमुक्षुस्त्वामुप[-2]श्रितः।।२।।

भृत्यलक्षणजिज्ञासु[3]र्भक्तं कामे[4]षु चोदयन्।
भवान् संसारबीजेषु हृदयग्रन्थिषु प्रभो।।३।।

नाऽन्यथा तेऽखिलगु[5]रो घ[6]टेत करुणात्मनः।
•नष्टदृष्टे स्तमस्यन्धे [7]त्वमेकः पारदर्शनः।।
यस्त आशिष आशास्ते न स भृत्यस्स वै वणिक्।।४।।

sस वै स्वामी स वै भृत्यो गुणलुब्धौ न कार्मुकौ।
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः।।
न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाऽऽशिषः।।५।।

अहन्त्वकामस्त्वद्भक्तस्त्वञ्च स्वाम्यनपाश्रयः।
नाऽन्यथेहावयोरर्थो राजसेवकयोरिव।।६।।

---

*विजय ध्वज पाठः 'उवाच हि' इति स्यादिति जायते 1. M,Ma मा मा 2- -2 W विमुमुक्षुरुपा 3 H,V भृत्यं 4 A,B,G,J,T °ष्वचोदयत्: M,Ma °ष्वचोदयात् 5. M,Ma °रोर्घं° 6. H,M,Ma,V °टते •This half verse is not found in A,B,G,J,T Editions 7 M,Ma त्वं पारः

sThis half verse is not found in A,B,G,J,T editions.

यदि रासीश मे कामान् वरांस्त्वं वरदर्षभ[1]।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम्।।७।।
इन्द्रियाणि मनःप्राणा[2] आत्मा धर्मो धृतिर्मतिः।
ह्रीः श्रीस्तेजः स्मृतिस्सत्यं यस्य[3] नश्यन्ति जन्मना।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे त्वनुगृह्याऽमुं भक्तमन्तर्हिते हरौ। प्रसङ्गाद्धरिणा रुद्रे कृतोऽनुग्रह ईर्यते।।

**भक्तीति**। तत्सर्वं वरजातम्।।१।।

**मेति**। उत्पत्त्या स्वभावेनैव आसक्तं माम्। तेषां कामानां सङ्गाद्भीतः।।२।।

ननु किमहं भक्तं प्रलोभयामि, न हि, किन्तु वरं वृणीष्वेति वदतस्तवाऽभिप्रायोऽन्य एवेत्याह - **भृत्य-लक्षणेति**। हृदयस्य ग्रन्थिवत् बन्धकेषु। अन्यथाऽनर्थसाधने प्रवर्तनं न घटेत इत्यर्थः। कथमेवं भृत्यलक्षण ज्ञानं स्यात्, तत्राऽऽह - य इति। ते त्वत्तः।।३,४।।

**स** इति। ननु कामनयाऽपि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसिद्धः, सत्यम्। सोपाधिकोऽसौ न तु तात्त्विक इत्याह। स्वामिन्यात्मन अशिषोऽपेक्षमाणो नैव भृत्यः। भृत्यहेतुकमात्मनः स्वाम्यमिच्छन् यो भृत्याय ददाति स च नैव स्वामी।।५।।

आवयोस्तु तात्त्विकोऽसौ इत्याह - **अहन्त्विति**। अनपाश्रयो निरभिसन्धिः। अन्यथा कामाद्यभिसन्धिना अर्थः प्रयोजनं नास्ति।।६।।

ननु तथाऽपि परमोदारस्य मम सन्तोषार्थं किमपि वृणीष्वेति चेदत आह - **यदीति**। [4-]कामोऽभिसन्धिः[-4] कामाङ्कुराणां असंरोहं अनुत्पत्तिं भवतः सकाशात्।।७।।

ननु कामोत्पत्तौ सत्यां को दोषस्तत्राऽऽह - **इन्द्रियाणीति**। इन्द्रियादीनि यस्य जन्मना नश्यन्ति इति, आत्मा देहः।।८।।

---

1 W °भः; 2. A,B,G,J,T °णाः; 3. M,Ma येषां; 4- -4 A,B,J, omit;

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

[1]वरानिच्छायां हेतुं वदन् तं विशिंषन् भगवन्तं [2]प्रह्लादः [3]प्राहेत्याह देवर्षिः - **भक्तियोगस्येति**। तद्भगवता चोदितं धर्मादिवरजातं सर्वमनन्यप्रयोजन भक्तियोगस्यान्तरायतया विघ्नरूपतया मन्यमानः स्मयमानः, अहो मदभिप्रायज्ञो मदन्तरात्मा सन् मामेवं प्रलोभयतीति स्मयमानो हृषीकेशं भगवन्तमुवाच।।१।।

तदेवाह - **मेति** दशभिः। उत्पत्त्या स्वभावेनैव। कामेषु सक्तमासक्तमिति वा छेदः। उत्पत्तिप्रभृति कामेष्वासक्तं मां तैः कामरूपैः वरैः मा प्रलोभय प्रलुब्धं मा कुरु। यतोऽहं तत्सङ्गेन कामासक्त्या अनर्थावहया भीतः तत्र कामेषु निर्विण्णः संसृतिबन्धान्मोक्तुं इच्छुः त्वामुपाश्रितः शरणं गतः।।२।।

.वरं वृणीष्व [4]अभिमतम् इति वराय चोदयतः तव चोदनाद्वारा याचमानाय मह्यं न वरप्रदानेऽभिप्रायः, किन्तु भृत्यस्य मम मनःपरीक्षायामित्याह - **भृत्येति**। कामेषु भृत्यं मां चोदयन् भवान् भृत्यस्य अनन्यप्रयोजनत्वरूपं लक्षणं जिज्ञासुः सर्वज्ञोऽपि भवान् मन्मुखेन मन्मनःपरिजिज्ञासुरेव भृत्यं मां मन्मनः परीक्षार्थमेव मां भृत्यं कामेषु भवान् चोदितवानित्यर्थः। अचोदयदिति पाठः सुगमः। अन्यथा कारुण्यजलधेर्हितोपदेष्टुः भक्तानुग्राहकस्य अनर्थावहेषु कामेषु भृत्यं प्रति वरयाच्ञायै चोदना न घटत इत्याह - अन्यथा एवं चोदयतः तव भृत्यलक्षणजिज्ञासुत्वाभावे तव करुणात्मनः कारुण्यमूर्तेरखिललोकहितोपदेष्टुः अहितरूपेषु दुःखरूपगर्भजन्म[5]जरामरणादिरूपसंसारस्य बीजभूतेषु [6-]हृदयग्रन्थिषु[-6] हृदयग्रन्थिवद्दुर्मो[7]चेषु न घटेत चोदनेति शेषः। अतो भृत्यलक्षणजिज्ञासुस्सन्नेव कामेषु मामचोदयदित्यर्थः। अत्र घटते करुणात्मन इत्यस्यानन्तरं क्वचित् "नष्टदृष्टेस्तमस्यन्धे त्वमेकः पारदर्शनः" इति पठ्यते। तत्राऽयमर्थः - इतोऽपि न कामेषु चोदना भवतो घटत इत्याह - नष्टदृष्टेरिति। अन्धे तमसि संसारात्मके नरके नष्टदृष्टेः स्वात्मपरमात्मयाथात्म्यज्ञानरहितस्य [8]पुंसः अन्धतमस्तरणोपायानभिज्ञस्य वा पुंसः त्वमेवैकः पारदर्शनोऽन्धतमसः पारभूतमात्मानं दर्शयतीति तादृशः। यत एवम्भूतः त्वं ततः तव न घटत इति।।३।।

न तु आशिषः कामयमानोऽपि भृत्यो मम दृश्यत एवेत्य आह - य इति। ते त्वत्तः निरतिशयपुरुषार्थस्वरूपात् यः पुमान् आशिषः कामानाशास्ते त्वत्सेवापूर्वकं प्रार्थयते। स तव न भृत्यः न भृत्यलक्षणलक्षितः। किं तर्हि? स तु [9]वणिक् वणिक्तुल्यः। यथा वणिक् यावत्स्वप्रयोजनमन्यमनुवर्तते तद्वत्सोपाधिकानुवृत्तिमानित्यर्थः।।४।।

1 W अनिच्छा° 2 W प्रह्लादं 3. W उवाचे° 4. A,B,T omit अभिमतम् 5 A,B,T omit जरा 6- -6 A,B,T omit 7 A,B,T °च्यं° 8 A,B,T omit पुंसः 9. A,B,T omit वणिक्

एवं भृत्यात्किञ्चित्प्रयोजनमपेक्ष्य तस्मै कामान्ददतःस्वमित्वमपि निरुपाधिकं नास्तीत्याह - **आशासान** इति। आत्मनः स्वस्य स्वामिन्याशिषः कामानाशासानः कामयमानः न वै भृत्यः भृत्यो न भवति। इदं दृष्टान्तार्थम्, अस्यार्थस्य पूर्वमुक्तत्वात्, यथाऽयं भृत्यो न भवति इत्यर्थः। तथा भृत्या त्स्वाम्यं स्वामिनः प्रयोजनं स्वाम्यं, तदिच्छन् कामयमानो यो भृत्यायाऽऽशिषो राति ददाति स वै न स्वामी स्वामिशब्दवाच्य एव न भवति नित्यं निरुपाधिकं स्वमस्यास्तीति स्वामी इति नित्ययोगार्थ मत्वर्थीयाऽऽमिनच् प्रत्ययान्त स्वामिशब्द वाच्य एव न भवति, तस्य सोपाधिकस्वामित्वादिति भावः। अत्र "राति चाऽऽशिषः" इत्यस्यानन्तरं "स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ" इति क्वचित्पठयते। तत्राऽयमर्थः - कौ तर्हि स्वामिभृत्यौ इत्यत आह - **स वा** इति। यौ गुणलुब्धौ परस्परानुरागजनक सद्गुणमात्रमोहितौ न कामुकौ परस्परं प्रयोजनान्तरमनपेक्षमाणौ अनुवर्तेते स एव भृत्यः, स एव स्वामीति।।५।।

आवयोस्तु[1] स्वस्वामिभावः स्वाभाविक इत्याह - **अहमिति**। अहन्तु कीदृशो वा भवतु लोके भृत्यः, अहन्तु अकामोऽनन्यप्रयोजनः त्वद्भक्त[2] इति[3] शब्दार्थः। त्वमनपाश्रयः स्वामीति त्वद्भक्तोऽहमकामोऽनन्यप्रयोजनः। "स्वत्वमात्मनि सञ्जातं स्वामित्वं ब्रह्मणि स्थितम्।" (विष्णुधर्मे) "नाऽन्यथालक्षणं तेषां बन्धे मोक्षे तथैव च" (विष्वक्सेन संहिता) इत्युक्तरीत्या प्रबुद्धनित्यनिरुपाधिकत्वद्दास्योऽहम् त्वन्तु निरुपाधिकस्वामीत्यध्यवसाय्पूर्वकं नित्यं स्वस्य स्वाम्यनुवर्तनं स्वस्वरूपानुबन्धीत्यध्यवसायेन परिहृतान्यप्रयोजनः त्वद्भक्तोऽस्मीत्यर्थः। अतोऽन्यथा प्रकारान्तरेण आवयोरिह स्वस्वामिभावे अर्थः प्रयोजनं नास्ति। राजसेवकयोरिवेति व्यतिरेकदृष्टान्तः। यथा राजसेवकयोः प्रयोजनान्तरमूलकः स्वस्वामिभावः, तथा नाऽवयोरिति, तदेतत् सर्वं[4] सर्वज्ञस्त्वं जानास्येवेति भावः।।६।।

अहो सर्वज्ञस्याऽपि किमेतद्वरयाच्ञायै चोदयतः सत्यसङ्कल्पस्य मम वचसः प्रत्याख्यानं तव शोभते? इति भगवदभिप्रायमभिप्रयन्[5] यदि भवतो मह्यं वरप्रदानेऽभिलाषः। तर्हीदं वरये इत्याह - **यदीति**। हे ईश! वरदश्रेष्ठः त्वं यदि[6] मह्यं कामानिष्टान्वरान् रासि ददासि[7], तर्हि भवतः त्वत्तोऽहं मद्धृदये कामानां कामाङ्कुराणां असंरोहं अनुत्पत्तिरूपं वरं वृणे धर्मादिपुरुषार्थेच्छानुदयरूपं वरं याचे इत्यर्थः।।७।।

---

1. A,B,T भृत्यस्वा° 2 A,B,T °द्धृत्य 3. A,B,T add तु 4. A,B,T omit सर्वं 5. A,B,T °प्रेत्य 6. A,B,T omit यदि 7. W दास्यसि

ननु कामोत्पत्तौ[1] सत्यां को दोषः? तत्राऽह-**इन्द्रियाणीति**। यस्य हृदये[2] सञ्जातकामाङ्कुरस्य कामान्कामयमानस्य इन्द्रियादीनि जन्मना जन्मपरम्परया नश्यन्ति, कामिनोऽन्ततः स्थावरत्वप्राप्तौ इन्द्रियमनः प्राणात्मन एव असत्प्राया भवन्ति, किं पुनः धर्मादय इति भावः। न हि इतोऽन्यः कश्चिदनर्थो विद्यत इति तात्पर्यम्। तत्र आत्मा प्रत्यगात्मा। धर्मो वर्णाश्रमानुगुणो भगवदाराधनरूपः, धृतिः धैर्यमिन्द्रियजयो द्वन्द्वसहिष्णुता वा। मतिः स्वात्मपरमात्मविषया। ह्रीः अनुचितकृत्यविषया लज्जा, श्रीः ज्ञानसम्पत्तिः ऐश्वर्यं वा।, तेजोऽनन्यापेक्षता। स्मृतिः हेयोपादेयाऽविस्मरणात्मिका।, सत्यं भूतहितत्वं, सत्यवचनं वा।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये भक्त्यैव पुरुषार्थो न द्वेषेण इत्येतत्प्रतिपादनं पुनः पुनः भक्तेः प्राधान्यज्ञापनाय, अन्यदासुरमोहनायेति तात्पर्यम्। वराननिच्छन् प्रह्लादो हरिं किं प्रत्युवाचेति हार्दं युधिष्ठिरप्रश्नं परिहरन्नारदः तत्र वक्तीत्याह - नारद इति। वयसा अर्भको, न तु ज्ञानेनेत्येतद्विशेषप्रकाशनाय हीति विशेषणम्। 'हि हेतौ' (वैज.को. 8-7-9) इत्यमरः।।१।।

ज्ञातसर्वेन्द्रियवृत्तित्वात् हृषीकेशेन त्वया मन्मनोगतं ज्ञातमिति यत् अतो मनः परीक्षणार्थं एतैः मनः प्रलोभनं न कुर्विति प्रार्थयते इत्याशयेनाऽऽह - **मा मेति** गुरुवचनमज्ञातेष्टबोधकत्वेन प्रमाणं स्यात्, इदं स्वभावत एव। ज्ञातेष्टबोधकत्वाद्व्यर्थमिव प्रतिभातीत्याशयवानाह - उत्पत्त्येति। आसक्तमिति लोकवृत्तान्तप्रदर्शनपरं प्रह्लादस्याऽर्भकावस्थामारभ्य विष्णुधर्मैकनिष्ठत्वात्। यतो विषयसङ्गिनामनर्थपरम्परा दृश्यते तत्तस्माद्विषण्णः। विषयिणो विषयासिद्ध्या तत्कालिकप्रसूतिनिर्वेदवत् नाऽयं निर्वेद इत्याह - मुमुक्षुरिति। अनेन प्रह्लादस्य अधिकारलक्षणसामग्री विद्यत इति दर्शितम्।।२।।

ननु, भगवद्वाक्यं क्वाऽपि विप्रलम्भकं न भवति "अजस्याऽऽवक्रचेतसः" (कठ.उ. 5-1) इति श्रुतेः। भवता तथैव प्रोच्यते। तथाच भगवद्वाक्यस्य अविश्वसनीयत्वं स्यादिति तत्राह - भृत्येति। चोदयात् चोदयति। "धियो यो नः प्रचोदयात्" (बृह.उ. 6.3-6) इति श्रुतेः।।३।।

---

1. W °त्त्यां 2. A,B,T हृदि.

वञ्चनार्थमेव तथोच्यत इति किं न स्यात्? अत्राऽऽह - **नान्यथेति**। अखिलगुरुत्वान्यथानुपपत्त्या न वञ्चनं युक्तमित्यर्थः। इतोऽपि भृत्यलक्षणजिज्ञासैव प्रयोजनं त्वद्वचनस्य, अन्यथा तवेष्टजनघातकत्वदोषापत्तिः स्यात् सा निर्दोषत्वेन न युक्तेत्याशयवानाह नष्टेति। न केवल मितरगुरुवन्मार्गमात्रप्रदर्शकः किन्तु गम्यश्च। अतो विप्रलोभनं न युक्तम्, अतोवाऽऽह - नष्टेति। पारदर्शिनः पारञ्चान्तं द्रष्टुमिच्छतः ननु मत्प्राप्तिकामाय आशीर्दानवचनमस्तु नाम प्रलोभनं तत्कामुकस्य अभीष्टदानावचनेऽनाकाङ्क्षिताभिधानं स्यादिति तत्राऽऽह यस्य इति। ते तव सकाशात् आशिषः सम्पदः सेवायाः। तर्हि स क इति तत्राऽऽह - स इति। "वणषणसम्भक्तौ" इति धातोः सम्भजनं विक्रेयं द्रव्यं प्रसार्य दानलक्षणं, तत्कर्ता वणिग्वै। हि अयञ्च किञ्चित्सुकृतकरणलक्षणदानेन भवादृशाज्जनात् पुण्यलक्षणफलदानं करोतीति यस्मात्तस्माद्वणिगित्यर्थः। आशास्ते इच्छति। अनेन फलदस्य स्वामित्वञ्च विघटितं भवतीति दर्शितम्। तर्हि कयोः स्वामिभृत्यभावः? इति तत्राऽऽह - **स वा** इति। 'लुभ-गार्ध्ये' इति धातोः भक्त्यादि गुणोद्रेकाकाङ्क्षिणौ गुणलुब्धौ, मिथः फलानि न कामुकौ।।४।।

ननु उभयोः फलकामित्वे को दोषः? इति तत्राऽऽह-**आशासान** इति।स्वामिनि समवेता आशिषः आत्मनः स्वस्य आशसानो यः स भृत्यो न वै नैव, किन्तु प्रतिभट एव। वरदानादिना भृत्यात् स्वस्य स्वामित्व-मिच्छन् यो भृत्यायाशिषो राति ददाति स स्वामी न च। कल्पित स्वामित्वेन तच्छब्दस्य मुख्यार्थालाभात्।।५।।

प्रकृते किमभूदिति तत्राऽऽह - **अहन्त्विति**। अनपाश्रयो भृत्यप्राप्यफलानाश्रयः स्वामी, अव्याहत स्वामीत्यर्थः। एतदेव द्रढयति, नान्यथेति। निष्कामत्वेन भृत्यत्वं मम अनपाश्रयत्वेन स्वामित्वम् तव[1], एतस्मादन्यथा प्रकारन्तरेण[2] आवयोःअर्थो नास्ति। किं तत्प्रकारान्तरम्? तत्राह - राजेति। इह लोके यथा राज्ञः सेवकस्य च स्वाज्ञानातिलङ्घनप्रीत्यादिलक्षणः चेतनादिलक्षणस्वार्थोऽस्ति। तथेति।।६।।

ननु, शास्त्रेषु प्रतिपाद्यमानसेव्यसेवकभावो ज्ञातृज्ञेयभावो दातृस्वीकर्तृभाव इत्यादि सम्बन्धि[3] सम्बन्ध-लक्षणार्थसम्भवादावयोः अर्थो नास्तीति निषेधः कथं क्रियते? इत्याशङ्कां परिहर्तुमाह - **यदीति**। "नान्यथेश्वरभाषितम्" इति वचनात् भवदुक्तमन्यथा मा भूदिति भीत्या च वृणे इत्यतो वाऽऽह **यदीति**। रा दाने इति धातुः। काम्यन्ते इति[4] कामाः अभिमता एव वराः तान्, कामानां विषयाणाम् असंरोहं सम्यगनुत्पादं नाम वरं वृणे इत्यन्वयः।।७।।

---

1 A,B, omit तव 2. A,B, °रान्त° 3 A,B omit सम्बन्धि 4 A.B. omit इति.

केन दोषेण तेषामनुत्पादः प्रार्थ्यत इति तत्राऽऽह - **इन्द्रियाणीति**। येषां कामानां विषयाणां, जन्मना इन्द्रियादयो नश्यन्ति, तेषामिति शेषः। "सर्वेन्द्रियाणां जरयति तेजः" इति श्रुतेः आत्मभक्तिः।।८।।

**विमुञ्चति यदा कामान्मानवो मनसि स्थितान्[1]।**
**तर्ह्येव पुण्डरीकाक्ष [2-]भगवत्त्वाय[-2] कल्पते।।९।।***

**नमो भगवते तुभ्यं पुरुषाय महात्मने।**
**हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने।।१०।।**

**[3-]नृसिंह उवाच[-3]**

**नैकान्तिनो मे[4] मयि जात्विहाशिष आशासतेऽमुत्र[5] [6-]च वै भवद्विधाः[-6]।**
**[7]तथापि मन्वन्तरमेतदत्र[8] दैत्येश्वराणामनुभुङ्क्ष्व भोगान्।।११।।**

**कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम्।**
**सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन चकर्म हिन्वन्।।१२।।**

**भोगेन पुण्यं कुशलेन पापं कलेबरं कालबलेन[9] हित्वा।**
**कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः।।१३।।**

**य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः।**
**त्वाञ्च माञ्च स्मरन्काले कर्मबन्धाद्विमुच्यते[10]।।१४।।**

**[11-]प्रह्लाद उवाच[-11]**

**वरं वरय एतत्ते वरदेशान्[12]महेश्वर।**
**यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम्।।१५।।**

**[13]बद्धामर्षाशयः साक्षात् सर्वलोकगुरुं प्रभुम्।**
**भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान्।।१६।।**

---

1. M,Ma श्रितान् 2. M,Ma न भवायाऽव° *The following extra half verse is found in M,Ma Editions only. नारदेनोपदिष्टं मे तव मन्त्रमिमं स्मरे। 3--3 H,V,W श्रीभगवानुवाच 4. W ये 5. H,V ह्या° 6--6 A,B,G,J,T च ये भवद्विधाः; M,Ma तथा भवादृशाः 7 A,B,G,J,T अथा° 8 H,V add वै 9. A,B,G,H,J,M,Ma,T,V जवेन 10. A,B,G,J,T °त्प्र° 11--11 W omits 12 H,V °श म° 13. A,B,G,J,T वि°. W वृ°

**श्रीध०** कामाभावे गुणमाह - **विमुञ्चतीति**। भगवत्त्वाय त्वत्समानैश्वर्याय। तथा च श्रुतिः "यदा सर्वे प्रमुच्यन्ते कामा योऽस्य हृदि स्थिताः। अथमर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" (कठ.उ. 6-14) इति।।९।।

निर्दोषान् कामान् दातुमिच्छन्तं प्रत्याख्यास्यन्नमस्यति - **नम** इति।

सत्यमेकान्तभक्तस्त्वं तथापि मदाज्ञा करणीयेत्याह-**नेति**। मे एकान्तिनः कदाचिदपि इहाऽमुत्र च मय्याशिषो न वाञ्छन्त्येव तदाप्येतन्मन्वन्तरमात्रं भोगान् भुङ्क्ष्व।।११।।

ननु तर्हि बन्धः स्यादित्यत आह - **कथा** इति द्वाभ्याम्। सर्वेषु भूतेषु सन्तमेकमीशं यज्ञाधिष्ठातारं मामात्मन्यावेश्य यजस्व। तर्हि अनेनैवाऽपि[1] कर्मणा बन्धःस्यात्। नेत्याह योगेन मय्यर्पणेन कर्म हिन्वन् त्यजन् यजस्व।।१२।।

**भोगेनेति**। किञ्च भोगेन सुखानुभवेन प्रारब्धं हित्वा मुक्तबन्धस्सन् लोकानुग्रहार्थं कीर्तिञ्च विस्तार्य मां प्राप्स्यसि कुशलेन पुण्याचरणेन पापं हित्वेति बिभीषामात्रम्[2], अन्यथा तस्य राज्येऽप्रवृत्तेः। ननु तस्य प्राचीनं पापमस्ति "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" (ब्र.सू. 4-1-13) इति न्यायात् "तत्सुकृतदुष्कृते विधुनुते" (कौषी.उ.1) इति श्रुतेश्च। न चेदं प्रारब्धपापाभिप्रायं तस्य भोगेनैव क्षयात्, कुशलेन हित्वेति वचनानुपपत्तेः। न चाऽसावविद्वानिति वाच्यं भगवतैव कृतार्थत्वस्याऽनन्तरं वक्ष्यमाणत्वात्। अत एवं योगेन कर्म हिन्वन् इतीदमपि लोकसङ्ग्रहार्थे, कर्मणि प्रवर्तितस्यानुद्वेगमात्रायेति सर्वमनवद्यम्।।१३।।

किञ्च। **य इति**। त्वाञ्च माञ्चेदं मच्चरित्रञ्च[3] स्मरन्नेतत् स्तोत्रं यः कीर्तयेत्सोऽपि कर्मबन्धाद्विमुच्यते कुतस्तव बन्धशङ्केत्यर्थः।।१४।।

ईश्वराज्ञया प्राप्तकर्माधिकारस्सन् पितृनिष्कृतिं प्रार्थयते त्रिभिः - **वरमिति**। वरं वरणीयमेतदपरं वृणे ते त्वत्तः।।१५।।

**बद्धेति**। बद्धोऽमर्षेण[4] क्रोधेनाऽऽशयो यस्य।।१६।।

**वीर०** निष्कामस्तु त्वां भजन् त्वत्साधर्म्यं प्राप्नोतीत्याह[5] - **विमुञ्चतीति**। यदा मानवो मनुष्यः स्वहृदि स्थितान् कामान् विमुञ्चति अनन्यप्रयोजनेन त्वां भजतीति भावः। हे पुण्डरीकाक्ष! तर्हि तदा स मानवः

1. H,V omit अपि 2. H,V °षिका 3. H,V °त ° 4. A,B,J वि° 5. W आ°

[1]भगवत्त्वाय भगवतो भावः भगवत्त्वं तस्मै कल्पते। अपहतपाप्मत्वादिधर्माऽविर्भावाय कल्पते आविर्भूत गुणाष्ट[2]कत्वेन भग[3]वता समानधर्मो मुक्तो भवतीति यावत्।।९।।

मम हृदि कामानुदयरूपात् वरात् अन्यं वरं सर्वथा मा दा इति प्रार्थनाभिप्रायेण भगवन्तं नमस्करोति। ओमिति। भगवते पूर्णषाड्गुण्याय पुरुषाय स[4]र्वात्मने महात्मने केवलं भक्तानुग्रहैकस्वभावाय हरये आश्रिता-र्तिहराय अद्भुतसिंहाय [5]मादृशसाधुपरित्राणार्थमुपात्तनृसिंहरूपाय ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते परमात्मने लोकत्रयस्यान्तःप्रवेशेन भर्त्रे प्रणवप्रतिपाद्याय तुभ्यं नमः।।१०।।

एवं प्रत्याख्यातवरयाच्ञं प्रह्लादमाह भगवान् [6]श्रीनृसिंहः - **नैकान्तिन** इति चतुर्भिः। भवद्विधाः त्वादृशा मयि एकान्तिन एकान्तभक्ता अनन्यप्रयोजनेन भजन्तः मे मत्तः जातु कदाचिदपि इहाऽमुत्र च लोके आशिषः कामान्नाऽशासते यद्यपि न प्रार्थयन्ते तथापि एतन्मन्वन्तरपर्यन्तं अत्रैव लोके दैत्येश्वराणामधिपो, भूत्वेति शेषः। भोगान् भुङ्क्ष्व।।११।।

तर्हि बद्धः स्याम् इत्यत्राऽऽह - **कथा**इति। प्रियः मम निरतिशय प्रियः त्वं मदीयाः कथाः जुषमाणः सेवमानः, प्रिया इति पाठे, कथाविशेषणम्। मत्कथाः शृण्वन् त्वं न बद्धः स्या इति भावः। ननु अनिच्छन्तमपि बलात्कामेषु किमर्थं योजयसि इत्यत आह - आत्मनि सर्वेषु भूतेषु चान्तरात्मतया सन्तमधियज्ञं यज्ञाधिपतिं ईश्वरं मां भक्तियोगेन यजस्व आराधयस्व। किं कुर्वन्? मत्प्राप्तिविरोधिपुण्यपापात्मकं कर्म हिन्वन्नपनुदन्। मुमुक्षोरपि अभ्युपगतमत्प्राप्तिविरोधिप्रारब्धफलस्य सुखदुःखात्मकस्य अवश्यमनुभाव्यत्वात् अनिच्छन्तमपि त्वां कामेषु योजयामीति भावः।।१२।।

एतदेव व्यनक्ति - **भोगेनेति**।पुण्यमभ्युपगतप्रारब्धपुण्यकर्म तत्फलभोगेन हित्वा त्यक्त्वा अपनुद्य, पापमभ्युपगतप्रारब्धाख्यं पापं कर्म कुशलेन भोगेन हित्वा भोगकौशलेन हित्वेत्यर्थः। पापफलभोगस्य दुःखरूपत्वात् मनोविकारः स्यादिति यथामनो न विक्रियते तथा भोगकौशलेनेत्यर्थः। "दुखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः... (भ.गी.2.5.6) ..समदुःखसुखं धीरम्" (भ.गी.2-15) इत्याद्युक्तरीत्या अनुद्वेगवत्त्वादि भोगकौशलेनेति यावत्। कुशलेन पुण्येन यज्ञादिकर्मणा पापमभ्युपगतप्रारब्धमपुण्यं कर्म हित्वेति वाऽर्थः, अनुभवैकविनाश्यस्य पुण्यकर्मणा निवृत्त्यनुपपत्तेः। न चाऽत्र पापशब्दः सञ्चिताऽनभ्युपगतादि पापपरः तस्य भक्तियोगेनैव निवृत्तेः।

1. A omits भगवत्त्वाय 2. A,B,T °कवत्त्वे° 3. A,B,T वत्साधर्म्यमागतो 4 A,B,T °र्वान्तरात्मने 5. W द्विजसा° 6 W omits श्रीनृसिंहः

न च भक्तियोगप्रतिबन्धकपापपरः, परिपूर्णभक्तियोगनिष्ठत्वात् प्रह्लादस्य तन्निवृत्तेः पूर्वमेव जातत्वात्। तस्मात् यथोक्त एवाऽर्थः। कालबलेन[1] कालवेगेन कलेबरं हित्वा कालवेगेन निर्मितेनानुभूतप्रारब्धावसाने कलेबरं हित्वेत्यर्थः। सुरलोकेऽपि गीयमानां स्वीयां कीर्तिं वितार्य विस्तीर्य मुक्तबन्धः मद्भक्तियोगेन विनष्टाश्लिष्टपूर्वोत्तराघरूपमत्प्राप्तिप्रतिबन्धको मामेष्यसि प्राप्स्यसि[2]।।१३।।

किञ्च, यः पुमान् त्वाञ्च माञ्च स्मरन् यदिदं मह्यं त्वया गीतं मत्स्तुत्यात्मकं स्तोत्रं कीर्तयेत् सोऽपि पुमान् काले प्रारब्धानुभवावसानकाले कर्मबन्धात् मत्प्राप्तिप्रतिबन्धकात् पुण्यपापात्मककर्मरूपात् [3]बन्धात् विमुच्यते त्वद्गीतकीर्तन[4] सञ्जात मद्भक्तियोगनिरस्तमत्प्राप्तिप्रतिबन्धककर्मबन्धाद्विमुक्तो भवतीत्यर्थः।।१४।।

ईश्वराज्ञया प्राप्त दैत्याधिपत्यः स्वपितुः निष्कृतिं प्रार्थयते त्रिभिः प्रह्लादः - **वरमिति**। हे महेश्वर! वरदानां ब्रह्मादीनामपि ईश्वरात् ते त्वत्तोऽहं एतद्वरं वृणे। किं तत्? यन्मे पिता ईश्वरस्य तव सम्बन्धितेजः प्रभावं अविद्वान् अजानन्।।१५।।

सर्वलोकहितोपदेष्टारं प्रभुं त्वामनिन्दत् निन्दितवान्। कथम्भूतः? त्वं भ्रातृहेति मृषादृष्टिः दुरभिमानयुक्तः, अत एव वृद्धामर्षाशयः प्रवृद्धो योऽमर्षः क्रोधः तद्युक्त आशयोऽन्तःकरणं यस्य तादृशः। इद्धेति पाठेऽपि अयमेवाऽर्थः। विद्धेति पाठे, विद्धो व्यथितः स चासौ अमर्षयुक्तान्तःकरणश्चेत्यर्थः। एवम्भूतस्त्वां सर्वलोक[5]हितकरं प्रभुमनिन्दत् इति यत्, यच्च त्वद्भक्ते मयि अघवान् द्रोहीति द्रोहं कृतवानिति।।१६।।

**विज०** ननु कामासंरोहोनाम काममोक्षो विवक्षितः, तस्मात्किं फलमिति तत्राह-**विमुञ्चतीति**। भवाय पुनर्जननाय।।९।।

भवन्नमनादि लक्षणाभक्तिश्च तत्फलमित्याह - **नम** इति। भगवत इत्यनेन किञ्चित्पूज्यमात्रवस्तुसिध्यति। अतः पुरुषायेत्यनेनापि कश्चिदेवेत्यतो - महात्मन इति। कोऽसौ इत्यतो हरय इति। हरिशब्दस्य अनेकार्थत्वादत्र क इत्यतोऽद्भुतेति, तिर्यक्प्राणिना त्वया किं स्यादित्यतो ब्रह्मण इति। अस्याप्यनेकार्थत्वादत्र क इत्यतः परमात्मन इति।।१०।।

अहन्त्वकाम इत्येकान्तभक्तलक्षणं यत्त्वयोक्तं, तत्सत्यम्, तथाऽपि मदाज्ञाकारिणः तव पुण्याभिवृद्धिः स्यात् अत एतत्कर्तव्यमित्याह - **नैकान्तिन** इति।किन्तदिति तत्राऽऽह - तथापीति।।११।।

---

1. A,B,T जवेन 2. A,B,T add इत्यर्थः 3 A,B,T omit बन्धात् 4 A,B,T °द्गत 5 A,B,T हितोपदेष्टारं

ननु कर्दमजलस्नानानिच्छया हि एतावन्तं कालं मया कण्ठशोषणमकारि, तदरण्यरोदनवत् व्यर्थमभूत्, यतः त्वं तत्रैव स्नाहीत्युपदिशसि, अतः त्वदाज्ञाऽनुलङ्घ्या त्वमेव जानासीति शङ्कारोगनिर्मूलनाय सुखसाध्यमौषधं विधास्यामीत्याशयवानाह - **कथा** इति। बहुवचनेन सर्वावतारादिकथा उपलक्षयति। भूतेष्वित्युपलक्षणम्। चरुपुरोडाशादिष्वपि यज्ञमूर्तिस्सन्निहित इति योगेन भक्तियुक्तध्यानेन हिन्वन् नाशयन्।।१२।।

नन्वेतावता मम किं कालान्तरभाविनी त्वत्प्राप्तिः स्यादेवेत्याह - **भोगेनेति**। मुक्तावनभिमतं पुण्यं भोगेन क्षपयित्वा प्रायश्चित्तादि कुशलकर्मणा पापं निर्मूलयित्वा विताय विस्तृत्य।।१३।।

मया तवोक्तयोगकरणाशक्तस्य अनायाससाध्यं योगमुपदिशामीत्युपसंहरति - **य** इति। मह्यं मामुद्दिश्य युक्तकाले।।१४।।

अभिमतं इत्युक्तत्वात् इमं त्वदभिमतं वरं वृणे इत्याह - **वरमिति**। ते सकाशात् अनेन दातृस्वीकर्तृभाव सम्बन्धोऽस्तीति ज्ञायेते।।१५,१६।।

**तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात्।**
**पूतस्ते[1-]ऽपाङ्गसन्दृष्टस्तदा[-1] कृपणवत्सल।।१७।।**

**श्रीभगवानुवाच**

**[2]त्रिस्सप्तभिः पिता पूतः पितृभिस्सह तेऽनघ।**
**यत्साधोऽस्य [3]कुले जातो भवान्वै कुलपावनः।।१८।।**

**यत्र यत्र च मद्भक्ताः प्रशान्तास्समदर्शिनः।**
**साधवस्स[4]मुदाचारास्ते पू[5]यन्तेऽपि कीक[6]टान्।।१९।।**

**सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन।**
**उच्चावचेषु दैत्येन्द्र मद्भा[7]वेन गतस्पृहाः।।२०।।**

---

1--1 H,V शान्तया दृष्ट्या दृष्टः 2. W त्रि स॰ 3. A,B,G,J,T,W गृहे 4 H,V ॰म्मता॰ 5. A,B,G,J,M,Ma,T ॰यन्त्यपि 6 A,B,G,J,T,W ॰टाः

7. W ॰व विगत

भवन्ति [1]पुरुषा लोके मद्भक्तास्त्वामनुव्रताः।
भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक्[2]।।२१।।

[3]कुरुते प्रेतकार्याणि पितुः पूतस्य सर्वशः।
मदङ्गस्पर्शनेनाऽङ्ग लोकान्[4]यास्यति सुप्रजाः।।२२।।

पित्र्यञ्च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः।
मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः।।२३।।

[5-]नारद उवाच[-5]

प्रह्लादोऽपि तथा चक्रे पितुर्यत्साम्परायिकम्।
यथाऽऽह भगवान्राजन्नभिषिक्ते द्विजोत्तमैः।।२४।।*

**श्रीध० तस्मादिति।** तेऽपाङ्गेन सन्दृष्टोऽतः पूत एव। तथापि भो कृपणवत्सल! कार्पण्येन प्रार्थये इत्यर्थः।।१७।।

**त्रिस्सप्तभिरिति।** यद्यपि, कश्यपो मरीचिर्ब्रह्मा चेति तत्पितृत्रय एव पूर्वजाः, तथाऽपि त्रिस्सप्तभिस्सहेति प्राक्कल्पगतपित्रभिप्रायेणोक्तम्। यद्यस्मात्।।१८।।

**यत्रेति।** सम्यगुत्तम आचारो येषां ते, कीकटा अपि देशास्तत्तुल्या वंशाश्च पूयन्ते शुद्धा भवन्ति।।१९।।

ननु त्वद्भक्तानां, अयं महिमेति न चित्रम्। अहन्तु तादृशो न भवामीति चेत्, तत्राऽऽह - **सर्वात्मनेति** द्वाभ्याम्। मद्भावेन मद्भक्त्या विगतास्पृहा येषाम्।।२०।।

**भवन्तीति।** त्वामनुगता ये केचित्पुरुषाः तेऽपि एवंलक्षणास्सन्तो मद्भक्ता भवन्ति, अतो भवान्मे भक्तानां सर्वेषां प्रतिरूपधृक् उपमानास्पदम्। श्रेष्ठः खल्वित्यर्थः।।२१।।

**कुर्विति।** मदङ्गस्पर्शनेन सर्वशः पूतस्य ते पितुः पापशङ्कैव नाऽस्ति। केवलं पुत्रकृत्यानि प्रेतकार्याणि कुरु।।२२।।

---

1. M,Ma पू° 2. H,V दृक् 3 A,B,G,J,T,W त्वं 4. H,V °न्पश्यन्ति 5 W श्रीशुक उवाच *An extra half verse is found in H,M,Ma,V Editions - H,V महाभागवतस्सोऽथ चक्रे राजन्वर्ती भुवम्।। M,Ma प्रह्लादस्तु तथा कार्षीद्राज्यं निहतकण्टकम्।।

**पित्र्यमिति**। [1-]ब्रह्मवादिभिः[-1] वेदवादिभिः उक्तमनतिक्रम्य मत्परस्सन् कर्माणि कुरु।।२३,२४।।

**वीर॰** तस्माद्दुस्तरा दघात् पापान्मे पिता पूयेत विशुद्धेत्, एतद्वरं वरये इत्यन्वयः। यद्यपि ते तवाऽपाङ्गेन सन्दृष्टोऽत एव पूत एव मम पिता तथापि हे कृपणवत्सल! कार्पण्येन प्रार्थये इत्यर्थः।।१७।।

एवं प्रह्लादेन[2] प्रार्थितो भगवान् तमाह[3] **त्रिस्सप्तभिरिति** षड्भिः। न केवलं तव पितैव पूतः, अपि तु हे अनघ! सप्तभिः पितृभिस्सह तव पिता त्रिः पूत इति त्रिवारमनुगृह्णामीत्यर्थः। त्रिसप्तभिरितिपाठे एकविंशतिपर्यन्तैः पितृभिस्सह पूत इत्यर्थः। कुतः? यत् यस्मात् हे साधो। [4-]महाभागवतः[-4] कुलपावनो भवान् [5-]तस्य हिरण्यकशिपोः[-5] गृहे जातः। यद्यपि हिरण्यकशिपोः पितरः कश्यपो मरीचि ब्रह्माचेति त्रय एव, तथाऽपि प्राक्कल्पगतपित्राद्यभिप्रायेण त्रिसप्तभिरित्युक्तम्। मद्भक्तस्य तवजननात् एव इदं त्वत्कुलं पूतं इत्यभिप्रायः।।१८।।

एतदेव स्वभक्त प्रभाव प्रदर्शनमुखेनाऽऽह - **यत्रेति**। समदर्शिनः कृत्स्नं जगत् ब्रह्मात्मकत्वेन पश्यन्तः प्रशान्ताः जितेन्द्रियाः, सम्यगुत्तमः आचारो येषां ते, साधवः परोपकारशीला मद्भक्ताः यत्र यत्र देशेसन्ति, ते कीकटा अपि कीकटकल्पा म्लेच्छदेशाः, अपिशब्दात्तत्प्रभवा अपि पूयन्ते शुद्धा भवन्ति।।१९।।

ननु, त्वद्भक्तानामयं प्रभाव इति न चित्रं, नाऽहं तु तादृशः इति चेत् तत्राऽऽह - **सर्वात्मनेति** द्वाभ्याम्। हे दैत्येन्द्र! लोके ये मद्भक्ताः पुरुषाः ते त्वां मद्भक्तश्रेष्ठमनुव्रता अनुवर्तमाना भवन्ति। त्वं यथा मद्भक्तश्रेष्ठः तथा वयमपि भगवद्भक्ता भवेम इति त्वत्पदवीमनुवर्तमाना मद्भक्ता भवन्ति। अतः सर्वेषां भक्तानां भवान् प्रतिरूपधृक् दृष्टान्तभूतः। अतस्त्वं भागवतोत्तमोत्तम इति भावः। तदनुवृत्तिप्रकारमेवाह[6] - उत्कृष्टेषु अपकृष्टेषु[7] च भूतग्रामेषु देवमनुष्यादिभूतसङ्घेषु सर्वात्मना करणत्रयेण न किञ्चिदपि हिंसन्ति, मद्भावेन मद्भक्त्या विगता स्पृहा येषां, मत्साम्यापत्तिनिस्पृहा इति वा। तादृशाश्चभवन्ति। त्वद्दृष्टान्तेनैवाऽत्मानं शिक्षयन्तीत्यर्थः।।२०,२१।।

अतस्सर्वथा पूतस्य विशुद्धस्य तव पितुः प्रेतकार्याणि दाहादिकर्माणि कुरु। अङ्ग। हे प्रह्लाद। शोभना प्रजाः पुत्राः[8] त्वद्रूपो यस्य सः त्वत्पिता मदङ्गस्पर्शनेन मच्छरीरसंस्पर्शनेन हेतुना लोकान्पुण्यलोकान् यास्यति प्राप्स्यति। पश्यतीति पाठे द्रक्ष्यतीत्यर्थः। वर्तमान सामीप्ये भविष्यति लट्।।२२।।

---

1- -1 H,V omit, 2. W omits प्रह्लादेन 3. W omits तं 4- -4 W omits 5- -5 W omits 6. A,B,T ॰माह 7. A,B,T omit अपकृष्टेषु

8. A,B,T omit पुत्रः।

पित्र्यं पितृसम्बन्धि पित्राधिष्टितं महेन्द्रभवनं विहाय पित्र्यं दानवाधिपत्यस्थानमधितिष्ठेत्यर्भः। हे तात! मयि मन आवेश्य ब्रह्मवादिभिरुक्तमनतिक्रम्य कर्माणि मदाराधनरूपाणि, मत्परः अहमेव परस्तेषां कर्मणां फलं यस्य तादृशस्सन्[1] कुरु।।२३।।

एवमुक्तः प्रह्लादो यथोक्तमकरोदित्याह नारदः - **प्रह्लादोऽपीति**। हे राजन्! युधिष्ठिर! यथा भगवानाह तथैव प्रह्लादः पितुः यत्साम्परायिकं प्रेतोद्देशेन कर्तव्यं तत्सर्वं चक्रे। ततो द्विजोत्तमैः अभिषिक्तश्च बभूव दानवादीनां [2-]आधिपत्यं अकरोदित्यर्थः[-2]।।२४।।

**विज॰** शुद्ध्यर्थं साधनान्तरानुष्ठानं नाऽपेक्षितमित्याऽऽह - पूत इति।।१७।।

न केवलमयमेव पिता पूतः, किन्तु जन्मान्तरेऽपि विद्यमानाः पितरः पूताः स्युः इत्याशयवानाऽऽह - **त्रिस्सप्तभिरिति**। सा विशुद्धिर्मत्कटाक्षपात्रीभूत त्वज्जन्मनेत्याह - यत्साधोऽस्येति।।१८।।

एतन्न्यायमन्यत्राऽतिदिशति - **यत्रेति**। कीकटा इति पाठे आभीरा इत्यर्थः।।१९।।

ननु त्वद्भक्तानां एवंविधमाहात्म्यं कस्मादित्याशङ्क्य तपोवृद्धिक्षयहेतुहिंसाद्यभावादित्याह - **सर्वात्मनेति**। सर्वात्मना यदपि किञ्चन कृकलासादिकमपि " तस्मात्प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य" इति श्रुतेः। तत्र निमित्तमाह - मद्भावेनेति। "ईश्वरो जीवकलया प्रविष्टः" (भाग. 3-29-3) इति वचनात्सर्वत्र मम भावः सत्ताऽस्तीति, भावो भावना निरन्तरानुस्मरणं तेन गतस्पृहाः नष्टस्पर्धाः हिंसायाः कारणं निमित्ताभावान्नैमित्तिकाभावः इत्यर्थः।।२०।।

इह लोके ये मद्भक्ताः पुरुषाभवन्ति विद्यन्ते तेन हिंसन्तीत्यन्वयः। मद्भक्तेष्वपि तव विशेषोऽस्तीत्याह- भवानिति। प्रतिरूपधृक् दृष्टान्तस्थलभूतः। खलु शब्देन कांश्चिन्निषिध्य अवशिष्टानां सर्वेषामित्यर्थो गृह्यते तेन यावत्तावदित्यर्थः।"ऋते तु सात्त्विकान्देवान्नारदादींस्तथैवच। प्रह्लादादुत्तमः को नु विष्णुभक्तो जगत्रये" (स्कान्दे) इति वचनात्। "निषेधवाक्यालङ्कार जिज्ञासानुनये खलु" (अमः कोः 3-410) इत्यभिधानम्।।२१।।

मत्पिता भवद्द्वेषीति मत्वा तत्प्रेतकार्याणि न करोमीति मतिः मा भूत्। "श्रौतं स्मार्तं न लङ्घयेत्" इति वचनात् मदाज्ञया तान्यपि कर्तव्यानि "नाऽवैष्णवाय दातव्यं नोदबिन्दुं न तण्डुलम्" इत्येतदसम्बन्धिविषयत्वेन सावकाशमित्याशयेनाऽऽह मदङ्गेति। सुप्रजाः सुपुत्रः।।२२।।

---

1 W omits सन् 2- -2 W °त्यं अभिषिक्तो बभूव इत्यर्थः।

पितृमेधं कृत्वा विरज्य वनं न व्रज किन्तु राज्यं कुर्वित्याह - पित्र्यमिति। राज्यं कुर्वन् पितृवल्लोकोपद्रवं न कुरु; किन्तु ब्रह्मवाद्युक्तधर्मेणेत्याह - यथोक्तमिति। न तावता पूर्यतेऽन्यच्च आवश्यकमित्याह-मर्यीति। कर्माणि सामादिविषयाणि पूजादीनि वा।।२३।।

भगवदाज्ञानुलङ्घनेन भगवत्प्रीतिः स्यादिति कृत्वा तदाज्ञाकरणप्रकारमाह - नारद इति। साम्परायिकं पारलौकिकम्।।२४।।

**प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम्।**
**स्तुत्वावाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः।।२५।।**

**ब्रह्मोवाच**

**देवदेवाऽखिलाध्यक्ष! भूतभावन! पूर्वज!**
**दिष्ट्या ते निहतःपापो लोकसन्तापनोऽसुरः।।२६।।**

**योऽसौ लब्धवरो मत्तः न वध्यो मम सृष्टिभिः।**
**तपोयोगबलोन्नद्धः[1] समस्त[2]निगमा[3]नहन्।।२७।।**

**दिष्ट्याऽस्य तनयस्साधुर्महाभागवतोऽर्भकः।**
**त्वया विमोचितो मृत्यो दिष्ट्या [4-]त्वां समितोऽधुना[-4]।।२८।।**

**एतद्वपुस्तेभगवन् ध्यायतः प्रयतात्मनः।**
**सर्वतोगोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः।।२९।।***

**[5-]नृसिंह उवाच[-5]**

**[6]मैवं [7]वरोऽसुराणां ते प्रदेयः पद्मसम्भव।**
**वरः क्रूरनिसर्गणामहीनाममृतं यथा।।३०।।**

1. H,V °न्मत्तः 2. H,V °स्तान्नि° 3. H,V °मान्न° 4- -4 H,V °ताता द्भयङ्करात्; M,Ma °त्रातस्त्वयाऽधुना *The following three half verses are found in H,V Eds only. अहोऽयं सुहृद्धन्यः तेन लब्धोऽमुना लयः। सर्ववेदमये साक्षात् सर्वयज्ञतपोमये।। सर्वतीर्थमयात्सङ्ग स्नातोऽग्राविव काञ्चनम्।। 5- -5 M,Ma,W श्रीभगवानुवाच 6. W नैवं 7 H,V सुरासु°; M,Ma विधोऽस°

**नारद उवाच**

**इत्युक्त्वा भगवान् राजन् [1]ततश्चान्तर्दधे हरिः।**
**अदृश्यस्सर्वभूतानां पूजितः परमेष्ठिना।।३१।।**
**ततस्सम्पूज्य [2]शिरसा ववन्दे परमेष्ठिनम्।**
**भवं प्रजा[3]पतिं देवान्प्रह्लादो भगवत्कलाः।।३२।।**

**श्रीध॰ देवेति।** मम सृष्टिभिः मया सृष्टैः भूतैः। समस्तान्निगमान् धर्मानित्यर्थः। अहन् [4-]हतवान् सत्त्वया हतः। एतद्दिष्ट्या भद्रम्[-4]।।२५-२७।।

**दिष्ट्येति।** [5-]दिष्ट्या साधुर्जातः इत्यन्वयात् न पौनरुक्त्यम्[-5]। [6-]समितः सम्यक्प्राप्तः[-6]।।२८।।

**एतदिति।** सर्वतस्सन्त्रासात्। गोप्तृरक्षकम्।।२९।।

**मैवमिति** एवं वरस्त्वया न प्रदेयः क्रूरो निसर्गः स्वभावो येषाम्। अमृतं क्षीरम्।।३०-३२।।

**वीर॰** ततः प्रसादाभिमुखं सुन्दरं मुखं यस्य तं नरहरिं श्रीनृसिंहरूपं हरिं आश्रितार्तिहरं भगवन्तं दृष्ट्वा ब्रह्मा चतुर्मुखः देवादिभिः परिवृतः पवित्राभिः वाग्भिः स्तुत्वा वाचां भगवद्गुणविषयकत्वेन लोकपावनकरत्वात् पवित्राभिः इत्युक्तम्। प्राहोवाच।।२५।।

[7-]तदेवं चतुर्मुखोक्तमाह[-7] - **देवेति** चतुर्भिः। हे देवदेव! देवानामपिदेव! ननु, त्वम् इन्द्रादि देवानामपि देवो नाऽहं तत्राह - हे अखिलाध्यक्ष! ननु सोऽपि त्वमेव तत्राऽऽह - हे भूतभावन! भूतानि भावयति उत्पादयतीति तथा। ननु, सोऽपि त्वमेव[8] हे पूर्वज! ममाऽपि पूर्वं कारणत्वेनावस्थित! लोकानां सन्तापनकरोऽत एव पापोऽयमसुरो दिष्ट्या दैवात्, ते त्वया निहतः। दिष्ट्या हत इति तद्वरस्य दुष्करत्वं सूचितम्।।२६।।

तदेवाऽऽविष्कुर्वन् असुरं विशिनष्टि **योऽसाविति**। योऽसावसुरः मत्तः लब्धो वरो येन तादृशाः मम सृष्टिभिः मया सृष्टैः भूतैः न वध्यः हन्तुमशक्यः तपोयोग एव बलं तेनोन्नद्धः गर्वितः समस्तनिगमान् शास्त्रीयधर्मान् अहन् विनाशितवान्। स तु त्वया विनाशितः एतद्दिष्ट्या जातमिति भावः।।२७।।

---

1 A,B,G,J,T तत्रैवान्त॰ 2. H,V गिरिशं; M,Ma विधिवत् 3. A,B,G,J,M,Ma,T पतीन्. 4- -4 H,V omit 5- -5 A,B,J omit 6- -6 A,B,J omit 7- -7 W तदेवाह 8 A,B,T add तत्राऽऽह

[1]अस्यऽसुरस्य तनयो महाभागवतोऽर्भकः प्रह्लादः त्वया मृत्योः सकाशात् विमोचित इति, स च त्वामतीव क्रोधाविष्टं सम्यगितः प्राप्तोऽधुनेति चैतदपि दिष्ट्या जातमित्यर्थः।।२८।।

हे भगवन्, तवैतद्वपुः नृसिंहरूपं ध्यायतः प्रयतात्मनः समाहितमनसः पुंसस्सर्वतः सन्त्रासात् भयाद्गोप्तृ रक्षकं जिघांसतः हन्तुमिच्छतः मृत्योरपि सकाशाद्गोप्तृ। एतच्च प्रह्लाददृष्टान्तेन अस्माभिरनुमितमिति भावः।।२९।।

एवमभिहितः तमाह श्रीभगवान्नेति। हे पद्मसम्भव! इतः प्रभृति एवंविधो वरोऽसुराणां ते त्वया न प्रदेयः। क्रूरो निसर्गः स्वभावो येषां तेषां अहीनां सर्पाणाम् अमृतं क्षीरं, यथा क्षीरप्र[2]दानेन तद्वर्धनं यथा लोकोपद्रवकारि तद्वदिदं तेषां वरप्रदानमित्यर्थः।।३०।।

एवं ब्रह्माणमनुज्ञाप्य [3-]भगवान् अन्तर्दधे[-3] इत्याह - [4]देवर्षिः इतीति। हे राजन्! इति इत्थमुक्त्वा [5]परमेष्ठिना [6]ब्रह्मणा पूजितः [7-]भगवान् हरिः तत्रैव सर्वभूतानाम् पश्यताम् अदृश्यः दर्शनाविषयो भवतीति तथा अन्तर्हितवान्[-7]।।३१।।

ततः प्रह्लादः परमेष्ठिनं ब्रह्माणं भवं रुद्रं प्रजापतीन् मरीच्यादीन् देवानिन्द्रादींश्च भगवत्कलाः भगवदंशभूतान् सम्पूज्य शिरसा ववन्दे ननाम।।३२।।

**विज०** तत्राऽऽगतेषु देवेषु एकतमेनाऽपि संलापो हरेरभून्न वा? आद्ये केन? द्वितीये दैत्येभ्य एषां को विशेषः? किञ्च सेव्यसेवका[8]दि भावाभावेन ब्रह्मविद्याधिकारोऽप्युत्पादितः स्यादित्याशङ्कां परिहरति - **प्रसादेति**। देवादिभिर्वृत इत्यनेन तैरपि स्वच्छन्दवचनं कृतमिति ज्ञातव्यम्।।२५।।

दिष्ट्या सुखमभूत्।।२६।।

[9]मम सकाशात् सृष्टं सर्जनमेषामस्ति ते मम सृष्टैरित्यर्थः।।१७।।

दिष्ट्या सज्जनसुखहेतुतः अधुना तस्मै दिष्ट्या सुखलक्षणो वरो दत्त इति शेषः।।२८।।

अनेन वपुषा न केवलं दैत्यहननमेव प्रयोजनं किन्तु अन्यच्चास्तीत्याह - एतदिति।।२९।।

एवं स्तुतो भगवान् कमनुग्रहमकार्षीत्तेषामिति तत्राऽऽह - श्रीभगवानिति। निसर्गतः क्रूराणां अमृतं पयः

---

1. A,B,T add किं तदाऽपि दिष्ट्या जातं किम्? 2. A,B,T दत्वेन 3- -3 अन्तर्दधे हरिः 4. A,B,T नारदः 5. W omits परमेष्ठिना 6. A,B,T omit ब्रह्मणा 7- -7 A,B,T सर्वप्राणिनां अदृश्यः हरिः, इत्युक्त्वाऽन्तर्दधेऽदृश्योऽभूत्।। 8. A,B °दिभावेन 9. Ma omits मम.

"देवान्ने सलिले क्षीरे त्वमृतं ना विमुक्तिगे" इति। अत्र हिरण्यकशिपुमन्तरेण अन्येषां न दातव्य इत्याज्ञा क्रियते न त्वस्य हि "यथा हिरण्यकस्याऽदादन्तःस्थितहरीरितः" (स्कान्दे) इत्यादिना स्वप्रेरितत्वावगमादिति।।३०।।

मद्भृत्यानामपि योग्यप्रत्यक्षत्वे "हरेरुपर्युपरिव्यवहारेण ध्यायन्ति देवमनुष्याः" इति श्रुतेः।, देवस्वभावो यस्स विहितः स्यादिति मत्वा तद्रक्षणार्थं तद्विग्रहेणादृष्टोऽभूदित्याह - नारद इति। सर्वभूतानामदृश्य इत्यनेन भक्तानुकम्पित्वं प्रदर्शितम्।।३१।।

अनन्तरं प्रह्लादेन ब्रह्मादयो देवाः सत्कृता, उत आत्मनो भगवदनुग्रहपात्रत्वेन अहम्भावेन धिक्कृताः? आद्ये वैष्णवाचारः प्रवर्तितः स्यात्। द्वितीये भगवच्छिक्षणं गजस्नानवत्स्यादिति तत्राऽऽह - **तत** इति। भगवतः कलालेशाः येषु तथा भगवतो भिन्नांशा वा।।३२।।

**ततः काव्यादिभिस्सार्धं मुनिभिःकमलासनः।**
**दैत्यानां दानवानाञ्च प्रह्लाद मकरोत्पतिम्।।३३।।**

**प्रतिनन्द्यततो देवाः प्रयुज्य परमाशिषः।**
**स्वधामानि ययूराजन्! ब्रह्माद्याः प्रतिपूजिताः[1]।।३४।।**

**एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः।**
**हृदि स्थितेन हरिणा वैरभावेन तौ हतौ।।३५।।**

**पुनश्च[2] विप्रशापेन[3] राक्षसौ तौ[4] बभूवतुः।**
**कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः।।३६।।**

**शयानौ हृदि निर्भिन्नहृदयौ रामसायकैः।**
**तच्चित्तौ जहतु देहं यथा प्राक्तनजन्मनि।।३७।।**

**ता विहाऽथ[5] पुनर्जातौ शिशुपालकरूषजौ।**
**हरौ[6] वैरानुबन्धेन पश्यत स्ते समीयतुः।।३८।।**

---

1 H,V परि 2. H,M,Ma °न स्तौ 3. M,Ma पूर्वं 4 H,V द्वौ 5. H,V °हाऽपि; M,Ma °हाऽध्य 6. W हतौ

**एनः पूर्वकृतं यत्तत् राजानः कृष्णवैरिणः।**
**जहुस्ते[1] ते तदात्मानं कीटाः[2]पेशस्कृतो यथा।।३९।।**

**यथा [3-]यथा भगवतो भक्त्या परमयाऽभिदा[-3]।**
**नृपाश्चैद्यादय[4]स्साम्यं हरे स्तच्चिन्तया ययुः।।४०।।**

**श्रीध०** शिशुपालदन्तवक्त्रयोर्द्विषतोः श्रीकृष्णसायुज्यं कथमिति यत्पृष्टं तदेव तयोः पूर्वजन्मकथनादिभिः उपपादित मुपसंहरति-**एवमिति** सप्तभिः। दितेः पुत्रत्वं प्रापितौ, विप्रशापेनेत्यनुषङ्गः।।३३-३६।।

**शयानाविति।** तच्चित्तौ [5-]श्रीरामे चित्तं ययौ स्तौ[-5]।।३७।।

**ताविति।** करूषजोदन्तवक्त्रः। हरौ सायुज्यं समीयतुः।।३८।।

**एन** इति। कृष्णनिन्दादिना पूर्वकृतञ्च यदेनः पापं तध्यानेन तदात्मानस्सन्तो जहुः। तदात्मत्वे दृष्टान्तः- कीटः पेशस्कृतो ध्यानेन यथा तदात्मा भवतीति।।३९।।

**यथेति।** अभिदा भेददर्शनशून्यया हरेः साम्यं सारूप्यम्।।४०।।

**वीर०** ततः [6-]कमलासनो[-6] ब्रह्मा काव्यादिभिः[7]भार्गवादिभिः [8]मुनिभिः सहितः प्रह्लादं दैत्यानां दानवानाञ्च पति मकरोत्।।३३।।

हे राजन्! ततो ब्रह्मादयः सर्वे देवाः प्रह्लादं प्रतिनन्द्य, अहो त्वत्प्रभावोऽनितरसाधारण इत्यभिनन्द्य परमाः [9]श्रेष्ठाः आशिषः प्रयुज्य प्रह्लादेन प्रतिपूजिताः स्वधामानि स्वकीयस्थानानि ययुः।।३४।।

तदेवं शिशुपालदन्तवक्त्रयोः भगवन्तं द्विषतोः कथं मुक्तिरिति युधिष्ठरप्रश्नस्य तत्पूर्वजन्मकथनादिमुखे नोक्तमुत्तरमुपसंहराति - एवमिति सप्तभिः। विष्णोः पार्षदौ स्थितौ, विप्रशापेन सनकादीनां शापेन दितेः पुत्रत्वमेवं प्रापितौ। वैरभावेन हेतुना स्वहृदि स्थितेन हरिणा नृसिंहरूपं बिभ्रता हतौ।।३५।।

पुनः कुम्भकर्णरावणाख्यौ राक्षसौ बभूवतुः तौ च [10]रामस्य दाशरथेः विक्रमैः [11]हतौ अभिभूतौ [12]इत्यर्थः।।३६।।

1 A,B,G,J,T स्त्वन्ते; H,V °स्तेऽपि 2. A,B,G,J,T,W °टः 3--3 भगवतो भक्त्या परया चाऽभिदा यथा; M,Ma यथा भागवता भक्त्या परमयाऽभिदा 4. A,B,G,J,T,V °स्सात्म्यं 5--5 H,V श्रीरामं चिन्तयन्तो 6--6 W omits 7. W omits भार्गवादिभिः 8 A,B,T omit मुनिभिः 9. W omits श्रेष्ठाः 10 W राघवस्य 11 W omits हतौ 12. W इति शेषः

तौ[1] च रामस्य राघवस्य[2] सायकैः[3] बाणैः[4] निर्भिन्नं हृदयं ययोस्तौ युधि युद्धे[5] शयानौ तच्चित्तौ तस्मिन् श्रीरामे एव चित्तं ययोस्तौ यथा प्राक्तनजन्मनि तद्वद्देहं जहतुः तत्यजतुः[6]।।३७।।

तावेवेहशिशुपालकरूषजौ, करूषजो दन्तवक्त्रः शिशुपालदन्तवक्त्ररूपेण जातौ पुनर्हरिणा हतौ वैरानुबन्धेन हेतुना ते तव पश्यतस्सतः समीयतुः सायुज्यं प्रापतुः।।३८।।

न केवलं शिशुपालकरूषजावेव समीयतुः अपि त्वन्येऽपि राजानःकृष्ण वैरिणस्ते सर्वेऽपि यदेनः पापं पूर्वं कृतं [7-]तज्जहुः[-7] तत्यजुः, तदात्मानः कृष्णात्मानश्चाभवन्। यथा पेशस्कृतश्चिन्त्यमानाद्धेतोः कीटः स्तदात्मा भवति, तद्वत्। तदात्मानस्तत्तुल्यस्वभावा अभवन्नित्यर्थः। आत्मशब्दः स्वभाववाची। तस्यैवाऽऽत्मा स्वभावो येषान्ते इत्युपमानबहुव्रीहिः। अन्यथा दृष्टान्तवैघट्यात्। न हि कीटः पेशस्कृता ऐक्यं याति। किन्तु तस्य समानाकारो भवति। अत एव ह्यनन्तरग्रन्थे साम्यं ययुरित्युक्तम्।।३९।।

यथा अभिदा अनन्यया भक्त्या भगवतस्साम्यं यान्ति तद्भक्ता, स्तथा चैद्यादयोऽपि नृपास्तस्य भगवतश्चिन्तया संरम्भपूर्वकचिन्तया हरेस्साम्यं ययुः।।४०।।

**विज॰** भगवच्चित्तज्ञेन ब्रह्मणा वा इद मन्वग्राहीत्याह - तत इति। अनेन भक्तेन भगवद्भक्तेषु यथायोग्यं प्रेम कर्तव्यमिति शास्त्राचारो दर्शितः।।३३।।

प्रह्लादवरदानान्तरं भगवता स्वाचारत्वेन यद्दर्शनमकारि तदस्माभिरनुष्ठेयमिति कृत्वा ब्रह्माद्या अपि स्वगृहान्ययुरित्याह - **प्रतिनन्द्येति**।।३४।।

इदानीं विशकलितोक्तमर्थं निक्षिप्योपसंहरति - एवमिति। हृदि स्थितेन वैरभावेन हेतुना हरिणा हतौ।।३५,३६।।

प्राक्तनजन्मनि जयविजयशब्दवाच्यौ पूर्वजन्मनि यथा तच्चित्तौ तथाऽत्रापीति शेषः। हिरण्यकशिपुः हिरण्याक्षाख्यः पूर्वजन्मनि यथा तथेति वा।।३७।।

वैरानुबन्धेन वैरोपसर्जनेनाऽनुबन्धेन स्नेहेन समीयतुः, हरिमिति शेषः। तत्रासुरौ तम ईयतु रित्यनु सन्धेयम्। सम्यग्भक्त्यैव श्रीहरिप्राप्तिः, तदभावेन तम एवेति द्योतनाय समित्युपसर्गः। "मधुकैटभौ भक्त्य-भावाद्दूरौ भगवतो मृतौ। तम एव क्रमादाप्तौ भक्त्या चैद्यो हरिं ययौ।" (स्कान्दे) इति वचनात्।।३८।।

---

1. W omits तौच 2. W omits राघवस्य 3. A,B,T omit सायकैः 4. W omits बाणैः 5. A,B,T omit युद्धे शयानौ 6. A,B,T सन्त॰

7- -7 तत्र उज्जहुः

अन्येषामपि सद्भावादेत दुपलक्षणार्थमुक्तमित्यभिप्रेत्याऽऽह - एव इति। अत्रापि वैरानुबन्धेन - त्यनुवर्तते। ये राजानः पौण्ड्रकादि शब्दवाच्यास्तेषु असुरदेहेषु आत्मा रूपविशेषो येषां ते तथा। तत्रापि तस्मिन् कृष्णे आत्मा चित्तं येषान्ते तथा तदनुष्ठितपुण्यफलस्वीकारार्थं तत्राविष्टा स्तद्भक्ता इत्यर्थः। ते भक्त्यैव यत्पूर्वकृतं तत्सम्बन्धप्राप्तमेनः पापं तज्जहुः, तद्धित्वा हर्याज्ञाकरणप्राप्तपुण्य प्रचयेन तं हरिमीयुः। त एव कृष्णवैरिणोऽनादिकाल मारभ्य भगवद्द्वेषिणः कृष्णाश्च तामसाश्च वैरिणःवैररूपिणो राजानो राजसाः तमःप्रकृतयो दैत्याः तदात्मानो द्वेषरूपिणः ते जन्मप्रभृति चीर्णं यदेनः तेन पापेन वैरानुबन्धेन निरन्तरवैरचिन्तया पूर्वकृतं ब्रह्मणा पूर्वं क्लृप्तं तमो जहुः जग्धुरित्यन्वयः। ओ हाङ्गतौ इति धातुः। इति 'सखे कहास्तेऽन्यस्य समुकुलं सुरं प्रवेके हास्ते' इति प्रयोगश्च। अन्तेभक्त्यादिसाधनसामग्र्यनन्तरं इतरत्र द्वेषपूर्त्यनन्तर मित्यत्र "तस्य तावदेव चिरत्" (छान्दो.उ. 6-14-2) इति श्रुतेः। "अनेवंवित् महत्पुण्यं कर्मकरोति तद्धास्यान्तकः क्षीयते" (बृह.उ. 1-4-15) इत्यादेश्च कीटाः पेशस्कृतचिन्तनया पेशस्कृताकार माप्नुवन्ति, नतु तदात्मत्वम्। अत्र प्रमाणम् - "पौण्ड्रके नरके चैव शाल्वे कंसे च रुक्मिणि। आविष्टा स्ते हरेर्भक्ता स्तद्भक्त्या हरि मीयिरे। असुरास्तु स्वयं तेतु महातमसि पातिताः" (स्कान्दे) इति वाक्यम्।।३९।।

अत्रापि तारतम्यमस्तीयाह - यथेति। भिदां विशेषम्। "भेदो विश्लेषे दलने" (विश्लेषे दारणे भेदः) (वैज.को. 6-1-42) इत्यभिधानम्। अभिदां असम्प्रज्ञातसमाध्यवस्थां ययुरिति वा। साम्यं निर्दोषत्वादि चतुर्भुजलक्षणम् अन्यथा कीटाः पेशस्कृतो ध्यानेन केचन पेशस्कृतो भवन्ति, न तु स एव पृथक् दृश्य मानत्वात्। - इत्ययं दृष्टान्तोऽनर्थः स्यादिति।।४०।।

**आख्यातं सर्वमेतत्ते यन्मां त्वं [1-]परिपृष्टवान्[-1]।**
**दमघोषसुतादीनां हरेः [2]साम्य मपि द्विषाम्।।४१।।**

**एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः।**
**अवतारकथा पुण्या वधो यत्रादिदैत्ययोः।।४२।।**

**प्रह्लादस्यानुचरितं महाभागवतस्य च।**
**भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यञ्चाऽस्य वै हरेः।।४३।।**

---

1--1 H,V पृष्टवान्नृप; W नृप ! पृष्टवान् 2. A,B,G,J,T सात्म्य

सर्गस्थित्यप्ययेशस्य गुणकर्मानु[1]वर्णनम्।

परा[2]वरेषां स्थानानां [3]का[4]लेन व्यत्ययो महान्।।४४।।

धर्मो भागवतानाञ्च भगवान्येन गम्यते।

आख्यानेऽस्मिन्समा[5]ख्यातमाध्यात्मिक मशेषतः।।४५।।

य एतत्पुण्य माख्यानं विष्णो वीर्योपबृंहितम्।

कीर्तयेच्छ्रद्धया श्रुत्वा कर्म[6]पाशै विंमुच्यते।।४६।।

एतद्य आदिपुरुषस्य मृगेन्द्रलीलां दैत्येन्द्रयूथपवधं प्रयतः पठेत।

दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वानुभावमकुतोभयमेति लोकम्।।४७।।

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोभि[7]यान्ति।

येषां गृहानावसतीति साक्षात् गूढं परं ब्रह्म मनुष्यलिङ्गम्।।४८।।

**श्रीध॰** प्रह्लादचरितार्थमुपसंहरीत - **एषेति** चतुर्भिः। अवतारः श्रीनृसिंहरूपः तस्य कथा आख्यातेति [8]शेषः।।४१,४२।।

**प्रह्लादेति।** प्रह्लादस्यानुचरित मित्यादेः समाम्नात मिति तृतीयेनान्वयः। अस्येत्यनेनोक्तं सर्गस्थित्यप्ययानां [9-]सृष्टि स्थिति लया[-9]नां ईशस्य हरेः याथात्म्यं [10]तत्त्वम्। प्रह्लादे[11]न कृतं हरेर्गुणकर्मानुवर्णनञ्चेत्यर्थः।।४३।।

**सर्गेति।** परा[12]वरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विपर्यासः।।४४।।

**धर्म** इति। आध्यात्मिकमात्मानात्मविवेकादि।।४५।।

एतच्छ्रवणादिफलमाह **य** इति द्वाभ्याम्। एतच्छ्रुत्वा यः कीर्तयेत्।।४६।।

**एत**[13]**दिति**। एतदेतां मृगेन्द्रस्य लीलाम्। तामेवाऽह दैत्येन्द्रस्य यूथपानाञ्च वधं यः शुचिस्सन्पठेत्। पुण्य मनुभावं प्रभावं, मतिनिश्चयं वा। लोकं वैकुण्ठम्।।४७।।

---

1. W वर्णितम् 2. H,V °प° 3. H,V कात्स्न्येन 4 M,Ma °ना° 5 A,B,G,J,T °माम्ना° 6. B पाशाद्वि° 7 A,B,G,J,T,W °यन्ति।

8. A omits शेषः 9- -9 A,B,J omit 10. H,V, omit तत्त्वम्। 11. A,B,J अनेन 12. H,V °प° 13. H,V omit एतत्

अहो प्रह्लादस्य भाग्यं येन देवो दृष्टो वयन्तु मन्दभाग्या इति विषीदन्तं प्रत्याह - यूयमिति त्रिभिः। तेषां युष्माकं गृहान्मुनयोऽभियान्ति[1] सर्वतस्समायान्ति। तत्कस्य हेतोः। येषु गृहेषु नराकारं गूढं सत् श्रीकृष्णाख्यं परं[2] ब्रह्म साक्षाद्वसतीति।।४८।।

**वीर०** हे नृप! त्वं मां यत्पृष्टवान् किं तद्द्विषतामपि दमघोषसुतादीनां [3-]शिशुपालादीनां[-3] हरेः स्साम्य मित्येतत्सर्वं ते तुभ्यम् आख्यातं कथितम्, मयेति शेषः।।४१।।

तदेवं प्रश्नस्योत्तरमुपसंहृत्य तदेतदाख्यानं विशिंषन् तत्कीर्तनश्रवणादि फल माह - **एषे**[4]त्यादिभिष्षड्भिः। ब्रह्मणि ब्रह्मकुले साधु र्ब्रह्मण्यः सचाऽसौ देव स्तस्य लोकत्रय मन्तःप्रविश्य बिभ्रतः कृष्णस्य इय मवतारकथा पुण्यापुण्यावहा यत्र कथायामादिदैत्ययोः हिरण्याक्षहिरण्यकशिप्वोः वधः प्रतिपाद्यते।।४२।।

तथा यत्र महाभागवतस्य प्रह्लादस्य चरित्रं भक्तिर्ज्ञानं विरक्तिश्च। भक्तिशब्देन भक्तियोगानुष्ठानप्रकारो विवक्षितः। विरक्तिशब्देन तदुत्पत्तिप्रकारः, ज्ञानशब्देन आत्मयाथात्म्यविवेचनपूर्वक तदनुसन्धानप्रकारः। एत त्सर्वं यत्र कथायां प्रतिपाद्यते इत्यर्थः।।४३।।

तथा जगत्सर्गस्थितिलयकारणस्य हरे र्याथात्म्यं तत्त्ववर्णनं तस्य गुणानां कर्मणाञ्च वर्णनम्, परावरेषां देवासुरादीनां यानि स्थानानि तेषां कालेन निमित्तेन महान्व्यत्ययो विपर्यासश्च।।४४।।

भगवान् येन गम्यते लभ्यते स भागवतानां धर्मश्च यञ्च आध्यात्मिकमात्मानमधिकृत्य वर्तमानं वस्तु चेति तदेतत्सर्वमस्मिन्नाख्याने सम्य गाख्यातम्।।४५।।

यः पुमान् एतद्विष्णोः वीर्येण पराक्रमादि गुणजातेन उपबृंहितं तत्प्रतिपादनेन विस्तीर्णम् अत एव पुण्य माख्यानं श्रद्धया श्रुत्वा कीर्तयेत्[5], स पुमान्कर्मपाशैः पुण्यपापात्मकैः कर्मभिरेव पाशैः विमुच्यते।।४६।।

किञ्च। यः पुमानादिपुरुषस्य मृगेन्द्रस्य सिंहस्येव या लीला दैत्येन्द्रयूथपवधात्मिका प्रतिपाद्या, यस्मिन् तदे तदाख्यानं प्रयत स्समाहितचित्तः सतां प्रवरस्य दैत्यात्मजस्य प्रह्लादस्य पुण्यं प्रभावञ्च श्रुत्वा पठेत पठेत् सोऽकुतो भयं कुतश्चिद्भयरहितं लोकं वैकुण्ठाख्यं[6] एति प्राप्नोति। पूर्वं कर्मपाशैः विमुच्यत इत्युक्तम्। अत्राऽकुतोभयं लोकमेतीत्युक्तम् कर्मपाशविमोचनद्वारा अकुतोभयं लोकमेतीत्यर्थः। अतोऽत्र नं पौन रुक्त्यम्।।४७।।

---

1. B,H,V यान्ति 2. H,V omit परं 3- -3 W omits 4 A,B,T एषेति। 5 A,B,T ०यन् 6. W ०ण्ठलोकं

अहो प्रह्लादस्य भाग्यं येन भगवान् दृष्टः वयन्तु मन्दभाग्या इति विषीदन्तं युधिष्ठिरमाह - **यूयमिति** त्रिभिः।नृलोके यूयम[1]हो बत भूरिभागाः अहो बहुभाग्यवन्तः, तदेवव्यञ्जयन् तान्विशिनष्टि, येषां युष्माकं गृहान् लोकं पुनानाः मुनयोऽभि यान्ति सर्वतस्समायान्ति। तत्कुतः? मनुष्यलिङ्गं मनुष्यस्येव लिङ्गं शरीरं यस्य तत् परं ब्रह्म श्रीकृष्णरूपं गूढं प्रच्छन्नं सर्वेषां युष्माकं गृहानावसति इति हेतो स्समायान्ति।।४८।।

**विज॰** ग्रन्थाधिकभयादुपसंहरति - आख्यात मिति। अतश्चैद्यादयो दमघोषसुतादीनामित्यादि बहुवारोक्तिर्भक्ते रनादिकालसम्बन्धित्वद्योतनार्था, अन्यथा वेनादीनामित्याद्युक्तिरपि स्यात्।।४९।।

श्रद्धाजननाय स्तौति - **एषेति**। ब्रह्मण्यदेवस्य रामस्य, च शब्दान्नरसिंहस्य यत्र कथायाम्।।४२।।

भक्त्यादिकमेव मुक्तिसाधनं न द्वेषादिकमित्येतदत्रप्रतिपाद्यते इत्युपसंहरति - प्रह्लादस्येति। भक्त्यादि लक्षणो धर्मश्चात्र कथित इत्यन्वयः।।४३।।

येनभक्त्यादि लक्षणधर्मेण हरिमितरेभ्यो। व्यावर्तयति-सर्गेति। अव्यत्ययो यथा स्थितत्वम्।।४४।।

आत्मानमधिकृत्य वर्तमानमिन्द्रियादिस्वरूपञ्च कथितमस्मिन्नाख्यान इत्याहुः - तदुपाख्यान इति। अत्रैव वै पार्षदौ। विष्णोरित्यावृतानुकथनञ्च भक्त्यादिकं मुक्तिसाधनं, न द्वेषादिकमिति ज्ञापनाय येन भागवत धर्मेणैव भगवान् गम्यते, न द्वेषादिनेति शेषः। "भक्तिर्ज्ञानं विरक्तिश्च नवमं श्रवणादिकम्। धर्मो भागवतः प्रोक्त स्तद्भक्तेषु तथा नव" (तन्त्रसारे) इति वचनात् भागवतधर्मेणैव श्रीहरिर्गम्यत इति कथमुच्यते भक्त्यादिना विनेतीयमाशङ्का परिहृता भक्त्यादेर्धर्मशब्दवाच्यत्वात् 'श्रवणं कीर्तनं विष्णोः' (भाग. 7-5 23) इत्यादि श्रवणादि नवकम्।।४५।।

अधुना आख्यानकीर्तनादिना यत्पुण्यं तदाह - य इति।।४६।।

सामान्यत उक्तं विवृणोति एतदिति।।४७।।

ननु प्रह्लादानुभवस्य अत्युत्तमत्ववर्णनेन युधिष्ठिरादीनां ततोऽधमत्वं प्रतीयत इति मन्दाशङ्कां परिहरति- **यूयमिति**। मुनय एतानिति यथाऽतीत्य वर्तयन्ति। बत विस्मये "खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत !" (अम.को. 3-399) इति।।४८।।

---

1 W omits अहो.

स वा अयं ब्रह्म महद्विमृग्यं[1] कैवल्यनिर्वाणसुखानुभूतिः।
प्रियस्सुहृद्वः खलु मातुलेय आत्मार्हणीयो[2] विधिकृद्गुरुश्च।।४९।।

न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम्।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्त्वतां पतिः।।५०।।*

•स एष भगवान् राजन्! व्यतनोद्विततं[3] यशः।
पुरा रुद्रस्य[4] देवस्य मयेनानन्तमायिना[5]।।५१।।

राजोवाच

कस्मिन् कर्मणि देवस्य मयोऽहञ्जगदीशितुः[6]।
यथा चोपचिता कीर्तिः कृष्णेनानेन[7] कथ्यताम्।।५२।।

नारद उवाच

निर्जिता असुरा देवै युध्यनेनोपबृंहितैः[8]।
मायिनां परमाचार्यं मयं शरणमाययुः[9]।।५३।।

स निर्ममे[10] पुर स्तिस्रो हैमीरौप्यायसीर्विभुः[11][12]।
दुर्लक्ष्यापायसंयोगा[13] दुर्वितर्क्यपरिच्छदाः[14][15]।।५४।।

ताभिस्तेऽसुरसेनान्यो लोकांस्त्रीन् सेश्वरान्नृपः।
स्मरन्तो नाशयाञ्चक्रुः पूर्ववैरमलक्षिताः।।५५।।

ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो![16-16]।
त्राहि नस्तावकान्देव! विनष्टांस्त्रिपुरालयैः[17]।।५६।।

---

1. A,G,J,T मृग्य 2. H,V, आत्मा हरियों *According to M,Ma editions 10th canto ends here •According to M,Ma edition 11th canto begins here. 3. A,B,G,J,T,W °द्विहतं 4. H,V भवस्य 5 H,V °नामित 6 M,Ma यशोऽभूज्ञ° 7 H,V °न मम 8 H,V °द्धं यंना° 9. H,V °मभ्ययुः 10. A,B,G,J,T,W निर्माय 11 H,V हेम°; M, Ma हैम 12 H,V °सीः प्रभुः 13. W °क्षोपा°; 14 W °ग 15 H,V दुर्लक्ष्यांरु 16- -16 H,V °साद्योचिरे विभुम्; M,Ma °साद्येश्वरं ततः; W °साद्योचुरीश्वरम् 17 H,V °ष्टाः

**श्रीध०** ननु कृष्णोऽस्माकं मातुलेयः, कथं ब्रह्मेत्युच्यते! तत्राऽह - **स वा** इति। सोऽयं ब्रह्मैव। कथम्भूतः? महद्भिर्विमृग्यं यत् कैवल्यनिर्वाणसुखं निरुपाधिः परमानन्दः तदनुभूतिरूपो[1] वो युष्माकं खलु प्रियस्सुहृदित्यादिरूपो भवति। विधिकृदाज्ञानुवर्ती।।४९।।

ननु परं ब्रह्म चेत् कथं द्व्यष्टसहस्रस्त्रीषु रतिः, कथं वा धर्माद्याचरणं तस्य? [2-]इत्याशङ्क्याऽऽह[-2] - **नेति।** यस्य रूपं तत्त्वं भवादिभिरपि धिया स्वबुद्ध्या वस्तुतया इदमित्थमिति साक्षान्नोपवर्णितं स युष्माकं स्वयमेव प्रसन्नः। अस्माकन्तु मौनादिसाधनैस्तत्प्रसादः प्रार्थनीय एवेत्याह - मौनेनेति। स एष सात्त्वतानां पतिर्नः प्रसीदतु। न हि प्रह्लादस्य गृहेषु[3] परं ब्रह्म वसति, न च तद्दर्शनाय मुनयस्तद्गृहानभियन्ति[4], न च तस्य ब्रह्ममातुलेयादिरूपेण वर्तते, न च स्वयमेव ब्रह्म[5]प्रसन्नम्। अतो यूयमेव ततोऽप्यस्मत्तोऽपि भूरिभागा इति भावः।।५०।।

ननु अन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान्। स एवम्भूत ईश्वरोऽप्यस्य तत्त्वं न जानातीति कथमित्यपेक्षायां तस्याऽपि एतत्साहाय्यादेवाऽसौप्रभावो न केवलस्येति कत्कुमाख्यानमुपक्षिपति **- स एष** इति।।५१।।

**कस्मिन्निति**। [6-]राजा युधिष्ठिर उवाच[-6]। जगदीशितुर्देवस्य कीर्तिं कस्मिन्कर्मणि मयो हतवान्।।५२।।

**निर्जिता** इति। अनेन[7] श्रीकृष्णेनोपबृंहितैः संवर्धितैः।।५३।।

**स इति** । हैमी च रौप्या च आयसी चेति तिस्रः पुरो निर्माय, तेभ्यो ददाविति शेषः। दुर्लक्ष्यावपायसंयोगौ गमनाऽऽगमने यासाम्। दुर्वितर्क्याः परिच्छदा यासु।।५४।।

**ताभिरिति**। [8-]आसुराणां[-8] सेनान्यः सेनापतयः पूर्ववैरं स्मरन्तः।।५५,५६।।

**वीर०** ननु श्रीकृष्णोऽस्माकं मातुलेयः कथं ब्रह्मेत्युच्यते? तत्राऽह - **स वा** इति। स[9] वै सोऽयं श्रीकृष्णो ब्रह्मैव। किं तद्ब्रह्म? यदभिन्नः श्रीकृष्णो [10-]यन्महद्भिः विमृग्यम् अन्वेषणीयं केवलं ध्येयमित्यर्थः। केवलनिर्दुःखसुखात्मकज्ञानरूपम् एवम्भूतब्रह्माभिन्नः श्रीकृष्णः[-10] वो युष्माकं न केवलं मातुलेयोऽपि तु प्रियस्सुहृच्च। आत्मा अन्तरात्मा, अर्हणीयः पूज्यः विधिकृन्नियोगकारी, गुरुर्हितोपदेष्टा च। एवमनेकधा युष्माकं तत्सम्बन्धिनां भाग्यं

1. H,V रूपं 2. A,B,J इत्यत आह 3 H,V गृहं 4 H,V यान्ति 5. A,B,T Omit ब्रह्म 6- -6 H,V Omit 7. H,V येन 8- -8 A,B,J Omit

9. W Omits स वै 10- -10 A,B,T Omit

कियदिति वक्तव्यमिति भावः। महद्विमृग्यमित्यनेन महतामपि तत्स्वरूपं यथावद्दुरवगममित्युक्तम् । प्रियसुहृदित्यनेन तन्महद्विमृग्यं ब्रह्म स्वयमेव युष्माकं प्रसन्नमिति च।।४९।।

तन्महद्विमृग्यमेव प्रपञ्चयन् तत्प्रसादं प्रार्थयते - **नेति**। यस्य भगवतो रूपं भवपद्मजादिभिः [1-]रुद्रब्रह्मादिभिः[-1] धिया स्वमनीषया वस्तुतया याथात्म्येन नोपवर्णितम् उपवर्णितं विषयीकृतं न भवति, वाङ्मनसागोचरस्व-रूपस्वभावत्वात् तैरेतावदित्युपवर्णितुमशक्यमित्यर्थः। किन्तु केवलं मौनेन शुभाश्रयसंशीलनरूपेण भक्त्योपासनात्मिकया प्रीतिरूपया उपशमेनेन्द्रियजयादिना च पूजितः आराधितः सः सात्त्वतां योगेश्वराणां पति-र्भगवान् मे मह्यं प्रसीदतां प्रसन्नो भवतु।।५०।।

एवं सम्प्रार्थ्य श्रीकृष्णस्य मनुष्यलिङ्गस्य परब्रह्मत्वसूचकमितिहासं प्रस्तोष्यन् तत्प्रश्नावसरप्रदानाय श्रीकृष्णं विशिनष्टि - **स** इति। हे राजन्! स एष भगवान् ज्ञानशक्तिबलैश्वर्यादिषाड्गुण्ययुक्तः श्रीकृष्णः पुरा अनन्तमायिना अनन्ता बह्व्यो माया यस्य तेन मयेन निमित्तभूतेन रुद्रस्य देवस्य यद्विहतं यशः तद्व्यतनोत्। [2]तेनानेन रुद्रादीनामपि यश आदिगुणबृहत्त्वाधायकत्वकथनेन स्वयमबृहत् इतरेषां तदाधायकत्वायोगात् साम-र्थ्यात्तस्याऽपि तल्लाभेन च परब्रह्मत्वं सूचितम्।।५१।।

तदेवं लब्धप्रश्नावसरो युधिष्ठिरः [3]विहतयश उपचयप्रकारं बुभुत्सुः पृच्छति - **कस्मिन्निति**। जगदीशितुः भगवदायत्तजगदीशितृत्वस्य "विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम्" (भाग.7-10-61) इत्यादिना भगवदाय-त्तसामर्थ्यस्य वक्ष्यमाणत्वाद्देवस्य रुद्रस्य कीर्तिः कस्मिन् कर्मणि अनेन श्रीकृष्णेन कर्त्रा मयेन निमित्तेन उपचिता वर्धिता तत्कथ्यताम्।।५२।।

इति पृष्ट आह देवर्षिः - **निर्जिता** इत्यादिना। अनेन रुद्रेणोपबृंहितैराहितबलैर्देवैः निर्जिता असुरा मायिनां [4-]परमाचार्यं[-4] परमाचार्याणामप्याचार्यं मयं शरणं जग्मुः।।५३।।

ततस्स विभुः समर्थो मयः, हेम्नो विकृतिर्हैमी, रूप्यस्य रजतस्य रौप्या, अयसो लोहस्य आयसी त्रयाणामितरेतरयोगद्वन्द्वः। तास्तिस्रः पुरो निर्माय, असुरेभ्यो ददाविति शेषः। पुरो विशिनष्टि। दुर्लक्ष्यः दर्शनाविषयः अपायः संयोगश्च यासां ता इमाः पुरः अत्राऽगताः, इतो गताश्चेति जनैरलक्षिता इत्यर्थः। तथा दुर्वितर्क्याः सार्वजनीनसाधारण्येन तर्कितुमशक्याः परिच्छदा उपकरणानि यासां ताः।।५४।।

---

1- -1 W Omits 2. W Omits तेन 3. A,B,T बृहद्यशः 4- -4 A,B,T Omit

ताभिर्विमानरूपाभिः अपेक्षितदेशगमनक्षमाभिः पुरीभिरसुरसेनान्यः[1] दैत्यसेनानायकाः हे नृप ! अलक्षिताः देवैरदृश्यमानाः पूर्ववैरं स्मरन्तः सेश्वरान् सपालान् त्रीन् लोकान् नाशयाञ्चक्रुः नाशयितुमारब्धवन्त इत्यर्थः । ।५५ । ।

ततस्ते सेश्वरा इन्द्रादिलोकपालैस्सहिता लोका जनाः ईश्वरं रुद्रमुपासाद्य प्राप्य आनतास्सन्त ऊचुः । तदेवाऽह - हे विभो ! त्रीणि पुराणि आलयाः स्थानानि येषां तैर्विनष्टान् तावकान् त्वदीयान् अस्मान् हे देव । [2]रुद्र ! पाहि पालयेति । ।५६ । ।

**विज०** ननु परब्रह्मणि मुक्तिगा इत्यतः परब्रह्मशब्देन विष्णुत्वनिश्चयः कथमिति ? तत्राऽह - **स वा** इति । कैवल्येन अनासक्तत्वेन यन्निर्वाणसुखमशरीरसुखं तस्यानुभूतिरनुभवो यस्य स तथा, अनन्ययोग्यस्वरूपानन्दमनुभवतीत्यर्थः । अनेन विष्णुत्वं निरणायि । विधिकृदाज्ञाकारी, गुरुर्हितोपदेष्टा । ।४९ । ।

ननु दुर्ज्ञेयरूपत्वं हि विष्णुलिङ्गं "न हि सुज्ञेयमणुर्ह्येष आत्मा सः" इति श्रुतिः । स्वरूपानन्दानुभवित्वं सायुज्यभाजोऽप्यस्ति, अतः कथं निर्णयः ? इति तत्राऽह - **न यस्येति** । ।५० । ।*

अस्मिन्नध्याये हरौ भक्तिविधानार्थं रुद्रमाहात्म्यकथनव्याजेन तन्माहात्म्यं प्रतिपाद्यते । अधुना- "तत्रैको रुद्रो न द्वितीयोऽवतस्थे" इत्यादिश्रुतेः प्रतीयमानरुद्रस्य अद्वितीयार्थत्वं प्रतिपाद्यमानैर्जनैः जनैः महाद्रव्यव्ययेन पूज्यमानस्य "ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानाम्" (मना.उ.10-8) इत्यादिमन्त्रैः स्तूयमानस्य सतः रुद्रस्याऽसुरावेशात्संशयो बभूव - इदं सर्वं भगवदधीनं न वेति । तत्र दयालुर्भक्तवत्सलः श्रीनारायणो रुद्रस्य तं संशयमपाचक्रे । कथं केनेति तत्राऽह - स एष इति । स भगवान्नृसिंहात्मना ब्रह्मदत्तवरेण दृप्तहिरण्यकशिपुपुरस्सरासुरजातिं निर्मूलयित्वा प्रह्लादादिभक्तसमुदायस्याऽनुग्रहीता[3] स एष युष्मद्बन्धुभूतः श्रीकृष्णः पुराकल्पविशेषे देवस्य हरेः स्तुतिध्यानादिकं कुर्वाणस्य रुद्रस्य रोदनाद्यवगततल्लक्षणस्य अत एव तन्नाम्नः शिवस्य अनन्तमायिना अनेकशतसहस्रमायावता अत एव अर्थादल्पेन मयेन वक्ष्यमाणप्रतीकारं कृत्वा तस्य रुद्रस्य भगवद्भक्तप्रधान इत्यादि यशो विततं त्रिपुरनाशनेन व्याप्तमकरोदात्मनोऽतिशयस्वामित्वेन तदनुग्राहकत्वेन च विमलमकृतेत्यन्वयः । ।५१ । ।

"नापृष्टः कस्य चिद्ब्रूयात्" (सन्न्या.उ. 3-2-102) [4]इति वचनात्प्रसक्तं प्रमेयं विस्तृत्य श्रोतुं राजा पृच्छति - **कस्मिन्कर्मणीति** । कस्मिन् कर्मणि मयो विपरीतं चकार, येनेशितुर्देवस्य यशोऽभूत् ? सा च कीर्तिः कृष्णेन यथायथमुपचिता प्रचिता, स कथाविशेषो मम कथ्यतामित्यन्वयः । ।५२ । ।

1. W असुरसेना० 2 W Omits रुद्र ! *श्रीविजयध्वजरीत्या अत्रैव दशमोऽध्यायस्समाप्तः । 3. A,B ०हं कर्ता स० 4 A,B Omit इति

नारदः प्रश्नं परिहरति - **निर्जिता** इति। अनेन हरिणोपबृंहितैः अन्यसहायेन असुरा जिता इत्येतद्देवानां न दोषाय विष्णवपे[1]क्षणस्य स्वतस्सिद्धत्वात् देवानां सापेक्षं (सत्वं) न तु दोषाय। "यत्र सिद्धमपेक्षितम्" (शब्दनिर्णये) इति वचनात्।।५३।।

मयेन त्रिपुरनिर्माणकर्म विपरीतं कृतमित्याह - **स निर्मम** इति। स तिस्रः दुर्लक्ष्यो दुर्ज्ञेयोऽपायसंयोगो नाशसम्बन्धोऽन्तःप्रवेशसम्बन्धो वा यासां तास्तथा। अत एव अदृश्यबहुतरायुधादिपरिकराः।।५४।।

असुरसेनान्यः असुरसेनानायकाः।।५५।।

सेश्वराः सहरयः। अत्राऽपि विष्णुसहितदेवानां रुद्रापे[2]क्षित्वं न दोषाय। त्रिपुरहननं रुद्रेण कार्यमिति हरिणा क्लृप्तत्वात्, इन्द्रादिभिर्वा।।५६।।

**अथाऽनुगृह्य भगवान्मा भैष्टेति सुरान्विभुः।**
**शरं धनुषि सन्धाय पु[3]रेष्वस्त्रं व्यमुञ्चत।।५७।।**

**ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात्।**
**यथा मयूखसन्दोहा नादृश्यन्त पुरो यतः।।५८।।**

**तैः स्पृ[4]ष्टा व्यसवस्सर्वे निपेतु[5]स्त्रिपुरौकसः।**
**तानानीय महायोगी[6] मयः कूपरसेऽक्षिपत्।।५९।।**

**सिद्धामृतरस[7]स्पृष्टा वज्रसारा महौजसः।**
**उत्तस्थुर्मेघदलना[8] वैद्युता इव वह्नयः।।६०।।**

**विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम्।**
**तदाऽयं भगवान्विष्णुस्त[9]त्रोपायमकल्पयत्।।६१।।**

**वत्स आसीत्तदा ब्रह्मा स्वयं विष्णुरयं हि गौः।**
**प्रविश्य त्रिपुरं काले र[10]सकूपामृतं पपौ।।६२।।**

---

1. A,B °पे° 2. A,B °क्षितत्वं 3. M,Ma पुर्यामस्त्रं 4. M,Ma °स्पृ° 5 A,B,G,J,T,W °तुः स्म पु ° 6. M,Ma °गः 7 H,V °से क्षिप्ताः 8. W °नात् 9. M,Ma °स्तस्यो ° 10. H,V तञ्च कू °

[1]तेऽसुरा ह्यपि पश्यन्तो न न्यषेध[2]न्विमोहिताः।
[3]तद्विज्ञाय [4]मयो योगी रसपालानिदं जगौ।।६३।।

[5]स्मयन्विशोकश्शोकार्तान्स्मरन्दैवगतिञ्च ताम्।
देवोऽसुरो [6]नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन।।६४।।

आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः।
अथाऽसौ शक्तिभिः स्वाभिश्शम्भोः [7]प्राधनिकं व्यधात्।।६५।।

**श्रीध॰ अथेति।** अस्त्रमभिमन्त्रितं शरं पुरेषु व्यमु[8]ञ्चत।।५७।।

**तत** इति। ततः शरात् सूर्यमण्डलात् मयूखसन्दोहा रश्मिसमूहा इव। यतो येभ्यः।।५८।।

**तैरिति।** कूपरसे [9]स्वयं निर्मितकूपामृते।।५९।।

**सिद्धेति।** वज्रसारा वज्रवद्दृढाङ्गाः, महौजसो महाबलाः मेघदलनाः मेघभेदिनो विद्युद्रूपा वह्नय इव।।६०,६१।।

**वत्सेति।** काले मध्याह्ने।।६२-६४।।

**आत्मन** इति। आत्मनो वा अन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितमपोहितुंपरिहर्तुमिह कश्चिदपीश्वरः समर्थोनाऽस्ति। असौ श्रीकृष्णः प्रधनं सङ्ग्रामः तत्साधनं [10-]प्राधानिकम्[-10]।।६५।।

**वीर॰** अथ तद्विज्ञापनानन्तरं तान् सुरान् माभैष्ट भयं माकार्ष्ट इत्यनुगृह्य भगवान् विभू रुद्रः धनुषि शरं बाणं सन्धाय अस्त्रं पाशुपतं तस्मिन्, संयोज्येति शेषः। पुरेषु व्यमुञ्चत।।५७।।

ततश्शरात् यथा सूर्यमण्डलात् मयूखसन्दोहाः रश्मिसमूहाः, तथा अग्निवर्णा इषवो बाणा उत्पेतुः। यतो येभ्य इषुभ्यः पुरो नाऽदृश्यन्त, [11-]जनैरिति शेषः[-11]। तावद्भिः इषुभिः प्रच्छन्ना बभूवुरित्यर्थः।।५८।।

---

1 H.V असुरा ° 2 W °धन्त मो ° 3 H.V तं वि ° 4 A,B,G,J,M,Ma,T महा° 5. A,B,G,J,T स्वयं वि°; M,Ma स्मरन्वि° 6 W नरः को वा 7 H,M,Ma,V °धा ° 8. B,H,V °त् 9 H,V Omit स्वयं 10- -10 A,B,J Omit 11- -11 W Omits.

[1-]ततः किम्? अत आह[-1] - तैरिषुभिः स्पृष्टास्ताडिताः त्रीणि पुराणि ओकांसि स्थानानि येषां ते असुराः सर्वे व्यसवः विगता असवः प्राणा येषां तादृशास्सन्तो निपेतुः पतितवन्तः। तान् व्यसूनसुरानानीय महायोगी मयः कूपरसे स्वयं [2]विनिर्मितकूपगते रसे मृतसञ्जीवयितिर, अक्षिपदपातयत्।।५९।।

ते च सिद्धामृतरसेन स्पृष्टा असुराः वज्रसारवत् दृढाङ्गाः महौजसः महाबलास्सन्तः मेघदलनात् मेघच्छेदात् विद्युद्रूपा बह्नय इव उत्तस्थुः उत्थितवन्तः।।६०।।

तथा भग्नस्सङ्कल्पो यस्य अत एव विमनस्कं दुःखितमनस्कं वृषध्वजं रुद्रं विलोक्याऽयं भगवान् श्रीकृष्णरूपो विष्णुः तत्र सिद्धामृतस्य विनाशे उपायमकल्पयत्।।६१।।

तदेवाऽह - **वत्स** इति। अयं श्रीकृष्णरूपो विष्णुः स्वयं गौः [3]धेनुः आसीत्। ब्रह्मा चतुर्मुखो वत्स आसीत्। ततो गोरूपोऽयं विष्णुः सवत्सः त्रिपुरं त्रयाणां पुराणां समाहारः, तत्प्रविश्य काले मध्याह्ने रसकूपामृतं [4-]रसरूपं कूपगतममृतं[-4] पपावपिबत् ।।६२।।

तेऽसुराः पिबन्तीं गां पश्यन्तोऽपि भगवन्मायाविमोहिताः न न्यषेधन् न न्यवारयन्। तत्पानं ज्ञात्वा महायोगी मयः रसं कूपामृतरसं पालयन्तीति तथा, तानसुरान् शोकार्तान् तां दैवगतिं स्मरन् अत एव विगतशोकः स्वयं स्मयन् इदं वक्ष्यमाणं [5]जगौ[6] उवाच।।६३।।

तदेवाऽह - **देव** इति। आत्मनोऽन्यस्य वा द्वयोरपि दैवेनेश्वरेण दिष्टमुपकल्पितं सुखं दुःखं वा अपोहितुमिह लोके दैवादन्यतमो यः [7]कश्चिद्देवादिर्नेश्वरः न प्रभुर्न समर्थः। [8-]दैवमेव सुखदुःखादिहेतुरित्यर्थः[-8]। अथ निश्शेषकूपा-मृतरसपानानन्तरम् असौ श्रीकृष्णः धर्मादिभिः स्वाभिश्शक्तिभिः शम्भो रुद्रस्य प्राधनिकं प्रधनं सङ्ग्रामः तत्साधनं यत् रथसूतादिरूपं तद्व्यधात्। क्रमेण धर्मादिशक्तिरेव रथादिरूपेणाऽकरोदित्यर्थः। स्वशक्त्याहित-शक्तिमकरोदिति यावत्।।६४,६५।।

**विज०** विभुश्शिवः मा भैष्टेत्युक्त्वा । पुर्यामिति एकवचनं जातिविवक्षया।।५७।।

ततो धनुषो, मयूखसन्दोहाः रश्मिराश्यः, यतो यैश्शरैः, पुरः पुराणि।।५८।।

1- -1 W Omits 2. A,B,T Omit वि. 3 A,B,T धेनुरूपः 4- -4 A,B,T Omit 5. W Omits जगौ 6. W adds जगाद 7 W Omits देवादिः

8- -8 W omits

[1]सृष्टाः तप्ताः, व्यसवः गतप्राणाः, इदञ्च मयेन कृतं विपरीतमित्याशयवानाह - तानिति।।५९।।

सिद्धामृतरसो मृतसञ्जीवनरसः, तस्मिन् स्पृष्टाः स्नाताः, वैद्युता विद्युत्सम्बन्धिनः, चशब्देन जलादिना यथा नाशो नास्ति तथैषामिति सूचयति।।६०।।

कथं कृष्णेनोपचिता कीर्तिरितीमं प्रश्नं परिहर्तुमाह - **विलोक्येति**।।६१।।

कोऽसाविति तत्राऽह - **वत्स** इति। हिशब्देन विष्णुर्ब्रह्माणमपेक्षत इति न दोषायेति, तत्सङ्कल्पकारित्वेन सिद्धत्वादिति सूचयति। काले मध्यन्दिने।।६२।।

ग्रन्थान्तरासिद्धत्वात् हि शब्देन भगवन्मायायाः तन्मायातोऽपरिमितमाहात्म्यमस्तीति सूचयति। स्वकृतापराध प्रहाणाय स्वस्य भगवद्भक्तिप्रकटनाय च मयः तद्विषयज्ञानञ्च मम अस्तीत्यभिप्रायेणाऽह - तदिति। तद्दैत्यवधोपायकरणं किञ्चित्कालमसुराणां जयदायिनीमिदानीं देवानामिति देवगतिम्, किं तत्राऽह - देव इति। आत्मनः स्वस्य अन्यस्य देवदत्तस्य चेति द्वयोर्देवेन विष्णुना दिष्टं क्लृप्तं व्यपोहितुं अन्यथा कर्तुम् इह जीवराशौ देवोऽसुरोऽन्यो वा कश्चनेश्वरः समर्थो नाऽस्तीत्यतः तूष्णीम्भाव एव वरीयानित्यर्थः ।।६३,६४।।

ननु सिद्धरसपानं व्यर्थमिव प्रतिभाति, त्रिपुराणामनाशादित्याशङ्क्य तन्नाशसाधनमाह - अथेति। अथ दैत्यजीवनसाधनरसनाशानन्तरं स्वाभिश्शक्तिभिः भूम्यादिभिः शम्भोः प्रा[2]धानिकं युद्धसाधनं रथादिकं व्यधा-दित्यन्वयः।।६५।।

**धर्मज्ञानविर[3]क्त्यृद्धितपोविद्याक्रियादिभिः।**
**रथं सूतं ध्वजं वा[4]हान् धनुर्वर्मशरादि यत्।।६६।।**
**सन्नद्धो रथमास्थाय [5-]शरं धनुरुपाददे[-5]।**
**शरं धनुषि सन्धाय मुहूर्तेऽभिजितीश्वरः।।६७।।**
**[6-]ददाह तेन दुर्भेद्यान्हरो[-6]ऽथ[7] त्रिपुरो नृप।**
**दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुला[8]ः।।६८।।**

1. A,B स्पृष्टाः 2. A,B °ध° 3. H,V °क्त्यर्थी; M,Ma °क्त्यादि 4. M,Ma °हं 5- -5 M,Ma सशरं धनुरादेद 6- -6 H,M,Ma,V भगवत्तेजसा गुप्तो ददाह त्रिपुरं 7 H,V शिवः 8 M,Ma °ले

**देवार्षिपितृसिद्धेशा जयेति कुसुमोत्करैः।**
**अवाकिरञ्जगुर्हृष्टा ननृतुश्चाऽप्सरोगणाः।।६९।।**
**एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप।**
**ब्रह्मादिभिः स्तूयमानः स्वधाम[1] प्रत्यपद्यत।।७०।।**
**एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः।**
**वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान् पुनानान्यपरं वदामि[2] किम्।।७१।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः।।१०।।

**श्रीध० सन्नद्ध** इति। अभिजिति मध्याह्ने।।६६, ६७।।

**ददाहेति**। विमानशतानि सङ्कुलानि सङ्कीर्णानि येषां ते देवादयः।।६८-७०।।

आदित आरभ्य स्कन्धार्थं निगमयति - **एवंविधानीति**। नृलोकं नराकारमात्मनो विडम्बमानस्याऽनुकुर्वतः।।७१।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां दशमोऽध्यायः।।१०।।

**वीर०** तत्र शक्तिर्नाम स्वापृथक्सिद्धविशेषणभूतकार्योपयुक्ता सा च धर्मादिरूपेण बहुविधा। तत्र धर्मशक्तिर्नाम साधुपरित्राणसामर्थ्यात्मिका। ज्ञानशक्तिरिह - "यस्सर्वज्ञस्सर्ववित् सर्वदर्शः स्वाधीनोऽनादिः सर्वेश्वरः सर्वदृक्" (मुण्ड. उ. 2-2-7) इत्यादिभ्योऽवगता सर्वसाक्षात्कारसामर्थ्यात्मिका। तथाचोक्तं श्रीमन्नाथमुनिभिः "योवेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः" (न्यायतत्वम्-1) इति। "विरक्तिर्नाम सर्वमिदमभ्यात्तोऽवाक्यनादरः" (छान्दो.उ. 3-14-2) इति श्रुत्यवगतावाप्तसमस्तकामत्वेऽपि तदनादरेणाऽवस्थानसाम्मर्थ्यात्मिका ऋद्धिर्नामैश्वर्यम् "एष सर्वेश्वरः कृष्णः" इत्यादि प्रमाणावगतं सर्वान्तरात्मत्वेन नियन्तृसामर्थ्यम्, [3]तपश्शक्तिर्नाम[3] "स तपोऽतप्यत, सतपस्तप्त्वा, इदं सर्वमसृजत" (तैत्ति.उ. 2-6) इत्याद्यवगता जगद्रक्षणोपयुक्तसङ्कल्परूपज्ञानात्मिका, विद्या

1. H,V स्वं 2. W ०दाम 3- -3 W तपो नाम

नाम "सत्यकामः सत्यसङ्कल्पः" (छान्दो.उ. 8-1-5) इत्याद्यवगता सत्यसङ्कल्पात्मिका, सत्यसङ्कल्पत्वञ्च स्वावताराद्यपूर्वभोग्यान्तरसृष्टौ जगद्व्यापारादिषु चाऽमोघसङ्कल्पत्वम्, क्रिया नाम अघटितघटनात्मिका "स्वाभाविकी ज्ञानबलक्रिया च" (श्वेता.उ. 6-8) इत्याद्यवगता। आदिशब्देन बलवीर्यतेजआदयः। तत्र बलं श्रमप्रसङ्गरहितं सर्वधारणसामर्थ्यम्, "एष सेतुर्विधारणः"(मैत्र.उ. 77) इत्यादिभ्योऽवगतम्, वीर्यं नाम सर्वधारणेऽपि विकाररहितत्वम्, तेजः अस्वाधीनसहकार्यनपेक्षत्वम्। रथमिति वाहानश्वान्, वर्म कवचम्, आदिशब्देन प्रग्रहादिकं गृह्यते।।६६।।

भगवद्धर्मशक्त्यात्मकं रथमारुह्य सन्नद्धः क्वचित् ईश्वरो रुद्रः शरं धनुश्चोपाददे स्वीकृतवान्। ततो धनुषि शरं सन्धाय अभिजिति मुहूर्ते [1-] अभिजिन्नामके मुहूर्ते दिवसस्याष्टमे मुहूर्ते [-1]।।६७।।

भगवतः श्रीकृष्णस्य तेजसोक्तविधेन युक्तस्त्रिपुरं ददाह बाणप्रयोगद्वारेण दग्धवान्। हे नृप! तदा दिविदुन्दुभयो नेदुः दध्वनुः। विमानशतानि सङ्कुलानि येषां ते।।६८।।

देवर्ष्यादयः, जयेति वदन्त इति शेषः। उत्कर्षेण वर्तस्वेति वदन्तः कुसुमोत्करैः पुष्पवर्षैः शम्भुमवाकिरन् ववृषुः। अप्सरसां गणाश्च जगुर्ननृतुश्च।।६९।।

हे नृप! एवमित्थं तिस्रः पुरः पुरीर्दग्ध्वा पुरहा भगवान् रुद्रः ब्रह्मादिभिः स्तूयमानः स्वस्थानं प्रत्यपद्यत प्राप्तवान्।।७०।।

श्रीकृष्णस्य परब्रह्माभिन्नत्व सूचकप्रभावप्रतिपादनमुपसंहरन् प्रश्नान्तरावसरं प्रयच्छति - **एवमिति**। आत्मनः स्वस्य मायया सङ्कल्पेन, न तु कर्मणेति भावः। नृलोकं विडम्बमानस्य अनुकुर्वतः, इतरसजातीयचेष्टां कुर्वत इत्यर्थः। हरेराश्रितार्तिहरस्य लोकस्य हितोपदेष्टुरस्य श्रीकृष्णस्य ऋषिभिरस्मदादिभिर्गीतान्येवंविधानि वीर्याणि लोकं पुनानानि बहूनि सन्तीति शेषः। साकल्येन केनाऽपि वक्तुं न शक्यानीति भावः। अपरमन्यत्किं वदाम, अतोऽन्यत्किञ्चित्त्वया प्रष्टव्यमस्तीति चेत् तत्कथयामेत्यर्थः।।७१।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां दशमोऽध्यायः।।१०।।

---

1- -1 W Omits

**विज०** धर्मादिबलोपेतत्वात् अभेद्यादि: किं तत्प्राधानिकमिति[1] तदाह - रथमिति। भगवतो हरस्तेजसा गुप्तो रक्षित:।।६६,६७।।

यशोविततिप्रकारमाह - दिवीति। जयेत्युक्त्वा जगुरित्यनेन यशोविततिर्ज्ञायते।।६८,६९।।

ब्रह्मादिभि: ब्रह्मोत्पन्नैस्सनकादिभि: " इमा रुद्राय स्थिरधन्वने गिर: क्षिप्रेषव:" (ऋक्.सं. 7-46-1) इत्यादि वेदवाक्यैर्वा शम्भो: पुरदहनमाहात्म्यं यत्, तत् श्रीनारायणैकनिष्ठमित्याशयेन उपसंहरति - **एवं विधानीति**। अपरं भगवच्चरितं तद्वदेति शेष:। अपरमन्यत् वस्तु एवंविधमाहात्म्योपेतं किं वदामि, न किमपीति वा ।।७०,७१।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे दशमोऽध्याय: ।।१०।।

(विजयध्वजरीत्या एकादशोऽध्याय: समाप्त: )

* * * *

---

1. A,B ०ध०

# एकादशोऽध्यायः

श्रीशुक उवाच

श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य [1]उरुक्रमात्मनः।
युधिष्ठिरो दैत्यपतेर्मुदा[2] युतः पप्रच्छभूयस्तनयं स्वयम्भुवः।।१।।

युधिष्ठिर उवाच

भगवञ्छ्रोतुमिच्छामि नृणां धर्मं सनातनम्।
वर्णाश्रमाचारयुतं यत्पुमान्विन्दते परम्।।२।।

भवान् प्रजापतेस्साक्षादात्मजः परमेष्ठिनः।
सुतानां सम्मतो ब्रह्मंस्तपोज्ञा[3]नसमाधिभिः।।३।।

नारायणपरा विप्रा धर्मं[4] गुह्यं यथा[5] विदुः।
करुणास्साधवश्शान्तास्त्वद्विधा न तथाऽपरे।।४।।

नारद उवाच

नत्वा भगवतेऽजाय लोकानां धर्महे[6]तवे।
वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्[7]युतम्।।५।।

योऽवतीर्यात्मनोंऽशेन दाक्षायण्यान्तु धर्मतः।
लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे।।६।।

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः।
स्मृति[8]श्च तद्विदां राजन् येन चाऽऽत्मा प्रसीदति।।७।।

---

1 W °मु° 2 M,Ma °दान्वित· 3 A,B,G,J,T,W याग 4 W धर्म 5. A,B,G,J,T परं 6. H,V सेतवे 7 A,B,G,H,T,V च्छ्रुतम् 8. A,B,G,H,J,T,V तं च

**सत्यं दया तपश्शौचं तितिक्षेक्षा[1] शमो दमः।**

**अहिंसा ब्रह्मचर्यञ्च त्यागः स्वाध्यायआर्जवम्।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवं दशभिर्ज्ञान भक्तियोगावुदीरितौ। अथ पञ्चभिरध्यायैः कर्मयोगोऽनुवर्ण्यते।।

एकादशे नृणां धर्माः साधारण्येन वर्णिताः। विशेषेण च वर्णानां मुख्याऽमुख्याश्च योषिताम्।।

**श्रुत्वेति**। दैत्यपतेः प्रह्लादस्य साधूनां सभासु सभाजितं सत्कृतमीहितं चरितं श्रुत्वा पुनर्नारदं पप्रच्छ। कथम्भूतस्येहितम्? महत्तमानामग्रण्यो मुख्यस्य। तत्र हेतुः-उरुक्रमे आत्मा मनो यस्य।।१।।

**भगवन्निति**। श्रवणेच्छायां हेतुः। यद्यतो धर्मादनुष्ठितात्परं ज्ञानं भक्तिश्च विन्दते।।२,३।।

ननु स्मृतिकारैः धर्म उक्त एव तत्राह-**नारायणपरा** इति।।४।।

**नत्वेति**। अजाय श्रीनारायणाय, तस्यैव मुखाच्छ्रुतम्।।५।।

तन्मुखादात्मनः श्रवणं सम्भावयन्विशिनाष्टि-**य** इति।।६।।

प्रथमं तावद्धर्मे प्रमाणमाह-**धर्मेति**। धर्मस्य मूलं प्रमाणम्। स्मृतञ्च स्मृतिः। तद्विदां वेदविदाम्। येन चाऽऽत्मा मनः[2] प्रसीदति, तुष्यति च। तथा च याज्ञवल्क्यः- "श्रुतिः स्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्सङ्कल्पजाः कामो धर्ममूलमिदं स्मृतम्।।" (याज्ञ. स्मृ- 1-7) इति। मनुश्च "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" (मनु.स्मृ. 2-6) इति।।७।।

तत्र तावन्नरमात्रसाधारणधर्ममाह-**सत्यमिति** पञ्चभिः। तप एकादश्युपवासादि। ईक्षा युक्तायुक्तविवेकः। **शमो मनसः संयमः**। दमो बाह्येन्द्रियाणाम्। त्यागो दानम्। स्वाध्यायो यथोचितजपः।।८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं श्रुतप्रह्लादचरितोऽ[3]परं वदाम किमिति प्रश्नाय चोदितो युधिष्ठिरः वर्णाश्रमादि धर्मान् तत्र तत्र

---

1. M,Ma °ज्या 2. H.V. omit मनः 3. W °त्रो

भगवद्भक्तियोगाङ्गत्वेनोक्तन् बुभुत्सुः पप्रच्छ देवर्षिमित्याह भगवान्बादरायणिः **श्रुत्वेति**। ऊरुविक्रमे भगवति आत्मा मनो यस्य तस्य दैत्यपतेः प्रह्लादस्य साधुसभाभिः सभाजितमनुसेवितम् [1-]आदृतं वा[-1] ईहितं चरित्रं श्रुत्वा मुदा हर्षेण अन्वितो युक्तो युधिष्ठिरः पुनर्महत्तमानामग्रण्यं प्रथमतो गण्यं स्वयम्भुवो [2]ब्रह्मणस्तनयं नारदं पप्रच्छ-"साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः" इति पाठान्तरम्। तत्र महत्तमानामग्रण्यः मुख्यस्य उरुक्रमे भगवति आत्मा मनो यस्य दैत्यपतेः प्रह्लादस्येहितं साधूनां सभायां सभाजितं सत्कृतं श्रुत्वेत्यर्थः।।१।।

प्रश्नमेवाह-**भगवन्निति** [3]त्रिभिः। हे भगवन्! अहं वर्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्याद्याश्रमनिष्ठानां च आचारैर्युतं नृणां सनातनमनादिपरम्परागतं [4-]नत्वर्वाचीनपाषण्डिकल्पितं वर्णाश्रमाचारयुतं न तूत्पथप्रतिपन्न जनाचारयुतम्। एवंविधाद्धर्मादेव परमात्मानं विन्दत इति भावः। "वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते नाऽन्यः पन्थास्तत्तोषकारणम्" (विष्णु. पु. 3-8-9) इति स्मृतेः[-4]। धर्मं श्रोतुमिच्छामि तच्छ्रवणेच्छायां हेतुं वदन्विशिनष्टि-यद्यस्माद्धर्मात्परं परमपुरुषं विन्दते भक्तियोगनिष्पत्तिद्वारा प्राप्नोतीत्यर्थः।।२।।

नन्वेतद्धर्मविदो बहवस्सन्ति, अतस्त्वं प्रतिनाऽहं प्रष्टव्यस्तत्राह-**भवानिति**। त्वमिवाऽन्ये धर्मं गुह्यं न विदुः, अतस्त्वमेव ब्रूहीति भावः। तदेव व्यञ्जयं[5]स्तं विशिनष्टि-प्रजानां पत्युः परमेष्ठिनः साक्षाद्भवानात्मजः पुत्रः सर्वोऽपि धर्मः परमेष्ठिमुखोपदिष्ट इति ततो गृहीतधर्मरहस्यस्त्वमेव तद्वक्तुं समर्थ इति भावः। ननु परमेष्ठिनः सुता अपि बहवस्सन्तीत्यत्र[6]ाऽऽह-हे ब्रह्मन्! सुतानां मध्ये भवान् परमेष्ठिनः सम्मतः सुतः नितरां प्रीतिविषयः सुतः, अतो धर्मरहस्यं तेन तुभ्यमुपदिष्टं भवेदिति भावः।।३।।

ननु उपदिष्टधर्मरहस्योऽप्यहं तद्विस्मृतवानस्मि इत्यत्राऽऽह- तपआदिभिरुपायैः नारायणपराः नारायणः पर उत्कृष्ट उपास्यो येषां तादृशा विप्रा यूयं [7]परं धर्मगुह्यं विदुः भगवद्भक्त्यङ्गत्वेन वर्णाश्रमादिधर्ममनुतिष्ठतां युष्माकं न तद्विषया विस्मृतिरिति भावः। जानन्तो वयं रहस्यत्वादेव न कथयाम इति चेत् तत्राह-करुणा इति। करुणाः करुणावन्तः [8]करुणावतां मम धर्मरहस्याज्ञानप्रयुक्तदुःखस्य निराचिकीर्षा युक्तैवेति भावः। [9-]ननु तच्छ्रवणे त्वमनधिकारीति शङ्कां निराकुर्वन्विशिनष्टि शान्ता रागादिप्रयुक्तवैषम्यरहिताः किं तवैतद्रहस्योपदेशेन मम प्रयोजनं, तत्राऽऽह[-9]-साधवः स्वार्थनिरपेक्षपरोपकारशीलाः एवम्भूतास्त्वद्विधा एव न त्वपरे सन्तीत्यर्थः।।४।।

---

1- -1 W omits 2. W omits ब्रह्मणः 3. W omits त्रिभिः 4- -4 W omits 5. W omits तं 6. W °तआ° 7 W omits परं 8. W कारुण्यवतां 9- -9 W omits

एवमापृष्टो धर्मान्, भगवान् नारदस्तान्विवक्षुः स्वस्य साक्षात्तदुपदेष्टारं श्रीमन्नारायणं नमस्कुर्वन् प्रतिज्ञाय तं विशिनष्टि-**नत्वेति** द्वाभ्याम्। अजाय कर्मायत्तोत्पत्तिरहिताय[1], भगवते नारायणाय लोकानां यो धर्मस्तस्य हेतवे नारायणाय प्रवर्तकाय नत्वा नारायणमुखाच्छ्रुतं सनातनं धर्ममहं वक्ष्ये।।५।।

एवं प्रतिज्ञां कृत्वाऽथ[2] तन्मुखादात्मनः श्रवणं सम्भावयन् तं विशिनष्टि-**य** इति। यो भगवानात्मनोंऽशभूतेन नरेण सह दाक्षायण्यां दक्षदुहितरि मूर्तौ धर्मतो मूर्त्यां भर्तुर्धर्मादवतीर्य लोकानां स्वस्तये बदरिकाश्रमेऽ-द्याप्यध्यास्ते।।६।।

तावद्विवक्षिते धर्मे प्रमाणमाह-**धर्ममूलमिति**। धर्मस्य मूलं प्रमाणं धर्मप्रमापको भगवानेवेत्यर्थः। ननु, भगवतः प्रत्यक्षादिप्रमाणान्तर्भूतत्वात्कथं तस्य धर्मप्रमापकत्वमिति शङ्कां निराकुर्वन् तं विशिनष्टि। सर्ववेदमयः ऋग्यजुस्सामादिसर्ववेदप्रचुरः न साक्षाद्धर्मे भगवान् प्रमाणमपि तु साक्षात्प्रमाणभूतसर्ववेदाविष्कार द्वारेति भावः। तदाविष्कारकत्वञ्च तस्य श्रूयते-"तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (सुबा.उ.2-1) इत्यादि। किञ्च, हे राजन्! तद्विदां वेदविदां स्मृतिश्च तद्धर्ममूलमित्यर्थः। तद्विदामित्यनेन स्मृतीनां स्वमूलभूतश्रुत्यनुमापनद्वारा धर्मप्रमापकत्वमिति सूचितम्। तद्विदां स्मृतस्य इत्यनेन अतद्वेदनमूलक-शाक्यादिस्मृतिव्यावृत्तिः। स्मृतिश्चेति चशब्देन शिष्टाचारादिसङ्ग्रहः[3]। तदुक्तं मनुना"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" (मनु. स्मृ. 2-6) इति याज्ञवल्क्यस्य "श्रुतिस्मृतिस्सदाचारः स्वस्य च प्रियमात्मनः। सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्" (याज्ञ. स्मृ. 1-7) इति। धर्मं विशिनष्टि। येन धर्मेण स्वाराधनभूतेनाऽऽत्मा परमात्मा प्रसीदति परमात्मप्रसादहेतुत्वात् अवश्यं तच्छ्रवणादिकं[4] कर्तव्यमिति भावः।।७।।

एवं धर्मप्रमाणान्यभिधाय तावन्नृणां ये साधारणाः धर्माः तानाह-**सत्यमित्या**दिभिः पञ्चभिः। सत्यं भूतहितत्वं, दया स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्, तपः अनशनादिरूपम्, शौचं स्नानादिजं शुचित्वम्, तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता, ईक्षा हेयोपादेयविवेकः, शमोऽन्तरिन्द्रियजयः, दमो बाह्येन्द्रियजयः, अहिंसा करणत्रयेणापि परपीडानिवृत्तिः, ब्रह्मचर्यमनुचितकालेषु स्त्रीसङ्गराहित्यं, त्यागो लोभराहित्यं, स्वाध्यायो यथोचितमन्त्रजपः, आर्जवं मनोवाक्कायानामैकरूप्यम्।।८।।

---

1. W कर्मोत्पत्ति ० 2. W omits अथ 3. W ०रसं 4. A,B,T ०र्दि क०

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवद्भक्त्या यथावद्गीतवर्णाश्रमाचाराचरणेन समुत्पन्नापरोक्षज्ञानेन प्रसन्नो हरिः स्वस्वयोग्यां मुक्तिं ददातीत्येतदर्थमुत्तरेषामध्यायानामारम्भः। तत्र वर्णाश्रमधर्मांच्छ्रोतुकामो युधिष्ठिरो नारदं पृच्छतीत्याह - **श्रुत्वेति**। महत्तमानामग्रण्यस्य श्रेष्ठस्य उरुक्रमे हरावात्मा मनो यस्य स तथा, तस्य[1]। दैत्यपतेर्प्रह्लादस्य ईहितं चरितं साधु सभासु सभाजितं सम्भावितं महत्तमानां ब्रह्मादीनां उत्तमस्य दैत्यानामपि पत्युरुरुक्रमात्मनो नरसिंहस्येति वा।।१।।

धर्मं विशिनष्टि-वर्णेति। वर्णाश्रमाचारयुतम्, यु मिश्रणे इति धातुः।।२-५।।

पुरुषार्थोपयोगित्वाद्वक्तुमिच्छामीत्याह - **योऽवतीर्येति**। दाक्षायण्यां नाम्ना मूर्तौ धर्मतो धर्मप्रवर्तनार्थम्। "स्यादध्यधिक ईश्वरः" इत्यभिधानादीश्वरः तप उद्दिश्य बदरिकाश्रम आस्ते इत्यन्वयः। बदरिकाश्रमे तपोऽध्यास्ते इति वा।।६।।

तत्राऽनुष्ठानधर्मविषये ज्ञाते क्षिप्रप्रवृत्तिः स्यादधिकारिणामिति तमाह - **धर्ममूलमिति**। धर्ममूलं धर्म विषयः सर्ववेदमयः सर्ववेदप्रतिपाद्येषु प्रधानः। अनेन रुद्रादयो निवृत्ता इति ज्ञातव्यम्। न केवलं धर्मविषय एव तत्प्रतिष्ठापकश्चेत्यतो धर्ममूलमित्यत्र प्रमाणं सर्ववेदमय इति। प्रमाणान्तरं चाऽस्तीत्याह - स्मृतिरिति। प्रमाणमिति शेषः। भगवत्प्रसादहेतुत्वात् प्रमाणमित्याह-येनेति। अनेन भगवत्तत्त्वज्ञैः स्मृतो धर्मो न कपिलादिभिः इत्युक्तं भवति।।७।।

विषयं निरूप्य सर्वसाधारणं सर्वधर्मसाधनमाह - **सत्यमिति**। सत्यादिचतुष्टयमन्तरङ्गं, तितिक्षादिक मुपाङ्गमिति ज्ञातव्यम्।।८।।

**सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः।**
**नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम्।।९।।**

**अन्नाद्यादेः संविभागो भूतेभ्यश्च यथाऽर्हतः।**
**तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव!।।१०।।**

1. A omits तस्य

**श्रवणं कीर्तनञ्चाऽस्य स्मरणं महतां गतेः।**
**सेवेज्याऽवनतिर्दास्यं सख्यमात्मसमर्पणम्।।११।।**

**नृणामयं परो धर्मः सर्वेषां समुदाहृतः।**
**त्रिंशल्लक्षण[1-]वान्राजन्[-1] सर्वात्मा येन तुष्यति।।१२।।**

**संस्कारा [2]यदविच्छिन्नाः स द्विजो[3-]ऽजो जगाद य[-3]म्।**
**इज्याऽध्ययनदानानि विहितानि द्विजन्मनाम्।**
**जन्मकर्मावदातानां क्रियाश्च[4]ऽऽश्रमचोदिताः।।१३।।**

**विप्रस्या[5]ध्यापनादीनि [6]ततोऽन्यस्याऽप्रतिग्रहः।**
**राज्ञो वृत्तिः प्रजागोप्तु रविप्राद्वा करादिभिः।।१४।।**

**वैश्यस्तु वार्तावृत्तिः[7]स्यात् नित्यं ब्रह्मकुलानुगः।**
**शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत्।।१५।।**

**वार्ता विचि[8]त्रा शाली[9]नं याया[10]वरं शिलोञ्छनम्।**
**विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा।।१६।।**

**श्रीध०** सन्तोषो दैवलब्धेनाऽलम्बुद्धिः। [11]समदृक्सेवा समदृशां महतां सेवा। ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः। विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम्। मौनं वृ[12]थालापनिवृत्तिः। आत्मविमर्शनं देहादि व्यतिरिक्तात्मानुसन्धानम्।।९।।

**अन्नेति**। आत्मेति देवतेति च बुद्धिः।।१०।।

**श्रवणमिति**। अस्य श्रीकृष्णस्य। श्रवणादयो नव। इज्याऽर्चनम्।।११।।

**नृणामिति**। एवं त्रिंशल्लक्षणवान्।।१२।।

---

1--1 H,V °वान्साधुस्स°; M,Ma संयुक्तस्स°; W °वान्साक्षात्स° 2 H,V यर्ह्यवि°; M,Ma यद्यवि° 3--3 M,Ma °जो वैदिकादयः 4. M,Ma °श्च निगमोदिताः 5. A,B,G,J,T °ध्ययनादीनि 6. A,B,G,J,T,W षडन्य° 7 A,B,G,J,T,W °श्च 8 M,Ma °त्र 9 A,B,G,J,T °न 10. A,B,G,H,J,T,V वर 11. H,M,Ma,V omit समदृक्सेवा 12. H,V °थाप्रला°

इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह-**सस्कारा** इति।[1] संस्काराः मन्त्रवन्तो गर्भाधानादयो यस्मिन्नविच्छिन्नाः स द्विजः। तर्हि शूद्रस्याऽपि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राह। अजो ब्रह्मा यमेवम्भूत संस्कारयुक्तं जगाद स द्विजः शूद्रं तु न मन्त्रवत्संस्कारयुक्तं जगाद, न चोपनयनवन्तम्, अतो नाऽसौ द्विजः। तथा च स्मृतिः "विवाहमन्त्रसंस्कारं शूद्रोऽपि लभतां सदा। न केनचित्समसृजच्छन्दसा तं प्रजापतिः" इति। श्रुतिश्च "गायत्र्या ब्राह्मणमसृजत्, त्रिष्टुभा राजन्यं, जगत्या वैश्यं न केनचिच्छूद्रम्" इति। अतो विवाहव्यतिरिक्त-संस्कारस्य अनावश्यकत्वात् उपनयनस्य तु सर्वथा निषेधात्, न तस्य द्विजत्वमित्यर्थः। पाठान्तरे वैदिकादय इति गर्भाधानादय इत्यर्थः। त्रैवर्णिकानामावश्यकान्धर्मानाह-इज्येति। जन्मना विशुद्धेन कुलेन कर्मणा च आचारेण अवदातानां शुद्धानां, दुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः। ब्रह्मचार्याद्याश्रमविहिताः क्रियाश्च। शूद्रस्य तु वर्णधर्मा एव, आश्रमभेदकृतविशेषाभावात्।।१३।।

ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान् धर्मान् आह-**विप्रस्येति** सार्धैः सप्तभिः। विप्रस्य षट्कर्माणि विहितानीत्यनुषङ्गः। तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका। यथाऽऽह मनुः "षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" (मनु. स्मृ. 10-76) इति। अन्यस्य क्षत्रियस्य अप्रतिग्रह इति। प्रतिग्रहातिरिक्तं याजनमध्यापनं च आपदि अनुजानाति। वक्ष्यति चाऽनन्तरमेव ऋते राजन्यमिति। श्रूयते च [2-]अजातशत्रुभीष्म[-2]प्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि। प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्यान्तरमाह-राज्ञ इति। आदिशब्देन दुण्डशुल्कादि।।१४।।

**वैश्य** इति। वार्ता कृषिवाणिज्यादिलक्षणावृत्तिः यस्य सः शूद्रस्य द्विजानां[3] शुश्रूषा विहिता। स्वामिनो द्विजस्य तु शुश्रूषावृत्तिश्च भवेत्।।१५।।

विप्रस्य मुख्यानुकल्पभेदेन वृत्त्यन्तराण्याह-**वार्तेति**। वार्ता विचित्रा कृष्यादिरूपा। शालीनं धाष्ट्यं विनैव प्राप्तमयाचितम् यायावरं प्रत्यहं धान्ययाच्ञा। शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम्। उञ्छनमापणादि पतितकणोपादानम्। शिलोञ्छनद्वयमेकीकृत्य चतुर्धेत्युक्तम्। श्रेयसी उत्तमावृत्तिः[4]।।१६।।

---

1 H,V omit संस्काराः 2- -2 A,B,J अश्वपतिकैकय 3 H,V °जशु° 4 A,B,J omit वृत्तिः

**वीर०** सन्तोषो दैवाल्लब्धेनाऽलम्बुद्धिः। समदृक्सेवा, समदृशां महतां सेवा ग्राम्येहाभ्यः प्रवृत्तिकर्म [1]चेष्टाभ्य उपरमो निवृत्तिः, नृणां विपर्ययेहेक्षा निष्फलचेष्टानिरूपणम्। मौनं मितभाषणम्। आत्मविमर्शनं देहविलक्षणात्मयाथात्म्यपरिशीलनम्।।९।।

भूतेभ्यो यथायोग्यमन्नाद्यम् [2]अन्नं तदादेः संविभागः विभज्य प्रदानम् । तेषु भूतेषु आत्मदेवता बुद्धिः आत्मेति च देवतेति च बुद्धिः आत्मनः स्वस्य देवता दैवतं परमात्मा तद्बुद्धिः, ब्रह्मात्मकत्वबुद्धिरिति वा। स्वात्मतुल्यता बुद्धिः देवताबुद्धिश्चेति वा,[3] हे पाण्डव! भूतानां मध्ये नृषु [4]मनुष्येषु तु सुतराम् अतीव आत्मदेवताबुद्धिः [5]इत्यर्थः।।१०।।

महतां गतेः [6-]भक्तानां[-6] शरण्यस्य भगवतः श्रवणं गुणश्रवणं, कीर्तनं गुणप्रतिपादकनामादि कीर्तनम् स्मरणं स्वरूपगुणविभूति स्मरणम्,सेवा पादपीडनादिरूपा, इज्या अर्घ्यपाद्यादि निवेदनरूपा, अवनतिः नमस्कृतिः .प्रह्वीभावो वा, सख्यं सर्वात्मना आनुकूल्यम्, आत्मसमर्पणम् स्वात्मनस्तदनुबन्धिनश्च तदायत्तसत्तादिमत्त्वानुसन्धानं चेत्ययं त्रिंशल्लक्षणवान् सर्वेषां नृणां साधारणः परः उत्कृष्टो धर्मः उदाहृतः प्रदर्शितः, येन धर्मेण सर्वान्तरात्मा भगवान् तुष्यति [7-]प्रसन्नो भवति[-7] सोऽयं त्रिंशल्लक्षणवानित्यर्थः।।११,१२।।

एवं नृणां साधारणं धर्ममभिधाय अथ नरविशेषाणां ब्राह्मणादीनां वर्णानां त्रयाणामावश्यकान् धर्मान् विवक्षुस्तावत् त्रैवर्णिकसाधारण्येन द्विजत्वलक्षणमाह--**संस्कारा** इति। यद्यत्र संस्काराः गर्भाधानादयः षोडश अविच्छिन्नाः स द्विजः। ननु शूद्रस्यापि तदविच्छेदे द्विजत्वं स्यात्; तत्राह-अजो ब्रह्मा [8]यमेवं संस्कारयुक्तं जगाद। श्रुतिस्मृतिमुखेन स द्विजः। शूद्रन्तु न मन्त्रवत्संस्कारयुक्तं जगाद। न चोपनयनवन्तम्। अतो "नाऽसौ द्विजः" तथा च स्मृतिः- "विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदा। न केनचित्समसृजत् छन्दसा तं प्रजापतिः" इति। श्रुतिश्च "गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यम्, जगत्या वैश्यम्, न केनचिच्छूद्रम्"[9] इति। अतो विवाह व्यतिरिक्त संस्कारस्याऽभावात्, उपनयनस्य निषेधात् न तस्य द्विजत्वम् इति व्याचक्षते। वस्तुतस्तु द्विजत्वादिक मदृष्टविशेषसम्बन्धरूपं न जातिरूपं, न ब्राह्मणादेः, ब्राह्मण्यादिषु उत्पत्तिमात्ररूपं केवलसंस्कारमात्रवत्त्वं वा, अन्यथाऽऽदिकाले ब्रह्मणो मुखबाहू[10]रुप्रभवानां पश्चाद्विश्वामित्रप्रभृतीनाञ्च ब्राह्मण्याद्यभावप्रसङ्गात्। सन्तान

---

1. W omits चेष्टा 2. A,B,T अन्नभक्षणं 3 A,B,T add इष्टदेवताबुद्धि. 4 W omits मनुष्येषु 5 W omits इत्यर्थः 6- -6 W omits

7- -7 W omits 8. A,B,T °व 9. A,B,T add उच्यते 10. A,B,T °रूपत्र°

विशेषप्रसूतत्त्वादिकं च तादृगदृष्ट विशेषवत्वसूचकं, सन्तान विशेषोत्पतेः तन्मूलकसंस्कारादेश्च प्रकृष्टादृष्टकार्यत्वा दलौकिकप्रकर्षविशेषकारणत्वाच्च। एवञ्च 'कार्येण कारणानुमानम्' इति न्यायेन यत्र कार्यभूतास्संस्काराः अविच्छिन्नाः पित्रादिपरम्परयाऽविच्छिन्ना दृष्टाः स द्विज इत्यर्थः। सन्तानविशेषप्रभवत्वतन्मूलक संस्कारादिमत्त्वानुमितादृष्टसम्बन्धविशेषवान् द्विज इति यावत्। संस्काराश्च ब्राह्मणादेः ब्राह्मण्यादिषु प्रसूतस्यैव कर्तव्यत्वेन प्रजापतिना "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादि श्रुतिस्मृत्यादि मुखेन प्रगदिताः। तथा च यत्सन्तानविशेषप्रभावं संस्कारम् अजो जगाद तत्सन्तानप्रभावत्वानुमितादृष्टविशेषसम्बन्धवान् द्विज इति फलितोऽर्थः। त्रैवर्णिकानामावश्यकान् धर्मानाह-इज्येति। जन्मना कुलेन कर्मणा चाऽवदातानां शुद्धानां द्विजानां[1] त्रैवर्णिकानामिज्यादीनि स्वाश्रमचोदिताः ब्रह्मचर्याद्याश्रमेषु विहिताः क्रियाः चोदितानि विहितानि, एषामकरणे प्रत्यवायः इति भावः। तुर्याश्रमिणामनग्नित्वेन इज्याया अभावात् तदभिप्रयेण स्वाश्रमचोदिताः क्रियाः इत्युक्तम्। साग्नित्वे इज्यादीनि त्रीणि स्वाश्रमचोदिताः क्रियाश्चेत्येतानि विहितानि अनग्नित्वेत्वाश्रमचोदिताः क्रिया विहिता इत्यर्थः। अनाश्रमिणां विधुरादीनान्तु पूर्वोक्तत्रिंशल्लक्षणवान् धर्म इति भावः।।१३।।

एवं त्रैवर्णिकानां आवश्यकान् धर्मानभिधाय अथ तत्र विप्रस्य जीविकाधर्मानाह-**विप्रस्याध्यापनादीनीति**। आदिशब्देन याजनप्रतिग्रहौ विवक्षितौ। याजनाध्यापनप्रतिग्रहाः जीविकाधर्माः इज्याध्ययनदानानि त्वावश्यका धर्मा इत्यर्थः। एवं सम्भूय विप्रस्य षट् धर्माः। तथा चोक्तं मनुना- "षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" (मनु.स्मृ. 10-76) इति। अथ क्षत्रियस्य जीविकाधर्मानाह अन्यस्याऽप्रतिग्रह इति। अत्र अन्यस्य क्षत्रियस्य अप्रतिग्रह इति। प्रतिग्रहातिरिक्तं याजनमध्यापनञ्च अनुजानाति। वक्ष्यति चाऽनन्तरमेव 'ऋते राजन्य' मिति। श्रूयते च अश्वपति कैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि। प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यन्तरमाह-राज्ञ इतीति व्याचक्षते। तच्चिन्त्यम् "प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात्" इति द्वादशाध्यायान्त्याधिकरणे क्षत्रियादेर्याजनाध्यापनयोः प्रतिषिद्धत्वात्, तत्र हि दर्शपौर्णमासज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यमुत ब्राह्मणैरेवेति संशय्य, तत्र त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वाद्वरणं पुनः पुरुषार्थमतः कर्म वैगुण्यं नास्ति। किञ्च याजनाध्यापन प्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपाया इति नियमः, पुरुषार्थतया स्मर्यते न क्रत्वर्थतया। तेन क्षत्रियवैश्यौ आर्त्विज्यं कुर्वन्तौ नियमातिक्रमात् कामं स्वधर्मात्प्रत्यवेयातां

1. W द्विजन्मनां

न क्रतोः कदाचित् गुणहानिः। तस्मात् त्रिभिरप्यार्त्विज्यं कारयितव्यमिति पूर्वपक्षं प्रापय्य "द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः। ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः"।। यज्ञं व्याख्यास्याम इत्युपक्रम्य "ब्राह्मणानामार्त्विज्यम्" इति यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति स्पष्टमेतत्। तथा च भगवद्रामायणेऽपि- "क्षत्रियो याजको यस्य चण्डालस्य विशेषतः। कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः" (रामा. 1-59-13,14) इति। सुरा देवता ऋषयश्च ऋत्विग्भूता इति देवता हविर्भागनिराकरणात् क्रतुवैगुण्यमेव दर्शितम्। "राज याजक याज्यस्य विनश्यति यथा हविः" इति ब्राह्मणार्त्विज्ये हविर्विनाशः स्मृतः, लिङ्गानि च दर्शितानि "ब्राह्मणानामिदं हविः" इत्येवमादीनि। तस्मात् ब्राह्मणानामेव आर्त्विज्यं सिद्धमिति राद्धान्तितम्। तस्मात् न राजन्यवैश्ययोः याजनाध्यापनाधिकारः अश्वपति कैकयप्रभृतीनां यद्वेदान्तेषु उपदेष्टृत्वमवगतम् न तदध्यापनरूपं, किन्तु सूतादीनामिव ब्रह्मस्वरूपतदुपासनाद्युपदेष्टृत्वरूपम्, अध्यापनं नाम स्वोच्चारणानुच्चारणाय शिष्योद्देश्येन भागद्वयात्मकवेदराशेः साङ्गस्य स्वरवर्णाद्यनपभ्रंशपूर्वकमुच्चारणम्। तस्मात् अप्रतिग्रह इत्यस्यायमर्थः। प्रतिग्रह ग्रहणं याजनाध्यापनयोरप्युपलक्षणम्। ये ब्राह्मणानां याजनाध्यापनप्रतिग्रहरूपा वार्तारूपा धर्माः न ते राजन्यादेर्जीविकाधर्मा इति। का तर्हि राजन्यादेः वृत्तिरित्याह-राज्ञ इति। तत्र राजन्यो द्विविधः प्रजापालनाधिकृतः, तदनधिकृतश्चेति, तावदाद्यस्य वृत्तिरनेनोच्यते। द्वितीयस्य तु ऋतानृताभ्यामित्यनेन वक्ष्यति। प्रजागोप्तुः प्रजापालनाधिकृतस्य राज्ञो राजन्यस्य अविप्रात् विप्रेतरात् करादिभिः वृत्तिः। स्वामिग्राह्यभागः करः तदादिभिः आदिशब्देन दण्डशुल्कादिकं विवक्षितम्। वाशब्देन प्रजापालनाधिकृतस्य तु वृत्त्यन्तरमेवेति सूचयति।।१४।।

अथ वैश्यस्याह-**वैश्य** इति। नित्यं ब्रह्मकुलं विप्रकुलमनुगच्छत्यनुवर्तते इति अनुगः तादृशस्सन् वार्ताकृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य स भवेत्। अथ शूद्रस्य आवश्यकं धर्मं वृत्तिरूपञ्चाह-शूद्रस्येति। तत्र द्विजशुश्रूषा शूद्रस्यावश्यको धर्मः स्वामिनो वृत्तिश्च भवेत्। स्वामिदत्तेन अन्नादिना जीवनं भवेदित्यर्थः।।१५।।

एवं चतुर्णां वर्णानामावश्यकान् जीविकारूपांश्च धर्मानभिधायाऽथ तेषामेव उक्तवृत्त्यलाभे वृत्त्यन्तराणि विवक्षुः तावद्ब्राह्मणस्य मुख्यानुकल्पभेदेन वृत्त्यन्तराण्याह-**वार्तेति**। विचित्रा वार्ता कृषिक्षादि रूपा, शालीनं धाष्ट्र्यं विनैव, प्राप्तमयाचितमित्यर्थः "शालीन कौपीने अधृष्टाकार्ययोः" (अष्टा. 5-2-20) इति निपातितः शालीनशब्दः इदं द्वितीयं यायावर्यं यायावरः प्रवासी तस्य कर्म यायावर्यं प्रवासादिना याच्ञापूर्वकमर्जनम्। तृतीयं शिलोञ्छनम्। "उञ्छो धान्यशः आदानं, कणिशाद्यर्जनं शिलम्" (वैज को. 3-8-2) तदुभयमेकीकृत्य

चतुर्थेयं विप्रस्य वृत्तिः इत्युक्तम्। आसां चतसृणां वृत्तीनां पूर्वपूर्वोपेक्षया उत्तरोत्तरा श्रेयसी, ज्यायसी उत्तमेति यावत्। यद्यपि पूर्वं "विप्रस्याध्ययनादीनि षडन्यस्याऽप्रतिग्रहः" इति विप्रस्य प्रतिग्रहवृत्तेः कथितत्त्वात् , अत्र शालीनं यायावर्यमिति च न कथनीयम् तथाऽपि स एव प्रतिग्रहो याच्ञापूर्वक स्तदपूर्वकश्चेति द्विविध इति वक्तुं शालीनं यायावर्यञ्चोक्तम्।।१६।।

**विज॰** ग्राम्येहोपरमः विषयभोगेच्छानिवृत्तिः विषयविपर्ययेहेक्षा प्राणिनां स्वत एव निषिद्धकर्मचेष्टा ईहा तस्याः पर्यालोचनं मोक्षविपरीतप्रवृत्तिदर्शनं वा। मौनं मन्त्रार्थचिन्तनं प्रलापवर्जनं वा, आत्मविमर्शनमात्म विचारः।।९।।

तेषु नृषु आत्मदेवताबुद्धिः परमात्मा स्थित इति ज्ञानम्। सुतरामित्यनेन नृषु विशेषतः कर्तव्यमिति सूचयति। "अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः। दमः क्ष्माऽऽर्जवं दानं सर्वेषां धर्मसाधनम्" (मनु. स्मृ. 10-63) इति स्मृतत्वादेषां धर्माङ्गत्वं न तु धर्मत्वमिति ज्ञातव्यम्।।१०।।

ननु तर्हि कोऽयं धर्मो नामेत्याशङ्क्य सर्वसाधारणं धर्ममाह-**श्रवणमिति**। महतां या गतिः स्थितिः तस्याः सेवा सङ्गतेः सेवेति वा। दास्यात्मसमर्पणयोरेकार्थत्वात् कथं पृथग्ग्रहणं कृतमित्याशङ्का-"अनाद्यनन्तकालेषु मुक्तौ संसार एव च। मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदेव तु। इति सम्प्रीतिकं ज्ञानं विद्यादात्मसमर्पणम्। बहिश्चेश्वरदासत्वं दास्य मित्युच्यते बुधैः" (तन्त्रमालायाम्) इत्यनेन परिहरणीया अनाद्यनन्तकालं मयि स्थित्वा विष्णुस्सर्वत्र मां प्रेरयतीति प्रीतिपूर्वकज्ञानमात्मसमर्पणं, प्रतिमादिसन्निहितभगवद्दासत्वज्ञानं दास्यम्।।११।।

तारतम्य ज्ञानार्थं ब्रह्मादिविषयश्रवणादिभिरपि धर्मः स्यात् अतो विशिष्योच्यत इत्यत उक्तं पर इति "एष मे सर्व धर्माणां धर्मोऽधिकतमो मतः" (भारते.13-135-8) इति वचनात् समुदाहृत इति। समीचीनत्वं कुतः ? अत्राऽऽह -त्रिंशल्लक्षणेति। अनन्तलक्षणस्य हरेः त्रिंशल्लक्षणयुक्तत्वं "तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे" इति वचनात् भक्तप्रकाश्याकार विषयविवक्षया "सप्तपादश्चतुर्हस्तः" इत्यादि शास्त्रेषु पुरुषलक्षणस्य निरूपितत्वात् इदञ्च भक्तिप्रचयाय प्रोक्तमिति ज्ञायते। अनेन भगवत्तोषकरो धर्मो नाऽन्य इत्युक्तं भवति।।१२।।

एवं धर्मस्वरूपं निरूप्य तदधिकारिणं निरूपयति-**संस्कारा** इति। निषेकादि श्मशानान्ता ये संस्कारा स्ते यस्याऽविच्छिन्ना अखण्डिताः स द्विजः। स एवाधिकार्यत्रेति शेषः। अविच्छेद्यत्वेन कर्तव्यत्वे को हेतुरिति

**तत्राह-वैदिकेति। वेदप्रतिपाद्यत्वेन प्रामाणिकत्वेन कर्तव्या इत्यर्थः। नन्विदं द्विजमात्रसामान्यं** किन्नेत्याह-आदय इति। स्त्रीणां ब्राह्मणजातित्वेऽपि मन्त्रेण क्रिया एता इति यदतः शिष्टाचारत्वेन सङ्गृहीतत्वात् इदं वैदिकत्वेऽपि कर्तव्यत्वं, न तु स्त्रीणां वैदिकसंस्काराभावे यागानधिकारित्वमित्यस्य इदमेवोत्तरं वैदिकादय इति। वैदिका अवैदिकाश्च सन्तीत्यर्थः। तदुक्तम्-"निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः। गर्भाधानमृतौ पुंसःसवन स्पन्दनात्पुरा। षष्ठेऽष्टमे वा सीमन्तो मास्येते जातकर्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः। षष्ठोऽन्नप्राशनं मासे चूडाकार्या यथा कुलम्। एवमेनश्शमं याति बीजगर्भ समुद्भवम्। तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः" (याज्ञ. स्मृ. 1-10-13) इत्यादि "तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति। या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम्" (ऋक्. 10-85-37) "उपोयमे परामृश्य मा मे दभ्राणि मन्यथाः। सर्वाहमास्मि रोमशा गन्धारिणामिवाम्बिका" इत्यादि संस्कारमन्त्राः। ब्राह्मणाः क्षत्रियवैश्याः शूद्राश्चत्वारो वर्णाः। तेषामाद्याः त्रयो द्विजाः। तेषां साधारणं धर्ममाह-इज्येति। "ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयो द्विजाः" (याज्ञ. स्मृ.1-10) इति स्मृतेः। "इज्याध्ययनदानानि विप्रस्य क्षत्रियस्य च" (याज्ञ.स्मृ.1-39) इत्यादेः। एतान्यपि द्विजमात्रस्य न किन्तु विशिष्टानामित्याशयेनाऽऽह-जन्मेति। जन्मना कर्मणा वा ऽवदातानां "कारीर्या यजेत वृष्टिकामः" "मलवद्वाससा न संवदेत्" इत्यादि वेदोचिताः क्रियाश्च विहिता इत्याह क्रिया इति।।१३।।

विशेषधर्ममाह-**विप्रस्येति**। अध्यापनयाजनप्रतिग्रहाः ततो ब्राह्मणादन्यस्य क्षत्रियादेः अप्रतिग्रहः "प्रतिग्रहाधिको विप्रो याजनाध्यापने तथा" इति वचनात् प्रतिग्रहादिनाऽपि प्रवृत्तिमभिप्रेत्य। राजादिर्वृत्तिमाह-राज्ञ इति। आदिशब्देन न्यायतो दण्डाद्यागतं धनं गृह्यते, प्रजागोप्तुरित्यनेन प्रजागुप्त्यैव ततो धन माहर्तव्यम्। अन्यथा दुष्कृतमेवाऽऽदत्त इति सूचयति। वाशब्देन देवा गृह्यन्ते देवविप्रैर्विनेत्यर्थः। दण्डार्हविप्रमन्तरेण चेति।।१४।।

वार्ता कृषिगोरक्षवाणिज्यलक्षणा। स्वामिनः सकाशाज्जीवनञ्चेति शेषः। भृत्यानां स्वामिनः शुश्रूषा च वृत्ति रिति वा।।१५।।

विप्रवृत्तिं कण्ठोक्त्याह **वार्तेति**। अत्र वार्तादिकमापदीति ग्राह्यम्। विप्रानुज्ञया क्षत्रिय वैश्ययोस्तत्त्वविज्ञापनं धर्म इत्युच्यते।।१६।।

जघन्यो नोत्तमां वृत्ति मनापदि भजेन्नरः।
ऋते राजन्य मापत्सु सर्वेषामपि सर्वशः।।१७।।

ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा।
सत्या[1-]नृताभ्यां जीवेत न[-1] श्ववृत्त्या कथञ्चन।।१८।।

ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम्।
मृतन्तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम्।।१९।।

सत्यानृतन्तु वाणिज्यं श्ववृत्तिर्नीचसेवनम्।
वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम्।
सर्ववेदमयो विप्रः सर्वदेवमयो नृपः।।२०।।

शमो दमस्तपश्शौचं सन्तोषः क्षान्तिरार्जवम्।
[2]ज्ञानं दयाऽच्युतात्मत्वं सत्यञ्च ब्रह्मलक्षणम्।।२१।।

शौर्यं वीर्यं धृति [3]स्तेज स्त्याग आत्मजयः क्षमा।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम्।।२२।।

देवगु[4]र्वार्यगो भक्ति स्त्रि[5]वर्गपरितो[6]षणम्।
आस्तिक्यमुद्यमो नित्यं नै[7]पुण्यं वैश्यलक्षणम्।।२३।।

शूद्रस्य स[8]न्नति श्शौचं सेवास्वामिन्यमायया।
अमन्त्रयज्ञो ह्यस्तेयं [9-]सत्यं गोविप्र[-9]रक्षणम्।।२४।।

**श्रीध॰** वृत्तिष्वेव व्यवस्थां दर्शयन् आपद्वृत्तीराह - **जघन्य** इति। जघन्यो नीचः उत्तमामध्यापनादिरूपाम्। ऋते राजन्यं क्षत्रियस्तु प्रतिग्रहादन्यां भजेत्[10]।।१७।।

चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह-**ऋतामृताभ्यामिति**।।१८।।

---

1--1 H,V °नृतेन वा जीवेन्न° 2. M,Ma दानं 3 W °स्स्नेह° 4. A,B,G,J,T गुर्वच्युते 5. H,V वर्ण 6. A,B,G,J,T पो° 7 A.G,J,T °पुणं 8. M,Ma अन्ततः 9--9 H,V गोविप्राणां च; M,Ma मोढ्यं गोविप्र 10 H,V °त

[1-]पूर्वोक्त वृत्त्यर्थं[-1] व्याचष्टे-**ऋतमिति**।।१९।।

**सत्येति**। तयोस्तद्वर्जने हेतुमाह-सर्ववेदमय इति।।२०।।

वर्णाना[2]मभिव्यञ्जकरूपान्धर्मानाह-**शम** इति चतुर्भिः। अच्युतात्मत्वं श्रीविष्णुपरत्वम्।।२१।।

**शौर्यमिति**। शौर्यं युद्धोत्साहः। वीर्यं प्रभावः। तेजः प्रागल्भ्यम्। [3-]त्यागो दानम्। आत्मनो मनसा जयः[-3]।।२२,२३।।

**शूद्रस्येति**। अमन्त्रयज्ञः नमस्कारेणैव पञ्चयज्ञानुष्ठानम्। तथा च याज्ञवल्क्यः-"नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्" (याज्ञ. स्मृ. 1-121) इति।।२४।।

**वीर॰** एवं विप्रस्य याजनाद्यलाभे वार्तादिरूपा वृत्तिः तत्रापि उत्तरोत्तरोत्तमत्वञ्चोक्तम्। अथोत्तरोत्तरवर्णस्य स्वस्ववृत्त्यलाभरूपा यदि पूर्वपूर्ववर्णस्य चोत्तरोत्तरस्य वा वृत्त्याश्रयं वक्तुं तावदनापदि तदाश्रयणं निषेधति-**जघन्य** इति। जघन्यवर्णो नरः अनापदि स्वस्ववृत्त्यलाभरूपाऽऽपदभावे उत्तमां पूर्वपूर्ववर्णसम्बन्धिनीं वृत्तिं न भजेन्नाऽश्रयेत्। आपत्सु तु राजन्यं विना राजन्यव्यतिरिक्तानां सर्वेषामपि यथालाभं सर्वा अपि वृत्तयः आश्रयणीया भवन्ति। सर्वेषां सर्वश इत्येतावत्युक्ते राजन्यस्य प्रजापालन प्रयुक्तकरादानरूपस्ववृत्त्यलाभरूपापदि यजनाध्यापन प्रतिग्रहादिरूप पूर्ववर्णवृत्त्याश्रयणं वार्ता शुश्रूषयोरुत्तरवर्णवृत्त्योश्चाऽऽश्रयणं प्रसक्तम् ऋतेराजन्यमिति निषिध्यते।।१७।।

अथ विप्रराजन्ययोः स्वस्ववृत्त्यलाभरूपाऽऽपद्युपादेयां वृत्तिं निष्कृष्य दर्शयन्नुत्तरोत्तरवर्णसेवारूपां वृत्तिं प्रतिषेधति **ऋतामृताभ्यामिति**। ऋताद्यन्यतमेन जीवेत श्ववृत्त्या तु कथञ्चन न जीवेत। सर्वथा श्ववृत्तिं नाऽऽश्रयेदित्यर्थः।।१८।।

ऋतादिपदार्थानाह-**ऋतमित्यादिना** सार्धेन। स्पष्टोऽर्थः।।१९।।

न कथञ्चनेति व्याचष्टे-**वर्जयेदिति**। विप्रो राजन्यश्च तां नीचसेवां स्वोत्तरवर्णसेवां जुगुप्सितां निन्दितां परिवर्जयेत्। जुगुप्सितत्त्वमेव वदन् विप्रराजन्यौ विशिनाष्टि-सर्ववेदमय इति। प्राचुर्ये मयट् , पूज्ययोः पूजकसेवा निन्दितेति भावः।।२०।।

अथ वर्णानामभिव्यञ्जकान् धर्मानाह-**शम** इति चतुर्भिः। शमादिपदानामर्थास्त्रिंशल्लक्षणधर्मा व्याख्याया मुक्ताः। तत्र शान्तिरक्रोधः, अच्युतात्मत्वमच्युतप्रवणचित्तत्त्वम्। शमादिकं ब्रह्मलक्षणम् ब्राह्मणकुलाभिव्यञ्जकमित्यर्थः।।२१।।

---

1- -1 A,B,J श्लोकं 2. H,V मपि 3- -3 H,V omit

**शौर्यमिति**। शौर्यादिक्षत्रलक्षणं क्षत्रियत्वाभिव्यञ्जकम्। तत्र शौर्यं स्वगृहे इव युद्धे प्रवेशसामर्थ्यम्। वीर्यं परैरनभिभाव्यत्वम्। धृतिः धैर्यमापद्यदुःखित्वम्। तेजः पराभिभ[1]वनसामर्थ्यम्। त्यागः लोभराहित्यं दानशीलता, आत्मजयो देहजयः देहधर्मैः अनभिभाव्यत्वम् क्षमा सहिष्णुता। ब्रह्मण्यता ब्राह्मणकुलानुवृत्तिः। प्रसादोऽनुग्रहः रक्षा प्रजापालनम्।।२२।।

एवं देवादिभक्त्यादिकं वैश्यलक्षणम्। तत्र देवगुर्वार्यगोभक्तिः देवाश्च गुरवश्च आर्या ज्ञानवृद्धाः गावश्च एषां भक्तिः त्रिवर्गेण धर्मादिपुरुषार्थत्रयेण परितोषणं परितुष्टिः, अस्ति परलोक इति मतिः यस्य सः आस्तिकः, तस्य भावः आस्तिक्यम्, नित्यमुद्यमः अर्थार्जने प्रयत्नः तत्र नैपुण्यम्।।२३।।

शूद्रस्य सन्नत्यादिकं लक्षणमित्यनुषङ्गः। सन्नतिः पूर्ववर्णविषये नम्रता, शौचं स्नानादिजम्, स्वस्वामिन्यमायया निष्कपटभावेन सेवा। अमन्त्रयज्ञः नमस्कारेणैव च यज्ञानुष्ठानम्। तथा च याज्ञवल्क्यः- "नमस्कारेण मन्त्रेण पञ्च यज्ञान्न हापयेत्" (याज्ञ. स्मृ. 1-121) इति। अस्तेयमचौर्यम्, सत्यमनृतावदनम्। गवां विप्राणाञ्च रक्षणम्।।२४।।

**विज॰** तदभावे शूद्रस्य कथमिति तत्राह-**जघन्य** इति। जघन्यो नरः शूद्रोऽनापदि तत्सद्भावे उत्तमां वृत्तिं तत्त्वज्ञानलक्षणां न भजेत् न कुर्यादित्यन्वयः। आपदि तदभावे तदनुज्ञया कुर्यादित्यतोऽनापदीति विशेषणं पालनादि वृत्तिं वा। ननु वर्णहीनस्य कथमित्यस्य इदमेवोत्तरं जघन्यो वर्णहीनोऽनापद्युत्तमां वृत्तिं न भजेत्[2] "वर्णेष्वज्ञेषु वर्णस्तु न ज्ञानी स्यात्कथञ्चन" इति श्रुतिः। राजानं विना सर्वेषां विप्रादीनाम् आपद्युक्त सर्ववृत्तिभिः जीवने दोषो नास्तीत्याह ऋते राजन्यमिति।।१७।।

ऋतादीनामप्रतीतार्थत्वात् व्याचष्टे **ऋत**मित्यादिना। कर्षणं कृषिः।।१८,१९।।

श्ववृत्तिवर्जने हेतुमाह-सर्वेति। "सर्वा देवता वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः "नाऽविष्णुः पृथिवीपतिः" इत्यादेश्च।।२०।।

विप्रादीनां विविच्य ज्ञाने प्रथमं लक्षणमाह - **शम** इत्यादिना। अच्युतात्मत्वमच्युतमनस्कत्वम्।।२१।।

त्यागो दातव्ये मुक्तहस्तता, आत्मजयो मनोजयः।।२२।।

त्रिवर्गैः धर्मार्थकामैः ईश्वरपरितोषणं त्रयो वर्गा येषां ते त्रिवर्गाः। तेषां द्रव्यादिना परितोषणम्।।२३।।

---

1 A,B,T भवसा॰ 2. A,B ॰त

शूद्रस्याऽन्ततः सकृत्स्पृष्टाभिः अद्भिः आचमनलक्षणं शौचं "हृत्कण्ठतालुगाभिस्तु यथा संख्यं द्विजातयः। शुध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः" (याज्ञ. स्मृ. 2-21) इति वचनात् केशश्मश्रुनखाद्यधारणं मौढ्येन।।२४।।

**स्त्रीणान्तु[1] पतिदेवानां तच्छुश्रूषाऽनुकूलता।**
**तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम्।।२५।।**

**सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्तनैः[2]।**
**स्वयञ्च मण्डिता नित्यं परिमृष्टपरिच्छदा।।२६।।**

**कामैरुच्चावचैस्साध्वी प्रश्रयेण दमेन च।**
**वाक्यैस्सत्यैः प्रियैः प्रेम्णा काले काले भजेत्पतिम्।।२७।।**

**सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक्।**
**अप्रमत्ता शुचिः स्निग्धा पतिन्त्वपतितं भजेत्।।२८।।**

**या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा।**
**हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते।।२९।।**

**वृत्तिस्सङ्करजातीनां[3] तत्तत्कुलकृता भवेत्।**
**अचौराणामपापाना[4-]मन्त्यजान्तेऽ[-4]वसायिनाम्।।३०।।**

**प्रायः स्वभावविहितो नृणां धर्मो युगे युगे।**
**वेददृग्भिः स्मृतो राजन् प्रेत्य चेह च शर्मकृत्।।३१।।**

**वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत्[5]।**
**हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात्।।३२।।**

**श्रीध०** स्त्रीधर्मानाह **स्त्रीणामिति** पञ्चभिः। पतिरेव देवो यासां, तस्य पत्युरेव शुश्रूषा [6-]पादसंवाहनादिभिः[-6] [7-]तदनुकूलता च हिताचरणं[-7] तस्य यद्व्रतं नियमः तस्य धारण[8]माचरणम्। एतच्चतुष्टयं पतिव्रतानां लक्षणं धर्मश्च।।२५।।

1. A,B,G,J,T °श्च 2. A,G,J,T °ल 3. H,V जातानां 4- -4 H,V °मन्यजाताव°, W °मन्त्य जान्ताव° 5. M,Ma °र्णि। 6- -6 H,V omit
7- -7 H,V omit 8. H,V omit आचरणं

किञ्च **सम्मार्जनेति**। सम्मार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः। परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदाः गृहोपकरणानि यथा।।२६,२७।।

किञ्च **सन्तुष्टेति**। सन्तुष्टा यथालाभेन तावन्मात्र भोगेष्यलोलुपा दक्षाऽनलसा प्रिया सत्या च वाग्यस्याः सर्वत्राऽपि अप्रमत्ताऽवहिता अपतितं महापातकशून्यम् यथाऽह याज्ञवल्क्यः- "आशुद्धेः सम्प्रतीक्ष्यो हि माहापातक दूषितः" (याज्ञ. स्मृ. 1-77) इति।।२८।।

**येति**। तत्परा सती भजेत्[1]। श्रीहरिमिव हर्यात्मना पत्या सह।।२९।।

प्रतिलोमजानुलोमजानां[2] वृत्तिमाह **वृत्तिरिति**। तत्तत्कुलकृता कुलपरम्पराप्राप्ता [3]वंशपरम्पराप्राप्तमपि[3] चौर्यं[4] हिंसादिकञ्च[5] प्रतिषेधति-अचौराणामपापानाञ्चेति। तत्तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह-अन्त्यजेति। "रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः" अन्तेऽवसायिनस्तु[6] चण्डालपुल्कस[7] मातङ्गादयः। तेषां परम्पराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः।।३०।।

श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एवश्रेयानित्याह-**प्राय** इति। स्वभावेन सत्त्वादि प्रकृत्त्या[8] विहितो धर्मः शर्मकृत् सुखहेतुः स्मृतः। कैः? वेद एव दृक् चक्षुः येषां तैः। भगवता चोक्तम् "श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" (भ.गी. 18-47) इति।।३१।।

ननु स्वाभाविकस्य कर्मणो बन्धहेतुत्वात् कथं सुखे[9] हेतुत्वम्? तत्राऽऽह **वृत्त्येति**।।३२।।

**वीर०** अथ स्त्रीणां धर्मानाह-**स्त्रीणामिति**। पतिरेव देवो दैवतं यासां तासां स्त्रीणाम्। तस्य पत्युः शुश्रूषा परिचर्या तदनुकूलता च तस्य पत्युर्बन्धुषु पितृभ्रात्रादिषु अनुवृत्तिः। तस्य तु यद्व्रतं पत्यर्थं यो नियमस्तस्य धारणमेतच्चतुष्टयं पति [10]देवतानां पतिव्रतानां[10] लक्षणं धर्मश्चेत्यर्थः।।२५।।

किञ्च सम्मार्जनोपलेपाभ्याम् गृहस्येति शेषः। गृहसम्मार्जनादिभिः पतिं भजे दित्युत्तरेणान्वयः। सेकः जल विक्षेपः, मण्डनं पिष्टैरलङ्कारः, वर्तनं नित्यं स्वगृह एवाऽवस्थानम्-एतैः कथम्भूता? स्वयं मण्डिता अलङ्कृता परिमृष्टाः विशोधिताः परिच्छदाः पात्रवस्त्रभूषणादयो[11] यया तादृशी।।२६।।

1. H,V °त 2. H,V °मजानां 3- -3 A,B,T omit 4. H,V चौर्यहिं° 5. H,V omit च 6. H,V अन्ता° 7. A,J चा° 8. H,V प्रवृ° 9 A,B,J सुख. 10- -10 A omits 11. A,B,T वस्त्राभू°

उच्चावचैर्नानाविधैः पत्युरपेक्षितैः कामैः प्रश्रयेण विनयेन दमेन उपशान्त्या सत्यैः प्रियैश्च वाक्यैः प्रेम्णा च काले काले उचितकालेषु सन्तुष्टा यथालाभेन तावन्मात्रभोगेऽप्यलोलुपा, दक्षाऽनलसा, धर्मज्ञा भर्तृशुश्रूषण मेव परं धर्मं जानातीति, प्रिया तथोक्ता सत्या च वाग्यस्याः सा वाक्यैः सत्यैरिति पतिविषये सत्यवाक्यमुक्तम्। प्रियसत्यवागित्यनेन तदितरविषयेऽपीत्यतो न पौनरुक्त्यम्।।२७।।

सर्वत्राऽप्यप्रमत्ता अवहिता, शुचिः परिशुद्धा स्निग्धा अनुरक्ता पतिं भजेत्। अपतितं महापातकरहितं पतिं भजेत्। तुशब्देन पतितं न भजेदिति सूचितम्। यदाऽऽह याज्ञवल्क्यः "आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः" (याज्ञ.स्मृ. 1-77) इति।।२८।।

एवंविधस्य भर्तृभजनस्य फलमाह **येति**। श्रीर्लक्ष्मीः हरिमिव या स्त्री हरिभावेन तत्परा, स पतिरेव परो दैवतं यस्याः सा पतिं भजेत्, सा हर्यात्मना हरिरूपेण हरिसमानरूपेण पत्या सह श्रीर्हरिणा सहैव हरेर्लोके मोदते शनैः पत्या सह मुक्ता भवेदित्यर्थः।।२९।।

अथ सङ्करजातीनां वृत्तिमाह-**वृत्तिरिति**। सङ्करजातयः प्रतिलोमजाः अनुलोमजाश्चेति द्विविधाः। तत्रोत्तरवर्णात् पूर्ववर्णायां स्त्रियां जाताः प्रतिलोमजाः। पूर्ववर्णा दुत्तरवर्णायां जातास्त्वनुलोमजाः। तेषां तत्कुलकृता कुलपरम्परा प्राप्तैव वृत्तिर्भवेदिति, कुलक्रमागतमपि चौर्यहिंसादिकं निषेधन् तान्विशिनष्टि-अचोराणामपापानाञ्चेति। तत्र प्रदर्शनार्थं काश्चित्प्रतिलोमजविशेषानाह-अन्त्यजाश्च अन्तेऽवसायिनश्च तेषां सङ्करजातीनामित्यन्वयः। तत्र "रजकश्चर्मकारश्च नटो बुरुड एव च। कैवर्त मेदभिल्लाश्च सप्तैते अन्त्यजातयः" अन्तेऽवसायिनस्तु चण्डाल पुल्कस मातङ्गादयः, तेषां परम्परा प्राप्तैव वस्त्रनिर्णेजनादि वृत्तिरित्यर्थः।।३०।।

"श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" (भ.गी. 18-47) इति भगवदुक्तमर्थमाह-**प्राय** इति द्वाभ्याम्। हे राजन्! नृणां ब्रह्मक्षत्रादिरूपेणावस्थितानां सर्वेषामपि प्रायशः स्वभावविहितः सात्त्विकादि स्वभावानुसारेण विहितः। यद्वा भावः प्रकारः वर्णाश्रमादिरूपः स्वस्ववर्णाश्रमोद्देशेन विहित इत्यर्थः। इज्याध्य-यनादिरूपः स एव धर्म इहलोके प्रेत्याऽमुत्र च लोके शर्मकृत् सुखकृत् वेददृग्भिः मन्वादिभिः स्मृतः [1]कथितः।।३१।।

एवं वृत्तिरपि प्रातिस्विकी ज्यायसीति वदन् एवं वर्तमानस्य फलमाह-**वृत्त्येति**। स्वभावकृतया वर्णाश्रमादि [2-]प्रयुक्तया[-2] वृत्त्या अध्यापनादिरूपया जीविकया स्वकर्मणि इज्यादिरूपे वर्तमानः स्वस्वकर्माऽनुतिष्ठन् स्वभावजं

1. W omits कथितः 2- -2 A,B,T· स्वभावकृतया

सात्त्विकादि स्वभावप्रयुक्तं प्राकृतसत्त्वादि गुणवश्यताप्रयुक्तं बन्धकं, पुण्यपापात्मकं कर्म हित्वा। "धर्मेण पापमपनुदति" (मना. उ. 17-6) "अविद्यया मृत्युं तीर्त्वा" (ईश.उ. 11) इत्यदिश्रुत्यर्थोऽत्र अभिसंहितः। शनैः निर्गुणतां सत्त्वादिगुणराहित्यं प्रकृतिसम्बन्धराहित्यं मुक्तिमिति यावत्। इयात् प्राप्नुयादिति। शनैरित्यस्य भगवदुपासन निर्वृतिद्वारा प्राप्नुयादित्याशयः।।३२।।

**विज॰** स्त्रीणां सामान्यलक्षणमाह-**स्त्रीणामिति**। अनुकूलता उक्तकारित्वं "यत्राऽऽनुकूल्यं दम्पत्यो स्त्रिवर्गस्तत्र वर्धते।" (याज्ञ. स्मृ. 1-74) "स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परं स्त्रियः" (याज्ञ. स्मृ. 1-77) इति वचनात्, तद्बन्धुषु भर्तृबन्धुषु भागिनेयादिषु तद्व्रतधारणं पातिव्रत्यं तस्य यद्व्रतं तदेवाऽस्याव्रतमिति वा।।२५।।

गृहमण्डनवर्तनैः गृहालङ्कारकरणैः।।२६।।

कामैः विषयैः।।२७।।

अलोलुपा अयोग्याभिलाषरहिता, अपतितं ब्रह्महत्यादि पातकरहितम्।।२८।।

अस्मिन् पत्यौ हरिः सन्निहितः इति या बुद्धिः स हरिभावः "हरिरस्मिन् स्थित इति स्त्रीणां भर्तार भावना, शिष्याणाञ्च गुरौ नित्यं, शूद्राणां ब्राह्मणादिषु।भृत्यानां स्वामिनि तथा हरिभाव इतीरितः" (तन्त्रमालायाम्) इति वचनात्, न तयोरैक्यार्थः। हर्यात्मना हरेर्विशेषसन्निधानवता पत्या सह।।२९।।

क्षत्रियाद्विप्रस्त्री सूतानां विप्रात् क्षत्रियस्त्रीजातानां क्षत्रिया द्वैश्य स्त्रीसूतानां वैश्याच्छूद्रस्त्रीसूताना मित्येवं जातानां का वृत्तिरिति तत्राऽऽह-**वृत्तिरिति**। येषां जातिविशेषाः अम्बष्ठ निषाद पारशवादिनाम्ना ज्ञातव्याः, तदुक्तम्-"विप्रान्मूर्धावसिक्ता स्त्री राज्ञोऽम्बष्ठ विशोङ्कना" (याज्ञ.स्मृ. 1-71) इत्यादि। अध्ययनमन्तरेण अम्बष्ठादीनां संस्कारादिकं तत्कुलानुकूल्येन। तेषां गुणमाह-अचौराणामिति। यत[1] यस्याविहितं तत्करणं चौर्यम् तद्रहितम्। शूद्रात् ब्राह्मण्यां जाता अन्त्यजाः। रजकादि सप्तकारवः ततो जाताः। अन्तेऽवसायिनः पुल्कसमत[2]ङ्गादयः येषां तत्कुलविहित एव धर्मः "ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा शूद्राज्जातस्तु चा[3]ण्डालः सर्ववर्ण विगर्हितः" (याज्ञ. स्मृ. 1-93) इति च।।३०।।

तत्तद्वर्णैस्तत्तत्स्वभावेनाऽनुष्ठितस्य धर्मस्य फलमाह-**प्राय** इति। सात्त्विकादि स्वभावानुसारेण ब्राह्मणानां विहितः। अत्र प्रमाणमाह वेदेति। स्मृतो ग्रन्थस्वरूपेण कृतः। प्रेत्य परलोके- "नाऽऽश्रमः कारणं धर्मे

1. M,Ma यस्य 2. A,B मा॰ 3. A,B च॰

क्रियमाणो भवेद्धि सः। अतो यदात्मनोऽपथ्यं परस्य न तदाचरेत्" (याज्ञ. स्मृ. 3-65) "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" (भ.गी. 18-66) इत्यादिवचनात् भक्त्युपबृंहितस्य धर्मस्यापेक्षिताशेषपुरुषार्थहेतुत्वं न केवलस्येत्यभिप्रयेण प्राय इत्युक्तम्। तत्र तत्तद्विशेष[1]वर्णने ग्रन्थबाहुल्यं स्यात् इत्युपरम्यते।।३२।।

न केवलमनेन धर्मेण स्वर्गादिप्राप्तिः, अपि तु भक्त्यादिसाधनपूर्णेन मुक्तिरपि स्यादित्याह-**वृत्त्येति**। स्वभावेन स्वात्मना कृतया प्रेरितया सात्त्विकादिस्वभावपूर्णया वा [2]वृत्त्या जडलक्षणया भक्त्या वा योग्यतया स्वविहित कर्मणि वर्तमानः पुरुषः शनैश्शनैः बहूनां जन्मनामन्ते स्वभावजं कर्म पुण्यपापलक्षणं मुक्त्वा निर्गुणतां मुक्तिं "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" (छान्दो.उ. 1-1-10) इति श्रुतेः। ज्ञानपूर्वकमनुष्ठितो नित्यानन्दाविर्भावलक्षणपुरुषार्थस्य हेतुः यदप्यनेवंविन्महत्पुण्यं कर्म करोति "तद्धास्याऽन्ततः क्षीयत एव" (बृह.उ. 1-4-15) इति श्रुतेः। तत्त्वज्ञान पूर्वकं भगवद्भक्तप्रद्वेषोपरक्तः प्रवृद्धो धर्मो नित्यदुःखाविर्भावलक्षण पुरुषार्थस्य "त्रैविद्या मां सोमपाः पूतपापायज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" (भ.गी. 9-20) इत्यादि, नित्यं प्रार्थनादिगुणोपरक्तो नित्यसत्त्वगुणनिमित्त सुखलक्षणस्येत्यादि।।३२।।

**उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात्।**
**न कल्पते पुन स्सू[3]त्या उप्तं बीजञ्च नश्यति।।३३।।**
**एवं कामाशयं चित्तं कामानामतिसेवया।**
**विरज्येत [4]यथा राजन्नाग्निवत्[5]कामबिन्दुभिः।।३४।।**
**यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णा[6]भि[7]व्यञ्जकम्।**
**यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत्।।३५।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्त्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे युधिष्ठिर नारद संवादे सदाचारनिर्णयो नाम एकादशोऽध्यायः।।११।।

---

1. A,B,M °षण 2. Ma प्रकृत्या 3. A,B,G,J,M,Ma,T °त्यै 4. B तथा 5 H,V °द्धृत° 6. M,Ma °दि° 7. H,V सूचकम्

**श्रीध॰** ननु काम्यानि कर्माणि कुर्वतः तत्फ[1]लोपभोगपरस्य कथं नैर्गुण्यं स्यात्? तदुक्तं प्रह्लादेन-"औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः" (भाग. 7-6-13) इत्यादि। [2-]तत्राऽधिकारिभेदेन व्यवस्थां[-2] स[3]दृष्टान्तामाह-**उप्यमानमिति** द्वाभ्याम्। पुन[4]स्सूत्यै सस्यप्रसवाय।।३३।।

**एवमिति**। कामा आशेरते वासनारूपेण यस्मिंस्तत् [5-]कामाशयम्[-5]। अयं भावः-उत्कट वासनाविष्टस्य सहसैव कामत्यागासम्भवात् वेदोक्तनियमेन बहुशः कामान् भुञ्जानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसः तद्दोषदर्शनेन ययाति सौभरि प्रमुखानामिव शनैर्विरागो भवति यथा सवीर्यं क्षेत्रं शनै र्निर्वीर्यं भवति। यथा च प्रज्वलितोऽग्नि र्न घृतबिन्दुभिः शाम्यति, महता तु घृतपूरेण शाम्यत्येव तद्वत्। प्रह्लादकृतस्तुतौ कौमार एव निवृत्त्युपदेशो मन्दवासनानामधि[6]कारिणाम्। तदुक्तं तत्रैव-"बाला न दूषितधियो द्वन्द्वारामेरितेहितैः" (भाग. 7-5-56) इति। अतः सर्वमनवद्यम्।।३४।।

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याऽऽह-**यस्येति**। यद्यदि अन्यत्र वर्णान्तरेऽपि दृश्येत तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत्। न तज्जातिनिमित्तेनेत्यर्थः।।३५।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां एकादशोऽध्यायः।।११।।

**वीर॰** ननु स्वभावकृतया वृत्त्या स्वकर्मणि वर्तमानस्य पुनः कामक्रोधादि वर्धकबन्धककर्मसम्भावनया कथं नैर्गुण्यप्राप्तिरिति शङ्कां निराकर्तुं गृहस्थस्य ज्ञानवैराग्यवतः शास्त्राऽविरुद्धान्नपानादिसेवया रागवर्धकत्वाभावे तावद्दृष्टान्तमाह-**उप्यमानमिति**। यथा मुहुर्मुहुरुप्यमानं क्षेत्रं निर्वीर्यतामसारतां प्राप्नुयात्, पुनस्सूत्यै सस्यप्र[7]सवाय न कल्पते न समर्थम्। अत एव उप्तं बीजञ्च नश्यति।।३३।।

तथा कामानामाशय माश्र[8]यः चित्तं पुनः [9]पुनः कामानामतीवसेवया विरज्येत नाग्निवदिति। घृतबिन्दुभिः अग्निरिव न वर्धत इत्यर्थः। [10]यद्वा, यथा प्रज्वलितोऽग्निः घृतबिन्दुभिः न शाम्यति, किन्तु महता घृतपूरेण, तथा [11]चित्तं [12]कामबिन्दुभिः [13]कामलेशैः न शाम्यति, महद्भिः कामैः इत्यर्थः।।३४।।

---

1 A,B,J omit उप 2- -2 H,V तन्निराकुर्वन् तत्र 3 H,V न्त॰ 4. A,J स्सृत्यै 5- -5 A,B,J omit 6. A,B,J कारेण 7 W ॰भ॰ 8. A,B,T ॰र्यं 9 A,B,T omit पुनः 10. A,B,T omit यद्वा 11. W omits चित्तं 12. A,B,T omit कामबिन्दुभिः 13. W omits कामलेशैः

शमादिभिरेव ब्राह्मणादिव्यवहारो मुख्यो न जातिमात्रादित्याऽऽह-**यस्येति**। यस्य पुंसो यल्लक्षणं वर्णाभिव्यञ्जकं प्रोक्तं "शमो दम स्तपः शौचम्" (भ.गी. 18-42) इत्यादिना, तद्यत् यद्यन्यत्रापि वर्णान्तरेऽपि दृश्येत तर्हि तद्वर्णान्तरं तेनैव लक्षणनिमित्तेनैव वर्णेन निर्दिशेत् न जातिनिमित्तेनेत्यर्थः।।३५।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकादशोऽध्यायः।।११।।

**विज०** ननु सगुणो धर्मः सगुणपुरुषार्थहेतुर्भवत्यनुकूलत्वात्, निर्गुणपुरुषार्थस्य कथं, विरुद्धत्वात्[1] इत्याशङ्क्य मनो हि पुरुषार्थकारणं तद्विषयोपरक्तं दुःखोदर्कविषयसुखाय स्यात् तदेव विषयाणां क्षणभङ्गुराणां दुःखोदर्काणां दुस्साधनत्वचिन्तया वैराग्यानलभर्जितं पुनस्तदङ्कुरीभावासमर्थं भगवच्चरणारविन्दभक्तिसलिल सिक्तं चेत्[2] तज्ज्ञानाङ्कुरीकरण[3-] निदानं भवतीत्येतमर्थं सदृष्टान्तमाह **उप्यमानमिति**। यथा बीजैः उप्यमानं पुनः मेदुरसाधनहीनं क्षेत्रं केदारलक्षणं निर्वीर्यतां[-3] सस्यजननशक्तिराहित्यमेति। तदेव स्फुटयति-पुनरिति। सूत्यै उत्पत्त्यै न केवलमुत्पादनासमर्थं किन्तु बीजनाशहेतुश्च।।३३।।

[4-]एवं यथा[-4] कामाशयं [5-]कामाशाविश्रमं[-5] चित्तं [6-]विषयसेवासमये[-6] दुःखस्य तदभावे सुखस्य च स्मरणसमर्थं मनःकामानां विषयाणामतिसेवया क्षयरोगादिहेतुभूतया द्रव्यादिनाश[7-]कारणानित्यसुखाय विरज्येत विरक्तं भवति[-7] असारता बुद्धिं प्राप्नोति इदं च योग्यानामेव नायोग्यानामिति। किञ्चिद्विषयसेवया किं स्यादिति तत्राह **यथेति**। कामानां बिन्दुभिः किञ्चित्सेवितैः मनो यथावत्पुरुषार्थहेतुतया न विरज्यते[8] [9-]विरक्तं न भवति, पुनः तृष्णातिशयः स्यात्। कथमिव? मुखकान्तिहेतुत्वात् कामः आज्यं तद्बिन्दुभिर्यथा अग्निर्वर्धते तथेति भावः[-9]।।३४।।

*नन्वत्र वर्णादिज्ञानं यथा तारतम्यतत्पूजापि तद्योग्यस्य[10] निःश्रेयसी यस्य एतदभावे तद्भिन्नकारणाद्यभीष्टा सिद्धिः स्यादिति तत्राह-**यस्येति**। यस्य ब्राह्मणादेः ब्राह्मणत्वादि व्यञ्जकं शमदमादिलक्षणं प्रोक्तं, शास्त्रत इति शेषः। तल्लक्षणं यद्यन्यत्र व्यक्तं दृश्येत अपिशब्देनाव्याप्त्यादिदोषाभावं सूचयति-तर्हीतरलक्षणेनैव तद्वस्तु ब्राह्मणादिकमिति निर्दिशेत् उपदिशेत्। गोः किं लक्षणमिति पृष्टः सास्नादिमान् गौरिति उपदिशति। यदा तदा

---

1. Ma ०त्वं 2. Ma omits चेत् 3- -3 Ma omits 4- -4 Ma omits 5- -5 Ma omits 6- -6 Ma omits 7- -7 Ma omits 8 Ma ०ज्यंत

9- -9 Ma omits *The commentary of Vijayadhwaja on 35th sloka is missing in Ma edition. 10 A,B य०

पुच्छवत्वश्रृङ्गवत्वादि व्यभिचार्यविहाय यं गोपिण्डं सास्नादिमन्तं पश्यति, [1-]तदा इयं गौरिति[-1] यथा प्रत्येति तत्प्रयुक्तं व्यवहारं करोति। आम्नायोपदिशति च। तथाऽत्रापि विरक्तिबलभक्तिरेव ब्राह्मणादेः मुक्तिसाधनं लक्षणमिति सकलशास्त्र तात्पर्यार्थः ततः सैव बुभूषुभिः सम्पादनीयेति भावः।।३५।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे एकादशोऽध्यायः।।११।।

* * * *

1- -1 A,B omit

# द्वादशोऽध्यायः

## नारद उवाच

ब्रह्मचारी गुरुकुले वसन् दान्तो गुरोर्हितम्।
आचरन्[1] दासवन्नीचो गुरौ सुदृढसौहृदः।।१।।

सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान्।
सन्ध्ये उभे च यतवाक् जपन् ब्रह्म समाहितः।।२।।

छन्दांस्यधीयीत गुरोराहूतश्चेत्[2] सुयन्त्रितः।
उपक्रमेऽवसाने च चरणौ शिरसा नमेत्।।३।।

मेखलाजिनवासांसि जटादण्डकमण्डलून्।
बिभृयादुपवीतं च दर्भपाणिर्यथोदितम्।।४।।

सायं प्रातश्चरेद्भैक्षं गुरवे तन्निवेदयेत्।
भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत् क्वचित्।।५।।

सुशीलो मितभुक्दक्षः श्रद्दधानो जितेन्द्रियः।
यावदर्थं व्यवहरेत् स्त्रीषु स्त्रीनिर्जितेषु च।।६।।

वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः।
इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः।।७।।

केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम्।
गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा।।८।।

---

1. M,Ma °रेद्दा° 2. M,Ma °श्च सु°

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे वर्ण्यते धर्मो ब्रह्मचारि-वनस्थयोः। चतुर्णामाश्रमाणां च साधारण्येन कश्चन।।

वर्णादीनां धर्मा उक्ताः इदानीमाश्रमधर्मा उच्यन्ते। तत्राऽस्मिन् द्वादशेऽध्याये ब्रह्मचारिवान[1]प्रस्थयोः असाधारणाश्चा[2]तुर्वर्ण्यसाधारणाश्चोच्यन्ते। त्रयोदशे यतेर्धर्माः। चतुर्दशे गृहस्थस्य। पञ्चदशे सर्वधर्मसारसङ्ग्रहः **ब्रह्मचारीति**। ब्रह्मचारी गुरुकुले [3-]आचार्यगृहे[-3] वसन् गुर्वादीनुपसीतेत्युत्तरेणान्वयः।।१।।

[4]तानाऽह - **सायमिति**। ब्रह्म गायत्रीं जपन् सन्ध्यात्रयमुपासीत। उभे सन्ध्ये तु यतवाक्[5]भवेत्। सायं प्रातः सन्ध्याकालनिमित्तं मौनं कुर्यादित्यर्थः।।२।।

**छन्दांसीति**। [6-]उपक्रमे आदौ अवसाने अन्ते[-6] गुरोश्चरणौ नमेत्।।३।।

**मेखलेति**। यथोदित[7]मिति। "पालाशो दण्डो ब्राह्मणस्य" इत्यादिनियममनतिक्रम्य। जटाधारणं तु केशप्रसाधनाभावमात्रम्।।४,५।।

**सुशील** इति। यावदर्थं यथोपयोग[8]मेव।।६।।

**वर्जयेदिति**। बृहद्व्रतो ब्रह्मचर्यवान् गृहस्थव्यतिरिक्तः सर्वोऽपि प्रमदागाथां [9-]स्त्रीविषयकवार्तामपि[-9] वर्जयेत्। तत्र हेतुः। इन्द्रियाणि बलवन्ति संयतस्यापि मनो हरन्तीति।।७,८।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं चातुर्वर्ण्यादिधर्मानभिधाय अथ चातुराश्रम्यधर्मान् विवक्षुस्तावत् ब्रह्मचर्याश्रमधर्मानाह - **ब्रह्मचारीति**। ब्रह्मचर्यं द्विविधमौपकुर्वाणं नैष्ठिकञ्चेति। तत्र गार्हस्थ्यादिवन्नैष्ठिकमप्यौपकुर्वाणपूर्वकमेवेति दर्शयितुं तावदौपकुर्वाणब्रह्मचर्यधर्मा उच्यन्ते। यो गुरुकुले वसन् स ब्रह्मचारी उपकुर्व[10]द्ब्रह्मचारीत्यर्थः। कथम्भूतो वसन्? दान्त उपशान्तः दासवन्नीचः स्वनैच्यमनुसन्दधत् गुरोर्हितमाचरन् गुरौ सुदृढं सौहार्दं यस्य ता[11]दृशः।।१।।

किञ्च सायम्प्रातश्च गुरुमग्नीनर्कं सूर्यं सुरोत्तमं भगवन्तञ्च उपासीत। उभे सन्ध्ये प्रातः सायं च, यतवाङ्मौनी समाहितचित्तो ब्रह्म गायत्रीं जपन् गुर्वादीनुपासीतेत्यन्वयः।।२।।

---

1 H,V वनस्थयोः 2 A,B,J °श्चतुर्णां सा° 3- -3 A,B,J omit 4 H,V omit तानाह 5 A,B,J omit भवेत् 6- -6 H,V omit 7. H,V omit इति। 8 B adds °मात्र° 9- -9 A,B,J omit 10. A,B,T °र्वन् ब्र° 11 W सः

आहूतश्चेत्सुयन्त्रितः समाहितो गुरोः छन्दांसि वेदानधीयीत नित्यमध्ययनोपक्रमसमाप्त्योः गुरोः चरणौ शिरसा नमेत्।।३।।

यथाविहितं मेखलादीन्[1] बिभृयात् जटाधारणं तु केशप्रसाधनाभावमात्रं, दर्भं पवित्रं पाणौ यस्य सः।।४।।

सायं प्रातश्च भैक्षं भिक्षाकर्म चरेत् कुर्यात् तद्भिक्षया लब्धमन्नं गुरवे निवेदयेत् गुरोः पुरतो निदध्यात् ततो यदि गुरुणाऽभ्यनुज्ञातश्चेत् तदन्नं भुञ्जीत नोचेत् कदाचिदुपवसेत्। कदाचिदित्यनेन तन्मनःपरीक्षायै कदाचित् गुरुः नाज्ञापयेदिति सूच्यते।।५।।

मितं भुङ्क्ते इति यथा सुशीलः सुस्वभावः सदाचारो वा दक्षोऽनलसः श्रद्दधानः गुरूपदिष्टार्थेषु विश्वासयुक्तः जितानीन्द्रियाणि येन स्त्रीषु, स्त्रीभिर्निर्जिता ये स्त्रीवश्यास्तेषु च यावदर्थं यावत्प्रयोजनं व्यवहरेन्नाधिकं ताभिस्तैश्च सम्भाषेतेत्यर्थः।।६।।

प्रमदागाथां स्त्रीविषयां वार्तां वर्जयेत् यतः स्वयमगृहस्थो बृहद्व्रतः ब्रह्मचर्यवान् स्त्रीसङ्गादिरहितः। ननु तद्गाथामात्रेण को दोषः ? तत्राह - इन्द्रियाणीति। इन्द्रियाणि, प्रमाथीनि बलवन्ति। अतः संयतचित्तस्यापि मनः, प्रमदागाथाश्रवणकथनादिना स्ववशङ्कुर्वन्ति अतस्तां परिवर्जयेत् [2]इत्यर्थः।।७।।

गुरुस्त्रीभिः गुरुपत्नीभिः अन्याभिश्च युवतिभिः [3]स्त्रीभिः केशप्रसाधनादिकं न कारयेत्।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

नीचः प्रश्रितः हितं हिताचरणम्। मनोवाक्कायकर्मभिरिति शेषः।।१-४।।

क्वचिदपराधे सति! एकान्नादनवर्जनार्थमुपवसेदित्युक्तम्।।५।।

स्वार्थमात्रसिद्धिः तन्मात्रं यावदिति।।६।।

बृहद्व्रतो ब्रह्मचारी। स्त्र्यादिव्यवहारवर्जननिमित्तमाह - **इन्द्रियाणीति**। निर्जितेन्द्रियग्रामो यतिः। "ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते" (अम.को. 2-442) इत्यभिधानात्।।७।।

प्रसाधनं संस्करणम्-"मधुमांसाञ्जनोच्छिष्टं शुल्कस्त्रीप्राणिहिंसनम्। भास्करालोकनाश्लीलपरिवादांश्च वर्जयेत्" (याज्ञ. स्मृ. 1-33) इत्यपव्याख्यानं न कर्तव्यम्।।८।।

1. A,B,T °नि 2. W omits इत्यर्थः। 3. A,B,T omit स्त्रीभिः

**नन्वग्निः प्रमदा नाम घृत[1-]कुम्भपुमान[-1]तः।**
**सुतामपि रहो जह्यादन्यदा यावदर्थकृत्।।९।।**

**कल्प[2-]यित्वाऽऽत्म[-2]ना यावदाभासमिदमीश्वरः।**
**द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः।।१०।।**

**एत[3]त्सर्वं [4]व्रतस्थस्य समाम्नातं यतेरपि।**
**गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः।।११।।**

**अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेख्[5]यामिषं मधु।**
**स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः।।१२।।**

**उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च।**
**त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम्।।१३।।**

**दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः।**
**गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वा वसेत्।।१४।।**

**अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम्।**
**भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत्।।१५।।**

**एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही।**
**[6-]चरन् विदितविज्ञा[-6]नः परं ब्रह्माऽधिगच्छति।।१६।।**

**श्रीध०** न कारयेदित्यत्र हेतुः - **नन्विति**। रहः एकान्ते। अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकान्तावसरे वा यावदर्थं तदुक्तं कुर्यात्।।९।।

ननु, मिथ्यात्वादतिकश्मलत्वाच्च स्वयं त्यक्तप्रायं स्त्र्यादि जह्यादिति कोऽयमतिनिर्बन्धस्तत्राह - **कल्पयित्वेति**। आत्मना स्वरूपसाक्षात्कारेणेदं देहेन्द्रियाद्याभासमात्रं कल्पयित्वा निश्चित्य यावदसौ जीव ईश्वरः स्वतन्त्रो न

---

1- -1 A,G,J कुम्भसमः पुमान्; B कुम्भ मयः पुमान्; M,Ma कुम्भः पुमान्यतः 2- -2 M,Ma °येदाऽऽत्मनो; W °यत्वाऽऽत्मना 3 M, Ma एतच्चाऽन्यत् 4. A,B,G,J,M,Ma,T गृह 5 A,B,G,J,T °ख्वा°; M,Ma °पा° 6- -6 M,Ma परं विन्दति विज्ञानं

भवेत् [1-]इत्युत्तरस्यानुषङ्गः[-1] तावत् द्वैतं अहं पुमान् इयं स्त्रीत्यादिभेदो न विरमेत्। ततः किमत आह ततोहि द्वैतात्। विपर्ययो गुणाध्यासेन भोग्यताबुद्धिः। अतो जह्यादेवेत्यर्थः।।१०।।

**एतदिति**। एतत्सर्वं सुशीलः इत्याद्युक्तं गृहस्थस्य विशेषमाह - गुरुवृत्तिरिति।।११।।

**अञ्जनेति**। अञ्जनादीनां आमिषान्तानां द्वन्द्वैक्यम्। अञ्जनं शरीरस्य। अभ्यञ्जनं शिरसः। स्त्रियं चावलेख्यं[2] चित्रकर्म, स्त्रीणां कुड्यादौ लेखनं वा, तन्निरीक्षणं[3] वा, अत्राभ्यङ्गादि स्वरूपतो निषिध्यते। पूर्वं तु कथञ्चिदापदि प्राप्तमपि स्त्रीकर्तृकं निषिद्धमिति भेदः।।१२।।

**उषित्वेति**। अङ्गैः शिक्षादिभिः उपनिषद्भिश्च सहितां वेदत्रयीमधीत्यावबुध्य च तदर्थं च विचार्य। यावदर्थं स्वाधिकारानुसारेण।।१३।।

**दत्त्वेति**। यदीश्वरः शक्तस्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाश्रमं[4] [5-]सन्न्यासाऽश्रमं वा स्वीकुर्यात्। अत्र वनशब्दः शुचिदेशोपलक्षकः। "कुटुम्बे शुचौ देशे" (छान्दो.उ. 8-15) इति श्रुत्यनुरोधात्, न तु वानप्रस्थाश्रमोपलक्षकः, ब्रह्मचर्याव्यवहितोत्तरकाले तत्परिग्रहानुपपत्तेः। "ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहात् वनाद्वा" (जाबा. उ. 4) इति जाबालि श्रुतेः[-5]। तत्रैव[6] वसेत्। नैष्ठिकः स्यादित्यर्थः।।१४।।

**अग्नाविति**। स्वधामभिः स्वाश्रयैर्भूतैर्जीवैस्सह तन्नियन्तृतया।।१५।।

**एवमिति**। चरन् एवमाचरन्। विदितं विज्ञानं विज्ञेयं येन सः।।१६।।

**वीर०** कुतस्तन्मात्रकरणे दोषः? तत्राऽह-**नन्विति**। अग्निः अग्निसदृशी प्रमदा[7] यथा चाऽतीवाग्निसहचरितं घृतकुम्भं क्षरति, तथा पुमानपि [8-]प्रमदासाहचर्यात् स्खलेदित्यर्थः[-8]। अतः सुतामपि [9-]पुत्रीमपि[-9] पुमान् रह एकान्ते जह्यात् त्यजेत्। अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकान्तावसरे वा यावत्तदुक्तं अर्थं प्रयोजनं तावन्मात्रं[10] करोतीति तादृशो भवेत्।।९।।

एवं ब्रह्मचारिणो धर्मानभिधाय, यदुक्तं "सुशीलो मितभुक्" (भाग. 7-12-6) इत्यादि तद्यतिगृहस्थयोरपि

1--1 A,B,J omit 2. A,B,J लेखां च 3. A,B,J क्षं वा 4. A,B,J °स्थाद्याश्र° 5--5 A,J स्वीकुर्यात्प्रव्रजेत् वा; B स्वीकुर्यात् 6 B adds वा 7. W omits प्रमदा 8--8 A,B,T सहचारी सम्मुह्ये° 9--9 W omits 10 W तन्मा°

ब्रह्मोपासननिष्ठयोरतिदेक्ष्यन् तावत् यावच्छरीरावसानमेवं धर्मा अनुष्ठेया इत्याह - **कल्पयतीति**। ईश्वरो भगवान् यावदिदमात्मन आभासं दृश्यं शरीरं कल्पयति प्रवृत्तिसमर्थं करोति। तावद्द्वैतं देवत्व, मनुष्यत्व ब्राह्मणत्वाद्यभिमानरूपं द्वैतं[1], भेदज्ञानमनुवर्तत इति शेषः। ननु[2] अनुवर्तताम्, ततःकिम्? तत्राह - अस्य पुंसस्ततोऽध्यासाद्विपर्ययः उत्तरोत्तरविपर्ययः देहात्मभ्रमः पुरुषार्थविपर्ययो वा भवति। तस्मात् यावद्द्वैतानुवृत्तिः स्वधर्मेभ्यो न विरमेत्। कल्पयित्वेति पाठान्तरम्। तत्र यावदिदं आभासं शरीरं तावदीश्वरः प्रभुः समर्थः[3] स्वधर्मानुष्ठानशक्तस्सन् आत्मनः स्वस्य द्वैतं मनुष्यत्व ब्राह्मणत्वादिभेदं कल्पयित्वा, स्थित इतिशेषः। देहात्माभिमानयुक्त इत्यर्थः। अत एव तावन्न विरमेत्, स्वधर्मादिति[4] शेषः। विरामे बाधकमाह हि यस्मादध्यासात् विरमाद्वाऽस्य विपर्ययः उत्तरोत्तर देहात्मभ्रमः। यद्वा, यावदिदं शरीरमनुवर्तते तावदिदं द्वैतं मनुष्यत्वादिकमात्मन आभासमात्रं कल्पयित्वा द्वैतं देहाकारो न तु आत्माकार इति कल्पयित्वा देहविलक्षणमात्मानमनुसन्धायेत्यर्थः। ईश्वरः कर्तुं समर्थः न विरमेत् स्वधर्मात् न[5] विरमेदित्यर्थः।।१०।।

उक्तं यतिगृहस्थयोरप्यतिदिशति - **एतदिति**। एतत्सुशील इत्यादिनोक्तं सर्वं व्रतस्थस्य ब्रह्मोपासन रूपव्रतनिष्ठस्य[6] यतेः तुर्याश्रमिणः, अपि शब्दात् गृहस्थस्यापि समाम्नातम्। तत्र गृहस्थस्य कञ्चिद्विशेषमाह[7] - गुरुवृत्तिरिति। गुर्वी वृत्तिः गुर्वनुवृत्तिः स्त्रीसङ्गराहित्यादिरूपा[8] ब्रह्मचर्यवृत्तिः गृहस्थस्य तु विकल्पेन कदाचिद्भवेत्, कदाचिन्नस्यात्। कदा न भवेत्? इत्यपेक्षायां तु[9] काले निर्दिशन् विकल्पे हेतुं च वदन् गृहस्थं विशिनष्टि- ऋतुगामिन इति। ऋतुगामित्वाद्गुरुवृत्तिविकल्प इति भावः। ऋतुकालेषु गुरुवृत्तिर्नास्तीति च भावः। अस्या उक्तेः दुष्करत्वाभिप्रायेण गुर्वितिविशेषणमुपात्तम्।।११।।

किञ्च। ये धृतव्रताः गृहस्थास्ते अञ्जनादीन् त्यजेयुः। अञ्जनाद्यामिषान्तानां द्वन्द्वैक्यम्। तत्र अञ्जन शरीरस्य तैलाद्यञ्जनम् शिरसः, अभ्यञ्जनमवशिष्टदेहस्य, उन्मर्दः उद्वर्तः, स्त्र्यवलेख्या[10] कुड्यादिषु स्त्रीप्रतिकृति लेखनम्। आमिषं मांसं, मधु मद्यम्। इदं क्षत्रियाद्यभिप्रायकम्। स्रक् च गन्धलेपश्च अलङ्कारश्च तान्।।१२।।

एवं ब्रह्मचर्याश्रमधर्मानभिधाय, अथ आश्रमान्तरधर्मान् विवक्षुः तावदाश्रमान्तराणाम् उक्तविध ब्रह्मचर्याश्रमपूर्वकत्वमाह - **उषित्वैवमिति** द्वाभ्याम्। द्विजः त्रैवर्णिकः एवमित्थं गुरुकुले उषित्वा साङ्गोपनिषदं

---

1 A,B,T omit द्वैतं 2 W omits ननु 3 W omits समर्थः 4. A,B,T omit स्व 5. W omits न विरमेत् 6. W स्थस्य 7. A,B,T कि° 8. W °त्यरूप 9 A,B,T तं 10. A,B,T °ख्या

साङ्गसशिरस्कां त्रयीं यथा बुद्धिबलं यावत्स्वापेक्षितमधीत्य अवबुध्य तदर्थं ज्ञात्वा। अवबध्येति पाठस्तु उचितः। "वेदमधीत्य अभिसमावृत्य कुटुम्बे शुचौ देशे" (छान्दो.उ. 8-15-1) इति श्रुत्यर्थस्याऽत्र प्रत्यभिज्ञानादवबध्य समावर्तनं कृत्वा।।१३।।

यदीश्वरः शक्तश्चेत्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा गुरुणाऽभ्यनुज्ञातः गृहं वनं वा प्रविशेत्, गृहस्थाश्रमं सन्न्यासाश्रमं वा स्वीकुर्यादित्यर्थः। **वनशब्दः** शुचिदेशोपलक्षकः कुटुम्बे शुचौ देशे इति श्रुत्यनुरोधात्, न तु वानप्रस्थाश्रमोपलक्षकः। ब्रह्मचर्यानन्तरं तत्परिग्रहानुपपत्तेः, स हि गार्हस्थ्यानन्तरभावी "ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्, यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वनाद्वा" (जाबा.उ. 4) इति जाबालिश्रुतेः, गार्हस्थ्यानन्तरं प्रव्रजेत्। प्रव्रजनमत्र[1] सन्न्यासाश्रमपरिग्रहो वानप्रस्थाश्रमपरिग्रहश्चेत्युभयविधं विवक्षितम्। यथेष्टं सन्न्यसेद्वनं वा प्रतिष्ठेतेत्यर्थः। तत्र वा वसेत् तत्र शब्देन ब्रह्मचर्यं गार्हस्थ्यञ्च विवक्षितम्। ब्रह्मचर्ये एव वा निष्ठितो भवेत्, गृहं प्रविश्यतत्रैव वा स्थितो भवेदित्यर्थः।।१४।।

एवं यथेष्टं परिगृहीतानां सर्वाश्रमाणां अनुगतं धर्मं तत्फलञ्चाऽह-द्वाभ्याम् - **अग्नाविति**। अग्नाविति तुर्याश्रमव्यतिरिक्ताश्रमाभिप्रायकम्, तस्याऽनग्नित्वात्। गुरौ अग्नौ आत्मनि स्वस्मिन् सर्वभूतेषु च अन्तः प्रविश्य नियमनपूर्वकं धारकतया, स्थितमिति शेषः। स्थितमधोक्षजं भगवन्तं पश्येत् अधोक्षजो धाम आधारो येषां तैः भूतैः अप्रविष्टं पश्येत् व्याप्यवस्तुगतदोषासंस्पृष्टं पश्येत् प्रविष्टवञ्च पश्येत् अन्तर्बहिश्च व्याप्य स्थितत्वादिति भावः।।१५।।

एवंविधदर्शी ब्रह्मचर्याद्यन्यतमः[2] [3-]चरन् स्वाश्रमधर्मान् अनुतिष्ठन् विदितं विज्ञानं विज्ञेयं स्वात्मपरमात्मादि[-3] याथात्म्यं येन तादृशः परं ब्रह्माधिगच्छति प्राप्नोति।।१६।।

**विज०** कुतो न कार्यमत्राह - **नन्विति** अन्यदा व्यवहारयोग्यसमये।।९।।

ननु बन्धनिवृत्त्यर्थं भगवदर्पणबुद्ध्या धर्मोऽनुष्ठेय इति विधीयते तस्य मिथ्यात्वेन स्वतएव निवृत्त्युपपत्तेः न तद्विधानमत्राऽवश्यकमित्याशङ्क्य ईश्वरकल्पितस्य मिथ्यात्वासम्भवेन। यद्बुद्ध्या यस्य शृङ्खलाबन्धः तस्य तत्प्रसादेन तन्निवृत्तिवदीश्वरप्रसादजनकधर्मग्रामो विधेयोऽन्यथा बन्धानुत्थितिरित्याशयवान् तस्येश्वरकल्पितत्वमाह **कल्पयेदिति**। यावन्तं कालमीश्वरः आत्मनो जीवस्य ज्ञानलक्षणरहितं ज्ञानवदवभासमानमिदमाभासमज्ञानं

1. A,B,T °न्तु 2. W त्तमं 3- -3 A, T omit

कल्पयेत्तावन्तं कालं द्वैतमयथार्थज्ञानं न विरमेत्, नापगच्छेत् ततोऽज्ञानादस्य विपर्ययो, बन्धोऽनुवर्तते[1] इति शेषः। तदुक्तम्- "बहुत्वेनैव वस्तूनां यथार्थज्ञानमुच्यते। अद्वैत ज्ञानमित्येव द्वैतज्ञानं तदन्यथा।। यथा ज्ञानं तथा वस्तु यथावस्तु तथा मतिः। नैव ज्ञानार्थयोर्भेदः तत एकत्ववेदनम्" (तन्त्र मालायाम्) इति च। ननु वर्णादेः विहितो धर्मग्रामः कियन्तं कालं अनुष्ठेयो, बहुसमयसाध्यत्वे दुःखप्रयासत्वेन अशक्त्यविरक्त्यानधिकारिकः स्यादित्याशङ्क्याऽह - **कल्पयेदिति**। यावदीश्वर इदमाभासं मिथ्याभूतं जगत्कल्पयेत् तावत् द्वैतं वर्णाश्रमादि धर्मलक्षणं न विरमेत् नाऽपगच्छेत्। ततोऽधिष्ठानं[2] ज्ञानं स्यात्, ततो विहितधर्मग्रामस्य विपर्ययो निवृत्तिरित्ययमर्थो हि शब्दसूचितया "सत्यसृष्टावशक्ता हि मायासृष्टिं वितन्वते" इति स्मृत्या विरुद्धत्वेनाऽनुपपन्नः ईश्वर इत्यनेन सत्यसृष्टिसामर्थ्यं सूचयति तात्पर्येण विधानं चानुपपन्नं, यत उक्त एवार्थः।।१०।।

नन्वयं धर्मो ब्रह्मचारिणो भवेदुत अन्यस्याऽपि सम्भवति? नाऽद्यः, अतिव्याप्तेः। न द्वितीयः, पृथग्विधानानुपपत्तिः, इत्यतोऽतिदेशन्यायेन यथासम्भवमन्यस्याऽपीत्याह - **एतदिति**। अन्यद्वक्ष्यमाणं न केवलं गृहस्थस्यैव, किन्तु यतेरपीत्याह - यतेरपीति। यथासम्भवमित्युक्तं विवृणोति गुरुवृत्तिरिति। गुरुवृत्तिः गुरौ वासः ब्रह्मचर्यं भिक्षावृत्तिरित्येतत्सर्वं गृहस्थस्य निवर्तत इत्यर्थः। विकल्पेन व्यवस्थित विकल्पेन, उदितानुदितहोमवदित्यर्थः। कुतो निवर्तत इति, तत्राऽह - ऋतुगामिन इति।।११।।

पञ्चयज्ञाद्याचरणायासेन कालयापनं कुर्वतो गृहस्थस्यापि व्रतधारणे ब्रह्मचारिवदभ्यञ्जनादिकं वर्जनीयमित्याह - **अञ्जनेति**। अवलेपं दर्पम्।।१२।।

अवबुध्य अर्थविचारं कृत्वा तत्त्वं ज्ञात्वा।।१३।।

गार्हस्थ्यधर्मस्य वानप्रस्थधर्मस्य यतिधर्मस्य चाऽनुष्ठानेन समर्थश्चेदेष्वभीष्टं कुर्यादित्याह - **यदीति**। "नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ। तदभावेऽस्य तनये पत्न्यां वैश्वानरोऽपि च" (याज्ञ. स्मृ. 1-49) इति वचनात्। एतादृशस्य गुरौ वासोऽनुज्ञायते। अन्यस्य गुरोराज्ञया दूरं गत्वा गृहाश्रमः इति। तदुक्तम्- "गुरोराज्ञानुरोधेन दूरस्थो वा गृहीभवेत्" (तन्त्रमालायाम्) इति चेति।।१४।।

भगवदर्पणबुद्ध्या अग्न्यादौ क्रियमाणं कर्म तस्य बुद्ध्या कर्तव्यं, न तु तदैक्यबुद्ध्येत्याशयेनाऽऽह- **अग्नाविति**। "स गुरुर्यः क्रियाः कृत्वा वेदमस्मै ददाति च। उपनीय वदेद्वेदमाचार्यस्स उदाहृतः। एकदेश उपाध्याय

1. A,B वर्तेते 2. A,B °ष्ठानं

ऋत्विग्यज्ञकृदुच्यते। एते मान्या यथा पूर्वमेभ्यो माता गरीयसी" (याज्ञ.स्मृ. 1-34,35) इति वचनात्। गुरुशब्देन सर्व एते विवक्ष्यन्ते। स्वधामभिः आवासस्थानभूतैः अप्रविष्टं सर्वगतं प्रविष्टवत् स्थितम् अनुरूपवन्तम्। "अप्रविष्ट-स्सर्वगतः प्रविष्टस्त्वनुरूपवान्। एवं द्विरूपो भगवान् हरिरेको जनार्दनः" (तन्त्रमालायाम्) इति वचनात्।।१५।।

एवमाकारेण क्रियमाणस्य कर्मणःफलमाह - **एवंविध** इति।।१६।।

**[1-]वानप्रस्थस्य[-1] वक्ष्यामि[2] नियमान्मुनि सम्मतान्।**
**यानातिष्ठन्मुनिर्गच्छेदृषिलोकमिहाञ्जसा।।१७।।**

**न कृष्टपच्यमश्नीया दकृष्टं[3] वाऽप्यकालतः।**
**अग्निपक्वमथाऽमं वा ह्यर्कपक्वमुताऽहरेत्।।१८।।**

**वन्यैश्चरुपुरोडाशान् निर्वपेन्नित्यचोदितान्[5]।**
**लब्धे [6-]नवे नवेऽन्नाद्ये[-6] पुराणन्तु परित्यजेत्।।१९।।**

**अग्न्यर्थमेव शरणमुटजं वाऽद्रिकन्दरम्[7]।**
**श्रयेत हिमवाय्वग्नि वर्षार्कातपषाट्[8] स्वयम्।।२०।।**

**केश रोम नखश्मश्रु मलानि जटिलो दधत्।**
**कमण्डल्वजिने दण्डवल्कलादि[9]परिच्छदान्।।२१।।**

**चरेद्वनेद्वादशाब्दा नष्टौ वा चतुरो मुनिः।**
**द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः।।२२।।**

**यदाऽकल्यः[10] स्वक्रियायां व्याधिभिर्जरयाऽथवा[11]।**
**आन्वीक्षिक्यां[12] च विद्यायां कुर्यादनशनादिकम्।।२३।।**

**आत्मन्यग्नीन्[13] समारोप्य सन्न्यस्याऽहम्ममात्मताम्।**
**कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः।।२४।।**

---

1--1 H,V,W वनस्थस्य तु 2. H,V,W °मो 3. A,B,G,J,T °ष्टश्चाऽ° 4 A,B,G,J,M,Ma,T अ° 5. A,B,G,J,M,Ma,T °त्काल 6--6 M,Ma नयेन चान्नेन 7. A,B,G,J,T °राम् 8. M,Ma नात् 9. A,B,G,J, M,Ma,T °ग्नि 10. A,B,G,J,M,Ma,T °ल्पः 11. W °या तदा 12. A,B,G,J,T वा 13.H,V ग्निं°

**श्रीध० वानप्रस्थेति**। ऋषिलोकं महर्लोकम्।।१७।।

**नेति**। [1-]कृष्टपच्यम् शाल्यन्नादिकम्[-1] अकृष्टमकृष्टपच्यम्। अकालतः पाककालात्पूर्वमेव निष्पन्नं [2-]चूतशलाद्वादिकं तथा अग्निपक्वं आमञ्च नाश्नीयात्[-2] अर्कपक्वं फलादि [3]उत अपितु आहरेत् अश्नीयात्।।१८।।

**वन्यैरिति**। वन्यैः नीवारादिभिः [4-]चरुपुरोडाशान्[-4] का[5]लचोदितान् नित्यान् [6-]नवेनवे नूतने[-6], पुराणं पूर्वसञ्चितम्।।१९।।

**अग्न्यर्थमिति**। हिमादीन् [7]सहेत इति तथा।।२०।।

**केशेति**। केशादीन्[8]देहमलञ्च अप्रक्षालनेन धारयन्। कमण्डल्वादींश्च दधत्।।२१।।

**चरेदिति**। कृच्छ्रतस्तपःक्लेशाद्यथा बुद्धिः न नश्येत्तथा चरेत्।।२२।।

द्वादशाब्दाद्यनन्तरमपि यदि[9]धर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत्। यदि तु ज्ञानाभ्यासे योग्यस्तर्हि सन्न्यसेदित्युत्तराध्याये वक्ष्यति। तदुभयरहितस्य तु यत्कृत्यं तदाह - **यदेति**। यदा अ[10]कल्योऽसमर्थः। आन्वीक्षिक्यां [11]विद्यायां ज्ञानाभ्यासे।।२३।।

अनशनादि करिष्यतः पूर्वकृत्यमाह - **आत्मनीत्यादि** याव[12]दध्यायपरिसमाप्ति। यथार्हतो यथायोग्यं स्वकारणेषु आकाशादिषु सङ्घातं देहं न्यसेत् प्रविलापयेत्।।२४।।

**वीर०** तावद्वानप्रस्थधर्मान् वक्तुं प्रतिजानीते - **वानप्रस्थस्येति**। मुनीनां सम्मतान् वानप्रस्थस्य नियमान् धर्मान् वक्ष्यामि। नियमान्विशिनष्टि - यान्नियमानिह लोकेऽनुतिष्ठन् मुनिरञ्जसा ऋषीणां लोकं महर्लोकं प्राप्यं भगवल्लोकं वा गच्छेत्।।१७।।

नियमानाह - **नेति**। कृष्टपच्यं कृष्याद्युपायैः निष्पन्नं शाल्यन्नादिकं नाऽश्नीयात्, वनस्थ इति शेषः। अकृष्टपच्यमपि फलमूलादिकमकालतः पाककालात्पूर्वमेव परिपाकावस्थायाः पूर्वमेव। तथा अग्निपक्वमामञ्च नाश्नीयात्। उत अपि तु अर्कपक्वं सूर्यकिरणपक्वं फलादिकमेव आहरेत् अश्नीयात्।।१८।।

एवं [13]वानप्रस्थस्य धर्म उक्तः। अथ आवश्यकान्नियमानाह - **वन्यैरिति**। वन्यैःनीवारादिभिः चरुपुरोडाशान् कालचोदितान्नित्यान्निर्वपेत्। नीवारादिनिष्पन्नैरेव चरुपुरोडाशैः यथोदित धर्मान् कुर्यादित्यर्थः। नवे नवे नूतने नूतने अन्नाद्ये अन्ने लब्धे पुराणं पूर्वसञ्चितमन्नाद्यं परित्यजेत्।।१९।।

---

1--1 A,B,J omit 2--2 A,B,J omit 3 A,B,J omit उत अपितु 4--4 H,V omit 5 H,V °ले 6--6 A,B,J omit 7 H,V सहते 8 A,B,J omit देह 9 A,B,J add स्व 10. A,B,J कल्पो 11. H,V omit विद्यायां 12 A,B,J °वत्समा° 13. B,W वानस्थां

अग्न्यर्थमग्नीनां रक्षणार्थमेव उटजं पर्णशालात्मकं शरणं स्वगृहं कुर्यात्। अथवा अद्रिकन्दरं पर्वतगुहां वा श्रयेत, स्वयन्तु हिमञ्च वायुश्च अग्निश्च वर्षञ्च सूर्यातपश्च तान् सहत इति हिमवाय्वग्निवर्षार्कातपषाट्।।२०।।

जटाः अस्य सन्तीति तादृशः केशादीन् देहमलञ्च अघमर्षणेन धारयन् कमण्डल्वादींश्च दधत् अग्निपरिच्छदाः स्रुक् स्रुवाद्युपकरणानि [1-] च [-1] दधत्।।२१।।

कृच्छ्रतः क्लेशात् यथा बुद्धिः न विपद्येत न नश्येत्तथा द्वादशाब्दान् संवत्सरान्, अष्टौ वा चतुरो वा अब्दौ द्वौ वा एकं वा [2] अब्दं चरेत्, नियमानिति [3] अर्थः।।२२।।

यदा द्वादशाब्दाद्यनन्तरं, व्याध्यादिभिरुतजरया वा स्वक्रियायां स्वकीयधर्माचरणे आन्वीक्षिक्यां आत्मविचाररूपायां विद्यायां तुरीयाश्रमधर्मे च अशक्तस्तदा अनशनादिकम्, आदिशब्देनाग्न्यारोपणादिकं वक्ष्यमाणं विवक्षितम्। तत्कुर्यात्।।२३।।

तदेवाऽह - **आत्मनीति**। अग्नीनात्मनि समारोप्य अहङ्कारममकारौ सन्न्यस्य त्यक्त्वा यथायोग्यं स्वस्वकारणे सङ्घातं भूतसङ्घातरूपं शरीरेन्द्रियजातादिकं सम्यक् न्यसेत् लीनमनुसन्दधीत।।२४।।

**विज०** ब्रह्मचारि वानप्रस्थनियमानां कृच्छ्रसाध्यत्वेन साम्यात्प्रथमाश्रमधर्मकथनानन्तरं वानप्रस्थधर्मानाह - **वानप्रस्थस्येति**। ऋषेः सर्वज्ञस्य लोकं वैकुण्ठं "त्वमग्ने प्रथमो अङ्गिराः" (ऋक्सं 1-31-1) इति श्रुतेः। "ऋषिर्हरौ तापसे च ज्ञानवत्यपि कीर्तितः" इति।।१७।।

कृष्टपच्यं कर्षणादिना पक्वं व्रीह्यन्नं, अकालतो विहितकालमुल्लङ्घ्य आममग्न्यादिना अनाप्तपाक-मामलकादि।।१८।।

वन्यैः देवव्रीह्यादिभिः कालचोदितान् तत्तत्कालविहितान्।।१९।।

अग्न्यर्थं अग्निरक्षार्थं उटजं पर्णशालाम्, शरणं गृहम् अन्यदा हिमादिकं श्रयेत, आतपनमातपः।।२०।।

अग्निपरिच्छदा दर्भादयः।।२१।।

न विपद्येत क्लिष्टो न भवेत्।।२२।।

अकल्पोऽसमर्थः आन्वीक्षिक्यां आत्मविचारलक्षणायाम्। अनशनम् अशनत्यागः, तत्राशक्तौ मासे गते पक्षेवा दिवसे वा प्राश्नीयादित्यादिकमादिपदेन गृहीतं, यथाऽऽह याज्ञवल्क्यः "पक्षे गते वा प्राश्नीयान्मासे वाऽहनि चागते" (याज्ञ. स्मृ. 3-50) इति।।२३।।

---

1- -1 W omits 2. A,B,T omit अब्दं 3. A,B,T शेषः

म्रियमाणेन पुरुषेणाऽध्यात्मं कार्यकारणजातं यत्तत्रेदं कार्यमेतस्मिन्कारणे विलीयते इति ध्यानं कर्तव्यमित्यभिप्रायेणाह - कारणेष्विति। सङ्घातं कार्यजातं न्यासो ज्ञानपूर्वकं ध्यानं "कार्यस्य कारणलयज्ञानमात्रं विलापनम्" (तन्त्रमालायाम्) इति वचनात्।।२४।।

**खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान्।**
**अप्स्वसृक् श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम्।।२५।।**

**वाचमग्नौ स वक्तव्यामिन्द्रे शिल्पं करावपि।**
**पदानि[1] गत्या वयसि[2-2] रत्योपस्थं प्रजापतौ।।२६।।**

**मृत्यौ पायुञ्च[3-] सोत्सर्गं[-3] यथास्थानं विनिर्दिशेत्।**
**दिक्षुश्रोत्रं सनादेन[4] स्पर्शेनाध्यात्मनि[5] त्वचम्।।२७।।**

**रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत्।**
**अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत्।।२८।।**

**मनो मनोरथैश्चन्द्रे बुद्धिं[6] बोध्यैः कवौ परे।**
**कर्माण्यध्यात्मना रुद्रे यदहं ममता[7] क्रियाः[8]।**
**सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे।।२९।।**

**अप्सु क्षितिमपो ज्योतिष्यदे वायौ नभस्यमुम्।**
**कूटस्थे तञ्चमहति तदव्यक्तेऽक्षरे तु[9] तत्।।३०।।**

**इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम्।**
**ज्ञात्वाऽद्वयोऽथ विरमेत् दग्धयोनिर्यथाऽनलः[10]।।३१।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां
अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नाम द्वादशोऽध्यायः।।१२।।

---

1 W पादौ च 2- -2 M,Ma गतिभिर्विष्णौ 3- -3 A,B,G,J,M,Ma,T पायुं विसर्गञ्च 4 W च स° 5. A,B,G,J,T स्पर्शंम° 6. H,V द्विर्बो°
7. M,Ma सम्मता 8. A,B,G,J,T °या। 9 A,B,G,J,T च 10. A,B,G,J,M,Ma,T °रिवाऽ°

**श्रीध०** तदेवं[1] विभज्य दर्शयति **खे** इति। खे आकाशे खानि देहगतच्छिद्राणि। आत्मवान् धीमान् शेषमस्थिमांसादिकठिनांशम्।।२५।।

एवं स्थूल शरीरस्य लयमुक्त्वा लिङ्गशरीररूपस्य अध्यात्मादित्रयस्य लयमाह - **वाचमित्यादिना**। तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्व स्व कारणेषु राजसाहङ्कारादिषु लयो वाच्यः, तथाऽपि इह तेषां लयभावनेयमद्वितीयात्मप्रतिपत्तिपरेति यथाकथञ्चिल्लये भाव्ये देवतानां प्रवर्तकत्वेन प्राधान्यादिन्द्रियतद्विषययोः देवतासु लयः कथ्यते। वक्तव्यसहितां वाचमग्नौ न्यसेत्। एवं सर्वत्र। पदानि पादौ वयसि विष्णौ।।२६।।

**मृत्याविति**। सनादेन शब्देनसह। अध्यात्मनि वायौ। अध्यात्मवदिति पाठे वायाविति ज्ञातव्यम्।।२७।।

**रुपाणीति**। ज्योतिषि आदित्ये रूपाणि[2]। रसगन्धयोः[3] स्वेन्द्रियाद्याकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्येन्द्रियस्य विषये लयमाह प्रचेतसा सह जिह्वां रसनामप्सु रसरूपासु। घ्राणशब्देन अश्विनोरप्युपलक्षणम्। अश्विभ्यां सह घ्राणं घ्रेयैः गन्धैरुपलक्षितायां क्षितावित्यर्थः।।२८।।

**मन इति**। परे कवौ ब्रह्मणि। अध्यात्मनाहङ्कारेण, अध्यात्मनामिति पाठे कर्माण्यहङ्कारश्चेत्यर्थः। कथम्भूते रुद्रे? यद्यस्मात् अहम्ममता पूर्विका क्रिया भवति तस्मिन् सत्त्वेन चेतनया गुणैः गुणकार्यैः प्रागवशिष्टैः देवैस्सह। यद्वा, सत्त्वादिभिः गुणैः हेतुभूतैः। वैकारिकं भोक्तृत्वादि विकारवन्तं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि।।२९।।

ननु विकारवतः कथं परेऽविकारे[4] लयःस्यात्, विकारहेतूनां सर्वोपाधीनां लयद्वारेणेत्याह - **अप्स्विति**। अदो ज्योतिः। तच्च नभः कूटस्थेऽहंतत्त्वे। तच्च कूटस्थं महति महत्तत्त्वे। तदव्यक्ते प्रधाने तच्चाऽव्यक्तमक्षरे परमात्मनि।।३०।।

**इतीति**। इति सर्वोपाधिलयाद्धेतोः अवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वा अद्वयस्सन् विरमेत्। दग्धकाष्ठो यथाऽनलः।।३१।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वमिविरचितायां भावर्थदीपिकायां

व्याख्यायां द्वादशोऽध्यायः।।१२।।

---

1. A,B,J, °व 2. A,H,J,V omit रूपाणि 3. A,B,J योस्त्विन्द्रि° 4 H,V omit अविकारे

**वीर॰** तदेव सविस्तारमाह - **ख** इत्यादिना खे आकाशे खानि शरीरगतच्छिद्राणि प्रलीनानि भावयेत् निःश्वासान् देहगतानुच्छ्वासादीन् प्राणान् वायौ तथा ऊष्माणं तेजसि न्यसेत्। आत्मवान् धीमान् असृग्ग्रुधिरं च श्लेष्म च पूयं मूत्रादिकञ्चेत्येतानि अप्सु शेषमस्थिमांसादिकं कठिनांशं क्षितौ - इत्येवं **यथोद्भवं** यद्यत उत्पन्नं तथा तदनतिक्रमेण स्वकारणेषु प्रलीनानि अनुसन्दधीत।।२५।।

एवम्भूतसङ्घातात्मकशरीरावयवानां यथोद्भवं स्व स्वकारणे लयानुसन्धानमुक्तं, अथ सव्यापारणां वागादीन्द्रियाणां स्वाऽधिदैवतेषु लयानुसन्धानप्रकारमाह - **वाचमिति**। यद्यप्यधिदैवतेभ्यो नेन्द्रियाणामुत्पत्तिरिति तत्र तेषां लयानुसन्धानमसङ्गतं, तथाऽपि तेषां तत् प्रवर्तकत्वेन प्राधान्यात्तैः तावत्संश्लेषानुसन्धानं तेषामपि स्वकारणे लयानुसन्धानाय कथ्यते। वक्तव्यमुक्तिः भावेतव्यः सवक्तव्यां सोक्तिकां वाचं वागिन्द्रियमग्नौ अधिदैवते, विनिर्दिशेदित्युत्तरेणान्वयः। करौ शिल्पमादानादिरूपं व्यापारञ्च इन्द्रे तदधिदैवते गत्या सह पादौ वयसि कालात्मके विष्णौ रत्या सह उपस्थमिन्द्रियं प्रजापतौ अधिदैवते।।२६।।

जिह्वां रसनेन्द्रियमप्सु रसेषु विषयभूतेषु अप् शब्दो रसोपलक्षकः प्रचेतसा वरुणेन अधिदैवतेनसह, अभिनिवेशयेदित्यनुषङ्गः। त्रयाणां संश्लेषमात्रविवक्षया प्रचेतसेत्यप्रधाने तृतीया। घ्रेयैर्गन्धैर्विषयैस्सह घ्राणमिन्द्रियं क्षितौ, क्षितिशब्दोपलक्षितयोरश्विनोः न्यसेत्। मनोरथैः व्यापारैस्सह मन इन्द्रियं चन्द्रेऽधिदैवते, बोध्यैः विषयैस्सह बुद्धिं परे श्रेष्ठे कवौ चतुर्मुखे, अध्यात्मना आत्मनि देहे वर्तमानेनाऽहङ्कारेण सह तत्कर्माणि देहात्माभिमान रूपाणि अहङ्काराधिदैवते रुद्रे न्यसेत्। अहङ्कारकर्माण्येव दर्शयति - **यद्यस्मादहङ्कारात्** अहम्ममताक्रियाः। देहेऽहम्बुद्धिः देहानुबन्धिषु ममकारः, तन्मूलाः क्रियाः प्रवृत्तयश्च भवन्ति। चित्तं चित्तावस्थमन्तःकरणं सत्त्वेन सत्त्वगुणकार्यभूतस्वच्छत्व प्रकाशत्वादिरूपचित्तवृत्त्या सह क्षेत्रज्ञेऽधिदैवते न्यसेत् ततो वैकारिकं सात्त्विकाहङ्कारं गुणैः स्वकार्यभूतैः इन्द्रियैस्सह परे तत्कारणे महत्तत्त्वे न्यसेत्।।२८,२९।।

एवं वैकारिकाहङ्कारस्य महति लयानुसन्धानमुक्तम्, पूर्वं खे खानीत्यादिना तत्तत्कार्यप्रलयानुसन्धान-मुक्तम्। अथ तत्त्वैस्सह तत्कारणभूतस्य तामसाहङ्कारस्य महति लयानुसन्धान प्रकारमाह - **अप्स्वित्यादिना**। तावत्क्षितिमप्सु, अपो ज्योतिषि, अदः ज्योतिर्वायौ, अमुं वायुं नभसि आकाशे, तच्च कूटस्थे तामसाहङ्कारे, तच्च महति महत्तत्त्वे, तच्च महत्तत्त्वं अव्यक्ते चित्समष्टिसंसृष्टे अचित्समष्ट्यात्मके प्रधाने, तच्चाक्षरे परमात्मात्मके जीवे न्यसेत्।।३०।।

[1]अत एवमवशेषितं प्रत्यगात्मानमक्षरतया परमा[2-]त्मात्मक[-2]त्वस्वाभाविकस्वरूपतया ज्ञात्वाऽद्वयः आत्मनि जातिगुणाद्यभिमान रहितः विरमेत्। दग्धयोनिः [3]निर्दग्धकाष्ठोऽनलोऽग्निः यथा विरमति तद्वद्धर्मानुष्ठानेऽशक्तो वानप्रस्थ एवमनुसन्दधानो देहत्यागाय अनशनव्रतं कुर्यादित्यर्थः।।३१।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्वादशोऽध्यायः।।१२।।

**विज०** यथार्हत इत्युक्तं विवृणोति - **खे खानीति**। खे आकाशे खानि शरीरावच्छिन्नाकाशानि श्वासं शरीरवायुं बाह्यवायौ शरीरमूष्माणं कारणतेजसि आत्मवान् परमात्मज्ञानवान् वशीकृतमना वा, श्लेष्मपूयासृक्कार्याणि अप्सु लीयन्त इति चिन्तयेत्। शेषं गन्धं क्षितौ। नन्वाकाशादेः लाघवादीनामुत्पत्तेः कथमियतामेव लयश्चिन्त्यते? इति तत्राह - यथोद्भवमिति। "आकाशाल्लाघवं सौक्ष्मं शब्दं श्रोत्रं तथा बलम्। वायोस्तु प्रेरणा चेष्टा व्यूहनं सौक्ष्म्यमेव च। अग्नेस्तु दर्शनं शक्ति रौष्ण्यं रूपप्रकाशकम्।। रसेभ्यो रसनं शैत्यं स्नेहक्लेदनमार्दवम्। भूमेर्गन्धस्तथा घ्राणं गौरवं मूर्तिरेव च" इति वचनात् उत्पत्त्यनुसारेण लयश्चिन्तनीय इत्यर्थः।।२५।।

इदानीं वागादीन्द्रियाणां अग्न्यादिदेवताधीनत्वमपि चिन्तनीयमित्याह - **वाचमिति**। सवक्तव्यमिति क्रियाविशेषणम्। प्रजापतौ दक्षे।।२६।।

यथास्थानमित्यनेन अभिमानिनां अभिमन्यमानानां तत्तदुत्पत्तिकारणमनुसृत्येत्युच्यते सनादेन श्रोतव्येन सह, त्वचं त्वगिन्द्रियं स्पर्शेन सह, वायाविति शेषः।।२७।।

ज्योतिष्यादित्ये निवेशयेत् निविशतीति चिन्तयेत्। जिह्वां रसनेनेति शेषः। परे कवौ बृहस्पतौ। उशनसोऽपि कविशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थं पर इति। अध्यात्मनाऽहङ्कारेण सह कर्माणि रुद्रे, तत्र हेतुः यदहमिति। क्रिया, यत् अहं सम्मता अहङ्कारादुत्पन्नत्वेन सम्मता इति यत्तस्मादिति शेषः। सत्त्वेन साधुपुण्य कर्मणा सह चित्तं क्षेत्रज्ञे हिरण्यगर्भे निवेश्य एतल्लक्षणं विलयं स्मृत्वा वैकारिकनामानं हिरण्यगर्भं गुणैस्सह क्षेत्रज्ञाख्ये परे परमात्मनि लक्ष्मीद्वारा लयमार्गं चिन्तयेत् - "चित्तं हिरण्यगर्भे तु विलाप्य परमात्मनि। क्षेत्रज्ञाख्ये लापयेच्च ततो नान्यत्स्मरेद्बुधः" (तन्त्रमालायाम्) इति चात्र मानम्।।२८,२९।।

---

1 W omits अतः 2- -2 A,B,T ०त्मशरीरात्मकत्व० 3. W दग्ध०

इदानीमबादीनां लयप्रकारं निरूपयति - **अप्स्विति**। **तच्च नभःकूटस्थे** वैकारिकतैजस तामस कूटरूपेऽहङ्कारतत्त्वे, तदहङ्कारतत्त्वं महति महत्तत्त्वे, तन्महत्तत्त्वमव्यक्ते, तदव्यक्त मक्षरे हरौ विलयप्रकारं स्मरेत्। जडस्य स्वकारणैक्यमभिमानिनो जीवस्य प्रवेशलक्षणं तत्तत्कार्यस्थ हिरण्यगर्भस्य उत्तररूपेणैक्यं हिरण्यगर्भस्थहरेरपि उत्तरोत्तररूपैकीकरणमिति लयभेदन्तु शब्दो ज्ञापयति।।३०।।

इति शब्दो लयसमाप्ति सूचकः। "कूटस्थोऽक्षर उच्यते" (भ.गी. 15-16) इति वचनात् अक्षरनाम्न्यां चित् प्रकृतौ स्थित्वा अक्षरलक्षणनित्यत्वहेतुत्वादक्षरनामत्वेन स्थितमात्मानं परमात्मानं चिन्मात्रमवशेषितं सृष्ट्यादिव्यापारोदासीनं ज्ञात्वाऽद्वयो हरिव्यतिरिक्तवस्तुस्वातन्त्र्यस्मरणरहितोऽथ कृत्याद्विरमेदित्यन्वयः। कृत्याद्विरमोक्तिरत्र कथमित्याह - दग्धयोनिरिति। दग्धयोनिरिन्धनलक्षणा येन स तथा। यथाऽग्ने इन्धनदहनात्परं कृत्यं नास्ति, तथा श्रीनारायणोपासकस्य सविकासं तत्त्वज्ञानात्परं कृत्यं नेति भावः। "न हरिं स्मरतः कृत्यं दग्धेन्धनहुताशवत्" (तन्त्रमालायाम्) इति वचनात्।।३१।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे द्वादशोऽध्यायः।।१२।।

* * * *

# त्रयोदशोऽध्यायः

*(विजयध्वजरीत्या चतुर्दशोऽध्यायः)*

नारद उवाच

[1]कल्यस्त्वेवं परिव्रज्य देहमात्रावशेषितः।
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम्।।१।।

बिभृया[2]द्यद्यसौ वासः कौपीनाच्छादनं परम्।
व्यक्तं न लिङ्ग[3]दण्डादेरन्यत्किञ्चिदनापदि।।२।।

एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः।
सर्वभूतसुहृच्छान्तो नारायणपरायणः।।३।।

पश्येदात्मन्यदो विश्वं परे सदसतो[4]ऽव्यये।
आत्मानञ्च परं ब्रह्म सर्वत्र सदसत्तमे।।४।।

सुप्तप्रबोधयोस्सन्धावात्मनो गतिमात्मदृक्।
पश्यन्बन्धञ्च मोक्षञ्च मायामात्रं [5]न वस्तुतः।।५।।

नाऽभिनन्देद्ध्रुवं मृत्युमध्रुवं [6]वाऽस्य जीवितम्।
कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम्।।६।।

नाऽसच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम्।
[7]वादिवादांस्त्यजेत्तर्कान्पक्षं [8]कञ्चिन्न संश्रयेत्।।७।।

---

1. A,B,G,J,M,Ma T कल्प 2 H,V यदसौ 3. M,Ma दण्डाभ्याम° 4 M,Ma ऽद्वये 5 M,Ma च 6 M,Ma स्वजी° 7 A,B,G,J,T वाद . M,Ma अति 8. A,B,G,J,T कञ्चन

न शिष्याननुबध्नीत ग्रन्थान्नैवाऽभ्यसेद्बहून्।
न व्याख्यामुपयु[1]ञ्जीत नाऽऽरम्भानारभेत्क्वचित्।।८।।
न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः।
शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत्।।९।।
अव्यक्तलिङ्गोऽव्यक्तार्थो [2]मनीष्युन्मत्त बालवत्।
कविर्मूकवदात्मानं[3] सद्दृष्ट्या दर्शयेन्नृणाम्।।१०।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान्।अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते।।

**कल्येति**। एवं ध्यात्वा अ[4]कल्योऽनशनादिकं कुर्यात्। आन्वीक्षिक्यां कल्य[5] स्त्वेवं ध्यात्वा परि[6]व्रज्येति सम्बन्धः। कियदत्र त्याज्यं, दे[7]हातिरिक्तं सर्वमित्याह-देहमात्रेति। तस्य धर्मानाह ग्रामैकरात्रेति नवभिः।।१।।

**बिभृयादिति**। कौपीनं [8]गुह्यमाच्छाद्यते यावता, तावन्मात्रं परं केवल, मन्यदिति वा।।२।।

**त्यक्तमिति**। त्यक्तं प्रेषोच्चारणात्पूर्वमेव।।३।।

**पश्येदिति**। सदसतः परे कार्यकारणव्यतिरिक्ते।।४।।

नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः, न हि बद्धमुक्तयोरैक्यं सम्भवति? तत्राऽऽह-**सुप्तेति**। सुषु[9]प्तौ हि तमसावृतमात्मत्त्वं, जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते, सन्धौ तु न तमो नाऽपि विक्षेपः। अतस्तदात्मदृक् आत्मानं लक्षीकृत्य स्थितस्सन् आत्मनो गतिं तत्त्वं पश्यन् अत एव बन्धं मोक्षञ्च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः। तदुक्तं योगग्रन्थे-"निद्रादौ जागरस्यान्ते यो भाव उपजायते। तं भावं भावयेन्नित्यमुच्यते नेतरो यतिः" इति।।५।।

**नाऽभीति**। अस्य देहस्य प्रभवोऽप्ययश्च यस्मात्तं कालम्।।६।।

---

1 M,Ma जीवेत 2. W मुनिरुन्मत्त 3. M,Ma °नमदृश्यो 4 A,B,J, °कल्पोऽ° 5 A,B,J ल्प° 6 H.V व्रजेदिति° 7. A,B,J °हव्यति 8 H,V Omit गुह्यम् 9. H,V °प्ते

**नाऽसदिति**। असच्छास्त्रेषु अनात्मपरेषु जीविकां नक्षत्रविद्यादिवृत्तिं, वादिवादान्[1] जल्पवितण्डादिनिष्ठान् कञ्च कमपि पक्षं निर्बन्धेन न संश्रयेत्।।७।।

**नेति**। शिष्यान्[2] नाऽनुबध्नीत प्रलोभनादिना बलान्नापादयेत्, आरम्भान्मठादिव्यापारान्।।८।।

परमहंसस्य विशेषमाह–**न यतेरिति**। न यतेराश्रमो धर्मार्थः। कथम्भूतस्य यतेः[3] ? महात्मनः। तस्य लक्षणं शान्तस्येत्यादि। प्राय इत्यस्याऽयं भावः-ज्ञानोत्पत्तिपर्यन्तं बहूदकादि लिङ्गमाश्रित्य सत्त्वशुद्ध्यर्थं यमान्नियमांश्चाचरन्नेव ज्ञानोत्पत्तौ यतेत, उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति। यमाश्च स्वत एव स्युः। अतस्तदा लिङ्गादिभिः प्रयोजनाभावात् लोकसङ्ग्रहार्थं धारयेद्वा त्यजेद्वेति।।९।।

तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह-**अव्यक्तेति**। न बहिः व्यक्तं लिङ्गं यस्य व्यक्तोऽर्थः प्रयोजनमात्मानुसन्धानं यस्य सः। [4]मनीष्यपि[-4] उन्मत्तवद्बालवच्च, कविरपि मूकवदात्मानं नृणां तत्त्व[5]दृष्ट्या दर्शयेत्। ते यथा उन्मत्तादिरूपं मन्येरन् तथा वर्तेत। स्वदृष्ट्येति पाठे बाह्यानुसन्धानाभावेनेत्यर्थः।।१०।।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं स्वधर्मानुष्ठाने तुर्याश्रमधर्मे चाऽशक्तस्य वानप्रस्थस्यैवं अनुसन्धानपूर्वकानशनव्रतेन देहत्याग उक्तः। अथ तच्छक्तस्य तुर्याश्रमपरिग्रहं वदंस्तद्धर्मानाह त्रयोदशेना[6]ध्यायेन-**कल्प**[7] इति। आश्रमान्तरधर्माननुष्ठातुं[8] समर्थश्चेदेवमनुसन्दधत्परिव्रज्य सन्न्यस्य देहमात्रेणावशेषितः देहातिरिक्तं तदनुबन्धि सर्वं परित्यज्येत्यर्थः। ग्रामैकरात्रविधिना एकैकस्मिन् ग्रामे एकैकरात्रनयनविधिना निरपेक्षो महीं चरेत्।।१।।

यद्यसौ परिव्राट् त्यक्तं देहाद्यतिरिक्तं किञ्चित्[9] बिभृयाच्चेत् तर्हि कौपीनमाच्छाद्यते येन तच्चवासः परं केवलं बिभृयात्। दण्डकमण्डलुभ्यामन्यत्किञ्चिदपि अनापदि न बिभृयात्। दण्डपात्रग्रहणमुपवीत कटिसूत्रादेरप्यावश्यकस्योपलक्षणम्। अनापदीत्यनेन शीताद्यसहिष्णुत्वरूपापदि तु किञ्चित्तन्निवारकं वासोऽन्तरादिकमपि बिभृयादिति सूचितम्।।२।।

अनपाश्रयः परित्यक्तनियतनिवासदेशः एकोऽसहायः भिक्षुः भिक्षान्नोपजीवी आत्मारामश्चरेत्। सर्वेति।

---

1. A,B,J वाद° 2. H,V Omit शिष्यान् 3. H,V Omit यतेः 4- -4 A,B,J मनीषी 5 A,B,J Omit तत्त्व 6 W Omits अध्यायेन 7 A,T °ल्प 8. A,B,T °न 9. A,B,T °ञ्चन

सर्वभूतेषु तरतमेषु सुहृद्भगवदात्मकत्वानुसन्धानेन नितरामनुकूलः शान्तः क्रोधरहितः नारायण एव[1] परायणं प्राप्यं प्रापकमाधारश्चेति अध्यवसाययुक्त इत्यर्थः[2]।।३।।

सदसतः चिदचिद्भ्यां परे विलक्षणे अत एवाऽव्यये स्वरूपतः स्वभावतश्च विकाररहिते आत्मनि परमात्मनि अदः इदं विश्वं पश्येत्तदायत्तसत्तास्थितिप्रवृत्तिमत्त्वेन तच्छरीरत्वेन च पश्येदित्यर्थः। तथा परं ब्रह्म आत्मानं परमात्मानं सदसन्मये चिदचिदात्मके सर्वत्र जगति नियन्तृतयाऽऽत्मतया च स्थितं पश्येत्। एवं वासुदेव शब्दार्थानुसन्धानमुक्तम्।।४।।

**सुप्तेति**। सुप्तप्रबोधयोस्सन्धौ, सायंप्रातरित्यर्थः। यद्वा, तयोस्सन्धिः मध्यमावस्था स्वप्नावस्थायामित्यर्थः। तदानीं शयानदेहादात्मनो[3]ऽप्यतिरेकः सुग्रहः। परमात्मनो विचित्रसृष्टियोगश्च-"न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते" इति श्रूयते[4]। एवञ्च सुप्तप्रबोधयोस्सन्धौ स्वप्नावस्थायामात्मदृक् देहविलक्षणप्रत्यगात्मस्वरूपविमर्शन परः आत्मनः परमात्मनो गतिं विचित्र पथरथ योगादि स्रष्टृत्वादि प्रकारं पश्येदनुसन्दधीत। तथा बन्धं मोक्षञ्च मायामात्रं न वस्तुत इति पश्येत्, बन्धादिकमीश्वरसङ्कल्परूप ज्ञानाधीनं नत्वात्मस्वरूपप्रयुक्तमिति पश्येदित्यर्थः। मायाशब्दश्च ज्ञानपर्यायः "माया वयुनं ज्ञानम्" (वेद.नि.3-9) इति नैघण्टुकाः। बन्धमोक्षयोश्च परमात्मसङ्कल्पाधीनत्वं सूचितम्। "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" (ब्र.सू.3-1-4) इति बन्धमोक्षयोः प्रकृत्यन्वयव्यतिरेकरूपत्वाच्च मायामात्रत्वम्। ननु कथं मोक्षस्य स्वरूपप्रयुक्तत्वाभावः? बन्धप्रतियोगित्वादिति ब्रूमः। न ह्यबद्धस्य मोक्षसम्भवः।।५।।

ध्रुवं निश्चितं मृत्युम् अध्रुवमस्थिरं जीवितञ्च नाऽभिनन्देत् मृत्युमिति दृष्टान्तार्थं वा। यथा मृत्युं नाऽभिनन्दति तथा अध्रुवं जीवितमपि नाऽभिनन्देदिति परं केवलन्तु भूतानां प्रभवाप्ययौ यस्मात्, तमुत्पत्तिप्रलयहेतुं कालमेव प्रतीक्षेत कालगतिमेवाऽऽलोचयेदित्यर्थः।।६।।

असच्छास्त्रेषु अनध्यात्मशास्त्रेषु न सज्जेत न सक्तो भवेत्। जीविकां जीवनोपायभूतां वृत्तिं नोपजीवेत् अतिवादान् जल्पवितण्डादिनिष्ठान् तर्कान् त्यजेत्। कमपिपक्षमाग्रहेण नाऽऽश्रयेत्।।७।।

शिष्यान्नाऽनुबध्नीत वित्तलोभाभावादिति[5] भावः। बहून् ग्रन्थान् नैवाऽभ्यसेत् नैव पठेत्। व्याख्यां नोपयुञ्जीत

---

1 W Omits एव 2 W Omits इत्यर्थः 3 A,B,T °हात्म° 4 A,B,T श्रुतिः 5 A,B,T तद्वि°

न पाठयेदित्यर्थः। चित्तस्याऽन्यपरत्वप्रसङ्गादिति भावः। आरम्भान् माठपत्याद्यारम्भान् क्वचिदपि नाऽऽरभेत् न कुर्यात्। निग्रहानुग्रहादि[1]वैषम्यप्रसङ्गादिति भावः, यद्वा, आरम्भान् गृहाद्यारम्भान् नाऽऽरभेदित्यर्थः[-1]।।८।।

शान्तस्य समचित्तस्य महात्मनो यतेराश्रमः प्रायो न धर्महेतुः, अपि तु ज्ञानप्रयोजनकः। अतो धर्मं बिभृयाद्वा त्यजेद्वा। भरणत्यागौ व्यवस्थितविकल्पौ; ज्ञानहीनः सन्न्यासाश्रमनिष्ठः धर्मं प्रयोजनत्वेन बिभृयात्, ज्ञानवांस्तु धर्माख्यं फलं त्यजेदित्यर्थः। यद्वा, उपवासादिदेहक्लेशकररूपधर्मः शरीरदौर्बल्यमुखेन योगविघातु[2]को न चेत् तं[3] बिभृयात्, विघातु[4]कश्चेत्तं त्यजेदित्यर्थः। यद्वा ननु शिष्यानुबन्धनग्रन्थाभ्यासव्याख्योपयोजनादिभिः कश्चिद्धर्म एव आर्जितः स्यादिति किमर्थं ते निषिध्यन्ते? इत्यत्राऽऽह-**नेति**। यदि यतेराश्रमो धर्मार्थस्स्यात् तर्हि कर्तव्याः स्युः शिष्यानुबन्धनादयः। स तु प्रायशो न धर्महेतुः। यत्याश्रमस्य धर्महेतुत्वाभावे हेतुं वदन् तं विशिनष्टि-शान्तस्येति। शान्तस्य जितेन्द्रियस्य धर्मसाध्यैहिकामुष्मिकशब्दादिविषयभोगे[5]च्छारहितस्य समचित्तस्य अधर्मस्येव धर्मस्याऽपि स्वफलजननद्वारा मुक्तिप्रतिबन्धकत्वज्ञानवत्त्वेन धर्माधर्मयोस्समचित्तस्य। प्राय इत्यनेन क्वचिद्यत्याश्रमस्याऽपि धर्महेतुत्वमस्त्येवेति सूचितम्। अतो यदि यतिः धर्मप्रयोजनकयत्याश्रमनिष्ठश्चेत् शिष्यानुबन्धनादीन् बिभृयात्। धर्महेतुत्वाभावे तु त्यजेदित्यर्थः।।९।।

ननु शिष्यानुबन्धनाद्यभावे स्वस्य ज्ञानित्वादिमाहात्म्यं न प्रकाशितं स्या[6]दित्यत आह-**अव्यक्तलिङ्ग इति**। अव्यक्तलिङ्गोऽस्फुटचिह्नः स्वमाहात्म्यमनाविष्कुर्वन् वर्तेत यतिरिति भावः। तथा च शारीरकं सूत्रम्-"अनाविष्कुर्वन्नन्वयात्" (ब्र.सू. 3-4-50) इति। श्रुतिश्च-"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" (बृह.उ.3-5-1) इति। बालस्य कर्म स्वमाहात्म्यानाविष्करणरूपं बाल्यं तेन तिष्ठासेदित्यर्थः। ज्ञानित्वाद्यनाविष्काराभिप्रायेण दृष्टान्तयति उन्मत्तबालवदिति, उन्मत्तवत् बालवच्च। किञ्च, अव्यक्तार्थः परैरविदित प्रयोजनः मुनिरालम्बसंशीलनशीलश्च वर्तेत। आलम्बसंशीलनं शुभाश्रयपरिशीलनम्। एतदेव "बाल्यञ्च पाण्डित्यञ्च निर्विद्याऽथ मुनिर्भवति" (बृह.उ. 3-5-1) इति मुनिशब्देन विहितम्, तद्विषयकश्चेदं सूत्रम्-"सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्" (ब्र.सू.3-4-46) इति। न त्वत्र बालवदिति दृष्टान्तेन बालस्य यत्कर्म कामचारादिकं तदभिप्रेतम्। "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्" (कठ.उ. 2-4) इति दुश्चरितस्य परिनिष्पन्नसाधनविरोधित्वश्रवणात्। मनीष्युन्मत्तबालवदिति [7]पाठान्तरम्। [8]तत्र मनीष्यप्यु-

1--1 W Omits 2. A,B,T °तको 3 A,B,T Omit तं 4 A,B,T °त° 5 A,B,T °गादि 6 A T °दिति,B दित 7. A,B,T पाठं 8 A,B,T Omit तत्र

न्मत्तादिवच्चरेदिति यथोक्त एवार्थः। कविर्विद्वानपि सुनिपुणं भाषितुं समर्थोऽपि स्वमात्मानं मूकवत्[1] मूकमिव नृणां दृष्ट्या दर्शयेत् यथोन्मत्तादिरूपं मन्येरन् तथा वर्तेत। स्वदृष्ट्येति पाठे स्वदृष्ट्या देहविलक्षणया[2] स्वात्मदृष्ट्येत्यर्थः।।१०।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

क्रमप्राप्तं यतिधर्मं निरूपयति-**कल्प** इति। एवमुक्तं कृच्छ्रं सोढुं कल्पः, अप्यर्थस्तुशब्दः। तर्हि परिव्रज्य सन्न्यस्य महीं चरेदित्यन्वयः। देहमात्रावशेषित इत्यनेन प्रव्रजनं विशिनष्टि-"अधीतवेदो जपकृत्पुत्रवानन्ददोऽग्निमान्। शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नाऽन्यथा" (याज्ञ.स्मृ.3.5.7) इति नियमं तुशब्देन वारयति। "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" (जाबा.उ. 4) इति विशेषविधानात्, ब्रह्मचारिणोऽपि तुर्याश्रमग्रहणोपपत्तेः। अत एव कल्प इत्युक्तम्, कामक्रोधादिसहजशत्रुजयसमर्थ इत्यर्थः। "उपनीय गुरुश्शिष्यं महाव्याहृतिपूर्वकम्। वेदमध्यापयेत्पश्चात् शौचाचारांश्च शिक्षयेत्" (याज्ञ,स्मृ. 1-15) इति वचनात्। ब्रह्मचारिणोऽध्ययन प्रारम्भेणाऽधीतवेदत्वं युज्यत इति वा। सन्न्यासाश्रमश्चतुर्धा भिद्यते-कुटीचको बहूदको हंसः परमहंस इति। तत्र परमहंसधर्मः कथ्यत इत्यर्थद्योतको वा तुशब्दो, निरपेक्षः अलोलुपः।।१।।

देहमात्रावशेषित इत्यस्यापवादमाह-**बिभृयादिति**। यद्यसौ भिक्षुरप्सु त्यक्तं वासः परं पश्चात्प्रतिनिधि लक्षणं बिभृयात् धर्तुमिच्छेत् तर्हि कौपीनलक्षणमाच्छादानं बिभृयात्। अथवा कौपीनं शीतातपनिवारकमेकमा-च्छादनञ्च बिभृयात्। परं न बिभृया दित्यर्थः। "शीतातपनिवारार्थमेकमाच्छादनं यतेः। कौपीनात्परमित्याहुरेके नाऽन्यद्विना वपुः" इति वचनात्। कौपीनाच्छादनञ्चेत्येकवद्भावः। नन्वयं यतिरिति केन ज्ञातुं शक्येत? तत्राऽऽह-न लिङ्गेति। लिङ्गदण्डाभ्यां विना किञ्चिन्न बिभृयात्। लिङ्गं चक्रशङ्खादिमुद्राधारणं कमण्डल्वादिकं वा। "सर्वभूतहितश्शान्तस्त्रिदण्डी सकमण्डलुः" (याज्ञ.स्मृ.3-58) इति वचनात्। वाक्कायचेतसां यमनं त्रिदण्डित्वम्। लिङ्गदण्डाभ्यामिति विशेषणादेक एव तु लक्षणो दण्डोऽन्यथा परमहंसत्वं न स्यात्-"दण्डा वाग्देहचेतसाम्" (भाग.11-18-17) इति वक्ष्यति।।२।।

अनपाश्रयः ग्रामाद्यावासविधुरः। यथाऽऽह याज्ञवल्क्यः "एकारामः परिव्रज्य भैक्षार्थं ग्राममाश्रयेत्। अप्रमत्तश्चरेद्भैक्षं सायाह्नेऽनुपलक्षितः" (याज्ञ.स्मृ.13-58,54) इति वचनात्।।३।।

1. A.B.T Omit मूकवत् 2 W °णस्वा°

नारायणपरत्वं दर्शयति-**पश्येदिति**। अदो विश्वमात्मनि पश्येत्, तदाधारत्वेन स्थितमिति शेषः। आत्मनीति जीवः किं न स्यात्? इति तत्राऽऽह-पर इति। सदसतः परे उत्कर्ष वाचित्वेन विकल्पात् सर्वनामसंज्ञा नाऽस्ति। जीवस्य संसारित्वेन अनुत्कृष्टत्वात् नैतादृशोऽन्योऽस्तीत्याह-अद्वये इति । नैतावता पूर्यत इत्याह-आत्मानश्चेति। सर्वत्र सदसन्मये जगति अवसितमात्मानं परं ब्रह्म पश्येत् ईदृशं नाम चिन्तनम्।।४।।

सुप्तप्रबोधयोः सुप्तिजाग्रतोः सन्धौ अरुणोदयकाले शयनप्रारम्भकाले च आत्मनः स्वस्य गतिं "सतां सौम्य तदा सम्पन्नो भवति" (छान्दो.उ. 6-8-1) "अतः प्रबोधोऽस्मात्" (ब्र.सू.3-2-8) इत्यादि प्रमाणबलात् परमात्माधीनलक्षणां स्थितिं हरेश्च स्वातन्त्र्यलक्षणं पश्यन् बन्धं मोक्षं मायामात्रं अयं हरेरिच्छया निर्मितं त्रातं पश्यन्वस्तुतः स्वातन्त्र्येण नाऽन्याधीनत्वेन पश्येत्।।५।।

मृत्युं ध्रुवमिति नाऽभिनन्देत् स्वजीवितं वा ध्रुवमिति। तर्हि कथं निश्चयः? इति तत्राऽऽह-कालमिति। भूतानां प्रभवाप्ययं कालाख्यभगवदधीनं प्रतीक्षेत। किं बहुना? सर्वं भगवदधीनमिति पश्येत्।।६।।

जीविकाश्चेतनादिलक्षणां वेदवादमतीत्य तर्कान् वैशेषिकादिशास्त्रनिष्ठितान्, अप्रयोजकं पक्षं सिद्धान्तम् "नाऽप्रयोजनपक्षीस्यान्न वृथा शिष्यबन्धकृत्। न चोदासीनशास्त्राणि न विरुद्धानि नाऽभ्यसेत्" (समयाचारे)।।७।।

"न व्याख्ययोपजीवेत न निषिद्धान्समाचरेत्। एवम्भूतो यतिर्याति तदेकशरणो हरिम्" (समयाचारे) इति निर्णीतमाने बहून् ग्रन्थान् वैष्णवाभासान् मोक्षविरुद्धान् वात्स्यायनादीन् ज्योतिश्शास्त्रादीन्। व्याख्ययोपजीवनं न कुर्यात्, आरम्भान् निषिद्धान् कृष्यादीन्।।८।।

कृष्यादिनोत्पन्नद्रव्येण दानादिधर्मसम्पादनोपपत्तेः कथमारम्भान्नारभेत इत्युच्यत इति तत्राऽऽह-**न यतेरिति**। प्रायो यतेराश्रमो धर्महेतुर्न भवति, किन्तु निरन्तरोपासनया ज्ञानहेतुः। ज्ञानाधिकारे प्रवृत्तस्य कर्माधिकारप्रवृत्तिरधःपात हेतुः स्यात् ईश्वराज्ञोल्लङ्घनदोषापातात्। समे ब्रह्मणि चित्तं सततस्मरणसमर्थमन्तःकरणं यस्य स तथा। तस्यैवं विधस्य यतेः आश्रमलक्षणदण्डादिसाधारणं न चाऽवश्यकमित्याह-बिभृयादिति, यदाऽऽह याज्ञवल्क्यः-"नाऽऽश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः। अतो यदात्मनः पथ्यं परस्य न तदाचरेत्" (याज्ञ.स्मृ. 3-65)।।९।।

बाह्यलिङ्गाभावेऽपि आन्तरं लिङ्गमस्तीत्याह-**अव्यक्तेति**। अव्यक्तं जनेनाऽज्ञातं मानसं क्लृप्तं लिङ्गं यस्य स तथा। विद्यातपआदिभिरप्रकटितस्वरूपो वा। तर्ह्यस्य किं वक्तव्यमत्राऽऽह - व्यक्तार्थ इति। अपरोक्षीकृत

भगवत्स्वरूप लक्षणपुरुषार्थः। अनेन लिङ्गादिदण्डधारणमेवंविधस्य नावश्यकमन्यस्येत्युक्तं भवति। मनीषी निरन्तरमननशीलः। अव्यक्तस्वरूपं दर्शयति-अदृश्यः प्राकृतजना ज्ञेयः। कविरतिक्रान्तदर्शी।।१०।।

**अत्राऽप्युदाहरन्तीम मितिहासं पुरातनम्।**
**प्रह्लादस्य च संवादं मुनेराजगरस्य च।।११।।**

**तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि।**
**रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ।।१२।।**

**ददर्श लोकान्विचरन् लोकतत्त्वविवित्सया।**
**वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः।।१३।।**

**कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः।**
**[1-]न विदन्ति जना[-1] यं वै सोऽसाविति नवेति च।।१४।।**

**तं नत्वाऽभ्यर्च्य विधिवत्पादयोश्शिरसा स्पृशन्।**
**विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः।।१५।।**

**[2-]प्रह्लाद उवाच[-2]।**

**बिभर्षिकायं पीवानं सोद्यमो भोगवान्यथा।**
**वित्तं[3]ह्येहोद्यम[4]वतां भोगो वित्तव[5]तां नु ह।।**
**भोगिनां खलु देहोऽयं पीवा भवति नाऽन्यथा।।१६।।**

**श्रीध०** परमहंसधर्ममेवेतिहासेन स्फुटयति-**अत्राऽपीति** यावदध्यायसमाप्ति। आजगरव्रतस्य मुनेश्च।।११।।

**तमिति**। धरोपस्थे भूपृष्ठे सह्याद्रेस्तटे, रजोभिर्धूसरैस्तनूदेशैर्देहावयवैः, निगूढममलं तेजे यस्य तम्।।१२,१३।।

**कर्मणेति**। कर्मादिभिर्जना यं न विदुस्तं पादयोश्शिरसा स्पृशन्नत्वा अप्राक्षी दित्युत्त[6]रेणाऽन्वयः।।१४,१५।।

---

1--1 M,Ma नाविन्दत जनो 2--2 A,B,G,J,T Omit 3. A,B,G,J,T °त्तञ्चैवोद्य ;M,Ma °त्तं नेवाद्य 4. M,Ma भवतो 5. A,B,G,J,Ma,Ma,T वतामिह 6.H,V °त्यन्वयः।

बिभर्षीति उद्यमसहित इव भोगवानिव पीवानं स्थूलं देहं धारयसि, तत्र हेतुं वदेति तृतीयेनाऽन्वयः। उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राऽऽह-वित्तञ्चेति।।१६।।

**वीर०** आजगरव्रतस्य सन्न्यासाश्रमानपेक्षितत्वेऽपि यदृच्छयोपनतसन्तोषस्य मोक्षविरोधिप्रवृत्त्युपरतेः ज्ञानानाविष्कारस्य च तदपेक्षितत्वात् तदवगमनाय तदितिहासं प्रस्तौति **अत्रापीति**। अत्र स्वमाहात्म्यानाविष्कारादिना ज्ञानिनोऽवस्थाने इतिहासमपि दृष्टान्तत्वेनोदाहरन्ति [1]निदर्शयन्ति इतिहासं विशिनष्टि-पुरातनं न त्वस्मत्कपोलकल्पितं प्रह्लादस्याजगरस्य अजगरव्रत[2]स्थस्य मुनेश्च संवादरूपम्।।११।।

तमजगरव्रतस्थं सह्यपर्वतस्य सानुनि कावेर्यां कावेरीतटे धरोपस्थे भूपृष्ठे शयानं रजस्वलैर्धूलिधूसरैस्तनूदेशैः देहावयवैर्निगूढं प्रच्छन्नममलं तेजो देहकान्तिर्यस्य तम्, प्रह्लादो ददर्श[3]ेत्यन्वयः।।१२।।

कथम्भूतः? भगवत्प्रियः कतिपयैरमात्यैः परिवृतो लोकानां तत्त्वस्य विवित्सया वेत्तुमिच्छया चरन् कर्मादिभिः, यं सोऽसौ भवति न भवति वेत्येवं जनाः न विदुः, तं पादयोः शिरसा स्पृशन् नत्वा विधिवदभ्यर्च्य, वेत्तुमिच्छुर्महाभागवतः प्रह्लाद इदं वक्ष्यमाणमप्राक्षीत्, पृष्टवान्।।१३,१५।।

तदेवाऽऽह [4-]बिभर्षीति सार्धैस्त्रिभिः[-4]। [5]सोद्यमः उद्यमसहितः भोगवान् देहपोषणशीलो यथा तद्वत्त्वं पीवानं कायं देहं बिभर्षि-[6-]इति सन्देहः।[-6] ननु उद्यमं विनैव मम [7-]प्रारब्धवशात् अत्रैव भोगः सम्प्राप्नोतीत्यत्राऽऽह[-7]-इहलोके तावदुद्यमवतामेव वित्तं [8-]धनं भवति[-8], वित्तवतामेव भोगः। त्वन्तु निरुद्यमः। कुतस्तव वित्तं, कुतस्तरां भोग इति भावः। अन्तरेणाऽपि भोगं मम देहः पीवा इत्यत्राऽऽह-[9-]भोगिनां भोगवतामिव[-9] देहः पीवा भवति [10]भोगेनैव पीवा भवति, अन्यथा तु कृशीभवति, तत्कथमन्तरेणाऽपि भोगं देहपुष्टिरिति भावः।।१६।।

**विज०** अत्रापरोक्षज्ञानाय यत्याचारे इतिहासशब्दार्थमाह-**पुरातनमिति**। आजगरस्य अजगरव्रतधारिणः।।११।।

सह्यसानुनि सह्याख्यपर्वततटे, कावेर्यां कावेर्युत्पत्तिक्षेत्रे, तनूदेशैः शरीरावयवैः।।१२।।

विवित्सया वेदितुमिच्छया।।१३।।

स एव देवदत्तोऽसौ, न वेति नाऽविन्दत न ज्ञातवान्।।१४,१५।।

---

1. W Omits नि 2. B परस्य 3. W Omits इत्यन्वयः 4- -4 बिभर्षीत्यादिना 5. W omits सोद्यमः 6- -6 W Omits 7- -7 W भोगोऽस्तीत्यत्राऽऽह

8- -8 W Omits 9- -9 W भोगिनामेव 10. A,B,T ^न वै।

भोगवान् सम्पन्नः। ननु परिणममानस्य देहस्य पीनत्वं विशेषः। परिणामोऽपि कस्माच्चित्स्यात् मदिरासेव्यस्येव, किमत्र चोद्यम्; अत्राऽऽह-वित्तमिति। सत्यम्, कृष्याद्युद्योगवतो देहिनो व्रीह्यादि वित्तं भवतीह लोके, तद्वतां भोगः खलु, भोगिनामयं देहः पीनो भवति, हेत्वन्तरं नाऽस्तीत्याह-नाऽन्यथेति।।१६।।

न ते शयानस्य निरुद्यमस्य ब्रह्मन्[1] नु हार्थो यत एव भोगाः[2]।
अभोगिनोऽयं तव विप्रदेहः पीवा यतस्तद्वद नः क्षमञ्चेत्।।१७।।

कविः कल्यो[3] निपुणदृक् चित्रप्रियकथस्समः।
लोकस्य कुर्वतः कर्म [4]शेषे तद्वीक्षिताऽपि वा[-4]।।१८।।

नारद उवाच

स इत्थं दैत्यपतिना परिपृष्टो महामुनिः।
स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः।।१९।।

ब्राह्मण उवाच

वेदेदमसुरश्रेष्ठ! भवान्नन्वार्यसम्मतः।
ईहोपरमयोर्नृणां पदान्[5]यध्यात्मचक्षुषा[6]।।२०।।

यस्य नारायणो देवो भगवान् हृद्गतस्सदा।
भक्त्या केवलया[7] तुष्टो धुनोति ध्वान्तमर्कवत्।।२१।।

अथाऽऽपि ब्रूमहे प्रश्नांस्तव राजन्यथाश्रुतम्।
सम्भाष[8]णीयो हि भवानात्मन श्शुद्धिमिच्छता[9]।।२२।।

तृष्णया भववाहिन्या [10]योग्यकामै[-10] रपूरया[11]।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः।।२३।।

यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन्।
स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च।।२४।।

---

1. M,Ma °त्रिहा° 2. A,B,G,J,T °गः 3. A,B,G,J,M,Ma,T कल्पो 4--4 M,Ma शेषे नद्वेक्षि नौषि वा। 5. H,M,Ma,V पदमध्या° 6. H,V °षाम्° 7. A,B,G, J,T °याऽज्ञानं; M,Ma °याऽऽश्लिष्टो 8. A,B,G,J,T वर्नी° 9. A,B,G,J,T °ताम् 10--10 A,B,G,J,T योग्यैः कामै; M,Ma ग्राम्यकामै° 11.M.Ma °र्णया।

**श्रीध० नेति**। नु इति निश्चये, ह इति प्रसिद्धौ। तवाऽर्थो नास्तीति प्रसिद्धमेवेत्यर्थः। यतोऽर्थादेव यतो हेतोः पीवा। क्षमं योग्यश्चेत्।।१७।।

किञ्च, वित्तार्जनाद्यसमर्थोऽपि अयं जनः तदर्थमुद्यमं करोति, त्वन्तु समर्थोऽपि किमिति न करोषीत्याह- **कविरिति**। कविर्विद्वान् कल्यो[1] दक्षः निपुणदृक्चतुरः। चित्राः प्रिया लोकरञ्जनाः कथा यस्य। तथाऽपि लोकस्य कर्म कुर्वतः सतः शेषे। तद्वीक्षिताऽपि तत्तु[2] सर्वं पश्यन्नपि। [3]पाठान्तरे न द्वेक्षि तत्कर्म न द्वेक्षि नौषि वा न च स्तौषीत्यर्थः[3]।।१८।।

**सेति**। तस्य वागेव अमृतं, तेन यन्त्रितो वशीकृतस्सन् प्राह[4]।।१९।।

**वेदेति**। अध्यात्मचक्षुषाऽन्तर्दृष्ट्या भवान्वेदैव। आर्याणां ज्ञानिनां सम्मतो ननु भवान्। इदमिति यदुक्तं तदेवाह–**नृणां** ईहोपरमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानीत्यर्थः।।२०।।

वेदेत्यत्र हेतुः-**यस्येति**। हृदि प्रविष्टस्सन् अज्ञानं धुनोति [5]नाशयतीति[5], अर्को यथा बहिर्ध्वान्तम्।।२१।।

**अथेति**। यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम्।।२२।।

लोकः कर्मसु प्रवर्तते, त्वन्तु निवृत्तस्सन् किं शेषे इति यदुक्तं तत्राऽऽह-**तृष्णयेति** चतुर्भिः। भवप्रवाहकारिण्या यथोचितैरपि विषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानोऽहं पूर्वं नानायोनिषु प्रवेशितः।।२३।।

**यदृच्छयेति**। तयैव तृष्णयेमं[6] लोकं मनुष्यदेहं यदृच्छया प्रापितः। कथम्भूतं लोकम्? धर्मेण स्वर्गस्य द्वारं साधनम्। अधर्मेण तिरश्चां श्वसूकरादियोनेर्द्वारम्। मिश्राभ्यां ताभ्यां पुनरप्यस्य मनुष्यत्वस्य द्वारम्। सर्वतो निवृत्त्या अपवर्गस्य द्वारमित्यर्थः।।२४।।

**वीर०** [7]तदेव विवृण्वन् पृच्छति-**नेति**[7]। हे ब्रह्मन्! शयानस्य अत एव निरुद्यमस्य निर्व्यापारस्य तव। ननु हाऽर्थः नूनं वित्तं नास्ति हि, नु इति निश्चये, ह इति प्रसिद्धौ। तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः। यतो वित्तादेव हेतोर्भोगाः देहपोषणादयो भवन्ति। अतो भोगरहितस्य तव देहो हे विप्र! यतो हेतोः पीवाऽभवत् तत्कारणं नोऽस्माकं [8]क्षमञ्चेत् श्रोतुं योग्यश्चेत् वद[8]।।१७।।

---

1. A,B,J कल्पो 2. A,B,J Omit तु 3--3 H,V Omit 4. H,V Omit प्राह 5--5 A,H,J,V Omit 6. H,V Omit तृष्णया। 7- -7 W Omits

8- -8 A,B,T श्रोतुमिति शेषः। क्षमं योग्यश्चेत्तर्हि वद कथय, अगोप्यश्चेत्तर्हि वर्णयेत्यर्थः।

किञ्च, त्वं कविर्विद्वान् कल्य[1]: दक्ष: निपुणदृक् चतुर: चित्रा: प्रिया: लोकरञ्जना: कथा यस्य स:, एवम्भूतोऽपि लोकस्य कर्म व्यापारं कुर्वतस्सत: तद्वीक्षिताऽपि सम उदासीनस्सन् तूष्णीं शेषे शयानोऽसि, तत्कारणञ्च वदेति भाव:।।१८।।

एवं[2] दैत्यपतिना प्रह्लादेन पृष्टस्सन् महामुनि: तस्य प्रह्लादस्य वागेवाऽमृतं तेन यन्त्रित: चोदित: स्मयमान: तमभ्याहाऽभिमुखमुक्तवान्।।१९।।

तदेवाऽऽह-यावदध्यायसमाप्ति **वेदेति**। असुरश्रेष्ठ! इदं किन्तत् नृणामीहोपरमयो: प्रवृत्तिनिवृत्त्यो: पदानि कारणानीति यत्तदिदं भवानध्यात्मचक्षुषा सर्वलोकमनोभिप्रायविषयकज्ञानेन वेद जानात्येव। कुत:? यतस्त्वमार्याणामतीन्द्रियदर्शिनां सम्मतोऽग्रेसर:।।२०।।

किञ्च। भगवान् षाड्गुण्यपूर्ण: स्वतेजसा दीप्यमानो नारायणोऽनन्यप्रयोजनया भक्त्या तुष्टो यस्य त्वादृशस्य सदा हृद्गतस्सन् अर्कवत् सूर्यवत् ध्वान्तमज्ञानरूपमन्धकारं धुनोति निरस्यति। निश्शेषनिरस्ताज्ञानानां सर्वज्ञानां भवादृशां किमविदितमस्तीति भाव:।।२१।।

यद्यप्येवम्, अथाऽपि हे राजन्! यथाश्रुतं तव प्रश्नान् प्रति ब्रूमहे प्रश्नानामुत्तराणि वदाम इत्यर्थ:। यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम्। आत्मन: शुद्धिमिच्छता पुंसा भवान्[3] त्वं अवश्यं सम्भाषणीयो हि।।२२।।

लोक: कर्मसु प्रवर्तते, त्वन्तु निवृत्तस्सन् किं शेषे इति यत्पृष्टं तत्र तावदुत्तरमाह-**तृष्णयेति** चतुर्भि:। अहन्तावत् योग्यैर्यथोचितैरपि कामैरपूरया पूरयितुमशक्यया भववाहिन्या जन्मपरम्पराकारिण्या तृष्णया विषयेच्छया कर्माणि पुण्यपापात्मकानि कार्यमाण: कर्मसु प्रवर्तमान: पूर्वं नानायोनिषु योजित: प्रयोजित:[4] प्रवेशित:।।२३।।

तैरेव कर्मभि: भ्रमन् यदृच्छया दैवादिमं लोकं मुनुष्यजन्मप्रापित:। लोकं विशिनष्टि–स्वर्गमोक्षयो: तिरश्चां तिर्यक्त्वानां पुनरस्य मनुष्यत्वस्य च प्राप्ते: द्वारं कारणम्। धर्मेण स्वर्गस्य द्वारं ज्ञानसम्पादनेन तु अपवर्गस्य, अधर्मेण तिरश्च:[5] तिर्यक्त्वस्य पूर्वसजातीयसुकृताचरणेन तु पुनर्मनुष्यत्वस्य च कारणमित्यर्थ:।।२४।।

**विज०** प्रकृतेऽपि तथा स्यादिति तत्राऽऽह-**न ते** इति। अर्थो वित्तं, यतो वित्तात्पीवेति यत्तस्मात् बत विस्मयो जायते। लोके निमित्तान्तराभावे सति पीनत्वं भोगित्वेन दृष्टम्। अत्र भोगित्वं न दृश्यते पीनत्वं तु दृश्यते। तस्मिन्निमित्तान्तरमस्ति तदस्माकं श्रोतुं क्षमञ्चेद्वदेत्यन्वय:।।१७।।

1. A,B,T °ल्प: 2. W इत्थं 3. W Omits भवान् 4. A,B,T Omit प्रयोजित: 5. W Omits तिरश्च:।

इतोऽपि निमित्तान्तरेण भाव्यम्, अन्यथा कवित्वादयो भोगिगुणा न स्युरित्याह-**कविरिति**। न चेत्तर्हि वेदाननुभवसि "अन्नमयं हि सौम्य! मन आपोमयः प्राणस्तेजोमयी वाक्" (छान्दो. उ. 6-5-1) इति श्रुतेः "यः कण्टकैर्वितुदति चन्दनैर्यश्च लिप्यति।अकृष्टोऽपरिकृष्टश्च समस्तस्य स तस्य च" इति श्रुतेः। सर्वस्य समः न द्वेक्षि न द्वेषं करोषि, नौषि स्तुतिं करोषि अनेन समत्त्वं विवृतण्।।१८।।

इतरत्र विरक्तया भक्त्या श्रीनारायणचरणारविन्दस्मरणमकरन्दपानमेव पीनत्वे निमित्तमिति परिहारमभिप्रेत्य प्रह्लादं प्रति ब्रूते इत्याह-नारद इति।।१९।।

ज्ञानिष्वेको भवानिदं वेदेत्यन्वयः। इदमिति किं केन साधनेन वेद, अत्राऽऽह-**वेदेति**। भवानध्यात्मचक्षुषा परम्मात्मनुग्रहोत्पन्नज्ञानेन नृणामीहोपरमयोः प्रवृत्तिनिवृत्तिलक्षणयोर्भागयोः पदं निश्चितं विषयस्थानं वेद, इति शेषः।।२०।।

देहिनामज्ञानसम्भवात् तेष्वेकत्वान्ममाऽपि तद्विषयं ज्ञानं नास्तीति किं न स्यादित्याशङ्क्य, सत्यम्, विशेषोऽस्ति तवेत्याह-**यस्येति**। हृद्गतत्वं सामान्यमिति मत्वा श्लिष्ट इत्युक्तं केवलया फलानामाकाङ्क्षया ध्वान्तमज्ञानलक्षणम् अन्यत्रान्धकारमज्ञानं तत्त्वाप्रतिपत्तौ कारणत्वेन दृष्टं यतस्तव नास्ति तस्माद्भवान् जानातीत्यर्थः।।२१।।

यद्यपि वक्तव्यांशो नास्ति अथाऽपि इदमप्राक्षीदित्येकविषयप्रश्नः कृतः, परिहारे प्रश्नानित्याद्यनेकविषयः; कथमयं सङ्गच्छते इति चेत्, निरुद्यमस्य वित्तं कथम्? निर्वित्तस्य भोगः कथम्? अभोगिनः पीनत्वं कथम्? इति प्रश्नानामपि बहुत्वात्, इदमित्यस्याव्ययत्वेन जातिविशेषत्वेन चोपपत्तेः। तव प्रश्नान् ब्रूमह इत्यनेन तदनुवादः क्रियते, उत परिहारः? नाऽऽद्योऽदर्शनात्, द्वितीयोऽपि तद्वाचकपदप्रयोगाभावात् अनुपपन्नः। तव प्रश्नानुद्दिश्य परिहारान् ब्रूमह इति पक्षोऽपि गौरवादयुक्त इति चेत्, उच्यते। "ब्रूञ्व्यक्तायां वाचि" इति धातोः व्यक्तिर्नाम स्पष्टीकरणं, तस्य परिहारार्थोपपत्तेः। यथा श्रुतमित्यनेनाऽपि स्पष्टीकरणप्रतीतेरिति। ननु, यदज्ञातज्ञापकं तदेवोपादेयं, न चेदं तथा, प्रह्लादस्य भगवदनुग्रहेण ज्ञाता शेषार्थत्वात्। अतः कस्मै स्पष्टीक्रियत इत्याशङ्क्य तदज्ञानमस्माभिर्न बोध्यते, किन्तु महत्सम्भाषणलक्षणार्थसेवयाऽन्तःकरणशुद्धिः स्यादिति मत्वा स्पष्टीक्रियत इत्याह-सम्भाषणीय इति। अनेन ब्रूमह इत्यात्मनेपदार्थो विवृत इति ज्ञायते।।२२।।

निवृत्तिमार्ग एव संसारोन्मूलनहेतुरिति वक्तुं प्रवृत्तिमार्गस्तु नानादुःखहेतुत्वेन हेयः प्रेक्षावता इत्येतत्स्वानुभवसिद्धमित्याह-**तृष्णयेति**। भववाहिन्या नदीवद्वर्तमानया, संसारापादिकया वा। इतरनदीनामृतुभेदेन पूर्त्यपूर्ती स्यातां, नाऽस्याः कदाऽपि पूर्तिरित्याह–ग्राम्येति।।२३।।

यदृच्छया दैवेच्छया, लोकं शरीरम्। "अस्माल्लोकात्प्रेत्य" (तैत्ति. उ. 2-8-1) इति श्रुतेः। न केवलं स्वर्गादे द्वारं, किन्तु तिर्यगादिजन्मनोऽपि कारणमित्याह–तिरश्चामिति। अस्य मनुष्यशरीरस्याऽपि, द्वारमिति शेषः।।२४।।

**अत्राऽपि दम्पतीनाञ्च सुखायाऽन्यापनुत्तये।**
**कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम्।।२५।।**

**सुखमस्याऽत्मनो रूपं सर्वेहो[1-]परतिस्तनुः[-1]।**
**मनस्संस्पर्शजान्दृष्ट्वा भोगा[2-]न् स्वप्स्यामि संविशन्[-2]।।२६।।**

**इत्येतदात्मनः[3] स्वार्थं सन्तं विस्मृत्य वै पुमान्।**
**विचित्रामसति द्वैते घोरामाप्नोति संसृतिम्।।२७।।**

**जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया।**
**मृगतृष्णामुपाधावेत् [4]तथान्यत्राऽर्थदृक् स्वतः।।२८।।**

**देहादिभिर्दैवतन्त्रैरात्मनस्सुखमीहतः।**
**दुःखात्य[5]यञ्चानीशस्य क्रियामोघाः कृता[6]ः कृताः।।२९।।**

**आध्यात्मिकादिभिर्दुखैरविमुक्तस्य कर्हिचित्।**
**मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम्।।३०।।**

**पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम्।**
**भयादलब्धनिद्राणां सर्वतो[7]ऽभिविशङ्किनाम्।।३१।।**

**राजतश्चोरतश्शत्रोः स्वजनात्पशुपक्षितः।**
**अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम्।।३२।।**

---

1- -1 M,Ma °रतोर्हि यत् 2- -2 M,Ma गाञ्छस्तात्र संविशेत्। 3. H,V °नि 4.A,B,G,J.T य° 5. M, Ma °यं वा° 6. M,Ma °ताकृ°
7. H,V °तो हि; M,Ma °तोऽपि°; W तोऽति

**श्रीध॰ अत्रेति**। अत्राऽपि मनुष्यत्वेऽपि। अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दृष्ट्वा ।निवृत्तोऽस्मि।।२५।।

[1]ननु प्रवृत्त्या कदाचित्सुखं स्या[2]दपि निवृत्त्या तु किं स्यात्? इति चेत्तत्राऽऽह-**सुखमिति**। सुखमस्य जीवस्य स्वरूपमेव। तर्हि किं न प्रकाशते? तत्राऽऽह-सर्वेति। तनोतीति तनुः, सर्वक्रियानिवृत्तौ स्वत एव प्रकाशत इत्यर्थः। भोगांश्च मनस्संस्पर्शजान्मनोरथमात्रजानशाश्वतान् दृष्ट्वा स्वप्स्यामि निरुद्यमोऽस्मीत्यर्थः। तर्हि कदाचित्कथं भुङ्क्ते? तत्राऽऽह-संविशन् [3]प्रारब्ध भोगान् भुञ्जान इत्यर्थः।।२६।।

एवञ्चेत्कोऽपि संसारं न प्राप्नुयात्, तत्राऽऽह-**इतीति**। इत्येतदात्मनः सुखात्मकं रूपं स्वार्थं स्वस्मिन्नेव सन्तं पुरुषार्थं विस्मृत्य असत्यपि द्वैते।।२७।।

एतदेव दृष्टान्तेन स्पष्टयति-**जलमिति**। तदुद्भवैः तृणशैवालादिभिः [4]छन्नं[-4] हित्वा जलकाम्यया जलेच्छया स्वत आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन्।।२८।।

एवं स्वस्य निरुद्यमत्वे कारणमुक्त्वा विणर्ययं दृष्ट्वेति यदुक्तं तद्विवृणोति **देहादिभिरिति** पञ्चभिः। ईहत इच्छतः [5]अथाऽपि अनीशस्य निर्दैवस्य पुनः पुनः प्रारब्धाः क्रियाः मोघा विफला एव भवन्ति।।२९।।

क्रियाणां सफलत्वेऽपि फलस्यानुपयोगमाह-**आध्यात्मिकादिभिरिति**। मर्त्यस्य मरिष्यतः कृच्छ्रेण दुःखेन उपनतैः प्राप्तैः।।३०।।

कृच्छ्रं विनैव प्राप्तेऽप्यर्थे दुःखं तदवस्थमित्याह-**पश्यामीति**।।३१।।

भयं प्रपञ्चयति-**राजत** इति। स्वस्मात् [6]आत्मन एव कथञ्चित्त्यागभोगविस्मरणादिना नाशः स्यादिति प्राणवतामर्थवताञ्च भयं नित्यम्।।३२।।

**वीर॰** अत्राऽपि अस्मिन्नपि मनुष्यजन्मनि स्वर्गापवर्गदेऽपि दम्पतीनां यन्मैथुनादिसुखं, तदर्थमन्यापनुत्तयो दुःखनिवृत्तये च कर्माणि कुर्वतां लोकानां विपर्ययं सुखार्थं कृतेभ्यः [7]कर्मभ्यः दुःखप्राप्तिरूपं विपर्ययं दृष्ट्वा निवृत्तोऽस्मि।।२५।।

ननु प्रवृत्त्या कदा[8]चित्सुखं स्यादपि, किं निवृत्त्या स्यात्? इत्यत्राऽऽह-**सुखमिति**। सुखमस्याऽत्मनः

---

1. H,V Omit ननु 2. A,B,J Omit अपि 3. H,V आरब्धान् भो॰ 4--4 A,B,J Omit 5. A,B,J Omit अथाऽपि 6. A,B,J मत्तः 7. W omits कर्मभ्यः 8. W ॰चिदपि सु॰

प्रत्यागात्मनो रूपं स्वरूपमेव। अतो न तदर्थं यत्नः कार्य इति भावः। तर्हि स्वतः सुखरूप आत्मा तत्त्वेन किं नोपलभ्यते? इति शङ्कां निराकरोति - सर्वासामीहानां देहगतव्यापाराणामुपरमः अभावोऽस्यात्मनः तनुराकारः निष्क्रियं सुखमेव तस्य तनुरित्यर्थः। कात्स्न्येनीहोपरमपूर्वकं तद्याथात्म्यविमर्शनेन सुखरूपतयोपलभ्यत इति भावः। यत एवमतो भोगान् शब्दादिविषयभोगान् मनसस्संस्पर्शजान् मनोरथमात्रजान् अशाश्वतान् दृष्ट्वा संविशन् आत्मयाथात्म्यावलोकने प्रविष्टोऽहं प्रारब्धानुभवे प्रविष्टो वा स्वप्स्यामि शयानोऽस्मि।।२६।।

तर्हि सर्वोऽपि लोकस्त्वमिव सुखरूपमात्मानं किं नोपलप्स्यते? इति शङ्कां निराकर्तुं स्वाभाविकसुखरूपात्मस्वरूपाविमर्शनमूलकदेहात्मभ्रमेण न शेते, किन्तु संसरतीत्याह-**इतीति**। इत्येतदात्मनः सुखात्मकं रूपं स्वार्थं स्वस्य पुरुषार्थरूपं स्वत एव सन्तं विस्मृत्य स्वत एव सन्तमात्मनः सुखरूपं स्वरूपात्मकं स्वपुरुषार्थं विस्मृत्येत्यर्थः। पुमान् देही असति स्वत आत्मन्यविद्यमानेऽपि द्वैते देवमनुष्यादिभेदे देवोऽहं, मनुष्योऽहमित्यभिमानरूपे द्वैतेभेदे निमित्ते द्वैतेनेत्यर्थः। विचित्रां गर्भजन्मजरामरणादिरूपाम् अत एव घोरां भयङ्करां संसृतिमाप्नोति।।२७।।

एतदेव दृष्टान्तमुखेनाऽऽह-**जलमिति**। जलं तदुद्भवैस्तृणशैवालादिभिश्छन्नं जलं हित्वा अज्ञो यथा जलकाम्यया मृगतृष्णां जलवत्प्रतीयमानामुपधावेत्तथा स्वतः सुखरूपमात्मनः स्वरूपं विस्मृत्याऽन्यत्र वैषयिकसुखेष्वर्थदृक् पुरुषार्थदृष्टिर्धावति लोकः , स्वत आत्मनोऽन्यत्र देहादौ पुरुषार्थदृग्वा।।२८।।

विपर्ययं दृष्ट्वा निवृत्तोऽस्मीत्येतदेव विवृणोति **देहादिभिरिति** पञ्चभिः। दैवतन्त्रैः कर्मायत्तैर्देहेन्द्रियादिभिः आत्मनः स्वस्य सुखं दुःखनिवृत्तिश्चेहतः इच्छतः अनीशस्य कर्मवशस्य पुंसः, कर्तरि षष्ठी। इच्छता कृताः कृताः पुनः पुनरारब्धाः क्रियामोघाः व्यर्थाः न सुखजनका नाऽपि दुःखनिवर्तकाश्च दृष्टा इति भावः।।२९।।

कथञ्चित्क्रियाणाममोघत्वेऽपि तज्जन्यं सुखमनुभूयमानदुःखेभ्योऽल्पमित्याह-**आध्यात्मिकादिभिः**। आदिशब्देन आधिदैविकाधिभौतिके ग्राह्ये। तैः दुःखैः कर्हिचित्कदाचिदपि अविमुक्तस्य मर्त्यस्य मरणशीलस्य कृच्छ्रोपनतैः दुःखेनार्जितैः [1]अर्थैर्वित्तैः तन्निमित्तैः कामैश्च किं कियत्सुखं क्रियेत [2-]न किमपीत्यर्थः[-2]।।३०।।

ननु धनार्जने हि दुःखं , लब्धधनानान्तु सुखमेवेत्यत्राऽऽह-**पश्यामीति**। धनिनां लब्धधनानामपि क्लेशं पश्यामि। क्लेशित्वे हेतुं वदन् धनिनो विशिनष्टि-लुब्धानामिति। लुब्धानामलब्धधनलिप्सया लब्धधनव्ययभयेन च

1. W omits अर्थैः 2- -2 Omits

क्लिश्यतामिति भावः। अजितात्मनाम जितेन्द्रियाणां कामानामपर्याप्त्या च क्लिश्यतामिति भावः। भयादलब्धा निद्रा यैस्तेषां चौरादयो धनमपहरेयुरिति भयाद्विगतनिद्राणामित्यर्थः[1]। इतोऽपि क्लेश इति भावः। भयेहेतुं वदन्विशिनष्टि-सर्वतः सर्वेभ्योऽप्यतीव विशङ्कितानामपहरेयुरिति शङ्कां कुर्वताम्।।३१।।

एतदेव विवृणोति-**राजत** इति। राजादिभ्यः पशुतः पशुभ्यः[2] गजाश्वादिभ्यः[3] पक्षितः पक्षिभ्यः[4] सस्यादिभक्षणार्थं प्रवृत्तेभ्यः कालतः स्वस्माद्दानभोगयोः प्रवृत्तात् स्वस्माच्च प्राणस्तत्तुल्यमर्थश्चैषा मस्तीति तथा, तेषां नित्यं भयमनुवर्तते।।३२।।

**विज०** कृष्याद्युद्योगवतो वित्तं स्यादित्यादिना यदुक्तं सुखं स्यादिति, तत्परिहरति-**अत्रापीति**। अत्राऽपि मनुष्यशरीरेऽपि दम्पतीनां विपर्ययं दुःखं दृष्ट्वा निवृत्तिमार्गमाश्रितोऽस्मीत्यन्वयः। अन्यापनुत्तये सुखादन्यस्य दुःखस्य निरासाय "सुखाय कर्माणि करोति लोको न तैस्सुखं नाऽन्यदुपारमं वा" (भाग. 3-5-2) इति स्वोक्तेः।।२५।।

कर्मणो निवृत्तस्य दुःखस्य निरासाय सुखावाप्तौ किमन्तरङ्गमित्याशङ्क्य यदि सुखं स्वरूपाद्भिन्नं, तर्हि तत्प्राप्तौ यत्नः कर्तव्यो, न चैवं स्वरूपत्वात्सुखस्य; तद्व्यक्तौ स्वरूपाच्छादक सर्वनिषिद्धकर्मनिवृत्त्याविर्भूतभगवत्प्रसाद एव मुख्यनिमित्त मित्याह-**सुखमिति**। "बलमानन्दओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः" इत्यादि हिशब्देन दर्शयति। अस्याऽऽत्मनो जीवस्य स्वरूपभूतं यत्सुखं तत्सर्वेहोपरतेः प्रसन्नात्सर्वा पूर्णेहा चेष्टा यस्य स सर्वेहः। "को ह्येवान्यात्" (तैत्ति. आ. 2-7) इति श्रुतेः। उपाधिकात्युद्रिक्तार्रतिरानन्दो यस्य स उपरतिः। "यदेष आकाश आनन्दो न स्यात्" (तैति. उ. 2-7) इति श्रुतेः। सर्वेहश्च उपरतिश्च सर्वेहोपरतिः। तस्माद्धरेराविर्भवतीति शेषः। "उपोऽधिके च" (अष्टा० 1-4-87) इति सूत्रात्। ततः किम्? तत्राऽऽह- मनस्संस्पर्शजानिति। मनोधिष्ठितेन्द्रियाणां विषयैः संस्पर्शनात्सम्बन्धात् जातान् शस्तान् स्रगादिभोगान् न संविशेत् न सेवेत, बुद्धिमानिति शेषः।।२६।।

एतदङ्गीकारविरुद्धस्य बाधकमाह **इतीति**। आत्मन इत्येतदुक्तमित्येवं, तव सिद्धमिति शेषः। इतिशब्दः प्रकारवचनः। तत्र पुमान्सन्तं सदातनं स्वार्थं पुरुषार्थं विस्मृत्य असति भगवत्प्रसादेन निवर्तमाने द्वैतेऽन्यथाज्ञाने विषये विचित्रां सुरनरादि नानायोनिविषयां घोरां संसृतिमाप्नोतीत्यन्वयः।।२७।।

---

1.W. ०द्विनि० 2 W omits पशुभ्यः 3. W ०वा० 4 W omits पक्षिभ्यः

स्वतृष्णाया अनिवर्तकत्वात्संसारस्य घोरत्वमितीममर्थं सदृष्टान्तमाह-**जलमिति**। तदुद्भवैर्जलोद्भवैः शैवलादिभिरज्ञो ज्ञानरहितोऽजितेन्द्रियो मृगतृष्णां सूर्यमरीचिसम्पृक्तसलिलं यथोपधावेत्तथा स्वतः स्वतन्त्राद्धरेरन्यत्र देवदत्तादौ अर्थदृक् पुरुषार्थदर्शी।।२८।।

ननु पुरुषार्थसाधनत्वेन जातैर्देहादिभिरनुष्ठिताः क्रियाः सुखादिहेतवः स्युरित्याशङ्क्य भगवदर्पणबुद्धिचिकित्सारहिता व्यर्था इत्याह-**देहादिभिरिति**। या याः कृताः कृताः क्रियाः तास्तास्सर्वा अपि मोघाः। तत्र हेतुगर्भं विशेषणम्-अनीशस्येशविरुद्धस्य।।२९।।

इतोऽपि वित्तापादने न प्रयतनीयम् आध्यात्मिकादिक्लेशग्राहगृहीतत्वेन डुण्डुभग्रस्तमण्डूकवत् समृद्धशरीरबलाभावात् कृतान्तपाशबद्धगलस्य पुरुषस्य पुरतो निहितक्षीरासववद्व्यर्थं चित्तमित्याह-**आध्यात्मिकादिभिरिति**। कामैः शब्दादिविषयैः।।३०।।

कस्यचिददृष्टबलादुपार्जितवित्तस्य समृद्धशारीरबलस्याऽपि लोभाभिभूतमनस्कत्वेनाऽपि भोगो दुर्घट इत्याह-**पश्यामीति**।।३१।।

प्राणार्थवद्भयम् अर्थवतः प्राणभयं भवति, प्राणवतोऽर्थवतश्चेति वा।।३२।।

**शोकमोहभयक्रोधरागक्लैब्यश्रमादयः[1]।**
**यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः।।३३।।**

**मधुकारमहासर्पौ लोकेऽस्मिन्[2]नो गुरूत्तमौ।**
**वैराग्यं परितोषञ्च प्राप्ता यच्छिक्षया वयम्।।३४।।**

**विरामः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात्।**
**कृच्छ्राप्तं[3] मधुवद्वित्तं हत्वाऽप्यन्यो हरेत्पतिम्।।३५।।**

**अनीहः परितुष्टात्मा यदृच्छोपनतादहम्।**
**नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान्।।३६।।**

1. M,Ma °धाः 2. A,B,G,J,M,Ma,T °स्मित्रो° 3. M,Ma °त°

**क्वचिदल्पं क्वचिद्भूरिभुञ्जेऽन्नं [1]साध्वसाधु वा[1]।**
**क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित्।।३७।।**
**श्रद्धयो[2]पहृतं क्वाऽपि कदाचिन्मानवर्जितम्।**
**भुञ्जे, [3]भुक्त्वाऽथ कस्मिंश्चिद्दिवानक्तं यदृच्छया।।३८।।**
**क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा।**
**वसेऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम्।।३९।।**
**क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु।**
**क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया।।४०।।**

**श्रीध०** अतोऽनर्थहेतुत्वात् प्राणे [4]अर्थे च स्पृहा न कार्या इत्याह-**शोकेति**।।३३।।

नन्वेवमनर्थाननुभवन्तोऽपि न केचिद्विरज्यन्ते न च यथा लाभेन तुष्यन्ति। त्वन्तु कथं वैराग्यादिकं प्राप्तोऽसि? तत्राऽऽह-**मधुकारेति**। मधुमक्षिकाजगरौ, ययोश्शिक्षया [5]वृत्तिपर्यालोचनया।।३४।।

मधुकाराच्छिक्षितमाह-**विराग** इति। वित्तपतिं हत्वाऽन्यो[6]ऽपि वित्तं हरेदित्येवम्।।३५।।

अजगराच्छिक्षितमाह-**अनीह** इति। सत्त्ववान्धैर्यवान्।।३६।।

[7]अनीहत्वे हेतुत्वेन[7] यदृच्छया प्राप्तात्परितोषं प्रपञ्चयति - [8]**क्वचिदल्पमिति**[8] षड्भिः।।३७,३८।।

**क्षौममिति**। चीरं जीर्णवस्त्रखण्डम् वसे परिदधे। दिष्टभुक् [9]प्रारब्धकर्मफलभोगी।।३९।।

**क्वचिदिति**। प्रासादमध्ये पर्यङ्के तत्राऽपि कशिपौ [10]तूलिकायाम्[10]।।४०।।

**वीर०** न केवलं भयमेव, अपि तु शोकमोहभयादयः सर्वे यन्मूलाः यौ प्राणार्थावेव मूलं येषान्ते नृणां स्युर्भवेयुः। तस्माद्बुधः हेयोपादेयविवेकवान् तयोः प्राणार्थयोः स्पृहां जह्यात् त्यजेत्।।३३।।

यदुपदेशात् [11]त्वमीदृशं निवृत्तिधर्ममास्थितः[11] तं कथयेत्यत्राऽऽह-**मधुकारेति**। अस्मिन् लोके नोऽस्माकं

---

1--1 A,B,G,J,T स्वाद्वस्वादु वा 2.A,B,G,J,T °पा° 3. W भुञ्जेऽथ 4 B adds जीवने 5 A,B,J वृत्त° 6 A,B,J Omit अपि 7--7 A B J पीनत्वे हेतुं वदन् 8--8 H, V,Omit 9 H, V,Omit कर्मफल 10--10 H V.Omit 11--11 W आश्रितोऽसीत्यत्राऽऽह

गुरुश्रेष्ठौ मधुकारमहासर्पौ मधुमाक्षिकाजगरावेव ईदृशधर्मशिक्षकौ भवतः[1] ; तदेवाऽऽह ययोः मधुकारमहासर्पयोः शिक्षया वृत्तिपर्यालोचनया वयं वैराग्यं परितोषं दैवाल्लब्धात् सन्तोषञ्च प्राप्ताः। तत्र मधुकाराद्वैराग्यं महासर्पात् परितोषञ्च प्राप्ता इत्यर्थः।।३४।।

एतदुभयं विवृणोति-**विराग** इति द्वाभ्याम्। तावत्सर्वेभ्यः कामेभ्यः[2] विरागो मया मधुव्रतात् मधुमक्षिकात्[3] शिक्षितः तच्छिक्षया मम वैराग्योदय इत्यर्थः। किं तच्छिक्षितम्? तदाह—**यथा मधुव्रतैरितस्ततः** पुष्पेभ्य आनीय क्वचिन्निवेशितं मधु तत्स्वामिनो मधुव्रतान् हत्वाऽन्यो हरति तथा मधुवत् दुःखेनाऽऽर्जितं धनमन्यः पतिं धनस्य पतिं हत्वा हरेत्–इत्येतन्मधुव्रताच्छिक्षितमित्यर्थः।।३५।।

अजगराच्छिक्षितमाह—**अनीह** इति। महाहिरिव अहमप्यनीहः निर्व्यापारः यदृच्छोपनताद्दैवाल्लब्धान्नादः परितुष्टात्मा सन्तुष्टचित्तः [4-]नो चेत् यदृच्छेपनतं नो[-4] प्राप्तञ्चेत्तर्हि सत्त्ववान् धैर्यवान् बहूनि अहानि शये शयानोऽस्मि।।३६।।

पीनत्वे हेतुत्वेन यदृच्छया प्राप्तात्परितोषं प्रपञ्चयति **क्वचिदल्पमिति**। क्वचित् कदाचित् अल्पं, कदाचिच्च भूरि बहु, क्वचिच्च साधु, क्वचिच्च असाधु असमीचीनममृष्टं, क्वचिच्च गुणवत् रसवत्, कदाचित् निर्गुणम्।।३७।।

कदाचिच्छ्रद्धयाऽऽनीतं, कदाचिन्निन्दापूर्वकमानीतं वा, अन्नादिकं भुञ्जे अद्मि। कदाचिद्दिवा नक्तञ्च यदृच्छया प्राप्तं भुञ्जे।।३८।।

एवं वस्त्रमपि दुकूलाद्यन्यतममन्यद्वा दैवाल्लब्धं वसे आच्छादयामि परिदधे च चीरं जीर्णवस्त्रञ्च। एवं दिष्टभुक् प्रारब्धभुक् सन्तुष्टचित्तश्चाऽऽहम्।।३९।।

क्वचिद्भूपृष्ठे एव क्वचिच्च तृणादिषु शये। क्वचिच्च प्रासादोपरि पर्यङ्के तत्राऽपि कशिपौ वा। तस्य दौर्लभ्यशङ्कां निराह-[5-]परेषामिच्छया[-5]इति। इदमुत्तरत्राऽपि[6]अनुषञ्जनीयम्।।४०।।

**विज॰** ननु सर्वानर्थशमने किं कारणमित्याशङ्क्य स्पृहा सर्वापदो निदानम्। अतस्तत्त्याग एव प्रथमतः कारणमित्याह—**शोकेति**। या स्पृहा मूलं येषान्ते तथा प्राणेऽर्थे च स्पृहां वैष्णवसिद्धान्ते तद्विरोधिनो जनात् प्राणसङ्कटे प्राप्ते प्राणरक्षणे स्पृहाऽपि न कार्या किमुताऽर्थे इति प्रदर्शनाय प्राणग्रहणम्।।३३।।

---

1 W Omits भवतः 2 A,B,T, Omit कामेभ्यः 3 A,B,T भ्रमरात् 4- -4 W न चेत् 5- -5 W परेच्छयेति 6.W Omits अपि

वित्तवतः प्राणभयं वित्तस्पृहया शोकादिकं स्यादित्याद्युक्तमर्थं मधुकाराजगरदृष्टान्तेन बोधयति-**मधुकारेति**। गुरूत्तमाद्या शिक्षा साऽऽभ्यामेवाऽऽप्तेति गुरूत्तमावित्यूचे।।३४।।

यथा च मधुव्रतं हत्वाऽन्यो मधुहरति तथा वित्तापादकं हत्वा कृच्छ्रादर्जितं राजाद्यन्यतमो हरेत्। मधुव्रतस्थितिं दृष्ट्वा सर्वकामेभ्यो विरागः शिक्षितः।।३५।।

उदरपोषण प्रयत्नशून्योऽनीहः नो चेद्यदृच्छया प्राप्तञ्चेत् , महाहिरजगरः।।३६।।

भूरिगुणोपेतं कस्मिंश्चिद्दिवाऽह्न्येव भुक्त्वा नक्तं भुङ्क्ते, कस्मिंश्चिद्दिने नक्तं भुक्त्वा अह्नि भुङ्क्ते।।३७,३८।।

क्षौमं दुकूलमित्यादिकमेकस्मिञ्जन्मनि बहुजन्मनि चेति यथा योग्यमङ्गीकर्तव्यम्।[1] दैवलब्धेन भुङ्क्ते इति दिष्टभुक् क्षौमाद्याच्छादनं गजादिभिश्चरणं क्षत्रजन्मनि प्रासादादिशयनं भूपृष्ठशयनञ्च, पश्वादिजन्मनि भस्मादौ शयनं श्वानादिजन्मनि बाल्ये च अजिनादि अजिनाद्याच्छादनं मृष्यादि जन्मनि अस्मिञ्जन्मनि जन्मान्तरे वा।।३९,४०।।

**क्वचत्स्नातोऽनुलिप्ताङ्गः सुवासाः [2-]स्रगलङ्कृतः[-2]।**
**रथेभाश्वैश्चरे[3] क्वाऽपि दिग्वासा ग्रह[4-]वद्विभो[-4]!।।४१।।**

**नाऽहं निन्दे न च स्तौमि स्वभावविषमं जनम्।**
**एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि।।४२।।**

**विकल्पं जुहुयाच्चित्ते[5] [6]तन्मनस्यर्थविभ्रमे।**
**मनोवैकारिके हुत्वा तन्मायायां जुहोम्यनु[7]।।४३।।**

**आत्मानुभूतौ तां मायां जुहुयात्स[8]त्यदृङ्मुनिः।**
**ततो निरीहो विरमेत् स्वानुभूत्याऽऽत्मनि स्थितः।।४४।।**

**स्वात्मवृत्तं मयेत्थं ते सुगुप्त[9]मपि वर्णितम्।**
**व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रि[10]यः।।४५।।**

---

1. A दैवाल्ल॰ 2- -2 ॰स्रग्व्यलङ्कृतः 3 M,Ma ॰श्चरन् 4- -4 M,Ma A,B,G,J,T वत्क्वचित् 5 A,B,G,J,T ॰त्तौ 6 A,B,G,J,T तां म॰ 7 A,B,G,J,T ॰त्यनु; M,Ma त्यमुम् 8. H,V ॰त्तत्त्वदृ॰ 9 M,Ma ॰मनु॰ 10 A,B,G,J,T ॰त्पर:

## नारद उवाच

**धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः।**
**पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ[1] गृहम्।।४६।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यामष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
सप्तमस्कन्धे युधिष्ठिरनारदसंवादे यतिधर्मे त्रयोदशोऽध्यायः।।१३।।

**श्रीध० क्वचिदिति**। चरे विचरामि। क्वचिद् ग्रहवद्दिगम्बरो विचरामि।।४१।।

न च मानाव[2]मानकर्तृषु मम वैषम्यमित्याह-**नाऽहमिति**। नाऽहं निन्दामि, [3]न च स्तौमि[3]। महात्मनि विष्णौ।।४२।।

एवम्भूततत्वेन स्थितावुपायमाह-**विकल्पमिति** द्वाभ्याम्। चित्ते[4] भेदग्राहकमनोवृत्तौ अर्थरूपो विभ्रमो यस्मिन् [5]मनसि तन्मनो[5] वैकारिकेऽहङ्कारे [6]तमहङ्कारम्[6] अनु अनन्तरं महत्तत्त्वद्वारेणेत्यर्थः।।४३।।

**आत्मेति**। सत्यमेव पश्यतीति तथा।।४४।।

**स्वेति**। मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं, न तु तत्त्वदृष्ट्या, यतो भवान् भ[7]गवत्प्रियः।।४५,४६।।

इति श्रीमद्भागवते सप्तमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां त्रयोदशोऽध्यायः।।१३।।

**वीर०** स्नातमनुलिप्तं चन्दनेन चाऽऽङ्गं यस्य, शोभनं वासो वस्त्रं यस्य सः, **स्रग्भिरलङ्कृतः** रथादिभिर्यानैः चरे [8]सञ्चरे। क्वचिच्च दिग्वासा दिगम्बरः ग्रहवच्चरे, हे विभो!।।४१।।

न च मानावमानादिकर्तृषु मम वैषम्यमित्याह—**नाऽहमिति**। स्वभावत एव विषमं जनं स्तुतिनिन्दयोः कर्तारं न स्तौमि न निन्दे च। किन्तु तेषां जनानां सर्वेषां श्रेयः धर्मादिरूपम् उताऽपि च महात्मनि भगवति ऐकात्म्यमेकचित्तत्वञ्च आशासे प्रार्थये।।४२।।

---

1 M,Ma °हान् 2 A.B.J °प ° 3--3 H,V Omit 4 A,B,J चित्तौ 5--5 H,V Omit 6--6. H,V Omit 7. A,B,J °वत्परः। 8 A,B,T सञ्चरामि

इत्थमन्यस्याऽप्यवस्थितौ उपायमाह—**विकल्पमिति**। विकल्पं जतिरूपादिविकल्पं चित्ते मनोव्यापारे जुहुयात् प्रलीनं भावयेत्। तच्चित्तमर्थविभ्रमे देहात्मभ्रमहेतौ मनसि, मनश्च वैकारिके सात्त्विकाहङ्कारे, तच्च वैकारिकं मायायां मूलप्रकृतौजुहुयात्। सर्वत्र होमो नाम लयानुसन्धानरूपः।।४३।।

ताञ्च मायां आत्मानुभूतौ जुहुयात्। ततः सत्यं स्वात्मशरीरकं परमात्मानं पश्यतीति सत्यदृक् मुनिः तन्मननशीलः, निरीहो निश्चेष्टः, स्वानुभूत्यात्मनि परमात्मात्मके परिशुद्धजीवस्वरूपे स्थितः तदनुसन्धानपरः विरमेत्प्रारब्धावसाने कलेबरात् विरमेत्।।४४।।

उक्तं स्ववृत्तमुपसंहरति—**स्वात्मवृत्तमिति**। इत्थं मया गुप्तमपि स्वात्मनो मम वृत्तं मन्ददृष्ट्या लोकशास्त्राभ्यां व्यपेतं , न तु तत्त्वदृष्ट्या व्यपेतं बहिर्भूतं ते तुभ्यमुपवर्णितम् , हि यस्मात् भवान् भगवत्परः, अतो [1-]गुप्तमपि वृत्तमुप[-1]वर्णितमित्यर्थः।।४५।।

एवं मुनिनोपवर्णितं पारमहंस्यं तुर्याश्रमनिष्ठानां गुणं श्रुत्वा असुरेश्वरः प्रह्लादः तं [2]यतिं प्रीतस्सन् पूजयित्वा आमन्त्र्य अनुज्ञाप्य स्वगृहं प्रति ययौ।।४६।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां त्रयोदशोऽध्यायः।।१३।।

**विज०** दिग्वासाः दिगम्बरः।। सत्त्वादिगुणस्वभावेन विषमं सात्त्विकराजसतामसभेदभिन्नं सर्वेभ्यो भयं मत्त इति यतिधर्मत्वात् भूतानां भद्रमेवाऽऽशासे। तत्राऽपि भगवत्स्वामित्वं न विस्मरामीत्याह—आशास इति। उतेत्याशास इत्यनुवर्तते। जगत एक एव स्वामीति भावमैकात्म्यम् उताऽऽशासे। कस्मिन्विषये? महात्मनि भगवद्विषये इत्यर्थः।।४१,४२।।

तुर्यावस्थेन विहितोपासनानन्तरमिदञ्च कर्तव्यं ब्रह्मप्राप्तिमार्गत्वादित्याह—**विकल्पमिति**। विकल्पं जगच्चित्ते मनोवृत्त्यभिमानिनि न्यसेज्जुहुयात्। जगच्चित्ताख्याग्र्यधीनमिति चिन्तयेत्। चित्तमग्रिमर्थेषु भ्रममाणे भगवत्युपा- धावमाने मनसि मनो नामेन्द्रियाधीनतया तिष्ठतीति चिन्तयेत्। मन इन्द्रं वैकारिके रुद्रे हुत्वा सञ्चित्यामुं रुद्रं

1--1 A,B,T गुप्तमुप 2. W Omits यतिं

मायायां प्रकृतिविकारे महत्तत्त्वे विरिञ्चे सञ्चिन्त्य तां मायां तं विरिञ्चं वाऽऽत्मानुभूतौ चित्प्रकृतौ जुहुयात् चिन्तयेत्। "चित्ताख्याग्रेरधीनं हि जगदेतद्विचिन्तयेत्। मनोनामेन्द्रवशगमग्रिञ्च प्रति चिन्तयेत्" (समयाचारे) इति त्रा वाक्यात्सर्वमवगन्तव्यम्। अत जडकार्यस्य जडकारणात्मकत्वं चेतनस्य चेतनाधीनत्वं चिन्तनीयमित्यर्थः। तामाऽऽत्मानुभूतिं स्वानुभूतेर्लक्ष्म्या आत्मनि स्वामिनि पत्यौ निरन्तरं चिन्तयेत्। ततो मुनिरनन्तरं कृतकृत्यां "वेत्ता वेद्यस्य सर्वस्य मुनिस्सद्भिरुदाहृतः" (उत्पलमाला) इत्युत्पलमाला वचनात्। किञ्च सत्यं साधुगुणपूर्णं विष्णुं पश्यतीति सत्यदृक् , स्वानन्दानुभवात्मनि स्वमहिम्नि स्थितः। "महिम्नि स्वे महीयते" (भाग. 1-3-34) इति वचनात्। स्वरूपानन्दज्ञानात्मनि ब्रह्मणि स्थित इति वा। निरीहः , अतएव निषिद्धचेष्टारहितो विरमेत्, कृत्यादिति शेषः।।४३,४४।।

प्रतिपादितमर्थं निगमयति–**स्वात्मेति**। मया स्वात्मनो मम वृत्तं तुभ्यमनुवर्णितमित्यन्वयः। स्वात्मनो जीवस्य वा परमात्मनो वा कीदृशम् मुखतो लोकशास्त्राभ्यां व्यपेतं रहितम्, आन्तरतो विपरीतत्वेन प्राप्तं शास्त्रसिद्धत्वाच्छास्त्रीयमित्यर्थः "अशास्त्रीयत्वान्मुखतः शास्त्रापेतमिदं विदुः। शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयते" (समयाचारे) इति वचनादुक्त एवार्थः। इदं सिद्धमभिप्रेत्याह–भवानिति।।४५।।

ततः प्रह्लादेन किं कृतमित्यतस्तद्गमनमाह–नारद इति। पारमहंस्यं परमहंसानां निवृत्तिमार्गस्थानां विद्यमानम्।।४६।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

सप्तमस्कन्धे त्रयोदशोऽध्यायः।।१३।।

* * * *

# चतुर्दशोऽध्यायः

## *(विजयध्वजरीत्या पञ्चदशोऽध्यायः)*

### युधिष्ठर उवाच

गृहस्थ एतां पदवीं विधिना येन चाऽञ्जसा[1]।
[2]यायाद्देवऋषे ब्रूहि मादृशो गृहमूढधीः[3]।।१।।

### नारद उवाच

*साधुपृष्टं महाराज! लोकान्[4]साध्वनुगृह्णता।
[5-]एतत्तुभ्यं प्रवक्ष्यामि[-5] नैष्कर्म्यं [6-]कर्मणो यतः[-6]।।२।।

गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः।
वासुदेवार्पणं साक्षादुपासीत महामुनीन्।।३।।

शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम्।
श्रद्दधानो यथाकालमुपशान्तजनावृतः[7]।।४।।

[8]सत्सङ्गाच्छनकैस्सङ्गमात्मजायात्मजादिषु।
विमुञ्चेन्[9]मुच्यमानेषु स्वयं स्वप्रवदुत्थितः।।५।।

यावदर्थमुपासीनो देहे गेहे च पण्डितः।
विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत्।।६।।

ज्ञातयः पितरौ पुत्राः भ्रातरस्सुहृदः[10] परे।
यद्वदन्ति यदिच्छन्ति चा[11]नुमोदेत निर्ममः।।७।।

---

1. H,V संवृतः 2. A,B,G,J,T यातिदे ° 3. H,V,W °रू° * This verse is not found in A,G,J,T editions 4 H,M,Ma V °काना मन °

5- -5. H,M,Ma, V तत्त्वेन तदहं वक्ष्ये 6- -6. H,M,Ma,V येन कर्मणां 7 M,Ma द्रुतम् 8.M,Ma त° 9 A,B,G,J,M,Ma T °च्य °

10. A,B,G,J,M,Ma,T °दो परे 11. M,Ma अनु °

**दिव्यं भौमञ्चान्तरिक्षं वित्तमच्युतनिर्मितम्।**
**तत्सर्वमुपयुञ्जान[1] एतत्[2]कुर्यात्स्वतो बुधः।।८।।**

**यावद्भ्रियेतजठरं तावत्स्वत्वं हि देहिनाम्।**
**अधिकं योऽ[3]भिमन्येत सस्तेनो दण्डमर्हति।।९।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते। देशकालादिभेदेन पुं[4]सः श्रेयो विशेषकृत्।।

गृहस्थ[5]धर्ममुल्लङ्घ्यमोक्षं प्रति अन्तरङ्गत्वेन प्रथमं वनस्थयतिधर्मेष्वभिहितेषु [6]गृहस्थस्य मोक्षो न स्यादिति शङ्कितचित्तः पृच्छति **गृहस्थ** इति।।१।।

तस्य मोक्षधर्मानाह–**गृहेष्वित्यादि** यावदध्याय समाप्ति। साक्षाद्वासुदेवार्पणं यथा भवत्येवं कुर्वन्नु-पासीत।।२-४।।

**सत्सङ्गादिति**। स्वयमेव मुच्यमानेषु वियुज्यमानेषु यथा [7]स्वप्रादुत्थितः पुमान् स्वप्रदृष्टेषु पुत्रादिषु सङ्गं विमुञ्चति तद्वत्।।५।।

नन्वेवम्भूतस्य दुर्जनैरभिभूयमानस्य कुतो गृहोचिताः क्रियाः स्युः? तत्राऽऽह **यावदर्थमिति** अन्तस्त्वना-सक्तो बहिस्त्वासक्त इव नृलोके जनमध्ये नरतां [8]मनुष्यतां न्यसेत्, पुरु[9]षाकार मविष्कुर्यादित्यर्थः।।६।।

आग्रहन्तु क्वाऽपि न कुर्यादित्याह–**ज्ञातय** इति।।७।।

नन्वेवं सर्वानुमोदने वित्तक्षयप्रसङ्गात्कुतो जीवनं, कुतो वा कर्मकरणम्? तत्राऽऽह-**दिव्यमिति**। दिव्यं वृष्ट्यादिभिर्जातं धान्यादि। भौमं [10-]भूम्यां जातं सुवर्णादि[-10] आन्तरिक्षमकस्मादेव प्राप्तम्। एवं स्वत एवाच्युतनिर्मितं दैवलब्धं यत्। एतत्पू[11]र्वोक्तकर्मादि।।८।।

दैवाद्भूरिलाभे जातेऽपि तत्राऽभिमानो नकार्य इत्याह **यावदिति**। **भ्रियेत पूर्येत**।।९।।

---

1 A.B.G.J.T भुञ्जानः M.Ma भुञ्जीरन् 2 M.Ma न स्वीकु 3 H.V °धि° 4 A.B.J पुनः 5 A.B.J Omit धर्मं 6. A B.J add तर्हि 7 H.V Omit स्वप्रात् 8 H.V मानुष्य 9 A,B,J °ष° 10- -10 A.B.J निधानादि 11 H.V °क्तक°

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

एवमाश्रुताश्रमत्रयधर्मो गृहस्थाश्रमधर्मान् बुभुत्सुः पृच्छति युधिष्ठिरः **गृहस्थ** इति। हे देवर्षे![1] गृहेष्वेव मूढा धीर्यस्य गृहासक्तचित्तो[2] मादृशो गृहाश्रमस्थः पुमान् येन विधिना एतां पदवीं तुर्याश्रमिगम्यां पदवीं[3] मार्ग, मुक्तिमित्यर्थः। यायात् प्राप्नुयात् तं विधिं ब्रूहि।।१।।

एवमापृष्टगार्हस्थ्यधर्मो देवर्षिः[4] तत्प्रश्नमभिनन्दन् तान् धर्मान् वक्तुं प्रतिजानीते-**साध्विति**। हे महाराज! जानताऽपि त्वया लोकान् साधु यथा तथाऽनुगृह्णता साधृ पृष्टम्। एतत्त्वत्पृष्टं गार्हस्थ्यव्रतमहं तुभ्यं प्रवक्ष्यामि, यतः कर्मणः मया वक्ष्यमाणगार्हस्थ्यधर्मात् कर्मणां मुक्तिप्रतिबन्धकानां पुण्यपापात्मकानां निरासद्वारा नैष्कर्म्यं ज्ञानयोगलाभो भवेत्।।२।।

एवं प्रतिज्ञाय गार्हस्थ्यधर्मानाह-**गृहेष्वित्यादिना** यावदध्यायसमाप्ति। यद्यपि प्रथमाश्रमधर्मकथनानन्तरमेव एतदाश्रमधर्मवर्णनं युक्तं क्रमप्राप्तत्वात् , तथाऽपि गार्हस्थ्यधर्माणां बाहुल्यात्, महता प्रबन्धेन वर्णनीयत्वात् आश्रमान्तरधर्मवर्णनानन्तरं ते कथ्यन्ते, क्रमानादराद्वा। अत्र केचिद्वदन्ति मोक्षान्तरङ्गत्वेन प्रथमं वनस्थयति धर्मानभिधाय पश्चाद्गृहस्थधर्मानभिदधातीति तन्मन्दम्-"अतस्त्वितरज्ज्यायो लिङ्गाच्च" (ब्र.सू. 3-4-39) इति शारीरकन्यायेन ब्रह्मविद्यानुग्राहकाल्पधर्माश्रमान्तरापेक्षया तदनुग्राहकबहुधर्मकगार्हस्थ्यस्यैव अन्तरङ्गत्वात्, अतो यथोक्त एवाऽऽशयः। हे राजन्! गृहेष्ववस्थितःगृहाश्रमस्थः गृहोचिता आश्रमानुगुणाः क्रियाः कर्माणि सन्ध्योपासनपञ्चमहायज्ञादीनि आवश्यकानि साक्षाद्वासुदेवार्पणं यथा भवति तथा कुर्वन् फलसङ्गकर्तृत्वत्याग-पूर्वकंकुर्वन् महामुनीन् **उपासीत** भगवद्गुणमननशीलान् महाभागवतान् उपासीत [5-]सेवेतेत्यर्थः[-5]।।३।।

कथम्भूतः? तेभ्यो भगवतः अवतारकथामृतमभीक्ष्णं पुनः पुनः यथाकालमावश्यकधर्मानुष्ठानावशेषितं कालमुपशान्तजनैस्सहितः श्रद्धापूर्वकं **शृण्वन्**।।४।।

एवं सतां सङ्गात् देहदारपुत्रादिषु शनकैस्सङ्गं विमुञ्चेत्, तेषु अहम्ममताद्यभिमानं त्यजेत्। एवं मुच्यमानेषु उक्ताभिमानविषयेषु सत्सु देहादिषु स्वप्नवदुत्थितो यथा स्वप्ने तद्विषये पुत्रादौ, तस्मादुत्थितः तत्कालमात्रानुभाव्यतां [6]मन्यते।।५।।

---

1 A,B,T add सन्ध्यभाव आर्षः। 2 A,B,T या ° 3 W omits मार्ग 4 W omits तत् 5- -5 W omits 6 A B T भाव्यत

तथा देहे गेहे च, चशब्दात् दारादिषु च पण्डितः अस्थितरत्वात्पुरुषार्थज्ञानवान्, तत्र देहादौ स्वयं विरक्तोऽपि रक्तवदासक्तवत् यावदर्थं प्राणधारणापेक्षितमर्थमुपासीनः स्वीकुर्वन् नृलोके नरशरीरे[1] नरतां न्यसेत् अनुसन्दधीत, नरत्वादिकं देहगतं पश्येत्[2], नत्वात्मन्यनुसन्दधीतेत्यर्थः।।६।।

ज्ञात्यादयस्तेभ्योऽन्ये च यद्वदन्ति यच्चेच्छन्ति तत्स्वयं निर्ममः ममकाररहितो मोदेत अनुमोदेत।।७।।

यावदर्थपरिग्रह इत्येतदेव विवृणोति-यद्यद्भगवता निर्मितं प्रापितं दिव्यादिभेदभिन्नं वित्तं , तत्र दिव्यं वित्तं वृष्ट्यादिभिर्जातं धान्यादि, भौमं भूम्यां जातं सुवर्णादिरूपम्, आन्तरिक्षमकस्मादेव प्राप्तम्। यद्वा-दिव्यं वित्तमर्कालोकादि, आन्तरिक्षं वर्षं, भौमं तृणादि। तथैतत्सर्वमुपयुञ्जानो विनियुञ्जान अबुधोऽविवेकी चेत् स्वतः स्वत्वेन कुर्यात्। अबुधश्चेत्तदेतत्सर्वं स्वत्वेनाभिमन्येतेत्यर्थः। यद्वा बुध इत्यवच्छेदः। विवेकी तत्सर्वमुपयुञ्जानः एतद्यथोपयुक्तं स्वतःकुर्यात्, स्वत्वेन स्वीकुर्यात् देहधारणमात्रोपयुक्तमेव स्वीकुर्यादित्यर्थः।।८।।

अधिकं न स्वीकुर्यादित्यभिप्रयन् न तस्मिन् स्वत्वाभिमानं कुर्यादित्याह-**यावदिति**। हि[3] यस्मात्, यावज्जठरमुदरं भ्रियेत पूर्येत तावदेव स्वत्वं देहिनामुदरभरणोपयुक्ते एव हि देहिनां स्वत्वाभिमान इत्यर्थः। योऽधिकमपि[4] स्वत्वेनाऽभिमन्येत सपुमान् स्तेनश्चोर एव, यत एवं ततो दण्डमेवाऽर्हति। इह दण्डाभावेऽपि अमुत्रदण्डमर्हत्येव। यद्वा, संसृतिरूपं दण्डमर्हतीति भावः।।९।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सर्ववर्णाश्रमाणां गृहाश्रममूलत्वात् सूचीकटाहन्यायेन वर्णाद्याश्रमधर्मं निरूप्य गृहाश्रमधर्मं निरूपयत्यस्मिन्नध्याये। तत्र "नाऽपृष्टः कस्यिचिद्ब्रूयात्" (भार.12-276-34) इति न्यायात् युधिष्ठिरःपृच्छतीत्याह-युधिष्ठिर इति। एतां पदवीमन्याश्रमविषयां, विधिना प्रकारेण।।१।।

नैष्कर्म्यं मोक्षसाधनत्वम्।।२।।

गृहोचिताः क्रियाः पञ्चयज्ञलक्षणाः-"जप(पञ्च)यज्ञप्रसिद्ध्यर्थं विद्याञ्चाऽऽध्यात्मिकी जपेत्। बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः। भूतपित्रमरब्रह्ममनुष्याणां महामखाः" (याज्ञ. स्मृ 1-101,102) इति याज्ञवल्क्यः। वासुदेवार्पणं कुर्वन्निति शेषः।।३।।

1 A,B,T नृ ० 2 A,B,T अनुसन्दधीत 3. W omits हि 4 A,B,T add एवं हि

उपशान्तजनेन सन्न्यासिजनेन आदृतं कामितम्।।४।।

स्वप्नं दृष्ट्वोत्थितः स्वप्नदृष्टपदार्थसङ्गं यथा जहाति तथा जायादिसङ्गं मुञ्चेदित्यन्वयः।।५।।

यावदर्थो यावद्देहयात्राप्रयोजनो देहादावुपासीनोऽवतिष्ठमानस्तत्रदेहादौ रक्तवत् स्निग्धवत् नरतां नरत्वं न्यसेत् त्यजेत्, यतिर्भवेदित्यर्थः।।६,७।।

आन्तरिक्षं द्यावापृथिव्योर्मध्यभवमच्युतेन निर्मितं यद्वित्तमुपयुञ्जीरन् , लोका इति शेषः। तत्सर्वं जानन् स्वकीयमिति न स्वीकुर्यात्।।७।।

यावदर्थ इत्युक्तं विवृणोति-**यावदिति**। जठरं यावदन्नं ध्रियेत गृह्णाति , तावदन्नं स्वत्वं स्वकीयमिति स्वीकुर्यात्, ततोऽधिकादाने दण्डयोग्यमित्याह-अधिकमिति।।९।।

**मृगोष्ट्र[1]खरमर्काखुसरीसृप[2]विमक्षिका[3]ः।**
**आत्म[4]वत्पुत्रवत्पश्येत्, तैरेषामन्तरं कियत्।।१०।।**

**त्रिवर्गं नाऽतिकृच्छ्रेण भजेत गृहमेध्यपि।**
**यथादेशं यथाकालं यावद्दैवोपपादितम्।।११।।**

**आश्वा[5]घा[6]न्तावसायिभ्यः कामान् संविभजेद्यथा।**
**[7-]अप्येकामात्मनो दारां[-7] नृणां स्व[8]त्वग्रहो यतः।।१२।।**

**जह्याद्यदर्थे स्वा[9]न्प्राणान् हन्याद्वा पितरं गुरुम्।**
**तस्यां स्वत्वं स्त्रियां जह्यात् य[10]स्तया ह्यजितो जितः।।१३।।**

**क्रि[11]मिविड्भस्मनिष्ठान्तं क्वेदं नु[12] स्वकलेबरम्।**
**क्व तदीयरतिर्भार्या क्वाऽयमात्मा नभश्छ[13]दः।।१४।।**

---

1. M,Ma ॰खराश्व 2 A,B,G,J,T ॰पखगम॰ 3 M,Ma ॰कान् 4 A,B,G,J,M,Ma,T ॰नः पु॰ 5 M,Ma ॰श्वभ्योन्ते 6 A,B,J न्ते॰

7- -7. H,V अप्यकामहता दारा; M,Ma आत्वैतान्महतो दारान् 8 A,M,Ma ॰स॰ 9 A,B,G,J,T स्वप्रा॰ 10 A,B,G,J,M,Ma,T यस्तेन

11 A,B,G,J,M,Ma,T कृ॰ 12. A,B,G,J,M,Ma,T तुच्छ 13 A,B,G,J,M,Ma,T ॰द.

**सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः।**
**शेषे स्वत्वं त्यजन्[1]प्राज्ञः पदवीं महता मियात्।।१५।।**

**देवेनृषीन् नृभूतानि पितृनात्मानमन्वहम्।**
**स्ववृत्त्या गत[2]वृत्तेन यजेत पुरुषं पृथक्।।१६।।**
**यर्ह्यात्मं नोऽधिका[3]राद्याः सर्वास्स्युर्यज्ञ सम्पदः।**
**वैतानिकेन विधिना [4]ह्यग्निहोत्रादिना यजेत्।।१७।।**

**श्रीध॰** अत एव यं कमपि स्वगृहं क्षेत्रं वा प्रविश्य भुञ्जानं न निवारयेदित्याह-**मृगेति**। मर्को मर्कटः, सरी[5]सृपः सर्पः, [6]विमक्षिकाः मक्षिकाश्च तैः पुत्रैरेषां मृगादीनां [7]कियदन्तरम्[7]।।९,१०।।

**त्रिवर्गमिति**। अतिकृच्छ्रेणाऽऽ[8]साद्य न भजेतु किन्तु यावद्देवप्रापितं तावदेव [9]भुञ्जीत।।११।।

**आश्वेति**। श्वानश्च अघाश्च पतिताः, अन्ता[10]वसायिनः [11]नापितप्रभृतयः[11] तानभिव्याप्य यथार्हं कामान् संविभजेत् स्वभोग्या[12]द्विभज्य दद्यात्। यद्यपि एकैवाऽऽत्मनो दारा भार्या, तस्यामतिथिशुश्रूषणे नियुक्तायां स्वस्य शुश्रूषाहीयेत, यस्याञ्च नृणां स्वत्वग्रहो, ममैवेयमिति आग्रहः, तामेकामपि संविभजेत्, अतिथ्या[13]दि शुश्रूषणे नियुञ्जीतेत्यर्थः। न तु अन्यथा मन्तव्यम्, यथार्हं [14]संविभजेदित्युक्तत्वात्।।१२।।

एवञ्चेत् तेनेश्वरो वशीकृतः स्यादित्याह-**जह्यादिति**। यदर्थे यन्निमित्ते[15] अन्यैरजितोऽपीश्वरः तेन जित एव।।१३।।

ननु कथमेवं तस्यां स्वत्वाभिमानो हातुं शक्यः, तत्त्वविचारेणेत्याह-**क्रिमीति**। [16]क्रिमिविड्भस्मसुनिष्ठा पर्यवसानमन्ते यस्य तदीया देहार्थारतिर्यस्यां सा, स्वमहिम्ना नभोऽपि छादयतीति तथा।।१४।।

**सिद्धैरिति**। किञ्च सिद्धैः देवलब्धैः यज्ञावशिष्टार्थैः पञ्चयज्ञशेषैरन्नादिभिः। महतां निवृत्तानाम्।।१५।।

**देवानिति** एतद्विवृण्वन्नाऽऽह देवादीन्पञ्चयज्ञदेवताः आत्मानञ्च। एवं पृथक् पुरुषमन्तर्यामिणमेव यजेत।। १६,१७।।

**वीर॰** यतोऽधिके स्वत्वाभिमानो दण्डहेतुः, अत एव तद्भक्षणे प्रवृत्तान्मृ गोष्ट्रादीन् आत्मनः स्वस्य पुत्रवत्पश्येत्

---

1. M,Ma °जेत्प्र° 2. A,B,G,J,M,Ma,T वि° 3. M,Ma करोऽस्ति ; W कारस्स्यात् 4. A,B,G,J,M,Ma,T अ° 5. A,B,J °प् 6. A,B,J Omit विमक्षिकाः 7- -7. H,V Omit 8. A,B,J °पा° 9. A,B,J भजेत् 10. A,B,J °न्ते 11- -11 A,B,J चाण्डालादयः 12. A,B,J °ज्या° 13. A,B,J °थिशु° 14. A,B,J Omit सं 15. A,B,J °त्तम् 16. A,B,J कृ°

**पुत्रानिव मन्येत**, न तु निगृह्णीयादित्यर्थः। तथाहि–तैः पुत्रैस्सह एषां मृगादीनां कियदन्तरं, न किञ्चिदप्यन्तरं न किञ्चिदपि तारतम्यमस्तीत्यर्थः। तत्र मृगाः शुनकमार्जारादयः, मर्को मर्कटः, आखुः मूषकः सरीसृपा अन्ये सर्पणस्वभावा जन्तवः, विमक्षिकाः विशब्दः पादपूरणार्थः विशिष्टमक्षिका इति वा। [1]सरीसृप्खगेति वा पाठः[1]।।१०।।

विवृतमर्थमुपसंहरति-**त्रिवर्गमिति**। स्वयं गृहस्थोऽप्यनेन तदुपयुक्तवर्गत्रयनिष्ठता सूच्यते। अतिकृच्छ्रेणाऽतिप्रयासेन त्रिवर्गं धर्मार्थकामान् न भजेत न सेवेत। दैवात्प्राप्तैरेव तुष्येदित्यर्थः। तदेवाऽऽह-यावद्दैवेन देशकालानुगुण्येन प्रापितं तदेव यथोपयुक्तं भजेत।।११।।

धर्मान्तरमाह–श्वानश्चाघा अतिपाप्मानश्च [2]अन्तावसायिनः चाण्डालादयश्च तानभिव्याप्य तेभ्यो यथोचितं कामान् संविभजेत् यथाशक्ति तदपेक्षितानन्नादीन् दद्यादित्यर्थः। सङ्गमात्मजायासुतादिषु विमुञ्चेदित्युक्तम्, जायासङ्गत्यागमुपपादयति–अपीति। आत्मनः स्वस्यदारान् भार्यामेकामपि जह्यात्। तस्यां स्वत्वाभिमानं त्यजेदित्यर्थः। एतदेव वक्तुं तावत्तस्या दुस्त्यजत्वमाह–यतो यस्यां भार्यायां नृणां स्वत्वग्रहः ममेवेयमिति आग्रहः।।१२।।

यदर्थे यद्भार्यार्थं स्वकीयान्प्राणान् पितरं गुरुं वा हन्यात्। एवं दुस्त्यजाभार्येत्युक्तम्। एवम्भूतायां तस्यां स्त्रियां भार्यायां स्वत्वं जह्यात् स्वत्वाभिमानं न कुर्यादित्यर्थः। यः पुमानेवं जह्यात् तेन पुंसा अजितः कैरप्यजितः परमात्मा जितः [3]वशीकृतो[3] भवति।।१३।।

कथमेवं तस्यां स्वत्वाभिमानस्त्यक्तुं शक्यः। तत्त्वविचारेणेत्याह-[4]**क्रिमीति**। [5]क्रिमिविङ्भस्मसु निष्ठापर्यवसानमन्तो यस्या तदिदं कलेबरं क्व? तदीयादेहार्थारतिर्यस्यास्सा भार्या क्व? नभश्छदः आकाशस्याऽपि छादयिता आकाशतुल्यो निर्लेप इत्यर्थः , ईदृश आत्मा क्व? इत्येवं तत्त्वविचारेण जह्यादित्यर्थः।।१४।।

यावदर्थपरिग्रह इति, दैवाल्लब्धेष्वपि प्राणमात्रोपयुक्तान्नादिपरिग्रह उक्तः। इदानीं तैरपि यज्ञावशिष्टैरेवाऽर्थै रात्मनो वृत्तिं कल्पयेदित्याह–**सिद्धैरिति**। सिद्धैर्दैवाल्लब्धैः यज्ञावशिष्टैः पञ्चमहायज्ञादिभिः अवशेषितैरेवार्थैः अन्नादिभिः आत्मनः स्वस्य वृत्तिं प्राणधारणरूपां कल्पयेत् । शेषे यज्ञाद्यनुपयुक्ते स्ववृत्त्यनुपयुक्ते च दैवाल्लब्धेऽप्यर्थे स्वत्वाभिमानं त्यजेत्। प्राज्ञः एवंविधज्ञानवान् महतां पदवीं महद्भिर्गम्यां मुक्तिरूपां पदवीं प्राप्नुयात्।।१५।।

---

1--1. W omits 2. A,B,T अन्तेऽव° 3--3 W. omits 4. A,B,T कृ° 5 A,B,T कृ°

एतद्विवृण्वन्नाह–देवानृषीन् नॄन् मनुष्यान्भूतानि पितॄंश्च[1] महायज्ञदेवता आत्मानञ्च स्ववृत्त्या याजनाध्यापनादि पूर्वोक्तवृत्त्या आगतेनार्जितेन वित्तेनाऽन्वहमहरहः पृथक् पुरुषं देवाद्यन्तरात्मानं परमपुरुषं यजेत, एकमेव परमपुरुषं देवादिशरीरभेदेनाऽन्तरात्मत्वेनाऽवस्थितमाराधयेदित्यर्थः।।१६।।

किञ्च। यर्हि यदाऽऽत्मनः स्वस्याऽधिकारः "अर्थी समर्थो विद्वांश्च" इत्युक्तोऽधिकारः स्यात्, तदा सर्वा यज्ञसम्पदः स्युरेव। यथाधिकारं सर्वे यज्ञाः कर्तव्या एवेत्यर्थः। वितानो यज्ञग्रन्थः श्रौतकल्पसूत्रादिरूपः तदुक्तेन विधिना अग्निहोत्रादिकर्मणा परमपुरुषं यजेत।।१७।।

**विज०** "आखुभुक्पृषदंशश्च मार्जरो मर्क उच्यते" इत्यभिधानम्। वयः पक्षिणः, अन्तरं भेदः, कियान् न कोऽपि, पराधीनत्वाविशेषात्।।१०।।

अतिकृच्छ्रेण शास्त्रविहितमार्गेण शूद्रप्रतिग्रहादिलक्षणेन गृहमेधी गृहस्थोऽपि सर्वाश्रयत्वेऽपि दैवोपपादितं यवादिव्रीहिजात, मयाचितोपपन्नं वा।।११।।

कर्माङ्गञ्चेद्दारग्रहणं प्रयोजनं न ग्राम्यभोगः, तथात्वे तदाशापूरणस्य दुस्साध्यत्वेन तत्प्रयत्ने महान्दोष आपद्येत, तदभिप्रायेणाह–आत्वेति। यदर्थे येषामर्थे कामपूरणार्थं स्वप्राणान् जह्यात्, पितरं वा हन्यात्, तद्विरोधे सतीति शेषः। किञ्च। यतो येभ्यो नृणां सत्त्वग्रहो सत्त्वगुणग्राहो धैर्यनिग्रहो, भवतीति शेषः तानेतान्महतो दारानाप्त्वा कामान्यथायोग्यं संविभज्य श्रेयसे, घटेतेति शेषः।।१२।।

यद्यङ्गना प्राणाद्यपहारिणी तर्हि तया श्रेयसे घटनं कथम्? इत्याशङ्क्याऽऽह–यस्यामिति। सत्त्वग्रह इत्यादिकमुत्तरत्राऽपि सम्बध्यते। अजितोऽपि यस्यास्सत्त्वग्रहः तस्यां स्त्रियां तेन सत्त्वेन जितो वशंगतः सपुमान् तस्यां स्त्रियां सत्वं जिह्यादित्यन्वयः। यदिस्वात्मान मुल्लङ्घ्य सा वर्तते तर्हि तस्यास्त्याग एव वरीयानित्यमुमर्थं हि शब्देन दर्शयति–"हताधिकारां मलिनां पिण्डमात्रोपजीविनीम् परिभूतामधश्शय्यां वासयेद्व्यभिचारिणीम्" (याज्ञ. स्मृ 1-70) इति च। "यत्राऽऽनुकूल्यं दम्पत्योः त्रिवर्गस्तस्य वर्धते। मृते जीवति वा पत्यौ या नाऽन्यमुपगच्छति। सेह कीर्तिमवाप्नोति मोदते चोमया सह" (याज्ञ. स्मृ. 1-74-75) इति "स्त्रीभिः भर्तृवचः कार्यमेषधर्मः परः स्त्रियाः" (याज्ञ. स्मृ. 1-77) इति च।।१३।।

---

1. A,B,T add पञ्च

ग्राम्यधर्मेण शरीरमेवाऽनित्यं क्षणिकं भयग्रस्तं भयमुपजायते, न तु नित्यम्। अतश्च नित्यदुःखं शरीरञ्च कृमिविड्भस्मावसायि न वरम् अनेनाऽऽकाशशरीरब्रह्मज्ञानं दुरुत्पादमेतत्करुणामन्तरेण। अतो दुःखहेतुत्वात् दुश्चरित्रस्त्रीत्याग एव श्रेयानित्याशयवानाह—कृमीति। तदीयदेहेन क्रियमाणारति यस्यास्सा तथा, आत्मा परमात्मा। अत्र आत्मा जीवः किं न स्यात् शरीरप्रसङ्गादित्यत उक्तं नभश्छदिरिति नभसश्छादिराच्छादनं यस्य स तथा, नभो व्याप्यावस्थित इत्यर्थः। "आकाशशरीरं ब्रह्म" (तैत्ति.उ. 1-6) इति श्रुतेः। "अणुर्ह्येष आत्मा यं वा एते सनीतः पुण्यञ्च पापञ्च" इति श्रुतेः जीवस्याणुपरिमाणत्वेन सिद्धत्वात्।।१४।।

"यज देवपूजासङ्गति करणदानेषु" इति धातोः यज्ञो नारायणाख्यदेवपूजा, तत्करणावशेषितैः सिद्धैः ज्ञानसाधनयोग्यैरर्थैः स्ववृत्तिं देहयात्रालक्षणां कल्पयेत्। तत्राऽपि शेषे अवशिष्टे वस्तुनि स्वत्वं स्वकीयत्वं त्यजेद्यः सप्राज्ञो महतां सन्न्यासिनां पदवीमाप्नोतीत्यन्वयः।।१५।।

देवादियागेषु तदन्तर्यामित्वेन ततोऽभिन्नत्वेन भगवत्पूजैव विधेयेत्याशयेनाऽऽह—**देवानिति**।।१६।।

यर्हि यदाऽस्य यज्ञाधिकारोऽस्ति, यदा वा सर्वा यज्ञसम्पदः स्युस्तदा वैतानिकविधिनाऽग्निहोत्राद्विधिना वा यजेदित्यन्वयः।।१७।।

**नह्यग्निमुखतोऽयं वै भगवान्सर्वयज्ञभुक्।**
**इज्येत हविषा राजन् यथा विप्रमुखे हुतैः।।१८।।**

**तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः।**
**तेस्तैः कामैर्यजस्वैनं[1] क्षेत्रज्ञं ब्राह्मणाननम्[2]।।१९।।**

**कुर्यादपरपक्षीयं[3] मासि प्रोष्ठपदे[4] द्विजः।**
**श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनाञ्च वित्तवान्।।२०।।**

**अयने विषुवे कुर्यात्[5] व्यतीपाते दिनक्षये।**
**चन्द्रादित्योपरागे च द्वादश्यां[6] श्रवणेऽपि[7] च।।२१।।**

**तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके।**
**चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा।।२२।।**

1. M,Ma जेश्चैनं 2.A,B,G,H,J,T,V ०णाननु 3 A,B,G,J,T ०दा० 4 A,B,G,J,T प्रो० 5 M,Ma कुर्वा 6 A,B,G,J,T ०दशी 7 A,B,G,J M,Ma,T ०ग्

**माघे च सितसप्तम्यां मघाराका समागमे।**
**[1]राकयाचानुमत्या वा मासर्क्षाणि युतान्यपि।।२३।।**

**द्वादश्यामनू[2]राधा स्याच्छ्रवण स्तिस्र उत्तराः।**
**तिसृष्वेकादशी वा[3]ऽस्तु जन्म[4]र्क्षश्रोणयोगयुक्।।२४।।**

**त एते श्रेयसः काला नृणां श्रेयो विवर्धनाः।**
**कुर्यात्सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः।।२५।।**

**श्रीध०** न पुनरतिनिर्बन्धो यज्ञार्थं कार्य इत्याह–**नहीति**। विप्रमुखे हुतैरन्नादिभिर्यथा इज्येत पूज्येत न तथा अग्निमुखतो हविषा इज्येत।।१७।।

**तस्मादिति**। ब्राह्मणेषु च देवेषु पञ्चयज्ञदेवतासु च मर्त्यादिष्वन्येष्वपि नरेषु पश्वादिषु च क्षेत्रज्ञमन्तर्यामिणं ब्राह्मणा ननु मर्त्यादि यजने ब्राह्मण यजनानन्तरमन्येषु यजस्व। पाठान्तरे ब्राह्मणा आननं यस्य तम्।।१८,१९।।

**कुर्यादिति**। [5]प्रोष्ठपदे भाद्रपदे।।२०,२१।।

**तृतीयायामिति**। शुक्लपक्षे [6]अक्षयतृतीयायामित्यर्थः। हेमन्ते शिशिरे च मार्गशीर्षादिमासचतुष्टयेऽपि याश्चतस्रोऽष्टका स्तासु।।२२।।

**माघे** इति। सम्पूर्णचन्द्रा पौर्णमासी राका, न्यूनचन्द्रा सैवाऽनुमतिः। [7]ताभ्यां मासर्क्षाणि तत्तन्मासनामप्रवृत्ति र्निमित्तानि नक्षत्राणि युतानि यदा स्यु स्तदा। तदुक्तं त्रिकाण्ड्याम् "पुष्ययुक्ता पौर्णमासी पौषीमासेतु यत्र सा। नाम्ना स पौषो माघाद्याश्चैव मेकादशाऽपरे" (अम.को.1-122) इति।।२३।।

**द्वादश्यामिति**। अनुराधा श्रवण उत्तराफाल्गुनी उत्तराषाढा उत्तरा[8-]भाद्रेति तिस्र उत्तरा[-8]ः द्वादश्यां यदा स्यु[9]ः, आसूत्तरास्वेकादशी वा यदा स्यात्तदा च। जन्मर्क्षश्रोणयोगयुक्जन्मनक्षत्रस्य श्रवणस्य वा योगेन युक्तं दिनम्। [10]यद्वा, योगग्रहणं सम्बन्धबाहु[11]ल्यज्ञापनार्थम्।।२४।।

---

1 M,Ma काया वाऽ० 2 M,Ma ०नु० 3 याऽऽसु ; M,Ma चाऽऽसु 4 M,Ma ०न्मर्क्ष सौम्य० 5. A,B,T प्रौ० 6. A,B,J ०य्य 7. A,B,J तथा

8- -8 A,B,J भाद्रपदा वा 9 A,B,J स्यात् 10 A,B,G यदातदा 11 A,B,J ०ल्यार्थम्।।

न केवलं श्राद्धस्यैवेते कालाः, किन्तु धर्ममात्रस्येत्याह - **त एत** इति द्वाभ्याम्। तदेवाऽऽयुषः अमोघं साफल्यमित्यर्थः।।२५।।

**वीर०** अग्निमुखाराधनाद्विप्रमुखाराधनमतीव भगवतस्तोषकृदित्याह–नहीति। हे राजन्! विप्रमुखे हुतैरन्नादिभिर्यथाऽयं सर्वयज्ञभुक् भगवानिज्येताऽऽराध्येत न तथाऽग्निमुखतो हविषाऽऽराध्येत।।१७।।

तस्मादूब्राह्मणेषु [1-] देवेषु पञ्चमहायज्ञदेवेषुमर्त्यादिषु [-1] च यथाशक्ति यथायोग्यञ्च तैस्तैः कामैरन्नादिभिः ब्राह्मणाननं ब्राह्मणा एवाऽऽननं मुखं यस्य तमेनं क्षेत्रज्ञं परमात्मानं देवाद्यवस्थजीवशरीरकं वा यजस्वाऽऽराधय। ब्राह्मणानन्विति पाठे ब्राह्मणेषु यजनानन्तरमन्येषु मर्त्यादिषु यजस्वेत्यर्थः। युधिष्ठिरस्य गृहस्थत्वात् तवाऽप्येवमाराधनमवश्यं कर्तव्यमित्यभिप्रायेणाऽऽह[2]-यजस्वेतिमध्यमपुरुष प्रयोगः।।१९।।

किञ्च प्रौष्ठपदे[3] भाद्रपदेमासि द्विजः त्रैवर्णिको धनवांश्चेत् यथावित्तं वित्तानुसारेण पित्रोर्मातापित्रोः तद्बन्धूनाञ्च अपरपक्षीयं कृष्णपक्षीयं श्राद्धं महालयाख्यं कुर्यात्।।२०।।

किञ्च। अयनादिषु कालेषु पित्रोः श्राद्धं कुर्यादित्यन्वयः। तत्राऽयनं कर्कटसङ्क्रान्तिर्मकरसङ्क्रान्तिश्च। मेषतुले विषुवसंज्ञिके। तथा च वृद्धवसिष्ठः–"झषकर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने। विषुवे तु तुलामेषे गोलमध्ये ततोऽपराः" इति कुहुर्नष्टेन्दुकला चन्द्रादित्ययो रुपरागो ग्रहः।।२१।।

शुक्लपक्षे तृतीयायां अक्षतृतीयायामित्यर्थः[4]। कार्तिकेमासे[5], शुक्लपक्षे नवम्यां हेमन्ते शिशिरे च ऋतौ चतसृष्वप्यष्टकासु मार्गशीर्षादिमासचतुष्टयकृष्णाष्टमीषु।।२२।।

माघेमासि सितसप्तम्यां शुक्लसप्तम्यां मघानक्षत्रपौर्णमास्यो स्संयोगकाले च। सम्पूर्णचन्द्रा पौर्णमासी राका कलाहीनचन्द्रा पौर्णमासी अनुमतिः, ताभ्यां युक्तानि यानिमासर्क्षाणि मासनामप्रवृत्तिनिमित्तानि नक्षत्राणि तदुपलक्षितेषु च कालेषु।।२३।।

यद्वा-द्वादश्यामनूराधाश्रवणमुत्तरा फल्गुनी[6] उत्तराषाढोत्तराभाद्रेति तिस्र उत्तरा वा स्युः। आसूत्तरासूक्तासु तिसृषु एकादशी वा यदा स्यात् तदा च जन्मर्क्षश्रोणयोगयुक् जन्मनक्षत्रस्य श्रवणनक्षत्रस्य वा योगेन युक्तः कालः तदा च योगग्रहणं सम्बन्धबाहुल्यज्ञापनाय[7]।।२४।।

---

1--1 W Omits 2. W Omits आह 3. W प्रो० 4 A,B,T ०क्षयतृ० 5 W ०र्से 6. A,B,T फा० 7 A.B.T Add इति सञ्चनम्।

न केवलं श्राद्धस्यैवेते कालाः, किन्तु धर्ममात्रस्येत्याह-**त** इति द्वाभ्याम्। त एते अयनादयः नृणां श्रेयसः श्रेयस्साधनधर्मानुष्ठानस्य योग्या श्रेयो वर्धयन्तीति तथा। तादृशाः कालाः। तस्मात्सर्वात्मना करणत्रयैक्येन एषुकालेषु श्रेयः श्रेयस्साधनं वक्ष्यमाणं स्नानादिकमनुतिष्ठेत्। तदेवह्यायुषः अमोघममोघत्वं साफल्यमित्यर्थः।।२५।।

**विज॰** ननु मुख्यं होमादिकरणं भगवत्प्रीतिजनकं किम्? तत्राऽऽह **न हीति**।।१८।।

उपसंहारमुखेनोक्तार्थं निर्धारयति-तस्मादिति। ब्राह्मण आननं यस्य स तथा तम्।।१९।।

ननु यज्ञसम्भारे सति विशिष्टफलप्रदः कालः क इति तत्राऽऽह-**कुर्यादिति**। प्रोष्ठपदे कन्याख्ये सिंहमासामावास्यामारभ्य कन्यमावास्यापर्यन्ते, तत्राऽपि अपरपक्षीयकाले श्राद्धं कुर्यादिति उपर्यप्यन्वेतव्यम्। तद्बन्धूनां पितृमातृबन्धूनां पितामहमातामहादीनाम्।।२०।।

अयने उत्तरदक्षिणसंज्ञे, विषुवे संवत्सरान्तसङ्क्रमणे कुह्वाममावास्यायां, श्रवणेषु श्रवणादित्रिषु च शब्दात् सप्तम्यादि त्रिषु त्रयोदश्याञ्च। तदुक्तम्-"सप्तम्यादि त्रयञ्चैव तथाचैव त्रयोदशी। चतस्रस्त्वष्टकाः प्रोक्तास्सर्वपक्षाद्विशेषतः" (समयाचारे) इति।।२१।।

वृश्चिकमासामावास्यामारभ्यमकरमासामावासापर्यन्तः कालो हेमन्तः, तदुपरिकालः शिशिरः। "हेमन्ते शिशिरे चैव नित्यश्राद्धे गुणोत्तरम्" (समयाचारे) इति वचनात् अयमपि विशिष्टकालः।।२२।।

राका पौर्णमासी मघापौर्णमास्योस्सङ्गमे "शशिनि सिनीवाली स्याद्दृष्टे नष्टे कुहू रमावास्या। अनुमति रूने राका सम्पूर्णे पौर्णमासी च" (हला.को. 1-112) इति हलायुधः। राकयाऽनुमत्या युतानि मासनक्षत्राणि।।२३।।

यास्तिस्रः श्रवणादितारा:, आसु तारासु प्राप्तैकादशी पुण्यकालः अत्र **श्राद्धकरणञ्च** विकल्पः। एकादश्यां श्राद्धकरणस्य निषिद्धत्वात्, न वैष्णवसिद्धान्तिनस्तदाचरन्ति, त्रैविद्याश्चरन्ति च वा, यथैकादशी पुण्यदिनम्, अत्र क्रियमाणं कर्म सफलं, तथा तिसृष्वपि तारास्विति वा। जन्मनक्षत्रं श्राद्धकाल इति शेषः। सौम्ययोगयुक् मृगशिरस्सम्बन्धयुक्तं दिनञ्च।।२४,२५।।

**एषु स्नानं जपो होमस्[1]तपो देवद्विजार्चनम्।**
**पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम्।।२६।।**

1 A,B,G,J,M,Ma T ॰मोव्रतं

**संस्कारकालो जायाया अपत्यस्याऽऽत्मनस्तथा।**
**प्रेतसंस्थामृताहश्च[1] कर्मण्यभ्युदये नृप।।२७।।**

**अथ देशान्प्रवक्ष्यामि धर्मादिश्रेय आवहान्।**
**स वै पुण्यतमोदेशः सत्पात्रं यत्र लभ्यते।।२८।।**

**बिम्बं[2] भगवतो यत्र सर्वमेतच्चराचरम्[3]।**
**यत्र हि[4] ब्राह्मणकुलं तपोविद्यादयान्वितम्।।२९।।**

**यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम्।**
**यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ।।३०।।**

**सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत।**
**कुरुक्षेत्रं गय[5] शिरः प्रयागः पुलहाश्रमः।।३१।।**

**नैमिशं[6] फल्गुनं[7] सेतुः प्रभास्तेऽथ कुशस्थली।**
**वाराणसी मधुपुरी पम्पा बिन्दु सरस्तथा।।३२।।**

**नारायणाश्रमो नन्दा सीतारामाश्रमादयः।**
**सर्वे कुलाचला राजन्! महेन्द्रमलयादयः।।३३।।**

**श्रीध० संस्कार काल** इति-जायायाः पुंसवनादि, अपत्यस्य जातकर्मादि। आत्मनो यज्ञदीक्षादि। प्रेतस्य संस्था दहनादि। मृताहश्च सांवत्सरिकम्।[8] तथा अन्यस्मिन्नपि अभ्युदयार्थे कर्मणि श्रेयः कुर्यादित्यनुषङ्गः।।२६,२७।।

**अथेति**। यत्र यस्मिन् सर्वं[9] एतच्चराचरमस्ति तस्य भगवतो बिम्बं रुपम्, सत्पात्रं यत्र लभ्यते स वै पुण्यतमोदेशः।।२८-३०।।

**यत्रेति**। अर्हैरुत्तमैराश्रितानि, [10-]उत अपि च[-10]।।३१,३२।।

**नारायणेति**। सीताया रामस्य च आश्रम आदिर्येषाम्। द्वयोः पृथग्ग्रहणं वियोगकालाभिप्रायेण।।३३।।

---

1. M,Ma °हस्सुक 2. M,Ma विश्वं भा° 3. M,Ma जगदेत° 4. A,B,G,J,M,Ma,T ह 5 H,V,W हय 6 A,B,G,J,M,Ma T °षं 7 A B,G J,T,W, फा° 8. A,B,J यदा 9 A,B,J Omit सर्व 10--10 A,B,J Omit

**वीर०** एषु कालेषु कृतं यज्ञपादिकं यच्च पित्राद्युद्देशेन दत्तम्, भावे क्तः। दानञ्च तद्धयनश्वरमक्षय्य-फलसाधनम्।।२६।।

किञ्च। हे नृप! जायाऽपत्यात्मनां संस्कारकाले-तत्र जायायाः संस्कारः पुंसवनादिः, अपत्यस्य संस्कारो जातकर्मादिः, आत्मनः स्वस्य संस्कारो यज्ञदीक्षादिः-एतेषां कालेषु यदा प्रेतस्य संस्थादहनादि कर्ममृताहश्च तदा अन्यस्मिन्नभ्युदयार्थे कर्मणि कृतं स्नानादिकम् अनश्वरमिति पूर्वेणान्वयः।।२७।।

एवं श्रेयस्कराः काला उक्ताः। अथ देशान्वक्तुं प्रतिजानीते-**अथेति**। कर्मादिश्रेयस आवाहनाधायकान् देशान् प्रवक्ष्यामि। तावदयं मुख्यो देशः श्रेयस्कर इत्याह स इति। यत्र देशे सत्पात्रं लभ्यते।।२८।।

यत्र यस्मिन् सर्वमेतच्चराचरमाधेयतया नियाम्यतया चाऽस्ति, तस्य भगवतो बिम्बं, यत्र च देशे वर्तते, यत्र च देशे तपोविद्यादयाभिर्युक्तं ब्राह्मणकुलं वर्तते।।२९।।

यत्र यत्र देशे हरेर्भगवतोऽर्चा पूजाप्रवर्तते स सर्वोऽपि देशः पुण्यतमः श्रेयसां पदं श्रेयस्साधनधर्मानुष्ठान योग्यं स्थानम्। किञ्च। यत्र येषु देशेषु पुराणेषु प्रसिद्धाः गङ्गादयो नद्यस्सन्ति।।३०।।

तथा पुष्कर प्रभृतीनि सरांसि च [1]यत्र सन्ति [2-]इति पूर्वेण सम्बन्धः[-2]। उत किञ्च। यानि चार्हाश्रितानि महात्मभि-रधिष्ठितानि क्षेत्राणि [3]सन्ति। तान्येव [4]प्रदर्शयति-कुरुक्षेत्रमिति। यद्वा, कुरुक्षेत्रादिव्यतिरिक्तक्षेत्राभिप्रायेणोक्त महाश्रितानीति। गयस्यासुरस्य शिरः तत्पतनस्थानं, गयेत्यर्थः। प्रयागो गङ्गायमुनयोस्सङ्गमस्थानं, पुलहाश्रमः शालग्रामक्षेत्रम्।।३१।।

फल्गुनी नदी गयायामेव तत्स्थानं फाल्गुनम्। सेतुः रामसेतुः प्रभासः प्रत्यक्सरस्वतीसङ्गमस्थानं, कुशस्थलीद्वारवती, पम्पा [5-]पम्पातटम्[-5] बिन्दुसरः कर्दमाश्रमः।।३२।।

नारायणाश्रमो बदरिकाश्रमः, नन्दा अलकनन्दातटं सीतारामयोराश्रमः चित्रकूटाद्रिः। एतत्प्रभृतयः तथा हे राजन्! महेन्द्रमलयादयः, सर्वे कुलगिरयश्च।।३३।।

**विज०** सत्पात्रं विशिनष्टि-विश्वमिति। यस्मिन्देशे भागवतास्तस्मिंश्चराचरं सर्वं जगदस्तीति ज्ञातव्यम्। "यतिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते हरिस्स्वयम्। हरिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते **जगत्त्रयम्**" इति वचनात्।।२६-२९।।

---

1. W Omits यत्र 2--2 W Omits 3. W Omits सन्ति 4 A,B,T Omit प्र 5- -5 A,B,T **सरोवरम्**।

अर्चाः शालग्रामादि प्रतिमाः पुराणेषु भागवतादिषु विश्रुताः।।३०।।

कृष्णावेण्यादयश्च, क्षेत्राणि पुरुषोत्तमादीनि अर्हैः पूज्यैरगस्त्यादिभिराश्रितानि अधिष्ठितानि।।३१।।

[1]फल्गुनं स्थानं हरपुरं, कन्यातीर्थं वा "कन्यापुरं फाल्गुनं स्यात्स्थानं हरपुरश्च तत्" इत्यभिधानम्। वाराणसी पुरी काशी।।३२,३३।।

**एते पुण्यतमादेशा हरेरर्चाश्रिताश्च ये।**
**एतान्देशान्निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः।**
**धर्मो [2]ह्यत्रेहितः पुंसां सहस्राधि फलोदयः।।३४।।**

**पात्रं [3]तत्र निरुक्तं वै कविभिः पात्रवित्तमैः।**
**हरिरेवैक उर्वीश यन्मयं [4]सचराचरम्।।३५।।**

**[5-]देवर्ष्यर्हत्सु वै सत्सु[-5] [6]तत्र ब्रह्मात्मजादिषु।**
**राजन्यदग्रपूजायां मतः पात्रतयाऽच्युतः।।३६।।**

**जीवराशिभिराकीर्ण [7]आण्डकोशाङ्घ्रिपो महान्।**
**तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम्।।३७।।**

**पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः।**
**शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ।।३८।।**

**श्रीध० एते** इति। अर्चाश्रिताश्च स्थिरप्रतिमाश्रिताः पूर्वन्तु शालग्राम[8]शिलार्चन[9]देश [10]उक्त इत्यपौनरुक्त्यम्। अत्र एषु देशेषु ईहितः कृतः। सहस्रगुणमधिकस्य फलस्योदयो यस्मात्स तथा।।३४।।

[11-]अथपात्रमाह[-11]-**पात्रमिति**। हरिरेवपात्रं निरुक्तं निर्णीतम्।।३५।।

तदेवाऽऽह **देवेति**। देवेषु च ऋषिषु चार्हत्सुच तपोयोगादिसिद्धेषु ब्रह्मात्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीये राजसूये यद्यस्मात् अच्युत एव पात्रतया सम्मतः।।३६।।

---

1. A, फा° 2. M,Ma ह्यत्रोदितः 3. A,B,G,J,T त्वत्र; M,Maचाऽत्र 4 A,B,G,J,T वैः; M,Ma च 5- -5 H,V देवर्ष्यर्हत्सुसत्स्वत्र . W देवेष्वर्हतसुसत्स्वत्र 6. H,V,W ब्रह्म° 7 H,V,W अ° 8. A,B,J °लाद्यर्च° 9 A,B,J °शाः 10. A,B,J °क्ताः 11- -11 H,V Omit

सम्मतत्वे हेतुमाह-**जीवेति**। जीवराशिभिर्व्याप्तो ब्रह्माण्डकोश एव योऽङ्घ्रिपःसर्वजीवानामात्मनश्च तर्पणम्।।३७।।

एतदेव पुरुषनामनिरुक्त्या द्रढयति-**पुराणीति**। नृतिर्यगादिरूपाणि पुराणि शरीराणि, तेष्वन्तर्यामिरूपेण प्रत्यगंशेन च यतः शेते अतः पुरुष इति प्रसिद्धः।।३८।।

**वीर०** तथा ये हरेरर्चास्थिरा पूजा प्रतिमा वा तया आश्रिताः अधिष्ठिता **स्त** एते सर्वे पुण्यतमादेशाः बिम्बं भगवतो यत्रेति शालग्रामशिलाद्यर्चनदेश उक्तः। अत्रतु वेङ्कटाद्रिस्थानादीन्युच्यन्ते इत्यपौनरुक्त्यम्। श्रेयस्कामः पुमानभीक्ष्णशः पुनः पुनरेतान् देशान्नितरां सेवेत।।३४।।

पुंसां यत्फलसाधनत्वे यो धर्म उदितो विहितः स एषु देशेषु कृतः सहस्रगुणमधिकस्य फलस्य उदयो यस्मात्तादृशो भवेत्। एवं देशकालावुक्तौ। अथ पात्रमाह-**पात्रन्त्विद्यादिना**। हे उर्वीश! पात्रवित्तमैः सत्पात्रयाथात्म्यविद्भिः कविभिः हरिरेक एव पात्रं निरुक्तम्, हरिरेक एव सत्पात्रमिति निर्णीतमित्यर्थः। पात्रं पूज्यसमर्हणीयं वस्तु। हरिं विशिनष्टि - एतच्चराचरात्मकं जगद्यन्मयं यद्धरिप्रचुरम्। एतेन[1] तत्समर्हणेन सर्वे समर्हिता भवन्तीति सूचितम्।।३५।।

हरेरेव पात्रत्वं यतो राजसूयेऽधुनात्वयैव दृष्टमित्याऽऽह-**देवेष्विति**। हे राजन्! देवेषु ऋषिषु अर्हत्सु तपोयोगादिसिद्धेषु ब्रह्मादिषु सनकादिष्वपि सत्सु, तत्रत्वदीयराजसूये यद्यस्मादच्युत एवाऽग्रपूजायां पात्रतया मतोज्ञातः।।३६।।

हरेस्समर्हणेन सर्वेषामर्हणं कृतप्रायमित्याह-**जीवेति**। जीवराशिभिराकीर्णो व्याप्तः ब्रह्माण्डकोश एव यो महानाङ्घ्रिपोवृक्षः, तस्य मूलत्वात् कारणत्वात् अच्युतस्येज्याऽऽराधनं सर्वेषां जीवात्मनां तर्पणं तृप्तिकरं, यथाङ्घ्रिपस्य मूलेऽर्पितं जलं तच्छाखोपशाखानां वृद्धिकरं तथा ब्रह्माण्डकोशमूलभूतेऽच्यते कृते कृतमर्हण मण्डान्तर्गतेषु सर्वेषु कृतप्रायमेवेत्यर्थः। अतः स एवोत्तमं पात्रमिति भावः। इतरत्राऽपि **तद्दृष्ट्यैवा**र्हणं कार्यमिति च।।३७।।

एतदेव पुरुष नाम निरुक्त्या द्रडयति-**पुराणीति**। मनुष्यतिर्यगृषिदेवतारूपाणि पुराणि शरीरात्मकानि अनेन भगवता सृष्टानि। सृष्टेषु च पुरेषु यतो भगवान् जीवेन रूपेण जीवाख्येन शरीरेण "यस्याऽऽत्मा शरीरम्"

---

1 W अनेन

(वृह.उ. 3-7-22) इति श्रुतेः। पुरे शेते अतोऽसौ पुरुषः। पुरुषशब्दः पुष्कलप्रवृत्तिनिमित्ताश्रायः। पुरे शेते इति पुरुषः, शकारस्य षकारः अकारस्य उकारश्च व्यत्ययात्। "अन्येष्वपि दृश्यते" (अष्टा. 3-2-101) इति डश्च। जीवेन रूपेणेत्यनेन केवलं सर्वकारणत्वादेव तर्दर्हणं तत्कार्यपर्यन्तपर्यवसन्नम्। अपि तु तत्तदन्तरात्मतया तत्तद्रूपेणाऽवस्थितत्वाच्चेत्युक्तं [1]भवति।।३८।।

**विज॰** हरेरर्चाश्रिताः हरिक्षेत्रादयः ; पुनर्वचनं सर्वस्मात्तेषां श्रैष्ठ्यद्योतनाय। एतद्देशनिषेवणेन किं विशेष फलमिति। तत्राऽऽह-धर्म इति। " कृष्णातरङ्गसम्भूतपवनस्पर्शमात्रतः। निर्धूतपातकास्सर्वेजना विष्णुपदं ययुः" इत्यादिशास्त्रेषु सहस्राधिकफलोदयत्वेनोदितः।।३४।।

पात्रेष्वपि तारतम्यमस्ति। तत्र मुख्यपात्रं हरिरित्याह-**पात्रमिति**। पात्रतारतम्यवित्तमैः कविभिः पात्रञ्च निरुक्तं वै मुख्यत्वेन निर्णीतं हीत्यन्वयः। किं तत्? इत्यत उक्तं हरिरिति। चराचरं यन्मयं यत्स्वामिकं यद्व्याप्तं सर्वं यस्मात्तस्मात् हरिरेव मुख्यं पात्रमित्यन्वयः।।३५।।

इदं भवतोऽपि सिद्धमित्याह-**देवेति**। ब्रह्मात्मजादिषु सत्सु, देवाश्च ऋषयश्च देवर्षयः त एवार्हन्तः पूजायोग्याः येष्वपि सत्सु तत्र तत्र यज्ञशालाया मच्युतो गुणतोऽवयवतः स्वरूपतश्च च्युतिरहितत्वात् श्रीनारायणोऽग्रपूजायां पात्रतया मतः त्वयाज्ञात इति यदतो मुख्यपात्रं हरिरित्यवधारणा युक्ता।।३६।।

किञ्च। प्रत्येकं पूजाऽपि न विधेया, भगवत्पूजया तत्तृप्तिसम्भवात्, तन्मूलत्वात्तेषाम्। तरुमूलनिषेवणञ्च शाखानामिवेति मुख्यवैष्णवसिद्धान्तमाह-जीवराशिभिरिति।।३७।।

ननु मुख्यपात्रालाभे विहितकर्मानुष्ठानविषयाभावेन तद्विधानं व्यर्थमित्याशङ्क्य तत्तद्योग्यपात्रं वक्तुं कञ्चन सृष्टिप्रकारमाह-**पुराणीति**। अनेन दयालुना हरिणा नृतिर्यगादिसंज्ञितानि पुराणि शरीराणि सृष्टानीत्यन्वयः। ततः किम्? तत्राऽऽह-शेते इति। श्रीहरि रेषु पुरेषु भोगायतनेषु जीवेन रूपेण स्वप्रतिबिम्बेन सह शेते इति यत्तस्मात् असौ पुरुष इत्युच्यते, जीवोऽपि तन्नामेति शेषः "पुरिशयनात्पुरुषः" इति श्रुतिं हिशब्देन सूचयति।।३८।।

**[2]तेष्वीशो भगवान्राजन्! तारतम्येन वर्तते।**

**तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते।।३९।।**

1. W Omits भवति। 2. A,B,G,J,T तेष्वेषु

**दृष्ट्वातेषां मिथो नृणामवज्ञा[1]नात्मनां नृप।**
**त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता।।४०।।**
**ततोऽर्चायां हरिं केचित् [2-]श्रद्धाय च[-2] सपर्यया।**
**उपासत उपास्ता[3]ऽपि नाऽर्थदा पुरुषद्विषाम्।।४१।।**
**पुरुषेष्वपि राजेन्द्र! सुपात्रं ब्राह्मणं विदुः।**
**तपसा विद्यया तुष्ट्या धत्तेवेदं हरेस्तनुम्।।४२।।**
**नन्वस्य ब्राह्मणा राजन्! कृष्णस्य जगदात्मनः।**
**[4]पुनन्तः पादरजसा त्रिलोकीं दैवतं महत्।।४३।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां

अष्टादशसाहस्र्यां श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

सप्तमस्कन्धे सदाचारनिर्णयो नाम चतुर्दशोऽध्यायः।।१४।।

**श्रीध० तेष्विति**। तारतम्येन तिर्यगादिभ्यः पुरुषे यस्मादाधिक्येन वर्तते, तस्मात्पुरुषः पात्रम्। तत्राऽपि यावानात्मा ज्ञानांशो यथायथा [5]ईयते तप आदियोगेन यत्र यत्र प्रतीयते तथा तथाऽऽसौ पात्रमित्यर्थः। तथा च श्रुतिः। "पुरुषत्वे चाविस्तरामात्मा" इत्यादि।।३९।।

तर्हि प्रतिमादौ हरेः किमिति पूजां कुर्वन्ति? तत्राऽऽह-**दृष्ट्वेति** द्वाभ्याम्। मिथोऽवज्ञानमसम्मानः। तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा क्रियायै पूजाद्यर्थम्।।४०।।

**तत** इति। हरिमुपासते। उपासिताऽप्यर्चापुरुषद्वेषिणामर्थदा न भवति पुरुषेषु द्वेषं हित्वा अर्चिता सती साऽपि मन्दाधिकारिणां पुरुषार्थप्रदा भवत्येवेत्यर्थः।।४१।।

पुरुषेष्वेवजात्या तप आदिभिश्च पुनर्विशेषान्तरमाह-**पुरुषेष्वपीति**। यो धत्ते तं सुपात्रं विदुः।।४२।।

एतदेव कै[6]मुतिकन्यायेन द्रढयति-**नन्वस्येति**।।४३।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां चतुर्दशोऽध्यायः।।१४।।

---

1. M,Ma °ज्ञामात्मनो; A,B,G,J,T ज्ञानात्मतां 2--2 A,B,G,J,T संश्रद्धाय 3. M,Ma °सांहि 4. H,V पुरतः; W पुनतः 5. H,V Omit ईयते 6 A,B T °मृत्य

**वीर०** इतोऽपि पुरुषशब्दवाच्यः स्वसमर्हणेन अन्येषां तदाधायकश्चेत्याह-**तेष्विति**। हे राजन्! तिर्यगादिभ्य स्तेषु पुरुषेषु तारतम्येन स्वकीयज्ञानशक्त्यादिगुणाविर्भाव तारतम्येन वर्तते भगवान्। अतोऽसौ पुरुषः पुरु अधिकं पुरुषेषु शेते इति पुरुषः; यत एवम्भूतोऽत स्तद्दृष्ट्यैवाऽर्हणमर्हणीयेषु सर्वेषु पुरुषेषु विधेयमिति भावः। यतो देवमनुष्यादि पुरेष्वन्तर्यामितया[1] जीवशरीरकतया च भगवान् वर्तते। यतश्च सर्वे पुरुषदेवादयो भगवच्छरीरभूताः, तेन तारतम्यं[2] व्याप्ताश्च। तस्मादात्मा परमात्मा पुरुषः परमपुरुषो यावान् यावद्गुणाविर्भाववान् यथा यत्र यत्र ईयते प्रतीयते तत्तत्पात्रं यत्र यत्राऽधिकं भगवतो ज्ञानशक्त्यादिगुणाविर्भावस्तत्तदुत्तमं पात्रं, न्यूनाविर्भाववत्तु अनुत्तममिति भावः। तदेवं भगवत एवोत्तमपात्रत्वमितरेषामपि तदात्मकत्वेनैवाऽर्हणीयत्वं, तदाविर्भावानुसारेण व्यवस्थितमिति चोक्तम्।।३९।।

ननु भगवतस्तदात्मकानां पुरुषाणामेवार्हणीयत्वे स्मृतिकारादिभिराराधनीयत्वे विहिता हरिप्रतिकृतिः पूजिता न फलदा स्यादिति चेत् भूतद्रोहिणां व्यर्थैवेत्याह-**दृष्ट्वेति** द्वाभ्याम्। मिथोऽवज्ञानं तिरस्कारः। तस्मिन्नात्मा बुद्धिर्येषां तेषां भावं दृष्ट्वा, हे नृप! हरेः क्रियायै पूजार्थमर्चा प्रतिमा कविभिः त्रेतादिषु युगेषु कृता पूज्यत्वेन विहिता। त्रेतादिष्वित्यनेन प्रायशः कृते सर्वात्मना ब्राह्मोपासनमेव विहितमिति सूचितम्।।४०।।

ततः[3] तत्राऽऽर्चायां पूजार्थप्रतिमायां केचिद्धरिं श्रद्धाय[4] श्रद्धापूर्वकमुपासते। एव मुपास्ता आराधिताऽप्यर्चा पुरुषद्विषां भगवदात्मकान् पुरुषान् द्विषन्तीति पुरुषद्विषः तेषां नार्थदा न पुरुषार्थदा भवति, पुरुषान् बहुमन्य-मानानामेव अर्चाराधनं फलवदित्यर्थः।।४१।।

यदुक्तं, "तस्मात्पात्रं हि [5]पुरुषः यावानात्मा यथेयते"[5] इति तद्विवृणोति-**पुरुषेष्विति**। हे राजेन्द्र! पुरुषेष्वपि ब्राह्मणं सुपात्रं विदुः सुपात्रयाथात्म्यविदः। सुपात्रत्वे हेतुं वदन् विशिनष्टि-इदं ब्राह्मणात्मकं सुपात्रं तपसाऽनशनेन विद्यया आत्मयाथात्म्यज्ञानपूर्वकभगवदुपासनरूपविद्यया, तुष्ट्या दैवाल्लब्धसन्तोषेण च। इदं स्वधर्मशमदमा-दीनामप्युपलक्षणम्। एभिर्गुणैर्हरेस्तनुं धत्ते बिभर्ति। व शब्दः पादपूरणार्थः, एवकारार्थो वा। हरेरेव तनुं धत्ते इत्यर्थः।।४२।।

---

1. A,B,T पुरुषेष्व ० 2. W तरतमं 3. A,B,T Omit ततः 4. A,B,T Omit संश्र ० 5- -5 A,B,T पुरुषः इत्यादि

एतदेव कैमुतिकन्यायेन[1] द्रढयति-**नन्वस्येति**। ननु[2] हे राजन्! न त्रिलोकीं पादरजसा पुनतः[3] पवित्रीकुर्वतः[4] जगदन्तरात्मनः श्रीकृष्णस्यापि ब्राह्मणा महद्दैवतं किमुताऽन्येषामस्मद्विधानां ब्राह्मणा दैवतमित्यर्थः।।४३।।

इति श्रीमद्भागवते सप्तमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां चतुर्दशोऽध्यायः।।१४।।

**विज०** ईशो भगवांस्तेषु पुरेषु स्थितः पुरुषनामसु जीवेषु च तारतम्येन तत्तद्भक्त्यादिगुणतारतम्यानुसारेण सन्निधानतारतम्येन वर्तत इति यस्मात्तस्मात् तत्तद्योग्यानुसारेण पुरुषो जीवराशिश्च पात्रं तदन्तर्यामिहरिस्मरणपूर्वकमिति शेषः। अत्र सन्निधानतारतम्यमेव हरेः, न तु स्वरूपतारतम्यम्। तदुक्तम्-"ब्रह्मादि स्थावरान्तेषु न विशेषो परेक्वचित्। व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति च" (समयाचारे) इति। अत्रापीत्थम्भावमाह-यावानिति। पुरुषे तु आत्मा यावान्महिम्ना यथा येन प्रकारेण ज्ञायते तदानुकूल्येन जीवराशिः पात्रमित्यर्थः।।३९।।

हरिप्रतिमापूजायाः पुरुषस्थितपुरुषनाम्नो हरेः पूजा सम्यक् फलवतीत्याशयेनाऽऽह-**दृष्ट्वेति**। कविभिस्तेषां नृणां मिथः आत्मनो हरेरेवज्ञां दृष्ट्वा त्रेतायां सपर्याक्रियायै हरेरर्चा कृता यस्मात्।।४०।।

ततः केचित्संश्रद्धया सपर्यया अर्चायां हरिमुपासते ये तेषां पुरुषस्थित हरिद्विषां सा उपासा ऐहिकफलमन्तरेण परमपुरुषार्थ प्रदा न भवतीत्यन्वयः।।४१।।

मुख्यपात्रमाह-**पुरुषेष्विति**। कीदृशो ब्राह्मणो मुख्यं पात्रमित्यत स्तद्विशिनष्टि-तपसेति। तनुं प्रति मास्थानम्। अत्र "शिलावत्प्रतिमास्सन्तो विप्राद्याश्च हरेः स्मृताः" (समयाचारे) इति वचनात् विप्रादिमात्रं हरिशिलास्थानीयं न, किन्तु तप आदिगुणविशिष्टब्राह्मणकुलम्। अन्यथा हरेरर्चैषा सा पुरुषार्थप्रदा न स्यादिति। तदुपासां विनिन्द्य सुपात्रं ब्राह्मणं विदुरिति कथनं व्यर्थं स्यात्। अत एव ब्राह्मण इति तत्पदं प्रायोजि।।४२,४३।।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नवल्यां टीकायां

सप्तमस्कन्धे चतुर्दशोऽध्यायः।।१४।।

(श्रीविजयध्वजरीत्या पञ्चदशोऽध्यायः।।१५।।)

* * * *

---

1. W °मुत्यन्या° 2. A,B,T Omit ननु 3. A,B,T °न्तः 4. A,B,T °न्तः।

# पञ्चदशोऽध्यायः

नारद उवाच

कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपाऽपरे।
स्वाध्याय[1]ने प्रवचने [2-]ह्यन्ये च ज्ञा[-2]नयोगयोः।।१।।

ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता।
दैवे च तदभावे स्यात् इतरेभ्यो यथाऽर्हतः।।२।।

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि श्राद्धे कुर्यान्नविस्तरम्।।३।।

देशकालोचितश्रद्धा द्रव्यपात्रार्हणानि च।
सम्यग्भवन्ति नैतानि विस्तरात्स्वजनार्पणात्।।४।।

देशे काले च सम्प्रा[3-]प्ते मुन्यन्[-3]नं हरिदैवतम्।
श्रद्धया विधिवत्प्राप्ते न्यस्तं कामधुगक्षयम्।।५।।

देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च।
अन्नं संविभजन्पश्येत् [4-]सर्वं [-4]तत्पुरुषात्मकम्।।६।।

न दद्यादामिषं श्राद्धे न चाऽद्याद्धर्मतत्त्ववित्।
[5]मुन्यन्ने स्यात्पराप्रीतिः यथा न पशुहिंसया।।७।।

---

1--1,A,B,G,J,M,Ma,T येऽन्ये; 2--2. A,B,G,J,T ये केचिज्ज्ञाः, M,Ma अन्ये च ज्ञा°। 3--3. M,Ma म मुत्पन्नं। 4--4 M,Ma सर्वतः पु°

5. A,B,G,J,T मुन्यन्नैः, M,Ma मुनीनां

**नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम्।**
**न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः।।८।।**

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ततः पञ्चदशे सर्व वर्णाश्रमनिबन्धनम्। सारतः सङ्ग्रहेणाऽथ वर्ण्यते मोक्षलक्षणम्।।

सर्वेषामपि मोक्षधर्माणां सारसङ्ग्रहार्थमध्याय[1]प्रारम्भः। तत्र श्राद्धगतान्विशेषानाह-**कर्मनिष्ठा** इति। स्वाध्यायादिषु, परिनिष्ठिता इति शेषः।।१।।

**ज्ञानेति।** कव्यानि पितॄनुद्दिश्य देयानि। दैवे च [2]कर्मणि हव्यान्यपि तस्मै [3-]ज्ञाननिष्ठाय[-3] देयानि । यथार्हत इति सर्वत्र ज्ञानादितारतम्येन।।२, ३।।

ननु विस्तरः कुतः प्राप्ते ये निषिध्यते? तत्राह-**देशेति**। स्वजनानामर्पणात्। जामाता चेन्नियम्यते तत्पित्रादयः कथं वर्ज्याः इत्येवं प्राप्ता द्विस्तरादित्यर्थः।।४।।

**देशे** इति। मुन्यन्नमारण्यं व्रीह्यादि [4-]हरिः दैवतं यस्य[-4] हरये निवेदितं [5]इत्यर्थः।।५।।

**देवेति।** [6]सर्वपुरुषात्मकमीश्वर[7]स्वरूपम्।।६,७।।

**नेति।** दण्डस्य न्यासो हिंसायास्त्यागो य एतादृशोऽन्यो [8]धर्मो नास्ति।।८।।

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

तपसा विद्ययेत्यादिना ब्राह्मणेष्वपि तप आदिगुण तारतम्येन पात्रत्वं तारतम्येन व्यवस्थितमिति सूचितम्। [9]तदेव विवृण्वन् सुपात्रायैव श्राद्धादिष्वन्नादिकं दद्यादिति वदन्नन्यानपि श्राद्धीयनियमानाह देवर्षिः **कर्मनिष्ठा** इत्यादिना। हे नृप! केचिद्द्विजाः त्रैवर्णिकाः कर्मनिष्ठाः स्ववर्णाश्रमोचितकर्मनिष्ठाः। केचिञ्च अनशनादितपोनिष्ठाः, केचित् स्वाध्याये प्रवचने अध्यापने च परिनिष्ठिताः। केचिञ्च ज्ञानयोगयोरुभयोरपि, निष्ठिता इति शेषः। ज्ञानमात्मयाथाम्यज्ञानपूर्वकं भगवदुपासनात्मकम्। यागोऽनभिसंहितफलकर्मयोगः।।१।।

---

1. H,V °यारम्भः 2 A,B,T, Omit कर्माणि 3--3.A,B,J. Omit 4--4. A,B,T हरिदैवतं। 5. A,B,T सत् 6.A,B,T. Omit सर्वं। 7. H,V Omit स्व 8. H,V Omit धर्मः 9. A,B,T एत°

तत्र ज्ञाननिष्ठाय ज्ञानकर्मयोगानुगृहीतभगवदुपासनात्मकज्ञानयोगनिष्ठाय पितॄनुद्दिश्य देयानि कव्यानि श्राद्धान्नादीनि आनन्त्यमपरिमितं फलं मोक्षरूपं फलमिच्छतां पुंसां देयानि। तथा दैवे च कर्मणि हव्यान्यपि ज्ञाननिष्ठायैव देयानि । तदभावे ज्ञाननिष्ठस्या[1]ऽलाभे इतरेभ्यः कर्मनिष्ठादिभ्योऽपि यथायोग्यं ज्ञानादितारतम्येन [2]देयानि।।२।।

दैवे विश्वेदेवस्थाने द्वौ ब्राह्मणौ पितृकार्ये पितृप्रयोजने, पित्रर्थमिति यावत्। त्रीन् ब्राह्मणानुभयत्र द्वयोरपि स्थानयोरेकैकं वा ब्राह्मणं भोजयेत्। सुसमृद्धोऽपि धनाढ्योऽपि एवं ब्राह्मणान् भोजयेत् , न तु श्राद्धे विस्तरं कुर्यात्।।३।।

[3]श्राद्धे विस्तराद्दोषमाह - **देशेति**। देशकालपात्राणि यथोक्तान्येव। उचिता श्रद्धा विश्वासः, कर्तव्यविषयात्वरा वा, अर्हणं पूजासाधनं तानि समीचीनान्यपि स्वजनार्पणाद्विस्तारान्नसम्यग्भवन्ति, विगुणान्ये[4]व स्युरित्यर्थः। ननु कुतो विस्तरः प्राप्तः येन निषिध्यते - इति शङ्कां वारयितुं स्वजनार्पणात् इत्युक्तम् स्वजनानामर्पणात् दौहित्रो निमन्त्रितश्चेत् तत्पुत्रादयः कथं वर्ज्या इत्याद्येवम्प्राप्ताद्विस्तरा दित्यर्थः।।४।।

श्राद्धे विष्ण्वर्थमपि ब्राह्मणं भोजयेदित्याह–**देश**इति। देशे पूर्वोक्ते, कालेऽपरपक्षादिरूपं मृताहादिरूपे च काले प्राप्ते कर्तव्यत्वेन प्राप्ते श्राद्धे पात्रे सत्पात्रे विधिवच्छ्रद्धया न्यस्तं मुन्यन्नमारण्यं व्रीह्यादिजमप्यन्नं कामधुक् कामदमक्षयफलदं मुक्तिसाधनञ्चेत्यर्थः।।५।।

सर्वाश्रमसाधारणान् कांश्चिद्धर्मानाह–**देवर्षीति**। देवादिभ्य आत्मने स्वजनाय बन्धुजनाय चाऽन्नं विभजेत् विभज्य दद्यात्। तद्देवादिकं सर्वं प्राणिजातं पुरुषात्मकं भगवदात्मकं पश्येत्।।६।।

आमिषं मांसं श्राद्धे पित्राद्युद्देशेन न दद्यात्। इदं क्षत्रियाभिप्रायकम्। [5]धर्मयाथात्म्यवित् स्वयमप्यामिषं [6]नाद्यात् नाऽश्नीयात्। यथा मुन्यन्नैरपि परा उत्कृष्टा पित्रादीनां प्रीतिः स्यात्, तथा पशुहिंसया न स्यात्।।७।।

किञ्च। सद्धर्ममिच्छतां नृणामेतादृश एव पर उत्कृष्टो धर्मः। कोऽसौ? यो भूतेषु मनोवाक्कायजस्य दण्डस्य न्यासस्त्यागः करणत्रयेण भूतद्रोहाभाव एव नृणां परो धर्म इत्यर्थः। एतादृशः अन्यः परो धर्मो नास्तीति

---

1.A,B,T °ऽभावे। 2. A,B,T देयं स्यात्। 3.A,B,T श्राद्धविस्तरात्। 4. W omits एव। 5. A,B,T add तथा। 6 A,B,T Omit नाद्यात्

भावः। न दद्यादामिषमित्यनेन पशुमृगादिहिंसागर्भमांसादिद्रव्यकश्राद्धादेरपि मुन्यन्नेनापि कृतं श्राद्धादिकं नितरां पित्रादीनां प्रीतिकृदित्युक्तम्। नैतादृश इत्यनेन भूतहितमेवोत्कृष्टधर्म इत्युक्तम्[1]।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

कर्ममार्गो ज्ञानमार्गश्च कार्याणां कारणेषु लयः प्रवेशलक्षणश्च तत्साधनञ्च प्रपञ्चस्वरूपञ्च निरूपयत्यस्मिन्नध्याये। तत्र प्रथमतो ब्राह्मणादपि ज्ञाननिष्ठमुत्तमं पात्रं दैवोपलब्धेन द्रव्येणैव नित्यनैमित्तिकक्रियाकरणं धर्माधर्मविवेकश्च कथ्यते। तत्र ब्राह्मणान्विवेचयति कर्मेति। कर्मनिष्ठा गृहस्थाः , तपोनिष्ठा वानप्रस्थाः, स्वाध्यायनिष्ठा ब्रह्मचारिणः, प्रवचननिष्ठा कुटीचकाः, बहूदकाश्च, योगनिष्ठा हंसाः, ज्ञाननिष्ठाः परमहंसाः।।१।।

तत्र सन्ततेरानन्त्यं मुक्तिश्चेच्छता ज्ञाननिष्ठाय परमहंसाय कव्यानि पितृभ्यो दीयमानान्यन्नानि दातव्यानीति विधिरित्यन्वयः। दैवे कर्मणि च तस्मा इति शेषः। तदभावे परमहंसाभावे इतरेभ्यो हंसादिभ्यः श्राद्धादिदानं स्यात्। तत्राऽपि यथार्हतः यथायोग्यम्।।२।।

अत्र भोक्तुस्संख्या नियमानाह - **द्वाविति**।।३।।

कुतो विस्तारो न कर्तव्य इति तत्राह - **देशेति**। स्वजनार्पणात् आत्मीयार्पणलक्षणात् विस्तारादैतानि देशकालोचितश्राद्धादीनि सम्यक् न भवन्तीति यत्तस्मात् विस्तारं न कुर्यादिति पूर्वेणान्वयः।।४-६।।

यतः श्राद्धभोजने मुख्याधिकारित्वे मांसविधानं कथमुपपद्यत इति तदपवादत्वेन विधत्ते - न **दद्यादिति**। शास्त्रान्तर विधिमोहितेन केनचित्कामपरिमोक्षणेन मस्करिणा न भोक्तव्यमिति विधत्ते - न चेति। न च श्राद्धभङ्ग इत्याह–धर्मेति। " विना मांसेन मधुना विना दक्षिणयाऽऽशिषा।अक्षयं भवति श्राद्धं यतिषु श्राद्धभोजिषु। ग्रामे वा नगरेऽरण्ये ज्ञातभिक्षुर्वसेद्यदि। तमन्तरेण यच्छ्राद्धं तदाऽसुरमथो भवेत्।" इत्यादिस्मृतेः। तद्विधायकशास्त्रमासुरजनमोहनार्थत्वेन देशकालविशेषविषयत्वेन वा योजनीयम्। आमिषाभावे भोक्तुः सौहित्याभावेन पितॄणां सौहित्यं नस्यादिति , तत्राह–मुनीनामिति। मुनीनां संयमिनां यथा मांसानदनेन पराप्रीतिः सौहित्यं स्यात्, तथा पशुहिंसया जातमांसेन न स्यात्। यथा मुनीनां । पितॄणां यतिभोजनेन पराप्रीतिः तथा पशुहिंसाजातामिषभोजनेन

1. W omits उक्तम्।

न स्यादिति द्विरावृत्त्या योजनीयम्। "वाचंयमे च सर्वज्ञे मुनिशब्दः पितृष्वपि" इत्यभिधानम्। मुनीनां सर्वज्ञानां देवानां यथा परमा प्रीति स्तथा पशुहिंसालक्षणेन योगेन नेति वा।।७।।

श्राद्धे चतुर्थाश्रम्येव पूज्य[1] इति प्रायिकः, तद्धर्मो यस्यास्ति सोऽपि मान्य इत्याशयेनाह - **नैतादृश** इति। सद्धर्ममिच्छतां नृणां भूतेषु मनोवाक्कायकर्मजस्य दण्डस्य न्यासः सन्त्यागो य एतादृशो धर्मः परोऽन्यो नास्ति। अयमेव मख्यो धर्मः। तस्मादेतादृशधर्मोऽपि श्राद्धे मान्य इत्याशयः। "देणुभिर्न भवेद्यतिः" (भा.ग. 11-18-17) इति वक्ष्यति। न केवलं पश्वालम्भनलक्षणहिंसाभावान्मुनीनां प्रीतिजनकोऽपि तु मन आदिना क्रियमाणदण्डलक्षण हिंसाभावोऽपीत्यतो वाह - **नेति**।।८।।

**एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः।**
**आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते।।९।।**

**द्रव्ययज्ञैर्यक्ष्यमाणान्[2] दृष्ट्वा भूतानि बिभ्यति।**
**एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब्ध्रुवम्।।१०।।**

**तस्माद्दैवोपपन्नेन मुन्यन्नेनाऽ[3]पि धर्मवित्।**
**सन्तुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकाः[4] क्रियाः।।११।।**

**विधर्मः परधर्मश्चा[5]ऽप्याभास उपमा छलः।**
**अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत्।।१२।।**

**धर्मबाधो विधर्मस्स्यात् परधर्मोऽन्यचोदितः।**
**उपधर्मस्तु पाषण्डो[6] दम्भो वा शब्दभि[7]च्छलः।।१३।।**

**[8]यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमः[9] पृथक्।**
**स्वभावविहितो धर्मः [10-]कल्पतेऽस्योप[-10]शान्तये।।१४।।**

---

1. A,B Omit पूज्य। 2.A,B,G,J,M,Ma,T, माण 3. M,Ma नैव। 4. H,M,Ma,V,W °काः।· 5. A,B,G,J,M,Ma,T °श्च आ°। 6. A,B,G,J,M,Ma,T °ख°। 7. M,Ma धर्मभि°। 8. W यस्स्वेच्छया। 9. A,B,G,J,T °मात्पृ°। 10- -10 A,B,G,J,T कस्यनेष्टः प्र °, H,V कल्पतोऽन्योप °; M,Ma कल्पतेऽस्योप°

**धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम्।**
**अनीहानीहमानस्य महाहेरिव वृत्तिदा।।१५।।**

**सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम्।**
**कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः।।१६।।**

**श्रीध॰** अतएवोत्तमाधिकारिणो बाह्यनिकर्माणि त्यजन्तीत्याह - **एक** इति। अनीहा निष्कामाः। ज्ञानदीपिते आत्मस्फूर्तिमत्यात्मसंयमने जुह्वति। मनो नियम्य तदन्तरायतया त्यजन्तीत्यर्थः। तदुक्तं **सर्वज्ञसूक्तै** -"प्रत्यक्स्फूर्ति रसस्फूर्तिः [1]स्वानुष्ठानविघातकम्। संलक्ष्य संत्यजेत्कर्म त्यजन्विघ्नहतोऽन्यथा" इति।।९।।

**द्रव्येति**। मा मामेष ध्रुवं हन्यादिति। कुतः अकरुणः। तत्कुतः? असुतृप्प्राणतर्पकः तत्किम्? अतज्ज्ञः आत्मतत्त्वानभिज्ञः। तथा च श्रुतिः-"न तं विदा[2]थ य [3]इदं जजानान्यद्युष्माक मन्तरं भवति नीहारेण प्रावृता जल्प्या चाऽसृतृप उक्थशासश्चरन्ति" [4]इत्यादि।।१०।।

प्रस्तुतमनु[5]वर्णयति - **तस्मादिति**।।११।।

**विधर्म** इति। अधर्मवत् साक्षान्निषिद्धवत्।।१२।।

क्रममनादृत्य पञ्चापि व्याचष्टे - **धर्मेति**। धर्मबाधो धर्मबुद्ध्याऽपि यस्मिन् क्रियमाणे स्वधर्मबाधः। अन्यस्य चोदितोऽन्यस्य परधर्मः। [6]वेदविरुद्धो यः स पाषण्डः। धर्मवत् आभासमानो यः स दम्भः। धर्मलक्षणरहितो धर्मवदाभासमानो वा यः स दम्भः। लोकं प्रलोभ्य धनापहरणार्थं क्रियमाणो यः सोऽपि दम्भः। छलधर्मं व्याचष्टे शब्दभिदिति। स च द्विविधः-अर्थच्छलः शब्दच्छल इति। अर्थच्छलो यथा - गां दद्यादित्युक्ते मरिष्यन्त्या गोर्दानम्। शब्दच्छलो यथा-दशावरान् भोजयेदित्युक्ते दशभ्योऽवरानिति। धर्मभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति त[6]था।।१३।।

**य** इति। स्वधर्मानुष्ठानानन्तरं धर्मभूयस्त्वार्थमपि [7]परधर्मो नाऽनुष्ठेयोऽनुपयोगादित्याह - स्वभावविहित इति।।१४।।

---

1. A,B,J तनुनिष्ठावि॰ 2. A,B,J ॰थ 3. A,B,J इमा 4. A,B,J इति 5. A,B,J ॰वर्त॰ 6- -6. A,B,J उपमेति व्याचष्टे उपधर्मस्त्विति। शब्दस्य भिद्भेदः अन्यथा व्याख्यानं यस्मिन्। यथा दशावरान् भोजये दित्युक्ते दशभ्योऽवरानिति। शब्दभृदितपाठे धर्मशब्दमात्रं बिभर्तीति तथा यथा गांदद्यादित्युक्ते मरिष्यन्त्या गोर्दानम्। 7. H,V परो

**धर्मार्थ** मिति। किञ्च। अधनो धर्मार्थं धनं नेहेत नापेक्षेत, धनार्थं न व्याप्रियेतेति वा दैवोपपन्नेनैव स्वधर्म सिद्धे रुक्तत्वात्। यात्रार्थमपि नेहेतेत्येतत्प्रपञ्चयति - अनीहेत्यादि[1] सार्धैष्षड्भिः।।१५,१६।।

**वीर०** यत[2] एव केचिज्ज्ञाननिष्ठा हिंसागर्भद्रव्ययज्ञान् जहति, ज्ञाननिष्ठाश्च भवन्तीत्याह - **एक** इति। यज्ञवित्तमा यज्ञयाथाम्त्यविदः अनीहा निष्कामाः केचित् ज्ञानिनः पूर्वोक्तोत्कृष्टधर्मज्ञानवन्तः कर्ममयान् यज्ञान् पशुपुरोडाशादि द्रव्यकान् यज्ञान् ज्ञानदीपिते आत्मसंयमने जुह्वति, ज्ञानेन परमात्मोपासनात्मकेन दीपिते प्रज्वलिते आत्मनो मनसः संयमनो[3] नियमस्तस्मिन् योगाग्नावित्यर्थः। तत्रजुह्वति। "तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः, श्रद्धा पत्नी शरीरमिध्ममुरो वेदि मालोमानि बर्हिः" (म.ना. 3-18-1) इत्यादि पुरुषविद्योक्तविधया क्रियामयान् यज्ञान् हित्वा ज्ञानमयान् यज्ञान् अनुतिष्ठन्तीत्यर्थः।। ९ ।।

एवं जुह्वतामयं भाव इत्याह - **द्रव्ययज्ञा** इति द्रव्ययज्ञैः पशुपुरोडाशादियज्ञैः यक्ष्यमाणं दृष्ट्वा भूतानि पश्वादीनि एष यक्ष्यमाणो निर्घृणोऽज्ञश्चासुतृप् अस्माकमसुभिः तृप्यतीति तादृशः मां ध्रुवं हन्यादिति बिभ्यतीत्यशयेन द्रव्ययज्ञान् हित्वा ज्ञानयज्ञाननुतिष्ठंन्तीत्यर्थः ।। १० ।।

तस्मात्पूर्वोक्तभूतसुहृत्त्वरूपोत्कृष्टधर्मवित्पुमान् दैवादुपनतेन मुन्यन्नेनापि, न तु मांसादिना अहरहः नित्यनैमित्तिकाश्च क्रियाः सन्तुष्टः कुर्यात्। यद्यप्यत्र "मुन्यन्नैः स्यात्परा प्रीतिस्तथा न पशुहिंसया" (भाग. 7-15-7) इत्यनेन "द्रव्ययज्ञैर्यक्ष्यमाणम्" (भाग. 7-15-10) इत्यनेन च मांसश्राद्धाग्नीषोमीयादि कर्मणां हिंसागर्भत्वेन पापमिश्रत्वं प्रतीयते। तच्च "अशुद्धमिति चेन्न शब्दात्" (ब्र.सू.3-1-25) इति शारीरकाधिकरणन्यायविरुद्धम्। तत्र ह्यग्नीषोमीयादिकर्मणां पशुहिंसादिरूपपाप[4]मिश्रत्वेनाऽशुद्धियुक्तत्वं परिचोद्य, नैतद्युक्तम्; कुतः? शब्दात् अग्नीषोमीयादेः संज्ञपनस्य स्वर्गलोकप्रीतिहेतुतया हिंसात्वाभावशब्दात्पशोर्हि संज्ञपननिमित्तां स्वर्गलोकप्राप्तिं वदन्तं शब्दमामनन्ति "हिरण्य शरीरं ऊर्ध्वं स्वर्गं लोकमेति" इत्यादिकमतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा, प्रत्युत रक्षणमेव। तथा च मन्त्रवर्णः "न वा उ वैतत्प्रयासेन रिष्यसि देवा इदेषी पथिभि सुगेभिः यत्र यान्ति सुकृतो नापि दुष्कृतस्तत्रत्वादेवः सविता दधातु" इति चिकित्सितञ्च। तादात्विकाल्पदुःखकारिणमपि रक्षकमेव वदन्ति पूजयन्ति च तज्ज्ञा इति हिंसात्वाभावस्सिद्धान्तितः। तथाऽप्यत्र हिंसागर्भत्वमात्रे पश्वादिहिंसायाश्च सर्वभूतसुहृदां ज्ञानिनामननुरूपत्वे च तात्पर्यं, न तु यागीय हिंसायाः

1.A,B,J हेति। 2. A,B,T add एवमत°, 3. A,B,T संयमो। 4. W Omits पाप

पापत्वेऽपि। अत एव केवलं भूतानि बिभ्यतीत्येतावदेवोक्तं, न तु तद्धिंसायाः पापत्वमपीत्यतो न शारीरकन्यायविरोधः।।११।।

तदेवं प्रातिस्विकान् साधारणांश्च वर्णाश्रमधर्मानभिधाय, अथ तेषां धर्माभासेभ्यो विविक्तत्वज्ञापनाय तान् सङ्गृह्य दर्शयन् तेषां त्याज्यत्वमाह - **विधर्म** इति । विधर्मादयः पञ्चैते[1] धर्माभासा अधर्मस्य वृक्षरूपस्य शाखाः शाखाभूताः। तत स्तान् धर्मयाथात्म्यवित् अधर्मवत् त्यजेत्।।१२।।

विधर्मादीन् पञ्च व्याचष्टे - **धर्मबाध** इति। धर्मबुद्ध्या यस्मिन् क्रियमाणे स्वधर्मबाधः स्यात् स विधर्म इत्यर्थः। अन्यस्य क्षत्रियादेश्चोदितो विहितो धर्मः स ब्राह्मणादेः परधर्मः। उपधर्म इति पाषण्डः वेदविरुद्धागमोक्तः दम्भो वा परवञ्चनार्थो वा उपधर्म इत्यर्थः। छलं व्याचष्टे - शब्दभिच्छल इति। शब्दस्य प्रमापकस्य भित् अन्यथा व्याख्यानं यस्मिन्। यद्वा द्वादशावरान् भोजयेदित्युक्ते द्वादशसंख्याकेभ्योऽवरान् एकादश दश वेत्यादि। शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा यथा गां दद्यादित्युक्ते[2] मरिष्यन्त्या गोर्दानमिति।।१३।।

आभासं व्याचष्टे - **यस्त्विति** पुम्भिः स्वेच्छया पृथक् चतुर्भ्यः आश्रमेभ्यः पृथक्कल्पितः आश्रमोऽवधूतादिः स्वधर्मानुष्ठानानन्तरमपि, धर्मभूयस्त्वार्थमपि परधर्मो नाऽनुष्ठेयोऽनुपयोगादित्याह - स्वभावेति। स्वभावेन [3]विहितः ब्राह्मणादिस्वभावानुगुण्येनाऽभिहित इज्यादिरूपः, स एवास्योपशान्तये मनःप्रशान्तये कल्पते, अतो न परधर्मस्योपयोग इत्यर्थः।।१४।।

एवं भगवदुपासनाङ्गभूतावर्णाश्रमधर्मा उक्ताः। अथ प्रधानभूतभगवदुपासनात्मकाष्टाङ्गयुक्तभक्तियोगानुष्ठानप्रकारं वक्ष्यन् तावत्तद्विरोधिनां कामक्रोधलोभभयशोकमोहदम्भतापत्रयनिद्रादीनां जयोपायानाह - **धर्मार्थमपी**त्यादिना, "पूर्तमिष्टं तथा सत्" इत्यन्तेन। तत्र तावदसन्तोषस्य लोभात्मकस्यानर्थावहत्वं तन्निमित्ताया धनलिप्सायास्त्याज्यत्वञ्च वक्तुं दैवादुपनते नैव द्रव्येण स्वधर्मं देहधारणञ्च कुर्यात्, न तु तदर्थं धनं कामयेतेत्याह - धर्मार्थमिति। अधनो निर्धनः पुमान् स्वधर्मार्थमपि यात्रार्थं देहधारणार्थमपि वा धनं वित्तं नेहेत न कामयेत। यत्रार्थमपि नेहेतेत्येतत्प्रपञ्चयति - अनीहेति सार्धेष्षड्भिः। महाहेरिव अनीहमानस्य यात्रार्थं धनार्थमपि[4] चेष्टा मकुर्वतः दैवोपनतेन प्राणान् धारयमाणस्येत्यर्थः। अनीहाऽकामना एव वृत्तिदा जीवनावहा दैवादुपनतेन जीवतोऽकामयमानस्याऽकामनैव नितरां सुखजननद्वारा वृत्तिदेति भावः।।१५।।

---

1. A,B,T पञ्चेमे। 2. W Omits इति। 3. A,B,T Omits विहितः। 4. W Omits अपि

तदेवाह - **सन्तुष्टस्येति।** निरीहस्य सन्तुष्टस्य दैवाल्लब्धेन सन्तुष्टस्य स्वात्मारामस्य स्वस्यात्मान्तरात्मापरमपुरुषः तस्मिन् रममाणस्य स्वशरीरक ब्रह्मानन्दानुभवपरस्य यत्सुखं तत्कामलोभेन, काम्यन्त इति कामाः, शब्दादयो विषयाः तेषु लोभेन सङ्गेन निमित्तेन अर्थेहया धनेच्छया कामलोभनिमित्तकधनेच्छया सर्वा दिशः प्रतिधावतो भ्राम्यमाणस्य पुंसः कुतो हेतोर्भवति; अनीहया यत्सुखं तदीहया नास्तीत्यर्थः।।१६।।

**विज॰** श्राद्धादिकर्मग्रामो यत्यादिपात्रमुद्दिश्य कर्तव्यमित्यभिहितम्। अधुना परमभागवतास्तदपि न कुर्वन्तीत्याशयेनाह - **एक** इति। "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज" (भ. गी 18-66) इति शिक्षिताः। एके भगवदेकार्पितदेहयात्राज्ञानिनः कर्ममयान् श्राद्धादियज्ञानात्मसंयमने मनस्संयमनाग्नौ जुह्वति मानसयोगं कुर्वन्तीत्यन्वयः। आत्मसंयमनं विशिनष्टि - ज्ञानेति। ज्ञानेन्धनदीपिते यज्ञवित्तमाः मानस यज्ञप्रयोगपटवः। अनीहा इति हेतुगर्भविशेषणम् निवृत्तमार्गप्रवृत्तत्वादित्यर्थः।।९।।

ननु द्रव्ययज्ञं सन्त्यज्य ज्ञानयज्ञकरणे किं कारणमित्याशङ्क्य भूतभयजनकहेतुत्वेन निरयहेतुरयमित्याशयेनाऽह - **द्रव्येति**। एष द्रव्ययज्ञकारिसमुदायो मा मां हन्यादिति भूतानि बिभ्यतीत्यन्वयः। "अग्नीषोमीयं पशुमालभेत" इति विहितत्वात्तदुक्तं कुर्वतो दृष्ट्वा कथं भयं स्यात्? इत्यत उक्तमतज्ज्ञ इति। विध्यभिप्रायमजानन् "ब्रह्मार्पणं ब्रह्महविः" (भ.ग. 4-24) इत्यादिविहितविधेरभिप्रायः। अत एवाऽकरुण इत्युक्तम्। एतादृशोऽसुरदेश्य इत्याशयोनोक्तमसुरतृप् इति। "नीहारेण प्रावृताजल्प्या चाऽसुतृप उक्थशासश्चरन्ति" (ऋक्सं.10-82.7) इति श्रुतिः हीत्यनेन गृह्यते। ध्रुवमित्ययं शब्दः श्रीहरिविमुखस्याऽनर्थं निश्चाययति। "असुन्वन्तं समं जहि दूणाशं यो न ते मयः" (ऋक्सं. 1-176-4) इति श्रुतेः। ते मयस्त्वत्प्रधानकः दूणाशं दुर्नाशं असुन्वन्तं सुन्वद्विरोधिनम्। अन्यथा "सुन्वन्तं वा पराचिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः" इति श्रुतेः।।१०।।

ननु, तर्हि "नित्यनैमित्तिके कुर्यात्प्रत्यवाय जिहासया" इति विधानं व्यर्थमिति तदुपायमाह - **तस्मादिति**। दैवोपपन्नेनाऽयाचितादिविधिना प्राप्तेन नीवारादिना, तदभावे उत्पन्नेन फलशाकादिना।।११।।

धर्मवित्त्वं नाम तत्प्रतिपक्षधर्मभेदलक्षणे ज्ञाते शुद्धं स्यादित्यतस्तच्छाखा आह - **विधर्म** इति।।१२।।

अधर्मवद्विधर्मादीनां स्वरूपं दर्शयति - **धर्मेति**। अधर्मवद्धर्मपीडनं विधर्मः। अन्यस्य क्षत्रियादेश्चोदितो विहितो धर्मो ब्राह्मणेनाऽनुष्ठीयमानः परधर्मः। दम्भेन क्रियमाणो धर्मः दम्भः, स चोपधर्म इत्युच्यते। धर्मशब्दार्थमिच्छतां धारको हि धर्मः , तमर्थं भिनत्तीति स छलधर्म इत्युच्यते।।१३।।

पुम्भिः काम्यफलेच्छया कृतो यो धर्मः स आभास इत्युच्यते,हि शब्दः इयानेषां भेद इत्याह - धर्मप्रतिपक्षभेद स्वरूपमुक्त्वा धर्मप्रयोजनमाह - आश्रम इति। हि शब्द उत्तरत्राऽपि सम्बध्यते। तेन वर्णं लक्षयति - यो ब्राह्मणादिवर्णो यश्च ब्रह्मचर्याद्याश्रमः अत्र तत्तत्स्वभावानुसारेण भगवदर्पणबुद्ध्या पृथक् पृथक् विहितो यो धर्मः सजीवस्योपशान्तये संसारनिर्मूलनाय कल्प्यते समर्थ्यते, शास्त्रेष्विति शेषः। स्वभावपदसामर्थ्यात्सात्त्विको धर्मो मुक्तिहेतुर्नाऽन्यः। राजसतामसः स्वर्गनरकादिहेतुः - "धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत! पापं भवति धर्मोऽपि यो न भक्तैः कृतो हरे" इति वचनात्। अस्य जीवस्योपशान्तये, मोक्षयेति वा।।१४।।

ननु निष्कर्मणा पुरुषेण धर्मकरणं दुस्साध्यम् अर्थाभावात्। तस्मादधनेन तदर्थं कृष्यादिकं कर्मकर्तव्यमिति तत्राह - **धर्मार्थमिति**। तर्हि देहादि यात्रार्थं कर्मकर्तव्यम् अन्यथा तन्नाशेन पुरुषार्थानुदय इति तत्राह - अनीहेति। अत्रानीहा स्वदेहपोषणायासनिवृत्तिः। महाहे रजगरस्य।।१५।।

निरन्तरं भगवदुपासनामृतपायिनोऽनीहा परमानन्दकारणमित्याह - **सन्तुष्टस्येति**। यदृच्छया सन्तुष्टस्य यत्सुखं कामलोभेन कामभोगेच्छयाऽर्थेहया धनयाचनप्रवृत्त्या च दिशोधावतः पुंसः कुतः कस्मात् कर्मणस्तत्सुखं लभ्यते! इत्यन्वयः।।१६।।

**सदा सन्तुष्टमनसः सर्वाः [1]शिवमया दिशः।**
**शर्कराकण्टकादिभ्यो यथोपानत्पदश्शिवम्।।१७।।**

**सन्तुष्टः [2]केन वा राजन्नवर्तेताऽपि वारिणा।**
**औप[3]स्थ्यजै[4]ह्व्य कार्पण्या द्गृहपालायते जनः।।१८।।**

**असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः।**
**[5]स्रवन्तीन्द्रियलौल्येन ज्ञानञ्चैवावकीर्यते।।१९।।**

**कामस्यान्तं [6]हि क्षुत्तृड्भ्यां क्रोध[7]स्यान्तं फलोदयात्।**
**जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः।।२०।।**

---

1. A,B,G,J,T सुखं 2. A,B,G,J,M,Ma,T केन 3. W °स्थ 4. H,V,W °ह्व 5. M,Ma °वती° 6. A,B,G,J,T च 7. A,B,G,J,M,Ma,T स्यैनत्फ°

**पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः।**
**सदसस्पतयोऽप्येके असन्तोषात्पतन्त्यधः।।२१।।**
**असङ्कल्पाज्जयेत्कामं क्रोधं कामविवर्जनात्।**
**अर्थे[1]ऽनर्थेक्षयालोभं भयं तत्त्वावमर्शनात्।।२२।।**
**आन्वीक्षिक्याशोकमोहौ दम्भं महदुपा[2]श्रयात्।**
**योगान्तरायान्मौनेन हिंसां [3]कायाद्यनीहया।।२३।।**
**कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ।**
**आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया।।२४।।**

**श्रीध० सदेति।** उपानहौ [4]पदोः पादयोर्यस्य स उपानत्पत्, तस्य।।१७।।

**सन्तुष्ट** इति। गृहपालः श्वा, तद्वदाचरति।।१८,१९।।

**कामस्येति।** क्षुधा तृषा च जनः कामस्यान्तं याति। अन्नोदकातिरिक्तकामान्तराभावात्। क्रोधस्य [5]चान्तं याति, एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयान्निष्पत्तेः। दिशो जित्वाऽपि भुवो भुक्त्वाऽपि लोभस्य नैवाऽन्तं यातीत्यर्थः।।२०,२१।।

इदानीं कामादिजयोपाया नाह-**असङ्कल्पादिति** चतुर्भिः। जयेदिति यथापेक्षमन्वेति। अर्थेऽनर्थदर्शनेन, तत्त्वावमर्शनात् अद्वैतानुसन्धानेन।।२२।।

**आन्वीक्षिक्येति।** आन्वीक्षिक्या आत्मानात्मविवेकेन महतां सात्त्विकानां सेवया योगस्यान्तरायान् लोकवार्तादीन्।।२३।।

**कृपयेति।** येभ्यो भूतेभ्यो भयं [6]जायते तेष्वेव कृपया हिताचरणेन। दैवं देवोपसर्गनिमित्तं वृथा मनः पीडादि। तदुक्तं याज्ञवल्क्येन-"विमना विफलारम्भसंसदित्यनिमित्ततः"(याज्ञ.स्मृ. 1-274) इति। आत्मजं देहजं योगवीर्येण प्राणायामादिबलेन सत्त्वनिषेवया सात्त्विकाहारादिना।।२४।।

**वीर०** एवं दैवोपनतया यात्रयाऽर्थेच्छायास्त्याज्यत्व मुक्तम्। अथाऽसन्तोषस्य दुःखहेतुत्वं वक्तुं तावत् सन्तोषस्य सुखहेतुत्वमाह-**सदेति।** सदा सन्तुष्टं दैवादुपनतेनैव सन्तुष्टं मनो यस्य तस्य पुंसस्सर्वादिशः सुखमयाः,

1. A,B,G,J,M,Ma,T अर्थान॰ 2. A,B,G,J,T ॰पासया 3. M,Ma कामा॰ 4. A,B,J,Omit पदोः 5. A,B,J ॰वाऽन्तं 6. A,B,J जायेत

यत्र क्काऽपि गतस्य तस्य सुखमेवेत्यर्थः। यथा उपानहौ पादत्राणे[1] पादयोः यस्य स उपानत्पत् तस्योपानत्पदः शर्करादिभ्योऽपि शिवं सुखमेव तद्वत्।।१७।।

हे राजन्! सन्तुष्टश्चेत्कोनु पुमान् वारिणाऽपि न वर्तेत, सन्तुष्टश्चेत्[2] वारिणाऽपि यात्रां विधाय सुख्यतीत्यर्थः। असन्तुष्टश्चेज्जनः औपस्थ्यजैह्व्यकार्पण्यादुपस्थाजिह्वासुखार्थदैन्यान्निमित्तात् गृहपालायते गृहपालः श्वा, तद्वत् आचरति।।१८।।

किञ्च। असन्तुष्टस्य ब्राह्मणस्य तेज आदयः स्रवन्ति। तेजो ब्रह्मवर्चसं, विद्या शास्त्रजन्यं ज्ञानं, तप अनशनादि रूपं, यशः प्रथा तथेन्द्रियलौल्येन इन्द्रियार्थासक्त्या, ज्ञानं विवेकादिजन्यमवकीर्यते च विक्षिप्यते च अपगच्छतीत्यर्थः।।१९।।

किञ्च। कामक्रोधादयः सावधिकाः, लोभस्त्वसन्तोषात्मको निरवधिक इत्याह-**कामस्येति**। जनः कामक्रोधलोभवान् जनः क्षुत्तृड्भ्यां, निवृत्ताभ्यां इति शेषः। निवृत्ताभ्यां क्षुत्तृड्भ्यां निमित्तभूताभ्यां कामस्यान्तं याति अन्नोदकादिना क्षुत्पिपासादौ निवृत्तेसति अन्नादिव्यतिरिक्तकामान्तराभावात् कामस्यान्तं गच्छतीति भावः। तथा क्रोधस्याऽऽप्यन्तं तत्फलोदयात् तस्य क्रोधस्य यत्फलं परपीडनादि रूपं तस्योदयान्निष्पत्तेर्हेतोर्याति, लोभस्यान्तं तु भुवो दिशो जित्वा भुक्त्वाऽपि नैव याति।।२०।।

अत एव हे राजन्! बहवः पण्डिताः शास्त्रजन्यज्ञानवन्तः बहुज्ञाः बहुविधलौकिकवैदिकन्यायाभिज्ञाः अत एव संशयान् छिन्दन्तीति तथा, अत एव सदसः सभायाः पतयोऽप्येके जना असन्तोषाद्धेतोरधो नरके पतन्ति।।२१।।

एवमसन्तोषस्य अनर्थावहत्वमुक्तम् , अथ कामादीनां जयोपाया नाह–**असङ्कल्पा**दिति चतुर्भिः। असङ्कल्पात् भोगार्हताबुद्धिवर्जनात् कामं शब्दादिविषयस्पृहां जयेत्। क्रोधन्तु कामविवर्जनात्, जयेदित्यनुषङ्गः। क्रोधः कामानुभवविरोधिविषयकोऽमर्षः। लोभन्त्वसन्तोषात्मकम् अर्थानर्थेक्षया अर्थे धने अनर्थेक्षया अनर्थहेतुत्व-दर्शनेन जयेत्[3]। भयन्तु तत्त्वावमर्शनात् चिदचिदीश्वरयाथात्म्यरूपतत्त्वत्रयानुसन्धानात्।।२२।।

आन्वीक्षिक्या "जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च। तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि" (भ.गी. 2-27) इत्यादि पर्यालोचनयेत्यर्थः। जातस्य विनाशो ध्रुव इति पर्यालोचनया शोकमोहौ, दम्भन्तु महता

---

1. W क्षणे 2.A,B,T °स्तु 3. W omits जयेत्

मदाम्भिकानां ज्ञानिनामुपासनया सेवया योगान्तरायान् योगस्यान्तरायभूतान् लोकवार्तादींस्तु मौनेन, भूतहिंसां कायाद्यनीहया स्वदेहादिषु निस्पृहया जयेत्[1]।।२३।।

भूतजं दुःखमाधिभौतिकं दुःखं कृपया येभ्यो भूतेभ्यः स्वस्य दुःखं तेष्वेव कृपया, दैवमाधिदैविकं दुःखं समाधिना इदं प्राप्तमेव किमस्माभिर्विधेयमिति एवं मनस्समाधानेन, आत्मजं देहजमाध्यात्मिकं दुःखं योगवीर्येण योगबलेन प्राणायामादिना, निद्रां सत्त्वनिषेवया सात्त्विकाहारसेवनेन जह्यात्।।२४।।

**विज०** दुस्त्यजेषु विषयेषु सर्वतो दिशं जाग्रत्सु निष्कर्मणः कथं सुखमुपलभ्यते? इति तत्राऽऽह – सदेति। "यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः" (भ.गी. 3-17) इत्यादेः एतमर्थं निदर्शयति-शर्करेति , शिवं सुखमाप्नोतीति शेषः। शर्कराः पाषाणशकलानि।।१७।।

अन्नाद्यर्जनाऽऽयासाभावेऽपि प्राणधारणार्थं पानीयादिप्रयत्नः स्यादेव "आपोमयाः प्राणाः" (छान्दो.उ. 6-5-4) इति श्रुतेः। इति तत्राऽऽह–सन्तुष्ट इति केन वा येनकेनाऽपि प्रयत्नमन्तरेणोपनतेन द्रव्येण लोकविलक्षणेन परमात्मना वा सन्तुष्टः विषयालम्बुद्धिमान् वारिणाऽपि न वर्तेतेत्यन्वयः। ननु सर्वात्मना सर्वनिषेधस्य कोऽभिप्रायः- इत्याशङ्क्य किञ्चिदभ्यनुज्ञाते महान्दोषः स्याज्जलस्यन्दनवत्। विधिं विना स्वतन्त्रवज्जनस्य कार्पण्यदर्शनाच्चेत्याह- औपस्थ्येति गृहं पालयतेऽसौ गृहपालः सारमेयः तद्वच्चरति "कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो व्रणी पूयक्लिन्नः क्रिमिकुलशतैरावृततनुः। क्षुधाऽऽक्रान्तो जीर्णोह्यपि वरकपालार्पितगलः शुनीमन्वेति श्वाहतमपि च हन्त्येव मदनः" (भर्तृ. शृङ्गा. 78) इत्यादेः।।१८।।

उक्तार्थानङ्गीकारे बाधकमाह–**असन्तुष्टस्येति**। तेजः शापानुग्रहशक्तिः, रेतो लक्षणं वा, विद्या शास्त्रविषया ज्ञानं मनोत्थमखण्डं शास्त्रानुपेक्षिदीपज्वाला निभमवकीर्यते विक्षिप्यते शिल्पनिक्षिप्तपांसुखण्डवन्नश्यतीत्यर्थः। कॄ विक्षेपे इति धातोः। वृषभविषाणाहतसेतुवत्। सुडागमाभावः छान्दसः। "अवकीर्णी क्षतव्रतः" (अम. को. 2-453) इत्यभिधानम् असन्तुष्टस्य विषयानलम्बुद्धेः।।१९।।

अत्राऽनलम्बुद्धिर्द्वेधा-विषयाणामुपर्युपरि भोगतृष्णैका, द्वितीया विश्रान्तविश्राणने तत्पर्याप्तं भवतीत्यतो न व्ययामि, किन्तु राशीकरोमीत्याकाङ्क्षा। तत्र प्रथमाया अलाभे कामः क्रोधश्च तयोरुभयोः शान्तिरनायाससाध्या।

1. W omits जयेत्

द्वितीयाया लोभापरपर्याया नाशो दुस्साध्य इत्याह-**कामस्येति**। जनोऽङ्कुरिताभ्यां क्षुत्तृड्भ्यां कामस्योपस्थादि विषयतृष्णापरपर्यायस्य अन्तं नाशं याति। कुत इत्यत उक्तं हीति। "विषया विनिवर्तन्ते निराहारस्य देहिनः" (भा.गी. 2-59)। इति स्मृतेः प्रसिद्धेः । एतत्फलोदयात् एतयोः क्षुत्तृषोरशनपानलक्षणभोगाभ्यां तृप्तिलक्षणफलोत्पत्तेः तदलाभोत्पन्नस्य क्रोधस्य च शान्तिं याति । दिशो जित्वा भुवो भुक्त्वाऽपि लोभस्यान्तं यागाद्युपाधिना वित्तव्ययेच्छालक्षणं न यातीत्यन्वयः ।। २० ।।

ननु बहुत्यागेन वित्तव्ययेन स्वयं नष्टः स्यात् "अल्पसारस्तु यो मोहाद्विस्तारं कर्तुमिच्छति। स विनश्यति दुर्मेधा नारिकेलाम्बुकं यथा" इति वचनात्। तस्माल्लोभो महान्गुणो देहयात्राहेतुत्वादित्यात्राऽऽह-**पण्डिता** इति। पाण्डित्यं नाम सभाकम्पादिदोषराहित्यं, तत्पूर्वस्याऽपि किं न स्यादित्यत उक्तं बहुज्ञा इति। सार्वज्ञ्यं घटदीपप्रभावन्नेत्याह- संशयच्छिद इति। एवंविधधर्मवन्तः के इति तत्राऽऽह-सदसस्पतय इति। एतादृशाश्च केचनेत्याह-एक इति। एवंविधा अपि असन्तोषाल्लोभादधः कीटकादियोनौ पतन्तीति यस्मात्तस्मात् अवैष्णवविषय एव लोभो गुणो न तु वैष्णवविषय इति भावः। एके असन्तोषादिति सन्धिकार्याभावः। यदि तर्हि इति पदद्वयाध्याहारसूचनार्थः। "ह्येवं विधा असन्तोषाद्यथायोग्यं यथालब्धद्रव्यं यथा पात्रं न नियुञ्जते, तर्ह्यधःपतन्तीत्यभ्युपगमसिद्धान्तोऽयं, न केवलमसन्तुष्टस्य विद्यादिनाशः, अपि तु अधःपातः स्यादित्यतोवाऽऽह-पण्डिता इति।।२१।।

इदानीं कामदिजयोपायमाह-**असङ्कल्पादिति**। अत्र सङ्कल्पोऽपि द्विविधः-पुण्यविषयः पापविषयश्चेति। अत्राऽसङ्कल्पात्पापविरुद्धपुण्यविषयादित्यर्थः। कामान् निषिद्धान्। क्रोधः कामितालाभकारणः, कारणनाशेन कार्यनाश इत्यर्थः। अनर्थकार्यस्य लोभस्य नाशः केनेति तत्राऽऽह–अर्थेति। अर्थेषु राजादिनिमित्तानर्थदर्शनेन असद्व्ययो नश्वरफलहेतुरिति निरीक्षणेन च तत्त्वावमर्शनात् तत्त्वज्ञानात् भयं वैष्णवसिद्धान्तसञ्चलनं "भीभयसञ्चलनयोः" इति धातुः।।२२।।

शोकमोहौ देहगतान्तःकरणस्यैव नाऽन्यस्य स्वतश्चिदानन्दस्वरूपस्याऽसम्भवात् इत्यादिकया आन्वीक्षिक्या अनुकूलतर्कोपेतव्याप्तिज्ञानेन। आत्मन्यविद्यमानमहिमारोपो दम्भः। महतां प्रावण्यादिगुणाकराणां आत्मस्तुति-लज्जितानां पुरुषाणां निरन्तरनिषेवया सद्गुणाभ्यासलक्षणया योगान्तरायान् भगवदुपासनाविघ्नान् मौनेन सम्भाषण वर्जनेन जयेदिति शेषः। कामाद्यनीहया कामादिनिषिद्धेच्छाराहित्येन विवादलक्षणां हिंसां जयते[1] इत्यन्वयः।।२३।।

1. A,B जयेत्।

भूतजं भौतिकं दुःख मुन्मादिकं वा कृपया मन्त्रौषधसामर्थ्येन। "कृपू सामर्थ्ये" इति धातुः। अनुक्रोशलक्षणगुणेन वा। दैवमाधिदैविकं दुःखं समाधिना इन्द्रादिदेवताध्यानेन "यस्यै देवतायै हविर्गृहीतं स्यात्तांध्याये द्वषट्करिष्यन्" "कारीर्या यजेत वृष्टिकामः" इति श्रुतेः अनावृष्ट्यादिदुःखं जह्यात्। क्षीरसागरतरङ्गसीकराप्लुतश्रीनारायणध्यानेन वा। आत्मजमाध्यात्मिकं दुःखं योगवीर्येण अष्टाङ्गसामर्थ्येन पवनवशीकरणेनेत्यर्थः। स त्त्वनिषेवया सत्त्विकपुरुष-निषेवया निद्रामज्ञानम्।।२४।।

**रजस्तमश्च सत्त्वेन सत्त्वञ्चोपशमेन च।**
**एतत्सर्वं गुरौ भक्त्या पुरुषो [1]ह्यञ्जसा जयेत्।।२५।।**

**यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ।**
**[2-]मर्त्यासद्धीः श्रुतं तस्य[-2] सर्वं कुञ्जरशौचवत्।।२६।।**

**एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः।**
**योगेश्वरैर्विमृश्याङ्घ्रि लोकोऽयं मन्यते नरम्।।२७।।**

**षड्वर्गसंयमैकान्ताः सर्वा [3]नियमचोदनाः।**
**तदन्ता यदि नो योगानावहेयुः श्रमावहाः।।२८।।**

**यथा वार्तादयो [4]ह्यर्था [5]योगस्यार्थं न बिभ्रति।**
**अनर्थाय भवेयुस्ते [6]पूर्तमिष्टं तथा सतः।।२९।।**

**यश्चित्तविजये [7]यत्तः स्यान्निस्सङ्गो[8]ऽपरिग्रहः।**
**एको विविक्तशरणो भिक्षु[9]र्भैक्षमिताशनः।।३०।।**

**देशे शुचौ समे [10]राजन्नास्थाप्यासनमात्मनः।**
**स्थिरं समं सुखं तस्मिन् आसीतर्ज्वङ्ग ओमिति।।३१।।**

**प्राणापानौ [11]सन्निरुन्ध्यात्पूरकुम्भकरेचकैः ।**
**यावन्मनस्त्यजेत्कामान् स्वनासाग्रनिरीक्षणः।।३२।।**

---

1. M,Ma मनसा 2--2. M,Ma अभिसन्धिश्श्रुतस्तस्य 3. M,Ma °गा° 4. H,V ह्यर्थान्; M,Ma विद्याः 5. M,Ma पुंसस्स्वार्थं 6. M,Ma °श्च 7. M,Ma °येच्छुः 8. M,Ma निष्प° 9. A,B,G,J,T °र्भिक्षा° 10. A,B,G,J,T राजन्संस्थां 11. H,V,W °रुध्या।°

**श्रीध॰** ननु कथं गुरौ भक्त्या सर्वस्य जयः स्यात्, तस्याऽपि मनुष्यत्वेन तदवस्थत्वात्! तत्राऽऽह-**यस्येति**। मर्त्यासद्धीर्मनुष्य इति दुर्बुद्धिः। तस्य शास्त्रश्रवणं कुञ्जरस्नानवद्व्यर्थम्।।२५,२६।।

ननु गुरोरपि[1] पितृपुत्रादयः[2] तं[3] नरमेव मन्यन्ते, अत आह-**एष** इति। एष गुरुः साक्षाद्भगवानेव भवेत्[4], लोकस्य नरोऽसाविति बुद्धिर्भ्रान्तिरित्यर्थः। यद्वा स[5] हि तत्पुत्रादेर्मनुष्यबुद्ध्या प्रतीयमानोऽपि गुरुर्भगवानेव[6] भवेत्, यथैष श्रीकृष्ण इत्यर्थः।।२७।।

एवं सर्वैः उपायैः कामादिवेगं जित्वा नियतेन्द्रियो भूत्वा आत्मध्यानपरो[7] भवेत्। अन्यथा तं प्रति सर्वशास्त्रवैफल्यं स्यादित्याह-**षड्वर्गेति**। सर्वा अपि नियमचोदनाः इष्टापूर्तादिविधयः षडिन्द्रियवर्गस्य यस्संयमः तस्मिन्नेवैकस्मिन् अन्तो यासां तदेकपरा इत्यर्थः । न च तावताऽपि चरितार्था इत्याह-तदन्तास्सत्येऽपि यदि योगात् धारणाध्यानसमाधीन् नो आवहेयुः न साधयेयुः तर्हि केवलं श्रमावहा एवेत्यर्थः।।२८।।

एतदेव दृष्टान्तेनाऽऽह-**यथेति**। यथा वार्तादयः कृष्यादयोऽर्थान्[8] तत्फलानि च योगस्यार्थं मोक्षं न साधयन्ति[9] प्रत्युतानर्थाय संसारायैव। असतो बहिर्मुखस्य इष्टापूर्ताद्यपि तथा।।२९।।

एवं योगं प्रयुञ्जतोऽपि[10] यस्य कुटुम्बादि सङ्गेन चित्तं विक्षिप्येत, तस्य कृत्यमाह-**य इति**। यश्चित्तविजये यत्त उद्युक्तः स भिक्षुः स्यात् सन्न्यसेत्। तथा च स्मृतिः-"द्वन्द्वाहतस्य गार्हस्थ्यं ध्यानभङ्गादिकारणम्। लक्षयित्वा गृही स्पष्टं सन्न्यसेदविचारयन्" इति। भैक्षेण[11] प्राप्तं मितमशनं यस्य सः।।३०।।

**देश** इति। ऋजु सममङ्गं यस्य सः यथा सुखं भवत्येवमासीत ओमिति , उच्चारयन्निति शेषः।।३१,३२।।

**वीर॰** रजस्तमश्च सत्त्वेन सात्त्विकाहाराद्युपजातसत्त्वगुणवृद्ध्या सत्त्वमन्तःकरणमुपशमेन हर्षाजनन मुखेन एतदुक्तं कामादिरूपं सर्वं पुरुषो गुरौ भक्त्या त्वञ्जसा सुखेनैव जयेत्।।२५।।

गुरुभक्त्यभावे सर्वं कामादि जयात्मकं व्यर्थमित्याह-यस्येति। साक्षाद्भगवति "आचार्यं मां विजानीयात्" इत्युक्तरीत्या भगवदभिन्नत्वेन दर्शनीये, ज्ञानमेव दीपः, तत्प्रदे महोपकर्तरि गुरौ यस्य पुंसो मर्त्यबुद्धिः "सोऽपि

---

1.H,V, Omit अपि 2. A,B,T Omit पितृ 3. H,V ते 4. H,V, Omit भवेत् 5. A,B,J न 6. A,B,J °वान्तभ° 7. A,B,T Omit आत्म 8. A,B,J °ऽर्थाः 9. H,V, add साधयेयुः 10. A,B,J Omit प्र 11. A,B,J भिक्षया

मादृश एव कश्चिन्मर्त्यः" इति बुद्धिः तस्य श्रुतमध्ययनं सर्वं कामादिजयादिकञ्च कुञ्जरशौचतुल्यं, यथा कुञ्जरस्य स्नानं पुनर्धूलिप्रक्षेपेण कृतमप्यकृतं[1], तद्वदित्यर्थः।।२६।।

गुरोर्भगवत्त्वं श्रीकृष्णदृष्टान्तेनाऽऽह-**एष** इति। एषश्रीकृष्णः साक्षात्प्रकृतिपुरुषयोरीश्वरोऽत एव योगेश्वरैरस्मदादिभिः विमृग्यौ ध्येयौ अङ्घ्री पादौ यस्य सः भगवानेव, नाऽऽत्रसन्देहः। एवम्भूत मपि यं श्रीकृष्णं नरं मन्यते, तत्स्वरूपानभिज्ञो लोकस्तथा गुरुयाथात्म्यानभिज्ञस्तं नरं मन्यते तद्याथत्म्यवित्तु साक्षाद्भगवन्तं मन्यते इत्यर्थः।।२७।।

एवं गुरुभक्त्यभावे सर्वं विफलमित्युक्तम्। अथ आवश्यकानां सर्वेषां [2-]वर्णाश्रमधर्माणां[-2] इन्द्रियजयार्थत्वं तदभावे तद्वैयर्थ्यमिन्द्रियपर्यन्तानामपि, तेषां भगवदुपासनात्मकयोगनिष्पादकत्व एव साफल्यम्, अन्यथा वैफल्यञ्चाऽऽह-**षड्वर्गेति**। सर्वा नियमचोदनाः वर्णाश्रमानुगुणावश्यकधर्मनियमविधयः। चोदनाशब्देन चोद्यमुपलक्ष्यते, चोदिता धर्मा इत्यर्थः यद्वा, नियमस्य चोदना येषु ते धर्माः। षड्वर्गः मनःपर्यन्तषडिन्द्रियवर्गः, तस्य संयमो नियमः तदेकान्ताः तदेकप्रयोजना इत्यर्थः। अन्यथा तेषां वैफल्यमेवेति भावः। तदन्ताः षड्वर्गनियमपर्यन्ता अपि [3]यदियोगान् योगावयवान् धारणाध्यानसमाधीन् नाऽऽवहेयुः न साधयेयुः तर्हि केवलं श्रमावहा एवेत्यर्थः।।२८।।

एवमावश्यकधर्माणामिन्द्रियजयद्वारा योगावहत्त्वमेव साफल्याम्, अन्यथा केवलश्रमफलत्वञ्चोक्तम्। अथ वृत्तिधर्माणामपि योगप्रयोजनकत्वाभावे[4] वैयर्थ्यं, प्रत्युत अनर्थावहत्वं तैस्सहावश्यकानामपि वैयर्थ्यञ्चाऽऽह-**यदेति**। वार्तादयो ह्यर्थावृत्तेर्जीवनस्येमे वार्ता अर्था याजनादयः यदा योगस्यार्थं न बिभ्रति योगानुष्ठानैकप्रयोजनं जीवनं न बिभ्रति न पुष्णन्ति न कुर्वन्ति, तदाऽनर्थाय नैरर्थक्याय भवेयुः। असदर्थव्ययरूपानर्थाय भवेयुरिति वा। तथा सतः तथा वर्तमानस्य वार्तानर्थान् योगैकप्रयोजनजीवनमात्रोपयुक्तानकुर्वतः पुरुषस्य पूर्तं स्मार्तं कर्म, इष्टं यागादिकं वैदिककर्मवाऽनर्थक्याय भवेताम्।।२९।।

अथेन्द्रियजयपर्यन्तस्ववर्णाश्रमधर्मकामादिजयनिष्ठस्य भगवद्भक्तियोगानुष्ठानप्रकारमाह-**य** इत्यादिना। यः पुमान् चित्तस्य विजये यत्त आयत्तो दक्षः स्यात् तर्हि निःसङ्गः त्यक्तकुलपुत्रादिसङ्गोऽपरिग्रहः

---

1. W °कृतवत् 2. A,B,T वर्णधर्माणामाश्रमधर्माणाञ्च 3. A, Omits यदि 4. A,B,T °जक°

शरीरमात्रावशेषितः भिक्षुस्तुर्याश्रमीभूयात्। भिक्षुर्भूत्वा चैकोऽसहायः विविक्तशरणः निर्जनदेशेऽवस्थितः भैक्षं भिक्षयालब्धं मितञ्चाशनमन्नं यस्य। भैक्षं मितञ्चाश्नातीति वा। कर्तरि ल्युः।।३०।।

शुचौ परिशुद्धे समे अनिम्नोन्नते च देशे हे राजन्! आत्मनः स्वस्याऽऽसनं "चैलाजिनकुशोत्तरम्" इत्युक्तविधमास्थाप्य स्थिरं चाञ्चल्यरहितं सुखञ्च यथा भवति तथा, तस्मिन्नासने आसीत उपविशेत्। ऋज्वङ्गः ऋजु अवक्रमङ्गं यस्य ऋजुकायस्सन्, ओमित्यनुसन्दधदिति शेषः।।३१।।

पूरकुम्भकरेचकैः प्राणापानौ वायू सम्यक् निरुन्ध्यात्। अपानेन प्राणाभिभवो रेचकः प्राणेन अपानाभिभवः पूरकः, उभयोस्समानः कुम्भकः। यावन्मनः कामान् शब्दादि विषयां स्त्यजेत्, नाऽनुसन्दधीत, तावत् स्वस्य नासाया अग्रं निरीक्षते इति निरीक्षणः, कर्तरि ल्युः।।३२।।

**विज॰** सत्त्वगुणेन रजस्तसी, उपशमेन भगवन्निष्ठया सर्वत्राऽपि भगवद्भक्तिरेव प्रयोजिकेत्याशयेनाऽह एतदिति।।२५।।

विपक्षे बाधकमाह-यस्येति। अभिसन्धिरतिक्रमणं भक्त्यनुसन्धानराहित्यं, अवज्ञतेति यावत्।।२६।।

कथमवज्ञाप्रकारः? इति तत्राऽऽह–एष इति। एष एवंविधमाहात्म्योपेतो लोको यं नरं सुखदुःख भोक्तारं मन्यत इत्येव मवज्ञाप्रकार इत्यर्थः।।२७।।

ननु हरेः प्रकृतिनिलीनत्वेन नरत्वं सम्भाव्यते "तुच्छ्येनाभ्वपिहितं यदासीत्प्रकृतौ लीनः संसारमेति सन्नत्यन्नाऽभवत्" (ऋ.क्सं. 10-129-3) इति श्रुतेः, इति तत्राऽऽह-षड्वर्गेति। सर्वा निगमचोदनाः "सन्ध्यामुपासीत" इत्यादिवेदविधयोऽपि हरौ भक्तियोगं न कुर्युः; तर्हि श्रमावहाः क्लेशहेतव एवेत्यन्वयः। आवहन्ति चेत्कथङ्कारमित्यत उक्तं–षडिति। षडिन्द्रियाणां संयमो विषयादाहृत्य हर्येकविषयीकरणलक्षणः तस्मिन्नेवैकान्तो निश्चयेन तात्पर्यं यासां ताः। तथाऽन्यतात्पर्यं किन्नस्यादिति तत्राऽऽह-तदन्ता इति। तस्य भक्तियोगस्य अन्तो निर्णयो यासां ता स्तथा। यथा षड्वर्ग संयमैकान्ताः सर्वा निगमचोदनाः, तदन्ता निगमाः यदि योगं नो आवहेयुरिति वा।।२८।।

इष्टापूर्तादिना पुरुषस्य पुरुषार्थसम्भवेन तद्विधायि वेदः पूर्णार्थो लभत इत्यतो वेदस्य श्रमावहत्वं कथम्? अत्राऽऽह-यथेति। यस्य पुंसो या वार्तादयो विद्याः ता अर्थं न बिभ्रति; प्रत्युताऽनर्थाय भवेयुश्च। तथाऽसतस्तस्य पूर्तमिष्टञ्चाऽर्थं न विधत्त इत्यन्वयः। पूर्तादेरनित्यफलहेतुत्वेन निन्दितत्वात्, तदर्थविधायित्वं

वेदस्य जुगुप्सितम्। अतस्तद्विधाने श्रमावहत्त्वं प्रकटमित्यर्थः। "इष्टापूर्तं मन्यमानावरिष्ठम्" (मुण्ड. उ. 1-2-10) इत्यादिश्रुतेः।।२९।।

यदि नो योगमित्यत्र योगशब्देन ध्यानञ्चोच्यते, तदा तद्ध्यानं ध्येये मनो निधायोपासनापरपर्यायं भवेत् तत्र जलचरस्येव अनवस्थानस्य मनसो जयेन सफलं स्यात्! अतस्तदुपायमाह-**यश्चित्तेति**। यश्चित्तविजयेच्छुः स्यात् स ओमिति मन्त्र मुच्चार्य तस्मिन्नाऽसीतेत्यन्वयः। तद्विजयोपायमाह-निस्सङ्ग इति। निस्सङ्गत्वं कथम्? अत्राऽऽह-निष्परिग्रह इति। तत्फलमेक इति। एकस्याऽपि स्वजनरहितस्य जनतामध्यस्थितस्य नानावार्ताश्रवणेन विक्षिप्तस्य पुंसो मनोजयः कथमुपपद्यते? इत्यत उक्तं-विविक्ते एतदपि गृहस्थस्य न घटते इत्यत उक्तं भिक्षुरिति। तस्याऽप्यशनचिन्तया द्वितीयापेक्षयोक्तं न युक्तमित्यत उक्तं भैक्ष्येति। भैक्ष्यमपि बहुसम्पन्नं न योगोपयोगिस्यादित्यत उक्तं-मितेति।।३०।।

ऋज्वङ्गः समीकृत कायशिरोग्रीवः।।३१,३२।।

**यतो यतो निस्सरति मनः [1]कामाहतं भ्रमत्।**
**ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः।।३३।।**

**एवमभ्यसतश्चित्तं कालेनाऽल्पीयसा [2]यतेः।**
**[3-]अनिशं तस्य[-3] निर्वाणं यात्यनिन्धनवह्निवत्।।३४।।**

**कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत्।**
**चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित्।।३५।।**

**यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गवपनात्पुनः।**
**[4]यदि सेवेत तान्भिक्षुः [5-]सवान्ताश्यनपत्रपः[-5]।।३६।।**

**[6]यैः स्वदेहः स्मृतो नाऽऽत्माऽमर्त्यो [7]विट्क्रिमिभस्म[8]सात्।**
**[9-]त एवामुं[-9] स्वसात्कृत्वा श्लाघयन्ति ह्यसत्तमाः।।३७।।**

---

1. A,B,G,J,M,Ma,T ०म० 2. M,Ma मुनेः 3--3 M,Ma अविषण्णं च 4. M,Ma यदा 5--5. A,B,G,J स वै वान्ताश्यपत्रपः ; M,Ma स पापो निरपत्रपः 6. M,Ma यस्य दे० 7. A,B,G,J,M,Ma,T कृ० 8 M,Ma ०वत् 9--9 A,B,G,J,T त एन मात्म०, M,Ma मेवस्वात्म०

**गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि।**
**तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोलता[1]।।३८।।**
**आश्रमापशदा[2]ह्येते खल्वाश्रम विडम्बनाः[3]।**
**देवमायाविमूढां स्तानुपेक्षेताऽऽनुकम्पया।।३९।।**
**आत्मानञ्चे द्विजानीयात् परं[4] ज्ञानधुता[5]शयः।**
**किमिच्छन्कस्य वा हेतोर्देहं पुष्णाति लम्पटः।।४०।।**

**श्रीध॰ एव**मिति। एवमनिशमभ्यस[6]तस्तस्य यतेश्चित्तं निर्वाणं शान्तिं याति।।३३,३४।।

न च पुनर्विक्षिप्य[7]तेत्याह **-कामे**ति। कामादिभिरक्षुभितं[8] यच्चित्तं तन्नोत्तिष्ठेत्। यतः प्रशान्ता अखिला वृत्तयो यस्य, कुतः ब्रह्मसुखेन स्पष्टम्।।३५।।

यस्तु प्रव्रज्यां कृत्वाऽपि भोगम[9]भिलिप्सुः स्यात्, तं निन्दति-**य** इति।। त्रयाणां धर्मादीनां वर्गः आ समन्तादुप्यते यस्मिंस्तस्मात् गृहात् तान् धर्मादीन् वान्ताशी छर्दितभोजी निर्लज्जश्च सः[10]।।३६।।

न चेदमघटितं दृष्टत्वा दित्याह-**यैरिति**। यैः पूर्वं स्वदेहोऽनात्मादिरूपः स्मृतश्चिन्तितः त एव पुनरेनमात्मेति मत्वा श्लाघयन्ति [11-]स्तावयन्ति[-11] हि।।३७।।

यतिमुपलक्षणीकृत्य अन्यानपि [12]स्वधर्मत्यागिनो निन्दति-गृहस्थस्ये[13]त्यादि द्वाभ्याम्।।३८,३९।।

नन्वात्मतत्त्वज्ञस्य भिक्षोरिन्द्रियलौल्येऽपि को दोषः तत्राऽऽह-**आत्मान**मिति। आत्मानं परं ब्रह्मचेज्ज्ञानीयात् ज्ञानेन धुता निरस्ता आशया वासना यस्य तस्य ज्ञानिनो लौल्यमेव न सम्भवतीत्यर्थः। तथा च श्रुतिः- "आत्मानञ्चे द्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसञ्च[14]रेत्।।" (बृह.उ.4-4-12) इति।।४०।।

**वीर॰** कामैश्शब्दांदिविषयज्ञानैः हृतं विक्षिप्तं सत् मनोभ्रमत् यतो यतः यं यं विषयं निस्सरति विषयीकरोति, ततस्ततो विषयात् तन्मनः उपाहृत्य प्रत्याहृत्य बुधस्तत्प्रत्याहारवित् हृदि हृदयस्थे शुभाश्रये

1. B,M,Ma लौल्यता 2. A,B,G,J,M,Ma,T °स° 3. A,B,G,J,T °म्बकाः M,Ma °म्बिनः 4. M,Ma एवं 5. M,Ma धृ° 6. A,B,J °स्य° 7. A,B,J °प्ये 8. H,V, Omit यत् 9. H,V वि° 10. A,B,J omit सः 11--11. A, Omits 12. A,B,J Omit स्व 13. A,B,J Omit आदि 14. A,B,J °ञ्च°

शनैर्निरुन्ध्यात् शुभाश्रयचिन्ताप्रवणं कुर्यत्। अत्र नियमोऽर्थसिद्धः। चित्तविजय इति नियम उक्तः। स्थिरं सुखमासीतेत्यासनम्। प्राणापानावित्यादिना प्राणायामः यावन्मन इत्यादिना। ततस्तत उपाहृत्य इत्यन्तेन प्रत्याहारः, निरुन्ध्याच्छनैर्बुध इत्यनेन ध्यान धारणे चोक्ते।।३३।।

अथ समाधिमाह-**एवमिति** द्वाभ्याम्। एवमनिश महरहः सर्वदा नाऽभ्यसतः तस्य यतेश्चित्तमल्पीय सैवकालेन निर्वाणं याति, बहिर्वृत्तिविनाशं याति। अनिन्धनवह्निवत् यथाऽनिन्धनः ज्वालाधूमादिरहितोऽङ्गाररूपेणा वशेषितोऽग्निस्तद्वत् इत्यर्थः।।३४।।

न तु विक्षिप्तम्भवतीत्याह-**कामेति**। यद्यस्मात् कामादिभिः शब्दादिविषयानुध्यानादिभिः अनाविद्धमसङ्क्रान्तं प्रशान्ता अपगता अखिला वृत्तयो व्यापारात्मका यस्य तादृशं चित्तमभूत्। तस्मात्तच्चित्तं ब्रह्मसुखस्पृष्टं ब्रह्मानुभवसुखाविद्धं सत् कर्हिचिदपि नैवोत्तिष्ठेत शुभाश्रयान्न प्रच्युतं भवति। अयमेव समाधिर्यत् ब्रह्मानुभवमग्रचित्ततेति।।३५।।

एवमष्टाङ्गयुक्तभगवद्भक्तियोगनिष्ठं तत्फलत्वेन त्रिवर्गं कामयमानं यतिं निन्दति-**य** इति। त्रिवर्गस्य धर्मार्थकामरूपस्य अवपनात् क्षेत्रभूतात् गृहात्प्रव्रज्य पुन र्यः पुमान् तान् धर्मादीनेव सेवेत स वै भिक्षुर्निरपत्रपो निर्लज्जो वान्ताशी छर्दितान्नभक्षी उद्गीर्णान्नभक्षयितृतुल्य इत्यर्थः। यद्वा प्रव्रज्याऽपि पुनर्भोगासक्तं यतिं निन्दति य इति।।३६।।

न चेदमघटितं दृष्टत्वा दित्याह-**यैरिति**। यैः परिव्राड्भिः पूर्वं स्वदेहो नाऽऽत्मा स्मृतः, आत्मत्वेन न निश्चितः किन्तु, आत्मनः व्यतिरिक्तो मर्त्यः मरणशीलः विट्क्रिमि[1]भस्मसाञ्च अन्ततः क्रिम्याद्यवस्था-मापत्स्यमानश्चिन्तितः। त एव पुनस्तमेनं देहमेव आत्मसात्कृत्वा आत्माभिन्नं कृत्वा श्लाघयन्ति हि केचिदसत्तमाः परिव्राज इत्यर्थः।।३७।।

भोगासक्तयतिनिन्दाप्रसङ्गात्तेन सह आश्रमान्तरस्थानपि स्वधर्मादित्यागिनो निन्दति-**गृहस्थस्येति**। क्रियात्यागः स्ववर्णाश्रमोचितक्रियात्यागः। वटोर्ब्रह्मचारिणो व्रतत्यागः गुरुकुलवासादिव्रतत्यागः, तपस्विनो वानप्रस्थस्य ग्रामसेवा पुनः ग्रामवासः भिक्षोः सन्न्यासिन इन्द्रियलोलता।।३८।।

---

1. A,B,T °कृ°

एते आश्रमापशदा[1] येषां गृहस्थादीनां चतुर्णां क्रियात्यागादयः त एते आश्रमेषु आश्रमस्थेषु अपशदा[2] निकृष्टा इत्यर्थः। एते ह्याश्रमान् विडम्बयन्त्यनुकुर्वन्तीत्याश्रमविडम्बिनः। विडम्बनमात्रमेवैषां नत्वाश्रम सिद्धिरित्यर्थः। अतस्तान् भगवन्मायया विमूढान्, अनेन नित्यनिरतिशयानन्दरूपपरमात्मप्राप्तिसाधनभूततदुपासन तदङ्गधर्मानुष्ठानोपयुक्तमनुष्यजन्मवर्णाश्रमादिरूपसामग्रीं लब्ध्वाऽपि ये स्वधर्मादित्यागिन स्ते नूनं देवमाया-मोहिता इत्युक्तं भवति। अनुकम्पया अहो इमे उद्वपतिताः , किं विधेयमित्येवमनुकम्पापूर्वकचिन्तया तान् उपेक्षेत[3] नाऽनुवर्तेतेत्यर्थः।।३९।।

स्वात्मपरमात्मतत्त्वज्ञस्य ब्रह्मानुभवसुखतृप्तस्य तु यतेरिन्द्रियलौल्यमेवाऽसम्भावितं, तस्य देवमायया मोहाभावादित्याह-**आत्मानमिति**। परं प्रकृतिपुरुषविलक्षणमात्मानम्, यद्वा, आत्मानं परंपरमपुरुषञ्च विजानीयाच्चेत् तज्ज्ञानेन निर्धूतवासनः कस्य कामाय इष्टसम्पत्तये लम्पटः किमिच्छन् देहं पुष्णाति देहपोषणेन स्वात्मनः परमपुरुषस्य च नेष्टं सम्पद्यते। अतः तत्त्यजत्येवेत्यर्थः। यद्वा इच्छन् शब्दादिविषयान् कामयमानः कस्य स्वपरयोरन्यतरस्य कस्यकामायेष्टार्थं देहं पुष्णाति किम्? न पुष्णात्येवेत्यर्थः। कस्य कामायेत्यनेन देहपोषणं न स्वात्मनो नाऽपि परमात्मनश्च सुखाधायकं, तयोः स्वत एव निरतिशयसुखरूपत्वादिति सूच्यते। निरतिशयानन्दपरमात्मोपासनात्मकतदनुभवतृप्तो निहीन[4]देहपोषणज सुखार्थं न यतत एव। किन्तु परमात्मप्राप्तय एव यतत इति सूचितम्। देवमाया विमूढा नित्यनेन परमानन्दरूपपरमाप्तप्राप्तिसाधनानुष्ठानोपयुक्त शरीरेन्द्रियादिसामग्रीं लब्ध्वाऽपि येन यतन्ते ते देवमायाविमूढा इति चोक्तम्।।४०।।

**विज०** उपाहृत्य हृदिस्थिते हरौ।।३३।।

इन्धनरहितो वह्निर्यथा निर्वाणं नाशं याति तथाचित्तं प्राकृतं नाशमेति। अप्राकृतं स्वरूपभूतं शरीराभिमानरहितं ब्रह्म यातीत्यन्वयः। "बाणं शरीरं सम्प्रोक्तं बाणो बलिसुते शरे" इत्यभिधानम्। "निर्वाणममृतमक्षरं ब्रह्म" इत्यभिधानम् ।।३४।।

एवं विषयीकृतब्रह्मणोऽप्राकृतस्य चित्तस्य स्वभावफलमाह-कामादिभिरिति। यच्चित्तं कामादि भिरनाविद्धत्वात् प्रशान्ताखिलवृत्तित्वाच्च ब्रह्मपूर्णसुखरूपं स्पष्टं विषयीकुर्वत् तत्कर्हिचित् ततो नोत्तिष्ठेत ततोऽन्यत्र न गच्छतीत्यर्थः।।३५।।

---

1. A,B,T स° 2. A,B,T स° 3. W Omits उपेक्षेत 4. A,B,T निरीहो

ननु, कस्यचिच्चेतोऽन्यत्र गच्छति चेत् किं दूषणमित्याशङ्क्य तस्य पापकरणत्वेन सर्वहास्यत्वं दूषणमित्याशयेनाऽऽह–यः प्रव्रज्येति। त्रिवर्गवपनात् धर्मार्थकामबीजानामावपनक्षेत्रभूतात् तान् तान् कामादीन् [1-] यदा सेवेत तर्हि [-1] इति शेषः।।३६।।

एवंविधा असुरजातय इत्यभिप्रायेणाऽऽह-यस्येति। यस्य देहिनः [2] अनात्मा देहो विट्कृमिभस्मवत् स्मृतः तस्य तमेव देहं तत्सदृशमेव भोगायतनं स्वात्मसात्कृत्वा अहमेवाऽऽत्मेति कृत्वा ये देहं श्लाघयन्ति ते असत्तमा असुरा इत्यन्वयः ।। "आत्मैवहायान्" इति श्रुतिं हि शब्देन सूचयति। यैः स्वदेह इति पाठे यैर्मर्त्यै रनात्मा स्वदेहो विट्कृमिभस्मवत्स्मृतः, ते तमेव स्वात्मसात्कृत्वा श्लाघयन्ति तर्हि असत्तमा इत्यन्वयः।।३७।।

न केवलं यतेराश्रमत्यागे दूषणमपि तु गृहस्थानामपि स्वधर्मत्यागे दोषः स्यादित्याह-**गृहस्थस्येति**। यत्यादेः कस्य कस्य धर्मत्यागे दोषः स्यादित्यतोवाऽऽह-गृहस्थस्येति। वटोर्ब्रह्मचारिणः यदि गृहस्थादीनां क्रियात्यागादयस्सन्ति तर्ह्येते आश्रमापसदा हीत्यन्वयः।।३८।।

नन्वेतावताऽपि फलं स्यात्किं नेत्याह खल्विति आश्रमान् विडम्बयन्ति अनुकुर्वन्तीत्याश्रमविडम्बिनः खलु आश्रमफलाहेतुत्वादित्यर्थः। निषेधवाक्यालङ्कारादौ खलु शब्द प्रयोगात् (अम.को 3-410) न चैते पुण्याशयामान्या इत्याऽऽह-देवेति। अतो भगवन्महिमेति भगवद्विषयैवाऽनुकम्पा प्रेमविशेषः।।३९।।

यतः स्वधर्मत्यागी निन्द्यः, अतो विहितातिरेकेण देहपोषो न युक्त इत्याह–**आत्मानमिति**। विवेकज्ञानेन धृताशयः वशीकृतान्तःकरणः पुरुषः आत्मानं स्वस्वरूपं परमात्मानञ्च विजानीयात् चेत् तर्हि स किं सुखमिच्छन् कस्य हेतोः सुखस्यार्थे वा लम्पटो। रागी इन्द्रियलोलुपो भूत्वा देहं पुष्णातीत्यन्वयः। "सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा सुखं त्यजेत्" इति वचनम्।।४०।।

**आहुश्शरीरं रथमिन्द्रियाणि हयानभूषून्[3] मनइन्द्रियेशम्।**
**वर्त्मानि मात्रा धिषणाञ्च सूतं सत्त्वं बृहद्बन्धु रनीशसृष्टम्[4]।।४१।।**
**अक्षं दशप्राणमधर्मधर्मो चक्रेऽभिमानं रथिनञ्च जीवम्।**
**धनुर्हितस्य प्रणवं पठन्ति शरन्तु जीवं परमेव लक्ष्यम्।।४२।।**

---

1- -1 Ma न जहाति 2. Ma देहस्य 3. M,Ma ॰षुं 4. M,Ma ॰धाम

**रागोद्वेषश्च लोभश्च शोकमोहौ भयं मदः।**

**मानो[1]ऽवमानोऽसूया च माया हिंसा च मत्सरः।।४३।।**

**रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेव मादयः।**

**रजस्तमः प्रकृतयः सत्त्वप्रकृतयः क्वचित्।।४४।।**

**यावन्नृकायर[2]थमात्रवशोपकल्पं[3] धत्ते गरिष्ठ चरणार्चनया निशातम्।**

**ज्ञानासि[4-]मच्युतबलो[-4]ऽथ निरस्तशत्रुः स्वाराज्य[5]तुष्ट उपशान्त इदं विजह्यात्।।४५।।**

**नोचेत्प्रमत्तमसदिन्द्रिय वाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति।**

**ते दस्यवः सहयसूतममुं तमोऽन्धे संसारकूप उरुमृत्युभये क्षिपन्ति।।४६।।**

**प्रवृत्तञ्च निवृत्तञ्च द्विविधं कर्मवैदिकम्।**

**आवर्त[6]ते प्रवृत्तेन निवृत्तेनाऽश्नुतेऽमृतम्।।४७।।**

**हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम्।**

**दर्शश्च पूर्णमासश्च चातुर्मास्यं[7] पशुः सुतः[8]।।४८।।**

**श्रीध॰** अज्ञस्य तु लौल्येन नरकपातापत्ते रप्रमत्तेन सदा तत्त्वज्ञाने यतितव्यमितीममर्थम् - "आत्मानं रथिनं विद्धि शरीरं रथमेव च" (कठ.उ. 3-3) इत्यादि श्रुत्युक्तरथरूपकद्वारेणाऽह - आहुरिति षड्भिः। इन्द्रियेशं मनोऽभीषून् रश्मीनाहुः। मात्राः शब्दादिविषयान्[9] वर्त्मानि गन्तव्यदेशानाहुः। सत्त्वं चित्तं बृहद्देहव्यापि बन्धुरं बन्धनं[10] चित्तं विना ह्यनिबद्धमिव शरीरं भवति। ईशसृष्टमिति बन्धनकर्तात्वीश एवेत्यर्थः।।४१।।

**अक्षमिति**। प्राणादयः पञ्च "नागश्च कूर्मः कृकरो देवदत्तो धनञ्जयः" (अम.को. अधिकपाठ) इत्येवं दशविधं प्राणमक्षम् अभिमान[11] महङ्कारं जीवं रथिनं शुद्धं जीवं शरं परं ब्रह्म लक्ष्यम्। यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यते इत्यर्थः।।४२।।

**राग** इति। रागादयो जेतव्याः शत्रवः। राग[12-]ः प्रेमातिशयः लोभः धनादौ मत्सरः जायापत्यादौ।।४३।।

**रज** इति। तत्र रजोऽभिनिवेशः। क्वचिदारूढसमाधेः सत्त्वप्रकृतयोऽपि परोपकारादि प्रवृत्तयः शत्रवः।।४४।।

---

1 M,Ma ॰ऽभि 2. H,V ॰मिम॰ 3. A,B,G,J,M,Ma,T कल्पं 4--4. A,B,G,J,T लोदध दस्त॰; M,Ma ॰लं दधदस्त॰ 5. H,V ॰नन्द॰

6. A,B,G,J,T ॰र्तेत 7. M,Ma ॰स्यः 8. M,Ma पुनः 9. A,B,T ॰दीन् 10. H,V न्धं 11. A,B,J ॰नं साह॰ 12--12 A,B,J Omit

**याव**दिति। नृकायरूपं रथमात्मवशे [1-]उपक्लृप्तं[-1] इन्द्रियादिपरिकरो यस्मिंस्तथा भूतं यावद्धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया निशा[2]तं ज्ञानखड्गं बिभ्रदच्युताश्रयस्सन् निरस्तशत्रु रुपशान्तः स्वानन्देन तुष्टोभूत्वेदं रथादिकमुपेक्षेतेत्यर्थः।।४५।।

अच्युताश्रयाभावे बाधकमाह - **नोचे**दिति। असन्तो बहिर्मुखा ये इन्द्रियवाजिनः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयाख्येषु दस्युषु निक्षिपन्ति हयैस्सूतेन च सहव[3]र्धमानं तमोऽन्धे तमसाव्याप्ते, उरु मृत्युभयं यस्मिन्।।४६।।

ननु वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमे[4]तदनर्थप्राप्तिः स्यादित्याशङ्क्य वेदोक्त कर्मणां द्वैविध्यं दर्शयन् फलभेदमाह - **प्रवृ[5]त्त** मित्यादि दशभिः।।४७।।

**हिंस्र**मिति। हिंस्रं श्येनादिकर्म अशान्तिदमत्यासक्तियुक्तम्। आदिशब्दार्थविवरणं दर्शश्चेति। पशुः पशुयागः। सुतः सोमयागः।।४७।।

**वीर०** न केवलं मयैव शरीरेन्द्रियादेः परमात्मप्राप्तिसाधनानुष्ठानोपयुक्तसामग्रीत्वमुच्यते, अपि तु उपनिषद्वाक्यान्यपि - "आत्मानं रथिनं विद्धि शरीरं रथमेव च।बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयां स्तुषे गोचरान्। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ. उ. 3-3) इत्यादीनि संसाराध्वनः पारं वैष्णवं पदं प्रेप्सु[6]ः तमात्मानं रथित्वेन तच्छरीरादीनि रथरथाङ्गत्वेन रूपयित्वा तदाहुरित्याह - **आहुरिति**। शरीरादीन् रथादिभावेन रूपयन्तस्तेषां परमात्मप्राप्तिसाधनानुष्ठानोपयुक्तसामग्रीत्वमभीष्टदेशप्रेप्सो-र्विजिगीषोश्च प्रसिद्ध रथादीनां साधनत्वमित्याहु[7] वेदान्ता इत्यर्थः। शरीरं रथं रथस्थानीयम्, इन्द्रियाणि हयानश्वान्, इन्द्रियाणामश्वस्थानीयानामीशं मुख्यं मनः, अभीषून् रश्मीन्, रज्जूरिति यावत्। मात्राः शब्दादीन् वर्त्मानि मार्गस्थानीयान्, धिषणां बुद्धिं सूतं सारथिं, सत्त्वं बलं बृहत् दृढं बन्धुरं देहादीनां बन्धनम्। ईशसृष्टमिति यथायोग्यं विभक्तिविपरिणामेन शरीरादीनां विशेषणम्। ईशेन परमात्मनासृष्टमीशसृष्टम्।।४१।।

दशानां प्राणानां समाहारो दशप्राणं, प्राणादिपञ्चक नागकूर्मकृकर[8]देवदत्तधनञ्जयाख्योपप्राणप्रञ्चकात्मकम् अक्षमक्षस्थानीयम् अधर्मधर्मौ पुण्यपापे चक्रे पुण्यपापात्मकयोः कर्मणोरेव रथत्वरूपितशरीरप्रवृत्तिहेतुत्वा-

---

1--1 A,B,J °शः उपकल्पः 2. A,B,T °शितम् 3. A,B,J वर्तं° 4. A,B,J °वमन° 5 A,B,J °त्तश्चेति। 6 W °प्सन्त° 7. W °वा° 8 A,B,T °ल

त्तदायत्तत्वेन च चक्रत्वेन रूपणम्। अभिमानिनं देहाभिमानिनं जीवं रथिनमाहुः। तस्य रथिनः प्रणवमोङ्कारं धनुः पठन्त्याहुः। शरन्तु जीवं, परं परमात्मानन्तु लक्ष्यं पठन्ति। "प्रणवो धनुश्शरोह्यात्मा ब्रह्मतल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।" (मुण्ड. उ. 2-2-4) इति ह्यन्यत्राप्युक्तम्। विप्रकृष्ट योश्शर लक्ष्ययोरिव जीवपरयोः सम्बन्ध ज्ञापनहेतुत्वात् प्रणवो धनुरुक्तम्। रथित्वेन रूपित एव जीवः शरत्वेनाऽपि रूप्यते।।४२।।

[1]तत्र जेतव्यानाह - **राग** इति। रागः शब्दादिविषयासक्तिः द्वेषः तद्विरोधिविषयाऽप्रीतिः लोभोऽसन्तोषः, मोहः कार्याकार्याऽविवेकः, भय मागामिदुःखदर्शनजं प्रतिकूलज्ञानं, मदो गर्वः, मानो बहुमानः, अवमान स्तिरस्कारः, असूया गुणेषु सत्स्वपि दोषाविष्कारः,माया वञ्चनं, हिंसा भूतद्रोहः, मत्सरः परकृतद्रोहचिन्ता।।४३।।

रजः क्रोधः स चामर्षः, प्रमादोऽनवधानता, एवमादयः एतत्प्रभृतयश्शत्रवो जेतव्याः। त एते रजस्तमः प्रकृतयः, क्वचित्सत्त्वप्रकृतयश्च, रजस्तमसी प्रकृती कारणे येषां ते, सत्त्वं प्रकृतिः कारणं येषान्ते चेति बहुव्रीहिः। रजस्तमसोरन्यतरमिश्रसत्त्वप्रकृतय इत्यर्थः।।४४।।

तदेवं शरीरेन्द्रियमनोविषयबुद्धिबलप्राणधर्माधर्मजीवाः रथरथाङ्गादिरथ्यादिभावेन परमात्म प्राप्त्युपायसाधनानुष्ठानोपयुक्तत्वज्ञापनाय रूपिताः प्रणवजीवेशास्तुजीवपरयो स्सम्बन्धज्ञानजनकत्वपरमात्मैक शेषत्वप्राप्यत्वज्ञापनाय धनुश्शरलक्ष्यभावेन रूपिताः। हेयत्वज्ञापनाय रागादय श्शत्रुत्वेन रूपिताः। अथ यस्यैते रथादयो वशेतिष्ठन्ति स एवाऽध्वनः पारं वैष्णवं[2] पदमाप्नोतीति "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ. उ. 3-9) इति श्रुतेरर्थमभिप्रयन् [3-]रथादिकमपि उपेक्षेत इत्याह - **यावदिति**[-3]। यावच्छरीरं समीहित साधने दक्षं स्ववशञ्च तावदेव ज्ञानासिना जितरागादिशत्रुः मुक्तिसाधन मनुतिष्ठन् शरीरादिषु निःस्पृहो भवेदित्याह - यावदिति नृकायरथं नरशरीर रूपं रथं यावदात्मवशोपक्लृप्तं स्वाधीनतयोपक्लृप्तं यथा भवति तथा धत्ते। तावदेव गरिष्ठानां महतां चरणार्चनया लब्धं निशातं ज्ञानरूपं खड्गं दधत् बिभ्राणः अस्त्राः निरस्ताः शत्रवो रागादयो येन, अच्युतः [4]स्वाश्रितान्नच्यावयतीति अच्युतः। भगवानेव बलं यस्य तादृश उपशान्तः रागाद्यकलुषितचित्तः स्वाराज्यतुष्टः स्वराडकर्मवश्यः तस्यभावः स्वाराज्यं मुक्तैश्वर्यं तेन तुष्टः अवश्यमच्युतः स्वाराज्यं दास्यतीति सन्तुष्ट इदं नृकाय रथादिकं विजह्यादुपेक्षेत, तेषु स्पृहारहितो भवेदित्यर्थः। [5-]इदमिति[-5] संसारकफलं वा विवक्षितम्।।४५।।

---

1 W Omits तत्र 2. A,B,T °व 3- -3 W Omits 4. Wआ° 5- -5 A,B,T इदमेतद्धि

यद्युक्तविधो न स्यात् तदा तस्याऽनर्थमाह - **नेति**। नोचेदुक्तविधो न भवेत्[1] तदा प्रमत्तमिमं देहिन मसन्तो बहिर्मुखा इन्द्रियवाजिनः इन्द्रियाण्येवाऽश्वाः, सूतो बुद्धिश्चैते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयरूपेषु दस्युषु निक्षिपन्ति। ते विषयाख्या दस्यवः हयैस्सूतेन च सह वर्तमान ममुं प्रमत्तं देहिनम् उर्वधिकं मृत्युभयं यस्मिन्नन्धे तमसि अन्धतामिस्रनरकतुल्ये संसारकूपे क्षिपन्ति।।४६।।

तदेवं वर्णाश्रमधर्मान् तदनुग्राह्यं भक्तियोगं शरीरेन्द्रियादीनां तदनुष्ठानोपयुक्तत्वं तैरनुष्ठितेन वर्णाश्रम-धर्मानुगृहीतेन भक्तियोगेन स्वाराज्यप्राप्तिं सांसारिकफललिप्सयाऽनुष्ठितानान्तु धर्माणां संसृतिरूपानर्थावहत्वञ्चाऽभिधाय अथ तेषामेव धर्माणामिष्टापूर्तभेदेन द्वैविध्यं सांसारिकफलसाधनत्वेन कृतानां प्रवृत्त कर्माख्यत्वं, पुनरावृत्तिहेतुत्वम्, उपसनानुग्राहकतया कृतानान्तु निवृत्त[2] कर्माख्यत्वं, तस्याऽपुनरावृत्तिहेतुत्वञ्चाऽह - **प्रवृत्त**मिति। वैदिकं वेदविहितं कर्मप्रवृत्तं निवृत्तमिति द्विविधम्। तत्र प्रवृत्तेन कर्मणा आवर्तते फलानुभवाय लोकान्तरं प्राप्य तत्र तदनुभूय अवशिष्टेन कर्मणा ततः पुनरिहाऽवर्तते। निवृत्तेन तु अमृतमश्नुते, तत्फलरूपममृतं मुक्तिं प्राप्य ततः पुनर्नाऽवर्तते।।४७।।

प्रवृत्तनिवृत्तभेदभिन्नस्य वैदिकस्यैव कर्मणः तत्स्वरूपमिष्टसंज्ञकत्वञ्च वक्तुं तद्विशिंषन् तदवान्त-रभेदान्दर्शयति-हिंस्रमिति। अग्निहोत्रनामधेयकं कर्म आदिर्यस्य तदग्निहोत्रादि। आदिशब्दग्राह्यान्दर्शयति-दर्शश्चेति। दर्शादयश्शब्दाः कर्म नामधेयानि। पशुः पशुयागः। सुतः सोमयागः।।४८।।

**विज०** नन्वयं देहो हेयश्चेत्किमनेनाऽर्थ इत्याशङ्क्य महाप्रयोजन मस्ति, एवं कृतश्चेदित्याशयेनाऽह - **आहु**रिति। अभीषुं प्रग्रहं इन्द्रियेशं श्रोत्रादीन्द्रियनेतारं, मात्राविषयाः, धिषणा बुद्धिः, ईशस्य धामगृहस्थानीयं, सत्त्वमन्तःकरणविशेषणम्।।४१।।

दशप्राणं प्राणदशक मक्षमाहुरिति सर्वत्र योज्यम् । प्राणाऽपानव्यानोदानसमाननागकूर्मकृकरदेवदत्त-धनञ्जयनामानो दशप्राणाः अधर्मधर्मौ पापपुण्यलक्षणे चक्रे शकटपद स्थानीये। अभिमान महङ्कारलक्षणं जीवं रथिनं पठन्ति इत्यन्वयः। शरन्तु जीवमित्यत्र तु शब्देनैतत्प्रवृत्तिविशेषभेदं सूचयति, न तु स्वरूपभेदम्। "प्रणवो धनुः शरोह्यात्मा" (मुण्ड.उ. 2-2-4) इति श्रुतेः। अथ देवरथस्तस्य वाग्बुद्धिरिति च परं ब्रह्म।।४२।।

अस्य रथिनो जेतव्यानाह - राग इत्यादिना "अपूज्ये पूज्यबुद्धिस्तु मानस्सद्भिरुदाहृतः" इति। "मानोऽभिमानोवज्ञे च परिमाणे च पूजने" इतिं च। अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः इति च। मायां कैतवं, रागादय

1. W चेत् 2. W ०त्ति

आन्तरीयाश्शत्रवः, बाह्याश्शत्रवः सहोदरादयः। आदिशब्देन दुन्दुभ्यादयः सुग्रीववाल्यादयः। ते सर्वे शत्रवो रागादय उपायेन परिहर्तव्या इति शेषः।।४२,४४।।

एवं वर्णनोपयोगमाह - **यावदिति**। नृकायरथं मनुष्यशरीराख्य रथं, 'रथगतौ' इति धातोर्ज्ञानसाधनत्वात् तच्छब्दशब्दितं यावदात्मवशोपकल्पं स्ववशत्वेन कल्पितं धत्ते। तावद्गरिष्ठचरणार्चनया महापुरुषश्रीपादपूजनेन निशातं धौतं ज्ञानासिं दधत् अच्युतो बलं यस्य सः तथा। अक्षरितं बलं यस्य स तथेति वा। अस्तशत्रुः निरस्तरागादिशत्रुः स्वाराज्येनेश्वरेण दृष्टेन तुष्टो विषयालम्बुद्धिमान् उपशान्तः पूर्वस्मादाधिक्येनोपात्तभगवन्निष्ठः पुरुष इदं संसाराख्यं हेयत्वेन सर्पनिर्मोकवत् क्लृप्तं वस्तु जह्यादित्यन्वयः।।४५।।

इतोऽन्यथाऽस्य मुक्तिरेव न सेत्स्यतीत्याह - **नोचेदिति**। नोचेदिन्द्रियग्राममात्मवशं कृत्वा ज्ञानासिना संसारानुच्छेदः शब्दादिविषयाभिलाषश्चेद्यदि तर्हि असन्तोषिता इन्द्रियहयबुद्धिसूताः प्रमत्तं रागान्धीभूतचक्षुषममुं रथिनं उत्पथमशास्त्रमार्गं नीत्वा शब्दादिविषयलक्षणेषु दस्युषु दुःखाकरेषु चौरेषु निक्षिपन्ति। ते विषयचौराः सहयसूतं इन्द्रियबुद्धिसूतमिमं रथमुरु मृत्युभये तमो लक्षणज्ञानान्धे चक्षुरविषये संसारकूपे क्षिपन्तीत्यन्वयः।।४६।।

ननु 'स्वर्गकामो यजेत' इत्यादिशक्यार्थश्रवणसमनन्तरं तदुक्तकर्मणि प्रवर्तमानदुष्प्रापापारसंसारकूपे पातयन्तीति कथमुच्यते? तस्याऽपि वैदिकत्वेनाऽङ्गीकार्यत्वात् अन्यस्य सर्वधर्मपरित्यागस्याऽवैदिकस्याऽपि संसारोच्छेदकत्वञ्च कथम्? "सर्वधर्मान् परित्यज्य" (भ.गी. 18-66) इति स्मृतेः? इति तत्राऽह - **प्रवृत्तञ्चेति**। च समुच्चये। द्विविधमित्यनेनात्यन्तभिन्नविषयत्वं दर्शयति - यद्यप्यनेवंवित् महापुण्यं कर्म करोति "तद्धाऽस्यान्ततः क्षीयते" (बृह.उ. 1-4-15) "नारायणोऽसौऽपरमो विचिन्त्यः" इत्यादिना परमवैदिकत्वाच्च।।४७।।

कीदृशं तत्प्रवृत्तं, येनाऽनुष्ठितेन पुनरावृत्तिः स्यादिति, तत्राऽह - हिंस्र इत्यादिना। अश्वत्थादि द्रव्यच्छेदनात्मकत्वाद्धिंस्रमशान्तिदं मुक्तिविपरीतफलप्रदम्।।४८।।

**एतदिष्टं प्रवृत्ताख्यं हुतं प्रहु[1]तमेव च।**

**पूर्वं सुरालयारामकूपाजीव्यादिलक्षणम्।।४९।।**

---

1.H,V °वृ°

**द्रव्यसूक्ष्म[1]विपाकश्च धूमो रात्रि रपक्षयः।**
**अयनं दक्षिणं सोमो दर्श ओषधि वीरुधः।।५०।।**

**अन्नं रेत इति क्ष्मेशः पितृयानं[2] पुनर्भवः।**
**एकैकश[3]श्चानुपूर्व्या[3]त् भूत्वा भूत्वेहजायते।।५१।।**

**निषेकादिश्मशानान्तैः संस्कारैस्संस्कृतोद्विजः।**
**इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति।।५२।।**

**इन्द्रियाणिमनस्यूर्मौ[4] वाचि वैकारिकं मनः।**
**[5]वाचं वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत्।।**
**ओङ्कारं बिन्दु[6]नादे[7]तु तन्तु प्राणेमहत्यमुम्।।५३।।**

**अग्निस्सूर्योदिवा[8]प्राह्णः शुक्लोराकोत्तरं[9] स्वराट्।**
**[10]विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मासमन्वया[11]त्।।५४।।**

**देवयानमिदं प्राहुर्भूत्वाभूत्वाऽनुपूर्वशः।**
**आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते।।५५।।**

**य एते पितृदेवानामयने वेदनिर्मिते।**
**शास्त्रेण चक्षुषावेद जनस्थोऽपि न मुह्यति।।५६।।**

**श्रीध॰ एतदिति।** हुतं वैश्वदेवम्। प्रहुतं बलिहरणम्। एतत्सर्वमिष्टमुच्यते। एतदेव यदिकाम्यमशान्तिदश्च तर्हि प्रवृत्ताख्यमपीत्यर्थः। आजीव्यं प्रपा[12]दि।।४९।।

प्रवृत्तेन कर्मणा आरोहावरोहाभ्यां आवृत्तिप्रकारमाह - **द्रव्येति** द्रव्यस्य [13]चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देहान्तरारम्भकः "येन सम्परिष्वक्तो गच्छति य एव पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति

---

1. M,Ma ॰मूष्म॰ 2. W ॰णं 3- -3. A,B,G,J,T ॰श्येनानुपूर्वं ; M,Ma स्यानुपूर्व्या च 4.M,Ma ॰स्येवं 5. M,Ma तां तु 6. A,B,G,J,T बिन्दौ 7. A,B,G,J,T तं 8.M,Ma वायुः 9.M,Ma रः 10. A,B,G,J,T विश्वश्च 11.M,Ma यः 12. H,V ॰दादि 13.H,V Omit चरू

श्रूतावप्च्छब्देनोक्तेः। पाठान्तरे द्रव्यशब्देन [1-]तत्तदभिमानिन्योदेवता[-1]ः। तेजोमात्राशब्दोक्तानीन्द्रियाणि ऊष्मविपाक-शब्देन हृदयाग्रप्रद्योतः। तथा च श्रुतिः - स इमास्तेजोमात्रास्समभ्यददानो हृदयमेवान्वक्रामत् इति। तथा "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति" (बृ.ह. उ. 4-4-2) इति धूमादिशब्दै[2]ः तत्तदभिमानिन्यो देवताः। तत्रापक्षयः कृष्णपक्षः। सोमः सोमलोकः। तत्र भु[3]क्तभोगस्यावरोहणप्रकारमाह-दर्श इत्यादि। [4]दर्श इति विपरीत लक्षणया विशिष्टभोगक्षयशोकाग्निना देहलयेनादर्शनमुच्यते। एतदुक्तं भवति - भूतसूक्ष्मयुक्तो धूमाद्यातिवाहिकदेव ताभिस्सोमलोकं प्रापित स्तद्भोगावसाने विलीनदेहो वृष्टद्वारेणौषधिवीरुधादि साम्यापत्ति क्रमेण जायते। एवं पुनर्भवहेतु पितृयानं प्रवृत्तकर्ममार्गः इति।।५०।।

**अन्नमिति**। क्ष्मेश! हे भूपते! पुनर्भवमेवाऽह - एकैकश[5]ः प्रत्येकं [6-]आनुपूर्व्यात्[-6] क्रमेण भूत्वाभूत्वा [7]तत्साम्यं प्राप्येह भूमौ जायते।।५१।।

तत्राऽ[8]दिकारणमाह - निषेकादीति। [9]नित्यादिकार्यप्येवं जनमलभत इत्यर्थः। निवृत्तकर्मनिष्ठस्य उपासना-दिविशेषमुपदिशन् आर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह - इन्द्रियेष्वित्यादिना। यद्वा द्रव्ययज्ञेषु हिंसाया [10]दुर्निवारत्वादतिमुख्यं निवृत्तकर्मैव दर्शयन्नाह - ज्ञानेन दीप्यन्त इति तथा तेषु। इन्द्रियव्यापाराणामिष्टापूर्तादीना-मिन्द्रियतावन्मात्रतां भावय[11]न्नित्यर्थः। एव मुत्तरत्राऽपि।।५२।।

ऊर्मौ दर्शनादिसङ्कल्पमू[12]ले मनसि वैकारिकं विकारयुक्तं मनोवाचि विद्यावि[13]लक्षणया वाचा हि मनः कर्तृत्वादिविकारं भजति। वर्णानां समाम्नाये समुदाये तद्विशेषत्वाद्वाचः स्वरेऽकारादिस्वरत्रयात्मके, ओङ्कारं बिन्दौ, तञ्च नादञ्च प्राणे सूत्रात्मनि महति ब्रह्मणि।।५३।।

**अग्निरिति**। तत्तदभिमानिन्यो देवताः ताः प्राप्नोतीति पूर्ववत्। दिवाऽहः, प्राह्णस्तस्यैवान्तः। एका शुक्लपक्षस्यान्तः। यद्वा प्राणो[14] राका इति च पुराणमतम्। उत्तरन्त्वयनम्। स्वराट् ब्रह्मा। एवं ब्रह्मलोकं गतस्य भोगावसाने मोक्षप्रकारमाह - विश्व इति। विश्वः स्थूलोपाधिः स स्थूलं सूक्ष्मे विलाप्य सूक्ष्मोपाधि स्तैजर भवति। सूक्ष्मं कारणे विलाप्य कारणोपाधिः प्राज्ञो भवति। कारणञ्च [15]सर्वत्रसाक्षित्वे नाऽन्वयात् साक्षिस्वरूपे विलाप्य तुर्यो भवति। तेषाञ्च व्यभिचारिणां [16]साक्ष्याणां लये शुद्ध आत्मा भवति; मुच्यते इत्यर्थः।।५४।।

---

1--1 A,B,J Omit 2. A,Vशब्देन 3. H,V भोक्तृ 4. A,B,J Omit दर्श इति 5. A,B,J °कस्येन 6--6 A,B,J Omit 7.A,B,J सान्निध्यं 8.A,B,J °ऽऽधिकारिणं 9. A,B,J अन्यस्त्विष्टादि 10. H,V दुर्वारत्वात् 11. °यति ; B,J °यन्ति 12. A,B,J रूपे 13. A,B,J °ध्यादि 14 H,V प्राणे 15. A,B,J सर्वसा° 16.H,V सूक्ष्मा°

**देवयानमिति**। यथोत्तरो भूत्वा भूत्वा निवर्तते तथा न निवर्तत इत्यर्थः।।५५।।

**य** इति। वेदेन[1] निर्मिते ते "धूममभिसम्भवन्ति" इत्यादिना, 'तेऽर्चिरभि सम्भवन्ति' इत्यादिना च निश्चयेन विविच्य ज्ञापिते इत्यर्थः। जनस्थोऽपि देहस्थोऽपि न मुह्यति।।५६।।

**वीर॰** हुतं वैश्वदेवं, प्रहुत्तं बलिहरणम्। तदेतत्सर्वं वैदिकं कर्म इष्टमिष्टाख्यम्[2]। यद्येतदेव कर्म हिंस्रद्रव्यमयं हिंसाविषयद्रव्यप्रचुरम्। हिंस्रमितिपाठे पश्वादिहिंसागर्भं पुरोडाशादिद्रव्य प्रचुरश्चकाम्यं स्वर्गादि-कामार्थमशान्तिदं पूर्वोक्तरागाद्यनिवृत्तिदं स्यात्, तदा प्रवृत्ताख्यम्[3] अकाम्यं शान्तिदं स्यात् तदा निवृत्ता-ख्यमित्यर्थः। अथ पूर्तसंज्ञकं कर्माऽह - पूर्तमिति। देवालयादि निर्माणरूपं कर्मपूर्तम्। आजीव्यमाजीविका।।४९।।

तत्र प्रवृत्तिधर्मपरायणस्य त्रैवर्णिकस्य तत्फलानुभवाय लोकान्तरारोहणमार्गं, फलानुभवावसाने, ततः पुनरेव रोहणमार्गमेवं सञ्चरतो भूतसूक्ष्मपरिष्वक्तत्वञ्चाऽह **द्रव्येत्या**दिना सार्धद्वयेन। निषेकादिश्मशानान्तैः गर्भाधानादिश्मशानान्तैः संस्कारैः[4] संस्कृतो द्विजस्त्रैवर्णिकः इष्टापूर्तं दत्तकारी देहात्यागानन्तरं द्रव्यसूक्ष्मविपाकः द्रव्याणां पृथिव्यादिभूतानां सूक्ष्मा[5] विपाकाः सूक्ष्मावस्था यस्य सूक्ष्मावस्थपृथिव्यादिभूतयुक्तः भूतसूक्ष्मपरिष्वक्त इति यावत्। हे क्ष्मेश! पृथिवीपते! धूमादयश्शब्दाः तदभिमानिदेवतापराः। तत्र अपक्षयः अपरपक्षः अयनं दक्षिणं दक्षिणायनं सोमश्चन्द्रः। इति शब्दः प्रत्येकमन्वेति। धूम इति रात्रिरिति तानेकैकश आनुपूर्व्येण भूत्वा भूत्वा। भूप्राप्तावात्मनेपदीति भवतिरत्र प्राप्त्यर्थकः। प्राप्य प्राप्येत्यर्थः। धूमादिक्रमेणचन्द्रं प्राप्य तत्राऽमृ-तमयशरीरयुक्त इष्टादि कर्मफल मनुभूय ततः दर्शः दर्शस्य चन्द्रकलाक्षयहेतुत्वादिना दर्शशब्देन चन्द्रं प्राप्तस्याऽमृतमय शरीरनाशो लक्ष्यते। विनष्टामृतमयशरीर इत्यर्थः। चन्द्रमसः स्थानात् क्रमेणौषध्यादीन् प्राप्येहलोके जायते। एतञ्च पितृयानं पुनर्भवहेतुरित्यर्थः। यद्वा, चन्द्रपर्यन्तं पितृयानं ततो रेतःपर्यन्तं पुनर्भवयानमित्यर्थः। तत्र दक्षिणायनसोमयोर्मध्ये पितृलोकः आकाशश्च द्रष्टव्यः। ओषधेः पूर्वं क्रमेणाऽकाशवायुधूमाभ्रमेघवर्षाणि द्रष्टव्यानि। तत्राऽरोहणं धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशचन्द्रक्रमेण। अवरोहणन्तु चन्द्रमसः स्थानात् आकाशवायुधूमाभ्रमेघवर्षौषधीवीरुदन्यतरान्नरेतःक्रमेणेत्यर्थः। यथा च श्रूयते छान्दोग्ये-" अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रे रपरपक्षमपरपक्षाद्यान् षड् दक्षिणेति मासां स्तानेवैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं

1 H,V °दनि° 2. W omits इष्टं 3. W °त्या 4. A omits संस्कारैः 5. W °क्ष्मविं

तं देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाऽध्वानं पुनर्निवर्तन्ते यथैतमाकाश माकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वा अभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति। इह व्रीहि यवा ओषधिवनस्पतय स्तिलमाषाजायन्तेऽतो वै खलुदुर्निष्प्रपतरं योयो ह्यन्नमत्ति योयोरेतस्सिञ्चति तद्भय एव भवति तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिाययोनिं वा वैश्ययोनिं वा चाण्डालयोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डाल योनि वा" (छान्दो.उ. 5-10-3 to 7) इति। तत्रारोहणदशायां धूमाद्यभिमानिदेवतालोकगमनमेव धूमादि भावः। अवरोहणे त्वाकाशवायुधूमाभ्रमेघवर्षेषु तद्भावो नाम तत्संसर्गकृततत्सादृश्यापत्तिरेव "तत्स्वाभा- व्यापत्तिरुपपत्तेः" (ब्र.सू. 3-1-22) इति शारीरकन्यायात्। व्रीह्यादिभावो नाम जीवान्तराधिष्ठित व्रीह्यादि संश्लेष मात्रम् "अन्याधिष्ठिते पूर्ववदभिलापात्" (ब्र.सू.3-1-24) इति न्यायात्। एवं वाऽन्वयः द्रव्यसूक्ष्मविपाक इति द्रव्यसूक्ष्मविपाकादय इत्येते सोमपर्यन्ताः पितृयानं, दर्शादयोरेतः पर्यन्ता पुनर्भवः गर्भाधानादिश्मशानान्तैः संस्कृत इष्टादिकारी आनुपूर्व्यात् क्रमेण भूत्वा भूत्वा रात्र्यादीन् प्राप्य प्राप्य पुनरिह जायते इति।।५०,५१।।

अथापुनर्भवं देवयानं वक्तुं तेन जिगमिषोर्निवृत्तधर्मनिष्ठस्य तावत्कृत्यमनुसन्धानमाह - इन्द्रियेष्विति द्वाभ्याम्। ज्ञानदीपेषु ज्ञानदीपकेषु चक्षुरादीन्द्रियेषु क्रियायज्ञान् कर्मेन्द्रिय व्यापारान् जुह्वति, देवयानेन जिगमिषव इति शेषः। चक्षुरादिभिर्ज्ञानेन्द्रियैः पाणिपादादिकर्मेन्द्रियाणि नियच्छेयुरित्यर्थः। इन्द्रियाणि चक्षुरादीनि ज्ञानेन्द्रियाणि सङ्कल्पविकल्पादिरूपोर्मिमति मनसि जुह्वति मनसा तानि नियच्छेयुरित्यर्थः। वैकारिकं सत्त्वोत्तरं वाचि शास्त्रात्मिकायां मनः मनसः उच्छास्त्रप्रवृत्तिं निरुन्ध्युः[1] इत्यर्थः। वाचं वर्णसमाम्नायमोङ्कारेऽन्तर्गतं विदुःतमोङ्कारं बिन्दुनादे चतुर्थ्यां मात्रायां, बिन्दुनादञ्च प्राणि प्राणसहचारिणि मकारवाच्ये जीवे वाचकत्वेनान्तर्भावयेयुः। अमुं जीवं महति महदात्मनि परब्रह्मणि समर्पयेयुरिति मुमुक्षोरनुसन्धानप्रकार उक्तः।।५२,५३।।

अथ तस्य गतिहेतुभूतमर्चिरा दिमार्गमंशतोदर्शयति - अग्निरिति। अग्न्यादि शब्दाः तदाभिमानि[2] देवतापराः। अत्र न क्रमविवक्षा, श्रौतक्रमविरोधात्। ननु सर्योऽग्निरनन्तरं दिवसादिभ्यः पूर्वं श्रूयते, किन्त्वेवं "तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धां तप इत्युपासते, तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहरह्न आपूर्यमाणपक्षाद्यान् षडुदङ्डेतिमासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स

1. A,B,T °ध्यात् 2. W °न

एनान् ब्रह्म गमयत्येष देवयानः पन्थाः" (छन्दो.उ.5-10-1,2) इति। अत्र संवत्सरादनन्तरं वायुं विद्युतोऽनन्तरं वरुणेन्द्रौ च जानीयात्। कौषीतकिब्राह्मणे "एतं देवयानं पन्थानमापद्याऽग्निलोकमागच्छति [1-]सवायुलोकं[-1] सवरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकम्" (कौषी.उ. 1-3) इति श्रवणात् . स्वराडत्रामानवः प्रजापतिर्वा। अयञ्च सकलश्रुत्यविरोधेन निर्णीतः क्रमो वरदगुरुभिरभिहितः - "अग्निरहस्सित पक्षानुदगयना-ब्दमरुदर्केन्दून्। अपि वैद्युतवरुणेन्द्रप्रजापती - नातिवाहिकानाहुः" इति पूर्वाह्णोराका चाऽनधीत शाखान्तरेष्वामन्तव्यौ। उत्तरं उत्तरायणम्। एवं मुक्तप्राप्यभगवल्लोकमार्गो दर्शितः। तत्र प्राप्यस्य भगवतः चतुर्व्यूहविशिष्टतामाह - विश्व इति। यथा सर्वज्ञसंहितायाम् " सृष्टिस्थित्यन्तकारिण्यश्शक्तयस्तत्र ऊर्जिताः" इत्युपक्रम्य "अकारशक्तिर्विश्वाख्या उकाराख्यातु तैजसी। मकारशक्तिः प्राज्ञाख्या तासां रूपं पुनः शृणु" इत्यादिना जाग्रदाद्यवस्थान्वयादिक मुक्त्वा "एतस्तिस्रो दशास्तिस्रः शक्तीः सम्प्रीणयन्ति ताः। अनिरुद्धादिरूपा स्ता भोक्तृशक्तीर्विचिन्तयेत्। अर्धमात्रा धिया दिव्याऽप्रकाशार्थप्रकाशिका। वासुदेवमयीं शक्तिं विद्धितामनुपस्कृताम्" इत्युक्तम्। अतः सृष्ट्यधिष्ठाता जाग्रदवस्था निर्वाहकोऽनिरुद्धो विश्वस्थित्याधिष्ठाता, स्वप्ननिर्वाहकः प्रद्युम्नस्तैजसः संहतिशक्त्यधिष्ठाता सुषुप्तिनिर्वाहकः सङ्कर्षणः प्राज्ञः। एतेचाकारोकारमकारवाच्याः। सर्वकारणभूतः सर्वशक्तिर्मोक्षप्रदः प्रणवार्थ मात्रावाच्यो वासुदेव स्तुर्यश्चतुर्थमात्रासहितप्रणवस्य पूर्वमनुसन्धेयतया प्रकृतत्वादेवं तस्यार्थः फलदशायां प्राप्यतयोक्तः। इदं प्रदर्शनार्थ मुक्तम्। परव्यूहविभवादि सर्वावस्थाविशिष्टो भगवान्मुक्तप्राप्य इत्यर्थः। समन्वयात्सर्वेषां व्यूहादीनां प्राप्यान्तर्भावादित्यर्थः।।५४।।

इदं देवयानं प्राहुः, वेदान्ता इति शेषः। आत्मयाजी परमात्मोपासकः अनुपूर्वशः क्रमेणार्चिरादीन् प्राप्य उपशान्तः निश्शेषनिवृत्त आत्मा प्रकृतिर्यस्य तादृशः आत्मनि परमात्मनिस्थितः आधेयतयास्थितः आत्मन्याविर्भूता-पहतपाप्मत्वादिगुणाष्टकयुक्ते ब्रह्मात्मके स्वस्वरूपे स्थितः उक्तविधब्रह्मशेषत्वेनाऽऽत्मानमनुभवन्नित्यर्थः पुनस्ततो न निवर्तते। एवं देवयानपथगो भूत्वा न निवर्तते जन्ममरणादिकं तद्धेतुभूतपुनरावृत्तिञ्च न प्राप्नोतीत्यर्थः।।५५।।

"नैते सृती पार्थ जानन्योगी मुह्यति कश्चन। तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन!" (भ.गी. 8-27) इति श्रीभगवदुक्तमार्गद्वयचिन्ताफलमाह - य एत इति। यः पुमान्मुमुक्षुः वेदनिर्मिते वेदबोधिते एते पितृदेवानामयने वर्त्मनि देवयानपितृयाने शास्त्रात्मकेन चक्षुषा वेद। सोऽपि पुमान्न मुह्यति। जनस्थोऽपीति पाठे देहस्थोऽपीत्यर्थः। स्वानुष्ठेयभगवद्भक्तियोगे मोहं न प्राप्नोतीत्यर्थः।।५६।।

1- -1 A omits

**विज॰** हुतं वैश्वदेवं प्रहुतं हुत्वा बलिहरणं एतद्द्वयमिष्टम्। सुरालयादि विपाकान्ताः पूर्तम्। आजीव्यास्सर्वसेव्याः कुट्टिममूला विस्तृतशाखास्तरवः।।४९।।

द्रव्यमूष्मविपाकः पुरोडाशादिद्रव्यजनितापूर्वं फलम्। धूम इत्यादिना धूमादिशब्दवाच्या देवताश्चात्र गृह्यन्ते इति ज्ञातव्यम्। अपक्षयः कृष्णपक्षः। सोमश्चन्द्रः। पर्वदर्शशब्देन तत्प्रयुक्तकर्मविशेषः। अत्र तु तदभिमानिदेवा उच्यन्ते। अनेन मार्गेण गतस्य गतिप्रकारमाह - ओषधीति। पितृयानं गतः अम्बुवृष्ट्यादिद्वारेण भुवं प्रातः ओषध्यादिर्भवति।।५०।।

अन्नरूपेण पितरं प्रविश्य रेतोरूपेण मातरञ्चेति। पुनः पुनर्भवतीति पुनर्भवः, स्यादिति शेषः। न केवल मोषध्यादिभावोऽस्य किन्तु धूमादिभावोऽप्यस्तीतिभावेनोक्तं विशदयति एकैकस्येति। अत्राऽनुपूर्व्याक्रमात् "अथ इमेग्राम इष्टा पूर्तेदत्तमित्युपासते ते धूममभिसम्भवन्ति" (छान्दो.उ. 5-10-3)इत्युपक्रम्य "यो यो ह्यन्नमत्ति यो यो रेतस्सिञ्चति तद्रूप एव भवत्यन्ते" (छान्दो.उ. 5-10-6) अनेनाऽयमर्थः प्रपञ्च्यते ।।५१।।

अत्र च "त इह रमणीयचरणाभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा" (छान्दो.उ. 5-10-7) इत्यादेरभिप्रायं दर्शयति - निषेकादीति। निषेको रेतस्सेकः अनेनाऽपि पुनर्भव इत्यस्य भावो विवृत इति ज्ञायते। देवयानापरपर्यायार्चिरादिमार्गाभिमानिदेवचक्रं वदिष्यन् तन्मार्गगतावित्थम्भूतसाधनमाह - इन्द्रियेष्विति। क्रियायज्ञान् क्रियात्मकयज्ञाभिमानिदेवान् ज्ञानं दीपयन्ति जनयन्तीति ज्ञानदीपानि, ज्ञानमेव दीपो येषां तानि तथा तेष्विन्द्रियेषु इन्द्रियाभिमानिदेवेषु जुह्वति, हवनं नाम तत्तद्वशत्वेन स्मरणम्, तदुक्तम् - "यज्ञाभिमानिनो देवान् स्मरन्तीन्द्रियमानिनम्। वशगांस्तान्मनोमानिसुरेन्द्रस्य वशेस्थितान्। वेदात्मिकायाः पार्वत्याः तं तां रुद्रवशे स्थिताम्। वर्णत्रयात्मकं रुद्रं शेषेतु प्रणवात्मके। बिन्दुरूपे सरस्वत्यां तं तां तस्यां पुनर्न्यसेत्। मूलस्थानादरूपायां ता वाचौ तं जनार्दने। प्रकृत्या मथवा प्राणं तामेव पुरुषोत्तमे" (ब्रह्मतर्के) इति।।५२।।

इन्द्रियाणि तदाभिमानिदेवान् मनसि मनोभिमानीन्द्रवशे, तानेवं पूर्ववत्स्मरन्तीति शेषः। विशिष्टाकारपराक्रमलक्षणं कर्माऽस्याऽस्तीति वैकारिकं मनोभिमानिनमिन्द्रं वाचि वेदाभिमानिन्यां पार्वत्यां, तामुमां वर्णसमाम्नाये पदवर्णस्वरक्रमाणां सम्यगाम्नायः सम्प्रदायोऽनन्यथापाठलक्षणो यस्मिन् स तथा अकारोकारमकाराणां त्रयाणां वर्णानां समाम्नायो मेलनं यस्मिन् ओङ्कारे स तथा। तस्मिन् तदभिमानिरुद्रे, स्थितामिति शेषः। तु शब्देन

भार्याभर्तृभावं पूर्वस्माद्विशिनष्टि। तं रुद्रम् ओङ्काराभिमानिनि स्वं परमात्मानं रमयतीति स्वरः शेषः तस्मिन् स्थितं न्यसेत् मनस्तद्विषयं करोति ।।५३।।

तमोङ्कारं शेषं बिन्दुनादे बिन्दुनादरूपसरस्वत्यां तदाधारत्वेन स्थितम्। तुशब्देन पूर्वयोरेकत्र त्वमत्रस्वस्वामिभावं सूचयति - तां बिन्दुरूपां मूलाधारस्थानादरूपायां प्रकृतिनाम्न्यां सरस्वत्यामेकीभूय। स्थितिशब्देन तयोरेकत्वं दर्शयति - तं तां नादरूपां प्राणे प्रकृष्टानन्दरूपे वायौ स्थिताम्। अत्रापि तुना भार्याभर्तृभावमाह– अमुं वायुं महति जनार्दने स्थितं स्मरेत्। अथवा प्राणनामानं वायुं महति प्रधाने प्रकृतिशब्दवाच्ये स्थितममुमक्षरं प्रकृतिनामानं महति पुरुषोत्तमे स्थितमिति, महतिशब्दो द्विरावृत्त्या व्याख्येयः। एतत्सर्वं बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् - इत्यादि पूर्वोक्तेन मानेन सविस्तरमुक्तम्। इदानीमर्चिरादिमार्गे देहादुत्क्रान्तस्य ज्ञानिनः प्राप्यान् देवानाह - **अग्निरिति**। दिवा दिवसगभिमानिनी, शुक्लः शुक्लपक्षाभिमानिनी, राकापूर्णमास्यभिमानिनी, उत्तरमुत्तरायणाभिमानिनी, स्वराडिन्द्रः।।५४।।

अत्र न केवलमग्न्यादय एव प्राप्याः, अपितु विश्वाद्या अनिरुद्धाद्या भगवतो मूर्तिविशेषाश्च प्राप्या इत्याशयेनाऽह विश्व इति। अथ शब्देन अनिरुद्धादिग्रहणं तेषामुभयेषां विष्णुरूपत्वं सूचयति - "विश्वाद्या अनिरुद्धाद्या स्ते द्विधा समुपकीर्तिताः। विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षगः" (ब्रह्मतर्के) इत्युक्तेः। किञ्चाऽन्ये च दिवस्पुत्रास्तन्निकटवर्तिनस्सन्ति तेऽप्यथशब्देन सूचिताः। "तदन्ये च दिवस्पुत्रास्सर्वेच द्युसमीपगाः। ते दिवं प्रापयन्त्येनं सवायुं सहरिं पृथक्। विश्वादिरूपं तुर्यश्च वासुदेवश्च नाऽपरः" (ब्रह्मतर्के) इत्युक्तेः गतिक्रमोऽप्यनेन ज्ञातव्यः। न परं विश्वादिकमेवाप्तव्यं, किन्तु तन्मूलरूपो हरिराप्तव्य इत्याह - **आत्मेति**। आत्मा विश्वादिरूपो हरिः सम्यगन्वीयते अनेन ज्ञानेनेति समन्वयः। तदुक्तं स हरिं पृथग्विश्वादिरूपमिति वासुदेवः तुर्यादन्यो नेत्याह--तुर्य इति। तुर्य आत्मा वासुदेवः। अत सातत्यगमने इति धातोः सततगमनं व्याप्तिः "यश्चाऽस्य सततो भावः" इतिश्रुतेः। सर्वत्र वसनशीलत्वात् क्रीडारूपत्वात् जपाकुसुमाद्युपाध्यनाविद्धस्फटिकवन्निर्मलज्ञानरूपत्वाद्वासुदेवः "शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम्" इति स्मृतिः। "ऐकात्म्यप्रत्ययं सारं प्रपञ्चोपशमं शिवम्। अद्वैततुर्यं मन्यन्ते स आत्मा स विज्ञेयः" इति स्मृतेः। "तुर्यश्च वासुदेवश्च नाऽपरः" (ब्रह्मतर्के) इति च। किञ्च मार्गस्थानां सर्वेषां देवानामपि परमात्मनि समन्वयोऽस्तीति ज्ञापनाय समन्वय इत्युक्तम्। एतस्य नाम निर्दिशति देवयानमिति। "संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणञ्चोत्तरञ्च" (प्रश्न. उ. 1-9) इत्यारभ्य 'एतस्मान्न पुनरावर्तन्ते इत्येष निरोधः' (प्रश्न.उ. 3-1-10) इत्यन्तं वेदान्ताः प्राहुरित्यन्वयः। अस्य फलमाह भूत्वेति। अनुपूर्वशः क्रमेणोपर्युपरि

सुखादिभिरधिकोभूत्वाऽऽत्मस्थो मुक्तो न निवर्तत इत्यन्वयः। कुतः। आत्मयाजी परमात्मपूजकत्वात् पुनरावृत्तीच्छाऽपि तस्य नाऽस्तीति भावेनाऽह - उपशान्तात्मेति। पूर्णानन्दस्वरूपः धूमादिमार्गवदस्याऽपि पुनरावृत्तिभीरस्ति किमित्यतो भूत्वेति।।५५।।

ननु किमेतज्ज्ञानेन प्रयोजनम्? येनाऽवश्यं वक्तव्यतामियात् इति तत्राऽह - य एते इति जनस्थो देहस्थः-"तद्य इत्थं विदुर्येऽन्रारण्ये श्रद्धा तप इत्युपासते ते धियमभिसम्भवन्ति" (छान्दो.उ. 5-10-1) इत्यादिना शास्त्रेण केवलं मोहं प्राप्नोति नीचां गतिमपि न यातीत्यतोऽपीत्युक्तम्। "भक्तिमान्मार्गविन्नैव नीचां गतिमवाप्नुयात्" (ब्रह्मतर्के) इति स्मृतेः ।।५६।।

**आदावन्ते जनानां[1] यो बहिरन्तः परावरम्।**
**ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिश्च [2-]यत्स्वयम्[-2]।।५७।।**

**[3]अबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः।**
**दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम्।।५८।।**

**क्षित्यादीनामिहार्थानां छाया[4] न कतमा[5]ऽपि हि।**
**न सङ्घातो विकारोऽपि न पृथक् नान्वितो[6] मृषा।।५९।।**

**धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना।**
**नस्युर्ह्य[7-]सत्यवयविन्यसन्नवयवो[-7]ऽन्ततः।।६०।।**

**स्यात्सादृश्यभ्रमस्ताव द्विकल्पे सति वस्तुनः।**
**जाग्रत्स्वप्नौ[8] यथा स्वप्ने तथा विधिनिषेधता।।६१।।**

**भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथाऽऽत्मनः।**
**वर्तयत्स्वानुभूत्येह त्रीन्स्वप्नान्धुनुते मुनिः।।६२।।**

---

1 A,B,G,J,T °नां सत्; M,Ma °नाशं 2--2 A,B,G,J,T °स्त्वयं स्वयम्; म Ma °श्च सत्स्वयम् 3. A,B,G,J,T,V आ° 4 H,V अद्वयः 5 H,V मोडं 6. M,Ma °तोऽपिवा 7. M,Ma °न्यासन्नावयवा इव 8. A,B,G,J,T °त्स्वापौ

**कार्यकारणवस्त्वैक्य[1] दर्शनं पटतन्तुवत्।**

**अवस्तुत्वा द्विकल्पस्य भावाद्वैतं तदुच्यते।।६३।।**

**यद्ब्रह्मणि परे साक्षात्सर्वकर्मसमर्पणम्।**

**मनोवाक्तनुभिः पार्थ! क्रियाद्वैतं तदुच्यते।।६४।।**

**श्रीध॰** तत्र हेतुमाह-**आदाविति**। जनानां देहादीनां[2] आदौ कारणत्वेन अन्तेचावधित्वेन यत्सत्तथा बहिर्भोग्यमन्तर्भोक्तृ [3]परमपरञ्चोञ्चनीचम्। तमोऽप्रकाशः, ज्योतिः प्रकाशः, तत्तु सर्वमयं ज्ञानी स्वमेव, न तस्माद्व्यतिरिक्तं वस्तु किञ्चिदस्ति, येनमुह्येदित्यर्थः।।५७।।

ननु र्नहिं कथं पृथगर्थस्तस्याऽपि प्रतीयते, तत्राऽह आबाधित इति। आबाधित स्तर्कविरोधेन सर्वतो बाधितोऽप्याभासः प्रतिबिम्बादिः। वस्तुतया यथा स्मृतस्तद्वदैन्द्रियकं सर्वमर्थत्वेन विकल्पितं नतु परमार्थतः, दुर्घटत्वात्।।५८।।

तदेवाऽह - **क्षित्यादीनामिति**। क्षित्यादीनां पञ्चभूतानां [4]अद्वयः ऐक्यबुद्ध्यालम्भनरूपं देहादिसङ्घाता-रम्भपरिणामानां मध्ये? क[5]तमोऽप्यन्य[6]तमोऽपि न भवति। न तावत्तेषां सङ्घातो वृक्षाणामिव वनम्। एकदेशाक[7]र्षणेन सर्वा[7]कर्षणानुपपत्तेः। नह्येकस्मिन्वृक्षे आकृष्टे सर्वं वनमाकृष्यते। [8-]अतो न सङ्घातः[-8]। न च विकार आर[9]ब्धावयवी। अपि शब्दान्न परिणामोऽपि। कुतः स किं [10-]आरब्धेभ्यः[-10] स्वावयवेभ्यो वा परिणतेभ्यो वा पृथक्, तदन्वितो वा? न तावदत्यन्तं पृथक्, तथाऽप्रतीतेः। नचाऽन्वितः। स किं प्रत्यवयवं सर्वोऽप्यन्वेति, अंशेन वा। आद्ये अङ्गुलिमात्रेऽपि देहबुद्धिः स्यात्। द्वितीये तस्याऽप्यंशाङ्गीकारे सति अनवस्था स्यात्। अतो मृषैवेत्यर्थः।।५९।।

एवं देहादेर्मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्यात्[11]मत्वमाह-**धातव** इति। [12]दधतीतिधातवो महाभूतानि। तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः, अवयवित्वात्तेषामपि। तर्ह्यवयवस्सत्य इति चेत्तत्राऽह-उक्तप्रकारेणावयविन्यसति अवयवोऽप्यन्ततोऽसन्नेव स्यात्। अवयवप्रतीत्यन्यथानुपपत्तिं विना तत्सद्भावे प्रमाणाभावादित्यर्थः। तदुक्तं पञ्चमस्कन्धे। "एवं निरुक्तं क्षिति शब्दवृत्तम्" (भाग. 5-12-9) इत्यादि।।६०।।

---

1.A,B,G,J,T °म °2. A,B,J °नामा° 3.A,B,J परावर° 4. A,B,J छाया 5. A,B,J °तमा° 6 A,B,J तमा° 7. A,B,J कर्षणे 8--8. A,B,J Omit 9 A,B,J °ब्धो° 10--10 A,B,J,Omit 11. A,B,J °थ्यात्व 12 A,B,J धारयन्तीति

[1]नन्वेवमवयविनोऽभावे आगमापायिषु बाल्यादिषु सोऽयं देवदत्त इति [2]प्रत्यभिज्ञा न स्यात्। तदुक्तं भट्टैः "आविर्भावतिरोभावधर्मकेष्वनपायि यत्"। तत्राऽह - **स्यादिति**। वस्तुनः परमात्मनो विकल्पे भेदेऽसति। यद्वा-वस्तुनोऽविद्याया विकल्पे सति [3]पूर्वरूपारोप-सादृश्यात्सा एवेति भ्रमः स्यात्। स च तावदेव यावदविद्यानिवृत्तिः। [4]ननु सर्वमिथ्यात्वे शास्त्रस्य विधिनिषेधकता कथम्? तत्राऽह - स्वप्नमध्ये जाग्रत्स्वापव्यवस्था **यथेति** ।।६१।।

इदानीमुक्तमेवाद्वैतं भावनात्रयोपदेशेन दृढीकरोति**भावाद्वै**तमिति चतुर्भिः। वर्तयन्नालोचयन्। स्वानुभूत्या आत्मतत्त्वानुभवेन। त्रीन् [5]स्वप्नात् जाग्रदादीन्। "त्रय आवसथा स्त्रयः स्वप्नाः" इति श्रुतेः यद्वा [6]वस्तुनि भेदबुद्धिरेकः स्वप्नः। [7]ततः तत्तदधिकारभेदेन कर्मभेदबुद्धि र्द्वितीयः। ततः [8]सत्कर्मसाधितमेतत्फलं ममैव भोग्यमिति तृतीयः। तान्धुनुते निवर्तयति।।६२।।

[9-]भावाद्वैतमाह-**कार्येति**। उत्पत्तेरनन्तरं पटस्य तन्तूनामैक्यमिव विकल्पस्य अवस्तुत्वात् मिथ्यात्वात्[-9] कार्यकारणयोर्वस्त्वैक्यस्य [10]दर्शनमालोचनं [11-]भावाद्वैतमुच्यते[-11]।।६३।।

[12-]क्रियाद्वैतमाह[-12] - **यदिति**। मनोवाक्तनुभिः कृतानां [13]सर्वेषां कर्मणां [14-]यत्परे ब्रह्मणि समर्पणं तैः समर्पणमिति[-14] वा। उद्देश्यफलभेदो हि क्रियाभेदे [15]हेतुः। ईश्वरार्पणे च [16-]क्रियाणां तदभावात् ब्रह्मगतज्ञानं क्रियाशक्तय एव कर्माणि कारयन्तीति आलोचनं क्रियाद्वैत-मुच्यते[-16]।।६४।।

**वीर०** अथ प्राप्यतया प्रकृतस्य भगवतः सर्वात्मकत्वमाह - **आदाविति**। आदौ सृष्ट्यादौ अन्ते प्रलये च मध्यस्थानां जनानामन्तर्बहिश्च सन् वर्तमानः। किञ्च यत् [17]परावर उत्कृष्टापकृष्टं वा। तत्रोत्कृष्टमाह-ज्ञानं ज्ञानात्मकं जीवस्वरूपं ज्ञेय-मचिद्वस्तु, परं वचोनाम वाच्यं रूपं नाम रूपात्मकं चिदचिदात्मकं सर्वं वस्तु इत्यर्थः। तमो मूल प्रकृतिः, ज्योतिः समष्टिजीवश्चेति एतत्सर्वं साक्षादयमेव परमात्मैव परमात्मात्मकमेवेत्यर्थः।।५७।।

---

1. A,B,J,Omit एवं 2. A,B,J ज्ञानं 3. A,B,J पूर्वा 4. H.V Omit ननु 5. A,B,J Omit स्वप्नात् 6. A,B,J °स्तुभे° 7 A,B,J °तस्त° 8. A,B,J मत्क 9--9. A,B,J Omit 10.A,B,J मर्शन° 11--11 A,B,J तन्तुरेव न पट इति। 12--12 A,B,J Omit 13. A,B,J Omit सर्वेषां 14--14 A,B,J Omit 15 H.V दहे 16--16 A,B,J, तदभावात् क्रियाणामद्वैतम्। 17. W °परं

एवं सर्वात्मकत्वमभिधाय तस्यैव प्राप्यस्य ब्रह्मणो निरतिशयपुरुषार्थत्वज्ञापनाय प्राकृतदेहस्य तदनुभाव्यशब्दादिविषयाणाञ्च अपुरुषार्थत्वमाह - **अबाधित** इति। आभासो दृश्यो देहः स अबाधितोऽविनष्टोऽपि, अनुवर्तमानेऽपि अवस्तुतया अपुरुषार्थतया स्मृतः। एवं शब्दाद्यर्थरूपेण विकल्पितमैन्द्रियकवस्तुजातमप्यवस्तु अपुरुषार्थम्। यद्वा - अहङ्कारगोचरं शरीरं यथाऽनित्यहेयं, तथा ममकारगोचरः शब्दादिरप्यपुरुषार्थः, न स्थिरः, तस्य अनित्यपुरुषार्थतया दुर्घटत्वादित्यर्थः। यद्वा - आभासः स्वप्नदेहः स तदानीमनिवृत्तोऽपि प्रबोधवेलाया मवस्तुतया अनात्मतया स्मृतः जात्यादिविकल्पितजाग्रच्छरीरमपि तद्वदनात्मा आत्मधर्माणां नित्यत्वादीनां तत्र दुर्घटत्वादित्यर्थः।।५८।।

शरीरस्य सर्वत्र सर्वकाले सर्वस्मिन्नपि आत्मना विना स्थित्यभावात् शरीरमप्यात्मा स्यादिति। शङ्कानिरासार्थमाह-क्षित्यादीनामिति। क्षित्यादीनां पृथिव्यादिपरिणामरूपाणां वृक्षाणां छाया सङ्घातादिष्वर्थेषु न कतमोऽपि सङ्घातविकारपृथग्भूततया यावद्द्रव्यभाविषु न कश्चिदपीत्यर्थः। तदेव विवृणोति - न सङ्घात इति। वृक्षसङ्घातो न छाया, नाऽपि वृक्षविकारः, नाऽपि वृक्षात्पृथक्, वृक्षं हित्वा स्थातुं न योग्यः नाऽन्वितः नाऽविनाभूतः यावद्वृक्षसत्ताकं नाऽन्वितोऽपि, अर्थाभिप्रायः पुंलिङ्गनिर्देशः। मृषा अनित्या एवं शरीरमप्यात्मना विना स्थित्यभावात् प्रतिच्छायासदृशं, न चाऽत्मसङ्घातः शरीरं न चाऽत्म विकारः नचाऽत्मानं हित्वा तिष्ठति, न यावदात्मभावी अनित्यत्वात्; अतो नाऽत्मा शरीरमित्यर्थः।।५९।।

शरीरस्याऽनित्यत्वादात्मप्रतिपत्त्यर्थं तत्तुल्यन्यायेषु पृथिव्यादिष्वनित्यत्वमुपपादयति - **धातव** इति। पृथिव्यादयो धातवः अवयवित्वात् सङ्घातरूपत्वात् तन्मात्रावयवैर्विना न स्युः, अवयविनाशे सङ्घातो नश्यतीत्यर्थः। सङ्घातरूपत्वमेव प्रतिपादयति - असतीति। यतोऽवयवसङ्घातरूपोऽवयवी। अत एवावयविन्यसति विनष्टे अन्ततोऽवयवोऽसन्नेव। अवयविन्यनुपलभ्यमानेऽवयवा एव धातवो नह्युपालभ्यन्ते। एवमवयवित्वादनित्यं शरीरं, नित्यमात्मा न भवतीत्यर्थः।।६०।।

तर्हि स्थूलोऽहमिति प्रतीतिः कथम्? इत्यपेक्षायां भ्रान्तिरित्याह - स्यात्सादृश्यमिति। तत्र संसर्गनिमित्ता भ्रान्तिरिति प्रतिपत्त्यर्थं सादृश्यनिमित्तत्वं प्रतिक्षिपति - **स्यादिति**। द्वयोरप्यर्थयोर्ज्ञानादिगुणविकल्पे सति कस्यचिद्वस्तुनः केनचित्सादृश्यं भ्रममभेदनिमित्तं स्यात्। देहात्मनोस्तु समानजातिगुणाद्यभावात् सादृश्य

मनुपपन्नम्। उष्णं जलमितिवत्[1] संसर्गभ्रम इत्यर्थसिद्धम्। एवमात्मविषयक ज्ञानाभावेऽपि जानामि न जानामीति विभागप्रतिपत्तौ दृष्टान्तमाह - जाग्रत्स्वप्नाविति। कश्चित्सुप्तिवेलायामेव सुप्तं प्रबुद्धश्चाऽत्मानं पश्यति। यदा प्रबुध्यते तदा स्वप्नदृष्टप्रबोधो न वास्तव इति बुध्यते। एव मनात्मविदां संसारिणां कदाचित् अहज्ञानामीति ज्ञानं निषेधश्च आत्मयाथात्म्यज्ञानाननुवृत्तावेव भवत इति विधिनिषेधता विधिनिषेधौ स्वप्नदृष्टस्वप्नप्रबोधतुल्यावित्यर्थः। संसारिणामात्मज्ञानाभावात् बाह्यार्थविषयज्ञानमपि अज्ञानतुल्यमित्युक्तं भवति। यथा-"तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्" इति। शास्त्रविरुद्धार्थविषयज्ञानभ्रान्तिरियं ज्ञानिनां नाऽस्तीत्याह - भावाद्वैतमिति। यद्वा एवं देहविलक्षणात्मज्ञानिनामपि यावत् स्थूलोऽहं ब्राह्मणोऽहमिति देहात्मभ्रमानुवृत्तिराप्रयाणं तावद्विधिनिषेधात्मकशास्त्रावश्यकतेत्याह जाग्रत्स्वप्नाविति। यथा स्वप्ने जाग्रत्स्वप्नौ जाग्रत्स्वप्नावस्थे स्वप्नपर्यन्तावेव। प्रबुद्धस्य तु तावुभौ निवर्तेते, [2-]तद्वदित्यर्थः[-2]।।६१।।

एवं यावद्देहात्मभ्रमानुवृत्तिस्तावद्विधिनिषेधता स्थूलोऽहं ब्राह्मणोऽहमिति प्रतीतेर्देहात्मनोरभेदे भ्रममूलकत्वेन प्रतिषिद्धे किमेव मेव सर्वमद्वैतं भ्रमविषयम्। उत किञ्चित्प्रमितिविषयं [3]अपि अस्तीत्याशङ्कायां यच्छास्त्रानुमतमद्वैतं तत्प्रमाविषयं तन्मुमुक्षो रनुसन्धेयमेवेति वक्तुं तदनुमतं त्रिविधमद्वैतं दर्शयन् तदनुसन्धानस्य भ्रममूलकद्वैतत्रयनिरासकत्वमाह - भावाद्वैतमिति। यथा देहात्मनोर्भेदः शास्त्रानुमतोऽनुसन्धेयः तथा भावाद्वैतादिरूपं त्रिविधमद्वैतमात्मनः स्वस्य वर्तयन्। यद्वा - आत्मनो मनसो वर्तयन् मनसि प्रतिष्ठितं कुर्वन्नध्यवस्यन्निति यावत्। इह मुनिः परपरमात्मोपासकः स्वानुभूत्या देहविलक्षणब्रह्मात्मकस्वात्मयाथात्म्यानुभवेन त्रीन् स्वप्नान् भावाद्वैत, कर्माद्वैत, द्रव्याद्वैतनामानि भ्रमात्मकानि धुनुते निरस्यति।।६२।।

भावाद्वैतादिस्वरूपं विवृण्वन् त्रिविधभ्रान्तिनिरासं श्लोकत्रयेण विवृणोति - कार्येति। तत्रोपादानस्य कार्यस्य चानन्यत्वपरो भावाद्वैतविषयः श्लोकः यत्कार्यकारणयोर्वस्तुनोरैक्यदर्शनं तद्भावाद्वैतं कार्यकारणयोरैक्ये पटतन्तुवदिति दृष्टान्तः। यथा तन्तूनामेव व्यतिषङ्गविशेषभाजां नामरूपात्मकावस्थान्तरापत्त्या पटावस्थत्वमिति पटस्य तेभ्योऽनन्यत्वं तद्वत्कृत्स्नं जगच्चिदचिदीश्वरात्मकं सूक्ष्मचिदचिद्विशिष्टात् ब्रह्मणोऽनन्यत् इत्येतद्भावाद्वैतं; भावयोः कार्यकारणवस्तुनोरद्वैतं भावाद्वैतम्। अवस्तुत्वा द्विकल्पस्येत्यनेन भावाद्वैतं निरस्यति। विकल्पस्य उपादानातिरिक्तद्रव्यकल्पनरू[4]पज्ञानस्याऽवस्तुत्वाद्वस्तुशून्यत्वान्नभावयोर्द्वैतं, किन्तु अद्वैतमेवेत्यर्थः। एव मसत्कार्यवादभ्रमो निरस्तः।।६३।।

---

1. A,B,T Omit °वत् 2- -2 W Omits 3. A,B,T Omit अपि 4. A,B,T °पा°

क्रियाद्वैतं विवृणोति - **यदिति**। हे पार्थ ! साक्षात्परे ब्रह्मणि यत्करणत्रयेण सर्वकर्मणां समर्पणं तत्क्रियाणामद्वैतम्। भगवदाराधनत्वेन सर्वकर्मणामेकफलावच्छेदः[1] क्रियाद्वैतम्। अनेन कर्मणामीश्वरप्रीतिमनपेक्ष्य स्वातन्त्र्येण फलवत्तभ्रमो निरस्तः।।६४।।

**विज॰** जाग्रदाद्यवस्थाप्रवर्तकविश्वादीन् कल्पितानतिक्रम्य प्रपञ्चोपशमं तुर्यात्मा भूत्वा निर्द्वन्द्व आस्ते इति केचिद्व्याचक्षते, तन्मतदूषणायाऽऽह - आदाविति। आदावुत्पत्तिकाले मुक्तिकाले च यज्जनानाशं जननं विनाशश्च 'जनी प्रादुर्भावे' इत्यस्मात् टापि कृते जनेति रूपं सिध्यति। वध्यघातकभावो मार्जारमूषकवत्। यच्च बहिरन्तर्विद्यमानं परावरमुत्तमाधमं, भूतं भविष्यद्वा यच्च ज्ञानादिकं सर्वस्य ग्लापकत्वात् ग्लानिजनकत्वात्, तमः प्रकृतिर्ज्योतिः तदवभासकः स्वप्रकाशश्च यः तदेतत्सर्वं स्वयं तुर्यात्मा श्रीहरितत्सत्ताया अपि तदधीनत्वात्स इत्युच्यते, न तु तदात्मकत्वात् "पुरुष एवेदं सर्वम्" (पु.सू. 1-1) इति श्रुतेः। आदौ यथा तदधीनत्वं तथाऽन्तेऽपि श्रीनारायणाधीनत्वमित्यतोवाऽऽह - आदाविति। उक्तार्थः श्लोकः निरूपचरितापराधीनत्वं हरेरेव न मुक्तस्याऽपीत्यतो वाऽऽह - **आदाविति**। आदावन्ते उत्पत्तेः प्रागूर्ध्वं अयं परमात्मा वर्तत इति शेषः। कथङ्कारमत्राऽऽह - जनेति। जनकत्वेन नाशकत्वेनेत्यादिरूपेण सर्वकर्तृत्वस्वातन्त्र्येण तच्छब्दवाच्यत्वं हरेरप्युक्तं तमश्शब्दस्य ग्लापकत्वादिति। णिच् प्रत्ययान्तत्वेन विवरणादयमर्थो ज्ञायत इति।।५७।।

ननु सत्तायाः तदधीनत्वं प्रामाणिकञ्चेत् ब्रह्मत्वेनोक्तिर्घटेत, ततः काऽत्रयुक्तिरित्याशङ्क्योपपादयति अबाधित इति। प्राकृतवैकृतलक्षणकार्येषु विशिष्टकान्तिमत्तयाऽऽभासते विद्योतत इत्याभासो देहः प्रतिबिम्बलक्षणो यथा वस्तुतया "वसनाद्वासयेद्वस्तु नित्याऽप्रतिहतत्वतः" इति स्मृतेर्वस्तु परमात्मा तत्त्वेन स्मृतः। "इदं हि विश्वं भगवानिवेतरः" "इन्द्रो मायाभिः" (बृह.उ. 4-5-19) इत्यादिना। ननु देहस्य सत्त्वे तत्सत्ताया भगवदधीनत्वेन तद्वक्तुं युक्तं तस्य दग्धपटाभासवदर्थक्रियानर्हत्वात् इति तत्राऽऽह - **अबाधित** इति। शुक्तिकायां प्रतिभासितं रजतं वलयकरणाद्यर्थक्रियानर्हत्वेन नेदं रजतमिति बाधितं स्याद्यथा न तथाऽयं बाधतः, हानोपानाद्यर्थक्रियायोग्यत्वात्। अपिशब्दोऽत्र स्वातन्त्र्यशङ्कां सूचयति। हिशब्देन प्रत्यक्षासिद्धत्वेन दग्धपटाभासवैलक्षण्यं दर्शयति, तद्वत्तथैन्द्रियकमिन्द्रियविषयं घटपटादिकम्। अर्थशब्दो भावप्रधानः अर्थत्वे नार्थक्रियाख्यं प्रयोजनतया कल्पितं समर्थितं, परमात्मनेति शेषः। "कर्तृकर्मक्रियादीनां सत्तावृत्तिस्तथैव च विष्ण्वधीनं यतः" इति वचनात्,

1. A,B,T °फ्लाच्छे

अर्थक्रियासामर्थ्यस्य भगवदधीनत्वेन "सर्वं खल्विदं ब्रह्म" (छान्दो.उ. 3-14-1) इति सर्वस्य तत्त्वं युक्तमिति भावः। एवमनङ्गीकारे बाधकमाह - दुर्घटत्वादिति ईश्वरादन्येन कर्तुमशक्यत्वात्।।५८।।

दुर्घटत्वमेव दर्शयति - **क्षित्यादीनामिति** क्षित्यादीनामर्थानां पदार्थानां कतमाऽपिछाया कतमोऽपि प्रकारः विचार्यमाणे सति, न घटत इति शेषः। "छायारीतिः प्रकाशश्च भावश्चेत्यभिधीयते" (शब्दनिर्णये) इत्याभिधानम्। इह कार्यप्रपञ्चे। हिशब्दो हेत्वर्थः। निर्धारणार्थवाचिना तमप् प्रत्ययेन कस्याऽपि प्रकारस्याऽसम्भवोक्तेः परमेश्वर-कल्पितत्वेनैतत्कार्यं सत् इति वक्तुं युक्तम् प्रकारभावमुपपादयति - न सङ्घात इति। परमेश्वर-कल्पनामन्तरेण कार्यं भवतीति वदन् प्रष्टव्यो भवति क्षितिलक्षणं कार्यं केवलमपां पुञ्जः तद्विकारो वा तद्व्यतिरेकेणोत्पन्नं वा वृक्षद्वयसंयोगवदुभयोः संयोगमात्रं वा? न प्रथम इत्याह नेति। अयं सङ्घातो नाऽसम्भवात् क्षितेः कठिनावयवारब्धत्वात्, केवलमपीन्द्रियवत्त्वेन तत्कार्ये पर्वतादीनां मज्जनापत्त्या क्षितेः स्वरूपलयप्राप्तेःआधाराभावेन सर्वप्राणिप्राणनाश-प्रसङ्गात्। न द्वितीय इत्याह - विकार इति। अत्र नञः अध्याहारः कर्तव्यः। अपां विकारोऽपि नोपपद्यते कालुष्यादिलक्षणविकारमात्रेण क्षितित्वानुपपत्तेः। न तृतीय इत्याह - न पृथगिति अद्भयः क्षितेः पृथक्स्थित्य दर्शनात्। नाऽपि चतुर्थ इत्याह - नाऽन्वित इति। सहावस्थान-मात्रेणकार्योत्पत्त्यदर्शनात्। क्षित्यादीनामर्थानां पदार्थानां मध्ये कतमाऽपि छाया, कतमोऽपि भावः पदार्थः कार्यजननशक्तिमान् न घटते विचारासहत्वात्। तथाहि– "अद्भ्यः पृथिवी" (तैत्ति.आ. 1-2) इति श्रूयते। तत्र प्रस्तुताशक्तिमन्तरेण केवलानामपांपृथिवीजनकत्वं कथमिति वा। शेषं पूर्ववत्।।५९।।

ननु विश्लिष्टानां पदार्थानामन्योन्यं महत्कार्योत्पत्तावसामर्थ्यमस्तु, संश्लिष्टानां नेयमनुपपत्तिरित्याशङ्क्य श्रीनारायण-कटाक्षबीजमन्तरेणावयवाऽवयविनोरप्यनुपपत्तिः स्यदेवेत्याह - धातव इति धातवः क्षित्यादि-प्रपञ्च भूतादिपदार्थाः। तन्मात्रावयवैर्विना गन्धादिव्यतिरेकेण सुरभि-गन्धवती पृथिवी, शक्लभास्वरं सलिलमित्यादि व्यावर्तकधर्माभावे स्वरूपाभावप्राप्तिरेव स्यादित्यर्थः। अवयवित्वादिति न ह्यवयविनोऽवयवाभावे अवयविव्यवहारो युक्तः। तस्मात् च शब्द एवार्थे, समुच्चयार्थे वा। प्रत्यक्षसिद्धत्वादवयवित्वाच्चेति। अयं निर्णयः कुत्र दृष्टः इति तत्राऽह - असतीति इव यथा आसमन्तात् सन्नावयवाः सर्वात्मना तन्तुलक्षणाः। अवयवा नष्टा यदि तर्ह्यसदवयविनि तन्तुरहिते पटे पटव्यवहारोऽपि नष्ट इति शेषः। तन्तुव्यतिरेकेण पटाभावात्। यथा अवयवाभावे अवयवी नाऽस्ति, तथा अवयविनि निवृत्ते अवयवा अपि निवृत्ताः स्युरित्यतोवाऽऽह - आसन्नावयवा अपि नष्टाः स्युरित्यर्थः।

यथा आसन्नावयवा आतानवितानावयवत्वसंसर्गं प्राप्ताः तन्तुलक्षणा अवयवाः प्रागसत्यवयविनि पटे पटव्यवहारं न जनयन्ति। तथा गन्धाद्यवयवाः प्रागसत्सु क्षित्यादिषु पश्चात् क्षित्यादिव्यवहारं न जनयन्तीत्यतस्तदभावे तदभावः स्पष्टः इत्यन्वयव्यतिरेकौ दर्शिताविति ज्ञातव्यमिति। एवं दुर्घटत्वेनाऽविद्याकल्पित प्रपञ्चस्याऽविद्याबाधानन्तर मनुवृत्तस्याऽपि न वस्तुतत्त्वमिति कल्पनमनुपपन्नं "विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्तिव्रतम् वा" "यद्धि युक्त्या विरुध्येत तदीशकृतमेव हि" इति श्रुतिस्मृति प्रसिद्धां युक्ति हि शब्देन दर्शयति– "असत्यस्याऽवयविन्यासन्नावयवा न च" इति केचित्पठन्ति। अयमर्थः-गन्धावयवव्यतिरेकेण पृथिव्याद्यवयविनो न स्युश्चेत्, किं नश्चिन्नमिति तत्राऽह - असतीति क्षित्यामवयविन्यसति गन्धाद्यवयवा एव नाऽसन्नित्यन्वयः। अवयवाभावेऽवयव्यभावेन कारणाभावापत्त्या सर्वासत्त्व प्रसङ्गलक्षणोच्छेद इति भावः।।६०।।

नन्ववयवाऽवयविनोः सादृश्यमात्रेण तस्याऽयमवयव इति व्यवहारः, तस्मात्तद्यतिरेकेण सोऽपिनास्तीति कथमापद्यत इति तत्राऽह - **स्यादिति**। सत्यम्, सादृश्यभ्रमः स्यात् तावत् कस्मिन् सतीति तत्राऽह - विकल्प इति। वस्तुनो विकल्पे भेदे सतीत्यन्वयः। यथा पट्टणादिषु रूप्यमवलोक्य तत्संस्कारवतः सहस्रकिरण सम्पर्केण च काशमानं क्काऽपि शुक्तिकाशकलं सन्दृश्य द्वयोः सादृश्यमात्रादिदं रजतमिति भ्रमो दृश्यते। तथा क्षित्यादेर्गन्धादेर्भेदे वस्तुसादृश्यमात्रेण व्यवहारः स्यात्। न चाऽत्र भेदो दृश्यते, स्वरूपहानेः। अतोऽवयवाभावेऽवयव्यभाव आपद्यते स्वरूपत्वादिति भावः। पटस्य प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाऽभेदादुक्तं युक्तमिति। नन्ववयविपदार्थसद्भावे इयं चिन्ता स एव नाऽस्ति, परमाणव एव पुञ्जीभूयकार्यं जनयन्तीत्यङ्गीकार्यत्वात्प्रतिक्षपां विनाशाच्च अभेदग्राहि प्रत्यभिज्ञायाश्च संस्कार जनित सादृश्यमात्र विषयतया भ्रान्तित्वादित्यतो वाऽऽह– स्यादिति। वस्तुनो भेदे सति तदुक्तं सत्यं स्यात्, तदेव नास्ति। एकत्वस्य साक्षिप्रत्यक्षेणाऽनुभूयमानत्वात्, साक्षिणोभ्रान्तित्वे सर्वस्य विनाशसाधकस्याऽपि व्याप्ति ग्राहकप्रमाण प्रामाण्यस्य साम्यात् परमाणुपुञ्जपक्षेऽपि निगदितदोषानिस्तारात् परमाणुभिर्विना पुञ्जाभावेन स्वरूपं न स्यात्। अतो दुर्घटघटकेन केनचिद्भवितव्यम्। स चादृष्ट कर्मणोश्चेतनाश्रयत्वेन पृथक् सामर्थ्याभावात् चेतन एव भवेत्। चेतनसामान्यस्याहिताकरणादिना पारतन्त्र्यप्रतीतेर्निरवयवत्वेन प्रवृत्त्यनुपपत्तेश्च। तत्प्रवर्तकत्वेनाऽघटितघटकत्वेन माहात्म्याकरपरमचेतनपरिकल्पनैव शरीरपदार्थोपादानभूतपृथिव्यादियोगो दृश्यत इति सिद्धम्। "कार्यकारणवस्तूनां विशेषो न निरूपितः तथापीशेच्छयैवाऽसौ दृश्यते नियतोऽपि च" (शब्दनिर्णये) इति स्मृतेः। एतादृशो विशेषः कुत्र दृष्ट इति तत्राऽह

जाग्रदिति। यथा स्वप्रेजाग्रदिदमयं स्वप्न इति। विशेष ईश्वरेच्छया दृश्यते -"य एव स्वप्रान्दर्शयति" इति श्रुतेः। "न तत्र रथानरथयोगो न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजतः" (बृह.उ. 4-3-10) इत्यादेः। स्वप्ने प्रतीयमानं सर्वमीश्वरेच्छाकर्तृकमिति ज्ञायते। तथा विधिनिषेधविशेषोऽपीश्वरकल्पनयैव प्रवर्तत इत्याह - तथेति। "अग्निष्टोमेन स्वर्गकामो यजेत" इत्यादि महाविधित्वं, "अरुणया पिङ्गाक्ष्यैकहायिन्या गवा सोमं क्रीणाति" इत्याद्यवान्तर विधित्वम्। तथा "ब्राह्मणो न हन्तयः" इत्यादि महानिषेधत्वं, "न मृषावदेत्" इत्याद्यवान्तरनिषेधत्वञ्चेश्वरेच्छाक्लृप्तमित्यन्वयः। "स इदं सर्वमसृजत" इत्यादेः सङ्कोचे कारणाभावान्मुख्यार्थ एवाऽङ्गीकर्तव्यः। अत्र तत्तद्विशेषस्य परमेश्वरक्लृप्तत्वनिश्चयाय मिथ्याभूत जाग्रत्त्वग्रहणं, न तु तद्वत्स्वप्नस्याऽपि मित्यात्वनिश्चयाय, तस्यार्थक्रियाकारित्वेन सत्यत्वनिश्चयात्। अनेन सर्वस्य मिथ्यात्वे रज्जुसर्पस्य मिथ्यात्वं रज्जुखण्डं सत्यमितीयं व्यवस्था कुत इत्याशङ्क्य मिथ्याभूतस्वप्नेऽपि जाग्रत्स्वप्नव्यवहारवत् व्यवहारमात्रमत्रचेत्यादि-श्रुत्योच्यते इति।।६१।।

एवं सर्वस्मादात्मन उपकारकत्वेन प्रेष्ठत्वाद्येन विना तत्प्रसादो न भवेद्यस्मिन् सति सञ्जाघटीतिभगवति तत्समर्पणसमये तं भावनाप्रकारं दर्शयति भावेति। मुनिः शास्त्रतत्त्वज्ञानी आत्मनः भावाद्वैतं, क्रियाद्वैतं तथा द्रव्याद्वैतञ्चैव वर्तयन् स्मरणं कुर्वन् स्वानुभूत्याविर्भूतस्वरूपज्ञानेन इह जगति सतस्त्रीन् स्वप्नान् जाग्रदाद्यवस्थानु-भवनिमित्ताज्ञानशब्दवाच्यानर्थान् धुनुते निरस्यतीत्यन्वयः।।६२।।

किन्तद्भावाद्वैतादिकं येन तदवश्यमनुध्येयमिति तदाह - कार्यकारणेति। महदादिकार्येषु प्रकृतितद्गुणा-ख्यकारणेषु च स्थितस्य वस्तुनो नित्याप्रतिहतस्य हरेरेकत्वदर्शनम्, तत्कथमिव? पटतन्तुवत्। पटस्य तन्तूनाञ्च अभेदलक्षणैकत्वं यथा प्रामाणिकं तथेत्यर्थः। "प्रकृतिं पुरुषञ्चैव प्रविश्य पुरुषोत्तमः" इत्यादेः मृद्घट इति सामानाधिकरण्येन कार्यकारणयोरभेदोक्त्या श्रीहरिसम्बन्धप्रतीतेः प्रकृतासङ्गतं स्यान्निदर्शनञ्चैकत्वप्रदर्शनपरमित्युक्त एवार्थः। प्रतीतार्थं परित्यज्य अप्रतीतार्थकथने किं कारणमत्राऽह - **अवस्तुत्वादिति**। घटादिप्रपञ्चस्याऽनित्यत्वेन प्रतिहतत्वात् स्वत एव कार्योत्पादनसामर्थ्याभावात् अवस्तुत्वात् असामर्थ्यत्वात् विशिष्टत्वान्मिलितत्वात् कार्यजननशक्त्यभावाद्वा। इदञ्च भगवन्माहात्म्यप्रकटनं गुणं युगपदाविशन् इति स्वोक्तेः कार्यकारणानुविष्टानां भगवद्रूपाणामत्यैक्यं एकत्वम् "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" (तैत्ति.उ. 2-6) "समधिगतोऽस्मि विधूतभेदमोहः" इत्यादिश्रुतिस्मृतिभिरुच्यते इति ज्ञानपूर्वकमुपासनं कार्यमिति शेषः।।६३।।

"न ऋतेत्वत्क्रियते किञ्चनारे महामर्कं मघवं चित्रमर्च" इति क्रियाद्वैतम्।।६४।।

आत्मजायासुतादीनामन्येषामपि[1] देहिनाम्।
यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते।।६५।।

यद्यस्य[2] चानिषिद्धं स्याद्येन यत्र यतो नृप।
स ते नेहेत कर्माणि नरो नाऽन्यैरनापदि।।६६।।

एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः।
गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्[3]नरः।।६७।।

यथा हि यूयं नृपदेव! दुस्त्यजादापद्गणादुत्तरता[4]ऽऽत्मनः प्रभोः[5]।
यत्पादपङ्केरुहसेवया भवा[6]नहार्षीन्निर्जितदिग्गजः[7] क्रतून्[8]।।६८।।

अहं पुराऽभवं कश्चिद्गन्धर्व उपबर्हणः।
नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः।।६९।।

रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः।
स्त्रीणां प्रियतमो नित्यं मत्तस्तु[9] पुरुलम्पटः।।७०।।

एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः।
उपहूता विश्वसृग्भिर्हरिगाथोपगायने।।७१।।

[10-]अहञ्च गायंस्तद्विद्वान्[-10] स्त्रीभिः परिवृतो गतः।
ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा।।
याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः।।७२।।

**श्रीध॰** [11-]द्रव्याद्वैतमाह[-11] - **आत्मेति**। आत्मनः स्वस्य जायादीनाञ्च। स्वस्य अर्थश्च कामश्च तयोर्देहादीनां पञ्चभूतात्मकत्वेन भोक्तुश्च परमात्मत्वेनाभेदालोचनेनाऽनर्थकामयोर्यदैक्यदर्शनं[12-], द्रव्याद्वैतमित्यर्थः[-12]।।६५।।

---

1. A,B,G,J,M,Ma T ॰षां सर्व॰ 2. A,B,G,J,M,Ma T वा॰ 3. H,V ॰मान्नरः 4. M,Ma ॰रितानन्नु 5. A,M,Ma,T प्रभो! 6. H,V ॰नहारिषीन्नि॰ W ॰न्महर्षिभिर्नि॰ 7. W दिग्जनः 8. M,Ma ॰तुः 9. H,V ॰स्सन्पुरु; M,Ma ॰स्तत्पुर ; W ॰श्च पुरु 10- -10 H,V,W अगायं तद्विदित्वाहं; M,Ma अगायं स्तद्विदित्वाऽहं। 11- -11 A,B,J Omit 12- -12 A,B,J Omit

उक्तानाश्रमधर्मान्संक्षिप्याऽह - **यदिति**। यद्द्रव्यम्। येनोपायेन, यतस्सकाशात्।।६६।।

प्रस्तुतमुपसंहरति - **एतैरिति**। अस्य श्रीकृष्णस्य गतिम्। तद्भक्तिमान्[1] तस्य भक्तः।।६७।।

[2]एतच्च सर्वसाधारणमुक्तम्। भक्तस्य तु भक्तिरेव सर्वपुरुषार्थहेतुरिति पाण्डवानेव लक्ष्यीकृत्याऽह - **यथा हीति**। हे नृपदेव! नृपैर्देवैश्च सहायैर्दुस्त्यजादिति वा। आत्मनः श्रीकृष्णादेव प्रभोः [3]उत्तरत उदतरत - अत्र आर्षत्वादात्मनेपदत्वम्,[-3] [4]अडभावश्च[-4]। उत्कर्षेण अतरदि[5]त्यर्थः। यथा[6]ऽभवत्। तमेव [7]भजेदिति शेषः। यद्वा यथा आपद्गणादुत्तीर्णो[8] भवान्, यथा च क्रतूनहार्षीत्। ([9]अत्र रेफषकारयोर्विश्लेष आर्षः।[-9]) तथा श्रीकृष्णादेव तारकात् संसारादप्युत्तरतेत्यर्थः।।६८।।

श्रीकृष्णसेवा महतामवज्ञया भ्रश्यति, तत्कृपया च सिध्यति इति दर्शयन् [10]स्वपूर्ववृत्तान्तमाह - **अहमिति** सार्धैः पञ्चभिः। नाम्ना उपबर्हणः।।६९।

**रूपेति**। पेशलं सौकुमार्यम्, रूपादिभिः प्रियं दर्शनं यस्य।।७०,७१।।

**अहमिति**। तदाह्वानं विद्वान् उन्मत्तस्सन् गायन्नेव गतः।।७२।।

**वीर॰** द्रव्याद्वैतं विवृणोति - **आत्मेति**। अर्थशब्दो धनपरः। कामशब्दः काम्यस्रक्चन्दनादिभोग्यवस्तुविषयः। स च भोगोपकरणभोगस्थानादि प्रदर्शनार्थः। यदर्थकामयोरात्मजायादिसर्वदेहिनामैक्यं तद्द्रव्याद्वैतम्। वित्तगृहक्षेत्रपात्रस्रक्चन्दनादीनामात्मजायाद्यनेकभोक्तृवर्गसाधारणत्वं द्रव्याद्वैतमित्यर्थः। ते एतेन गृहादीनां स्वासाधारणत्वभ्रमो निरस्तः। यद्वा द्रव्ययोः चिदचिद्द्रव्ययोरद्वैतं द्रव्याद्वैतम्। तत्र चिदचिदद्वैतं दर्शयति - **आत्मजायेति**। आत्मादीनां सर्वदेहिनां जीवानां ज्ञानैकाकारत्वेनैकरूपेण दर्शनं चिदद्वैतं प्रकाराद्वैतम्। अर्थकामादीनां [11]सर्वेषां अचित्परिणामरूपत्वेन दर्शनमचिदद्वैतम् - एवं प्रतिशरीरं जीवानामन्याकारभ्रमः अर्थकामादीनां[-11] अचिदन्यपरिणामरूपत्वभ्रमश्च निरस्तः। ज्ञानाद्वैतमिति पाठेऽप्येवंविधदर्शनं ज्ञानाद्वैतमित्यर्थः।।६५।।

न केवलं त्रिविधमेवाऽद्वैतमनुसन्धेयम्, अपि तु अन्यदपि शास्त्रानुमतञ्चेत्तदपीत्याह - **यदिति**। हे नृप! येन शास्त्रेण यस्य पुंसो यस्य वस्तुनो यतो यस्माद्वस्तुनः सकाशाद्यदद्वैतमनिषिद्धं किन्त्वनुमतं , स पुमान्

---

1. A,B,J ॰भाक् 2. A,B,J एतत्स॰ 3--3. A,B,J Omit 4--4. A,B,J अडभाव आर्षः 5. A,B,J ॰ते॰ 6. A,B,J ॰थावत् 7 A,B,J भजतेति

8 A,B,J ॰र्णस्त्वम् 9--9 A,B,J Omit 10. A,B,J Omit स्व। 11--11 A,B,T Omit

तेनाऽद्वैतेनाऽनुसन्धीयमानेनेति शेषः। तदनुसन्धानपूर्वकमेव कर्माणि कर्तव्यानीहेत कुर्यात्। अन्यैः शास्त्रनि[1]षिद्धैस्तु न कुर्यात्। यतोऽयमनापदि न विद्यते। आपत्संसारो यतस्तस्यां ज्ञाननिष्ठायां वर्तमानः। यथा- "वाचारम्भणं विकारो नामधेयम्" (छान्दो.उ. 6-4-1) "यावत्सर्वात्मिका बुद्धिरेकेह कुरुनन्दन!" इत्यादि शास्त्रेण भावाद्वैतादिकं प्रतिपाद्यते, न तथा प्रकाराद्वैतप्रकार्यद्वैतगुरुदेवताद्वैतादिकमपि शास्त्रैः प्रतिपाद्यत इति तदप्युपादेयमेवेत्यभिप्रायेणाऽयं श्लोकः प्रवृत्तः। तत्र प्रकार्यद्वैतं नामब्रह्माद्वैतं "सर्वं खल्विदं ब्रह्म" (छान्दो.उ. 3-14-1) इत्यादि ब्रह्मप्रकरणेषु[2] सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात्, सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकारैकपरत्वाच्च ब्रह्माद्वैतमेव प्रकार्यद्वैतं "नित्यो नित्यानां चेतनश्चेतनानाम्" (कठ.उ. 5-13) इत्यादिश्रुतिभिः जीवस्वरूपभेदप्रतिपादनेन स्वरूपेणाभेदानुपपत्तेः, बद्धमुक्तादिव्यवस्थानुपपत्तेः, सुखादिव्यवस्थानुपपत्तेश्च क्वचिज्जीवैकत्वप्रतिपादनं प्रकारैक्याभिप्रायकमेवेति तदद्वैतमेव प्रकाराद्वैतम्। "आचार्यं मां विजानीयात्" "आचार्यदेवो भव" (तैत्ति.उ. 1-11-1) "आचार्यस्सहरिस्साक्षात् चररूपो न संशयः" इत्यादिभिर्गुरुदे[3]वतादीनामद्वैतं प्रतिपाद्यत एव।।६६।।

यत्पृष्टं "गृहस्थ एतां पदवीं विधिना येन चाऽञ्जसा। यायाद्देव ऋषे ब्रूहि ; मादृशो गृहमूढधीः" (भाग. 7-14-1) इति तस्योत्तरमुपसंहरति - **एतैरिति**। हे राजन्! वेदोक्तैरिति। वेदशब्दस्तन्मूलकस्मृतिपुराणादीनामपि प्रदर्शनार्थः। वेदादिभिरुक्तैः कर्तव्यत्वेनोक्तैरेतैर्भावाद्वैतानुसन्धानादिभिरित्यन्यैर्देहात्मजीवेश्वरादिभेदानुसन्धानैः स्वस्ववर्णाश्रमोचितकर्मभिश्च तस्य भगवतो भक्तिभाक् भक्तिं कुर्वन् गृहेऽपि जनः गृहस्थोऽपि जनोऽस्य [4]श्रीकृष्णस्य गतिं[4] यायान्मुक्तिं प्राप्नुयादित्यर्थः।।६७।।

"मादृशो गृहमूढधीः" (भाग.7-14-1) इत्यनेनाभिप्रेतां स्वस्य मुक्तिदौर्लभ्यशङ्कां किम्पुनर्न्यायेन निराकरिष्यमाणः तावच्छ्रीकृष्णसेवयैव तरिष्यसीत्याह - यूयमिति। हे नृप देव! यथा प्रभोः सर्वशक्तेरात्मनोऽन्तरात्मनः श्रीकृष्णादेव हेतोर्यूयं दुस्त्यजादापदां गणादुत्तरत। अडभावः, अन्तादेशाभाव, आत्मनेपदञ्च आर्षाणि। उदतरत उत्तीर्णाः यथा च भवान् यस्य श्रीकृष्णस्य पादपङ्कजयोः सेवया हेतुभूतया निर्जिता दिग्जना दिक्पालका येन तादृशस्सन् महर्षिभिः स क्रतूनकार्षीदिति शेषः। तथा तस्यैव सेवया मोक्ष्यसे इत्यध्याहारः।।६८।।

---

1. A,B,T प्रन्निषि° 2. A,B,T ण्णे सा° 3. B,T दै° 4- -4 A,B,T Omit

